काशी संस्कृत ग्रन्थमाला
२१३

॥ श्रीः ॥

# ब्रह्मसूत्रप्रमुखभाष्यपञ्चकसमीक्षणम्

बादरायणविरचित 'ब्रह्मसूत्रस्य'
शङ्कर-रामानुज-मध्व-वल्लभ-निम्बार्कभाष्याणां
सयुक्तिकसमीक्षणम्

प्रणेता
डॉ० रामशरण त्रिपाठी
शास्त्री, एम० ए०, पी-एच० डी०



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१
१९६९

THE
KASHI SANSKRIT SERIES
213

****

# BRAHMASŪTRA-PRAMUKHABHĀṢYA-PAÑCAKA-SAMĪKṢAṆAM

*Being a critical and comparative study of the five main Bhāṣyas viz. by Śaṅkara, Rāmānuja, Madhva, Nimbārka and Vallabha on the Brahmasūtras of Bādarāyaṇa*

By

Dr. R. S. TRIPĀTHĪ
*Śāstrī, M. A., Ph. D.*

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1 ( India )
1939

समर्पितमिदं तेभ्यो

**ये ब्रह्मानन्दगृध्नवः**

# प्राक्कथनम्

भारतीयदर्शनवाङ्मये विशेषतो हिन्दूदर्शनसाहित्ये 'वेदान्त' दर्शनस्य विशिष्टं स्थानं गौरवञ्चास्ति । एतद्दर्शनस्य आधारभूता ग्रन्थाः प्राचीना उपनिषदः ब्रह्मसूत्राणि, श्रीमद्भगवद्गीता चेति प्रस्थानत्रयी समाख्यया सुप्रसिद्धाः सन्ति । तत्रोपनिषद एव वेदान्तदर्शनस्य मूलम् , ब्रह्मसूत्राणि तावत् तासामेव अभिप्रायं प्रकटीकुर्वन्ति । भगवद्गीतापि उपनिषदामेव तात्पर्यमुपदर्शयतीत्यास्तिकहिन्दूनां विश्वासः । किन्तूपनिषदामिव ब्रह्मसूत्राणामपि अभिमतसिद्धान्तविषये विवदन्ते सिद्धान्तानुसारिणः । तेषु च भिन्नमतपराणि तेषां व्याख्यानानि शंकरप्रभृतिभिराचार्यैः प्रदर्शितानि । एषु व्याख्यानेषु शंकर-रामानुज-मध्व-निम्बार्क—वल्लभ-विरचितभाष्याणां तत्प्रतिपादिताद्वैत—विशिष्टाद्वैत—द्वैत—द्वैताद्वैत-शुद्धाद्वैतवेदान्तदर्शनानां च विशिष्टं महत्त्वम् विद्यते । एतैः व्याख्यानैरेव हिन्दुधर्मो नैकसम्प्रदायेषु विभक्तः । तेषां मध्ये मध्ययुगे प्रचुरः संघर्ष आसीद्, अद्यापि न्यूनाधिकमात्रायाम् तत्संघर्षः प्रचलत्येव । किन्त्वयं संघर्षः प्रतिस्पर्धा वाधुनिकमनोवृत्तेः प्रतिकूलतामावहति । वर्तमानकालीनाः सुशिक्षिता जनाः सर्वेषामाचार्याणां समादरं कुर्वाणाः तेषां सिद्धान्तैरुपदेशैश्च लाभान्विता भवितुं यतन्ते । अनयैव मनोवृत्त्या रामकृष्ण-परमहंसपादैरुपदिष्टं यदुपनिषत्प्रतिपादितं ब्रह्म सगुणं निर्गुणञ्चोभयरूपं वर्तते ।

प्रस्तुतनिबन्धेऽप्यनेनामाधुनिकीं दृष्टिमनुसृत्य विदुषा लेखकेन विभिन्नाचार्याणां भाष्याणामाग्रहशून्यं निष्पक्षं, तुलनात्मकमनुशीलनं कृतम् । उपस्थापितं प्रयोजनं त्वत्र ब्रह्मसूत्राणामान्तरिकस्य तात्पर्यस्य समुद्घाटनम् । स्वीयेऽस्मिन् समुद्देश्ये लेखकमहोदयाः सफलीभूता इति मदीया सम्मतिः ।

विवादग्रस्तसूत्राणि अधिकरणानि वा उद्दिश्य लेखकमहोदयैः विभिन्नभाष्यकृतां व्याख्यानानां परीक्षा समीक्षा च विहिता । तदेतत् तैः निष्पक्षदृष्ट्यैव कृतम् व्याख्यानानि समीक्षमाणैस्तैः क्वचित् शंकराचार्यस्य अन्यत्र रामानुज—प्रभृतीनां समर्थनं विहितम् , न त्वेकान्ततः एकस्यैव कस्यचिदाचार्यस्य । तद्यथा—१४तमे पृष्ठे आनन्दमयाधिकरणस्य विविधानि व्याख्यानानि समीक्ष्य तैरुक्तम् अत्र

रामानुजनिम्बार्कयोरर्थः अधिकोपयुक्तः प्रतीयते इति। एव मेव ७१ तमे पृष्ठे १/२/९/१०-१/२/११-५ सूत्राणि समुद्दिश्य तैः कथितम्। 'रामानुजमतिरिच्य अन्यैःसर्वैराचार्यैरेतदधिकरणद्वयं स्वीकृतम्' इति। एवं शांकराभिमतविवर्तवादस्य विरोधे ८६ तमे पृष्ठे तैः 'सर्वेषु वेदान्तेषु परिणामोपदेशः' इति मतं समर्थितम्।

अस्य तुलनात्मकानुशीलनपरस्य निबन्धस्याध्ययनेन ब्रह्मसूत्राणां यथार्थाभिप्रायं जिज्ञासमानाः पाठकाः परां तृप्तिं प्राप्स्यन्तीत्यत्र नास्ति शंकावकाशः। साधुवादार्हाः खल्वस्य प्रणेतारः श्रीरामशरणशास्त्रिमहोदयाः ग्रन्थ-प्रकाशक-चौखम्बा-विद्याभवन-संचालकाश्च इति।

न० कि० देवराजस्य

# लेखकीयं स्वकीयम्

प्रस्थानत्रय्यां विभिन्नाचार्याणां भाष्याणि शतशः वर्षेभ्यः प्रचलितानि। एतेषां लेखेनैव ते आचार्यपदभाजो जाताः। तत्साधनेनैव च तैः रहस्यमयस्य अस्य विश्वस्य समस्याः समाधातुं श्लाघनीयः प्रयत्नो विहितः। अस्य विश्वस्य रचयितॄणि तत्र व्याप्तानि च तत्त्वानि तैरेवाध्यात्मवेत्तृभिः सूक्ष्मातिसूक्ष्मनिज-प्रातिभचक्षुर्भिः साक्षात्कृतानि। एतद्देशीयब्रह्मवेत्तॄणामेषा एव आध्यात्मिकसम्पत्तिः यस्याः बलेन अद्यापि जगतीतले भारतं निजाध्यात्मिकज्ञानगौरवसम्पन्नं शिरो देशान्तरीयमानवसमाजे समौन्नत्येन उत्थापयितुमाग्रहग्रहिलम्। अस्मिन्नेव च तात्त्विकज्ञाने भारतीयसभ्यतायाः धर्मस्य च वास्तविकप्रतिष्ठेति कालक्रमेण विभिन्नस्रोतोभिः परिपूर्यमाणस्य तज्ज्ञानोदधेः परिचयावाप्तिः प्रत्येकभारतीयस्य कर्तव्यम्। तद्विषयक एव चायं ब्रह्मसूत्रीयप्रमुखभाष्यपञ्चकसम्बद्धः समालोचनात्मको निबन्धः।

अस्माकम् एष विश्वासः यत् सर्वासां भाषाणाम् अर्थाभिव्यञ्जकशब्दावली विभिन्नेति कस्याश्चिदपि भाषायाः समालोचना तस्यामेव भाषायाम् अपेक्षाकृताधि-ककुशलतया, सरलतया, परिमार्जिततया च कर्तुम् अङ्कयितुञ्च शक्यते। यद्यप्यद्य संस्कृते समालोचनात्मकसाहित्यस्य गद्यलेखनपद्धतेश्च न्यूनतेति केचिदकर्मठाः संस्कृतभाषाम् एतदर्थम् योग्याम् आकलयितुं संदिग्धुः, किन्तु प्रयोगेण एतत्तथ्यं पूर्णतः निर्भ्रान्ति प्रमाणीकृतं स्यात्। संस्कृतभाषायाः मृदिमा, अल्पैरेवाक्षरैः सर्वविधभावाभिव्यञ्जनशक्तिश्च तदीयं नैसर्गिकं वैशिष्ट्यम् इति स्वल्पातिस्वल्प-शब्दैः अधिकाधिकाः भावाः स्पष्टतया यथा सुमधुरया देवगिरा अभिव्यक्तीकर्तुं शक्याः न तावद्भिः शब्दैः तावन्तो भावाः अन्यया कयाचिद् भाषयेति सर्वथा निर्विवादम्।

संस्कृतव्याकरणं सर्वाङ्गपूर्णं क्रमबद्धञ्चेति तत्र निबद्धं गद्यम् अत्यन्तपूर्णं प्रौढम्, परिमार्जितं परिपक्वं चेत्यत्र न कश्चित् सन्देहावसरः। संस्कृतगद्ये लिखिताः प्राचीनदार्शनिकसाहित्यिकादिग्रन्थाश्चात्र प्रमाणम्। तथापि अस्यां दिशि प्रयासः सामान्येन उपेक्षितः एव अवलोक्यते इति न कस्य संस्कृतज्ञस्य कृते खेदावहम्।

संस्कृतस्य पुनरुज्जीवनं गद्यविकासमन्तरेण सर्वथा असम्भवम्। अतः एतदर्थम् इदमत्यन्तावश्यकं यत्तस्य भण्डारो नित्यनूत्नविषयकनूतनग्रन्थैः परिपूर्येत।

सरलसुबोधगद्ये लिखितानाम् एवंभूतग्रन्थानाम् अद्येह अत्यन्तावश्यकता इत्यस्यां दिशि अयं ग्रन्थः मदीयः लघीयान् प्रयासः। अस्मिंश्च प्रायः आद्योपान्तम्, विषयगतकाठिन्यवर्जं, सरलसुबोधसंस्कृतस्यैव प्रयोगः।

अस्मिन् निबन्धे अष्टौ अध्यायाः। तत्र प्रथमाध्याये वेदान्तस्य वेदैः सह सम्बन्धप्रदर्शनम्। ततः वेदान्तसूत्राणां प्रणेतुः तत्प्रणयनस्य च कालः विविध-शास्त्रप्रमाणैः युक्तिभिश्च निर्धारितः। द्वितीयाध्याये च प्रत्यध्यायं प्रतिपाद्यं प्रतिपाद्यविषयसंकेतपूर्वकं प्रत्यधिकरणभाष्यपञ्चकसमीक्षणं कृतम्। तृतीयाध्याये च भाष्यकार–भाष्यपञ्चकसंक्षिप्तपरिचयप्रदानपूर्वकं प्रमाणतत्त्वसमीक्षा विहिता। चतुर्थाध्याये भौतिकं जगद् विविच्य पञ्चमे सूक्ष्मजगन्निर्दिष्टम्। षष्ठे अध्यात्मविषये ब्रह्मजीवविषयकं सर्वं ज्ञातव्यं भाष्यपञ्चकाधारेण निर्दिश्य सप्तमे बन्धमोक्षयोः व्यवस्था आलोचिता। अष्टमे चाध्ययनमुपसंहृत्य भाष्यपञ्चकसमीक्षणनिष्कर्षः प्रदत्तः। तत्र च विशेषेण मध्वाचार्यस्य भाष्ये भाष्यकारेषु तदीयस्थाननिरूपणे च विशेषेण अवहितिः प्रदत्ता। परम्परानुसारेण हि मध्वाचार्यः शंकराद्यन्यसर्वभाष्यकारापेक्षया निम्नकोटिको भाष्यकृदुक्त्वा अवहेलितः। किन्तु अस्मिन् निबन्धे तस्यापि अन्य-भाष्यकारवदेव वैदुष्यं स्थानञ्चेति सयुक्तिकं निर्धारितम्।

संस्कृतस्य मौलिकग्रन्थाः एव अस्याध्ययनस्य आधारः इतीह तदनूदिता-ङ्ग्लभाषाग्रन्थानां तद्विषयेषु पाश्चात्यविदुषां मतस्य वा नाममात्रोल्लेखः, न प्राचुर्येण। प्रामाणिकत्वेन च अत एव मया सर्वत्रैव पादटिप्पणीषु तत्तत्संस्कृत-मौलिकग्रन्थान् एव समुल्लिख्य—

'नाऽमूलं लिख्यते किञ्चित् नानपेक्षितमुच्यते'

इति दिशा मल्लिनाथः समनुसृतः। तथापि कियदिह सफलः अहमभवम् कियांश्च अयं संस्कृतज्ञानां कृते सन्तोषावहो भविष्यतीत्ये तस्य निकषग्रावा तु सदय-हृदयवैदुषी एव। मदीयस्तु एतावान् एव नाल्पीयान् सन्तोषः यदेतन्मिषेण मया ब्रह्मचिन्तने एतावान् कालो व्यतियापितः, व्यतिकरे चास्मिन् अतिप्रयत्नोपसञ्चितम् एतम् ब्रह्मावबोधविचाररत्नराशिम्, अहरहः सदा उपयुज्यमानम् अपि उत्तरोत्तरं प्रविधनशीलम्, निजपुत्रसत्पात्रे निक्षिपता निश्चिन्तेन निराकुलेन चाभावि।

किञ्च; अस्य निबन्धस्य पूर्तौ येषां साहाय्यं मयोपलब्धम् तान् प्रति कृतज्ञता-प्रकाशः अपि अत्यावश्यकः। अस्य विषयनिर्देशः बरेलीकालेजीयसंस्कृतविभागा-ध्यक्षेण स्वर्गीयश्रीभोलानाथशर्मणा कृत आसीत्। रूपरेखा चाप्यस्य तेनैव निर्दिष्टा, किन्तु तत्र काञ्चित्कीं परिवर्तनां परिवर्द्धनाञ्च विधाय आगरास्थबलवन्तराजपूत-कालेजीयतदानींतनसंस्कृतविभागाध्यक्षेण श्रीनरेन्द्रदेवसिंहशास्त्रिणा निर्देशक-त्वेनायं विषयः आगराविश्वविद्यालयीय-पी एच० डी० उपाध्यर्थं स्वीकारितः।

अस्मिन् निबन्धे सहायकग्रन्थानां निर्देशोऽपि परमवैदुषीचणेन स्वर्गीयश्रीभोलानाथ-शर्मणा तदैव कृत आसीदिति तदानींतनतदीयानुपमसाहाय्यार्थमहमधमर्णः। मदीयेन निर्देशकमहोदयेन विविधानवद्यविद्यावैदुषीविख्यातेन श्रीनरेन्द्रदेवसिंह-शास्त्रिणा स्वकीयेन निरन्तरप्रोत्साहनेन निजप्रखरप्रातिभशक्तिधारया च निबन्ध-गतदोषान् अपसारम् अपसारम् यदयं पूर्णतां नायितः तदर्थं सर्वथा स एव श्रेयोभागित्येतन्नात्युक्तिपरम्। यदपि किञ्चिदिहोत्तमं पाठकैरुपलभ्यं तत्तस्यैव गुरुप्रातिभप्रेरणस्य, निर्देशस्य अग्रजवात्सल्यस्य च फलमिति तमनाश्रित्य न कदा-प्येवं निरवलम्बः अपि अध्ययनव्यसनमात्रैकावलम्बः कृतकार्यः अहमत्र भवेयम्।

मुरादाबादस्थ के० जी० के० महाविद्यालयीयाध्यक्षमहोदयस्य विविधविद्याभि-वर्द्धनगृध्नोः शाम्भवीशम्भुशाश्वतसमर्चनपरायणस्य श्रीशम्भुनाथखन्नामहोदयस्य कृपाकृतज्ञताप्रकाशनं विना सर्वमेवेह निरर्थकं स्यात्। तेन अस्मदर्थं सहस्रशो मुद्राः व्ययीकृत्य बहुमूल्यान् ग्रन्थान् क्रीत्वा निरन्तरमहं प्रोत्साहितः इति तस्यै-तत्कृपालुता-सहृदयता-पूर्णव्यवहारस्य आधमर्ण्यम् अभिव्यञ्जयितुं नेमे वर्णाः समर्थाः।

कणभक्षाक्षचरणसदक्षैः, विद्वत्प्रकाण्डहर्यक्षैः, काशीस्थहिन्दूविश्वविद्यालयीयदर्शन-विभागाध्यक्षैः प्रो० श्रीदेवराजमहोदयैर्ग्रन्थोऽयं स्वकीयप्राक्कथनेनालङ्कृतः इति तेऽपि विशेषेण मम कृतज्ञताप्रदर्शनार्हाः।

शैशवे व्याकरणादि पाठयता वात्सल्यैकमूर्तिना व्याकरणसाहित्यवेदान्तविद्व-द्धुरीणेन ममाग्रजेन स्वर्गीयश्रीमुक्तादत्तशास्त्रिविद्याभूषणेन तदैव संस्कृतभाषणस्य संस्कृतलेखनस्य च यः प्रोत्साहनाङ्कुरो मयि समारोपितः तस्यैव फलमेष निबन्धः एतद्वैशिष्ट्यनिबन्धनश्च मे पी-एच० डी० उपाधिः। किन्तु दौर्भाग्येण नेमं निबन्धं नापि चास्मात्पूर्वं प्रकाशितां व्याकरणसमापनीयां कौमुदीकथाकल्लोलिनीं करालकालमहिमावनतस्य तस्य करकमलयोः समर्पयितुमलमहमभवमिति तच्चरण-प्रणतिप्रकाशनेनैव सन्तोषमुपलभ्य विरमामि।

—रामशरणत्रिपाठी

# विषयविभागानुक्रमः

## प्रथमः अध्यायः



## द्वितीयः अध्यायः



## तृतीयः अध्यायः

## चतुर्थः अध्यायः

## ( भौतिकं जगत् )

पञ्चमः अध्यायः

( सूक्ष्मं जगत् )

## षष्ठः अध्यायः

## ( अध्यात्मम् )

## सप्तमः अध्यायः



## अष्टमः अध्यायः





# ब्रह्मसूत्रप्रमुखभाष्यपञ्चकसमीक्षणम्

## प्रथमः अध्यायः

### भूमिका

#### विषयपरिचयस्तन्महत्त्वं च

उपनिषदः, वेदान्तसूत्राणि, श्रीमद्भगवद्गीता च एते वेदान्तस्य मौलिकग्रन्थाः। एतेषामेव प्रस्थानत्रयी इत्येतद् अपरं पारिभाषिकं नाम। तत्रोपनिषदः प्रथमं श्रुतिप्रस्थानम्। ब्रह्मसूत्राणि च द्वितीयं तर्क-(न्याय)-प्रस्थानम्। श्रीमद्भगवद्गीता च तृतीयं स्मृतिप्रस्थानम्। एतत्प्रतिपादितसिद्धान्तो हि वेदान्तः इति वेदान्तसूत्राणां तदन्तर्गतत्वेन निसर्गतः अस्य निबन्धस्य चापि वेदान्त एव विषयः स चात्र तदीय-प्रमुखभाष्यपंचकपद्धत्या प्रतिपादितः इति विशेषः।

वेदान्तशब्दो हि वेदानामन्त इति समासेन उपनिषदर्थकः। उपनिषदश्च वेदानाम् अन्त इति वेदान्तशब्देन उपनिषदो लक्ष्यन्ते।

चरमज्ञानाधायकत्वेन वेदस्य ( ज्ञानस्य ) अन्तश्चरमसीमेति समासेनापि वेदान्तशब्देन औपनिषदं ज्ञानं स्वयमुपनिषदो वा परिलक्ष्यन्ते।

आपाततो विरुद्धानाम् औपनिषदवाक्यानां समन्वयार्थम् एव उत्तर-मीमांसाया रचनेति निहितब्रह्मविषयकज्ञानत्वेन ब्रह्मसूत्रापरनामकोत्तरमीमांसा अपि वेदान्त उच्यते।

भगवद्गीतायाम् औपनिषदमेव ज्ञानं प्रतिपादितं वर्तते इति वेदान्त-शब्दार्थसीमा गीतामप्यन्तर्निधत्ते। अतएव वेदान्तसारमारिप्सुना श्रीसदानन्देन—

वेदान्तो नाम उपनिषत्प्रमाणम्, तदुपकारीणि शारीरकसूत्रादीनि च इत्युक्तम्।

सा चैषा त्रयी कालक्रमेण विभिन्नाचार्यकृतस्वाभिमतसिद्धान्त-व्याख्याना समजायत। तथापि उपलभ्यमानेषु विभिन्नसाम्प्रदायिकसिद्धान्तेषु शंकराद्वैतस्य रामानुजविशिष्टाद्वैतस्य निम्बार्कद्वैताद्वैतस्य मध्वद्वैतस्य वल्लभशुद्धाद्वैतस्य चैवाधिकप्रसिद्धिः इत्थं यद्यपि निस्सन्देहमेतद्वक्तुं

शक्यते यद् यावद् यत् च तत्र प्रतिपादितचरं तस्य किंचित् संयुक्त्या नवीनयनस्य तदीयसारभूतग्रन्थानां सम्वर्धनस्य वा प्रयासः पिष्टपेषणमेव तथापि प्राचीनकालतः एव बहुभिरेव जनैर्विभिन्नरूपेण स्वाभिप्रायाभिव्यक्तेरावश्यकता अनुभूतेति प्रतीयते यत् परिवर्तनशीलायाम् अस्यां जगत्यां प्रकृत्या विभिन्नकालिकसंस्कृतिज्ञानानुरूपं तदन्तर्भूतविषयस्य वेदान्तस्य अभिनवात्मकपद्धत्या व्याख्यानमपेक्षितं भवतीति शिवमहिम्नःस्तोत्रीयादिमश्लोके पुष्पदन्तोक्त्यनुसारेण अस्य विषयस्य परं पारम् अविदुषः अपि मे स्वमतिपरिणामावधि तत्त्वजिगरिषापरिकरो निरपवादत्वेनावाच्यः।

वेदान्ते सांख्य-योग-प्रभृतिसम्पूर्णदार्शनिकप्रवृत्तीनां तार्किकविचाराणां च चरमोत्कर्षः समुपलभ्यते। अत एवैतद्दर्शनं भारतीयाध्यात्मशास्त्रस्य शीर्षण्यं मन्यते। मूलं चास्य वेदाः, वेदानां चरमः सिद्धान्तः इत्यस्मिन्नर्थे वेदान्तशब्दश्च सर्वत आदौ उपनिषत्सु समुपलभ्यते—

वेदान्ते परमं गुह्यम्[1]

वेदान्तविज्ञानविनिश्चितार्थाः[2]

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः[3]

इत्थं वैदिकरहस्यमयसिद्धान्तप्रतिपादकत्वात् उपनिषत्सु वेदान्तशब्दप्रयोगो नितराम् उपयुक्तो वर्तते।

वेदान्तस्य सिद्धान्तानाम् अनुशीलनेन इत्थं निश्चीयते यत् अस्य एकत्वभावनायाम् अखिलचराचरसत्ताया आधारभूता एका वास्तविकसत्ता निहिता वर्तते। सैव चास्माकं परिपूर्णस्य प्रेम्णः क्रियात्मकप्रयत्नानां च चरमं लक्ष्यम्। तयैव च इत्थंभूतक्रियात्मकाचाराणां सूत्रपातो विहितो येषाम् आधारः एकमात्रं सत्यम् यत् च मानवमात्रस्य सामाजिकनैतिकाध्यात्मिकव्यवहारजातं चालयति।

एष वेदान्त एकामेव वास्तविकसत्तामाश्रित्य चराचरमात्रस्य सम्बन्धान् तया सत्तया सम्बध्नाति। प्राणिमात्रस्य च वैयक्तिकानि तन्निकटतमसम्बन्धि-समाजसम्बद्धानि कर्त्तव्यानि च निर्दिशति। नैतावदेव, स सर्वेषां नियामकत्वेन क्रमिकाध्यात्मिकोन्नतौ विकासे च पवित्रधार्मिकव्यक्तिभ्यः श्रेयः शान्तिं च प्रयच्छन् पापात्मभ्यः अपि तन्मानसिकशुद्-

---

१. श्वेताश्वतरोपनिषत् ( ६।२२ )    २. मुण्डक० ( ३।२।६ )

३. महानारायणी० ( १०।६ )

ध्यनन्तरं मोदावाप्तिम् आशासयति। प्राणिमात्रे चोत्तरोत्तरं महत्तां निदधानः तथा एव एकमात्रसत्तयातत्तादात्म्यं विधत्ते।

अस्य पूर्वोक्तस्वाभिमताद्वैताद्यनेकसम्प्रदायस्य वेदान्तस्य द्वैतसम्प्रदाये पारसीईशुप्रभृतिसगुणसाकारपरमात्मोपासकानां प्रायः सर्वेषां सम्प्रदायानां मूलसिद्धान्ता अन्तर्भवन्ति। विशिष्टाद्वैते च तेषां सम्प्रदायानां समावेशो ये अन्तःस्थं दूरस्थं वा ईश्वरम् आमनन्ति अत्र च एवंभूताः सर्वे भावा अन्तर्भवन्ति यथा–ईश्वरः अस्माकम् अन्तः बहिश्च वर्तते। निजेन आत्मरूपेण वयम् ईश्वरे निवसामः। ईश्वरे संचरामः। स एव च आत्मनाम् आत्मा। वयं च तस्यैव बृहतः पूर्णस्य च अंशा इत्यादि।

वेदान्तस्य अद्वैतस्वरूपं, किन्तु, गहनतममस्ति। अतः एवंभूता ज्ञानिनः सतत्त्वविद्वांसश्च अल्पीयांस एव सन्ति ये आत्मैक्यमहत्ताभावं ग्रहीतुं शक्नुवन्ति। एतदेव च तत्परमं रहस्यं यत् अवाप्यैव कश्चित् एकः आत्मनो निजजनकादिभिश्चापि तादात्म्यं स्थापयितुं क्षमते। अखिलं विश्वं च विभुना व्याप्तमाकलय्य तत्र सच्चिदानन्दात्मकत्वम् अनुभवति।

वेदान्तप्रतिपाद्येश्वरः सगुणनिर्गुणोभयरूपः अपि ततः परो वर्तत इत्येतद् अस्य वैलक्षण्यम्। स च सर्वसाम्प्रदायिकधर्मावलम्बिभिः भिन्नभिन्ननामभिरर्च्यते[1]। एकः अपि च स विविधैः नामभिः उच्यते। ईशुमतावलम्बिनां स स्वर्गस्थः पिता, मोहमदानां च अल्लाहः। स एव हिन्दूनां विष्णुः, शिवः, अम्बिका च। स जगतो माता पिता चेति जगदुत्पत्तिकारणत्वेन न तत्र स्त्रीपुंसयोर्विशेषता। भक्तैश्च स स्त्री-(शक्ति)–रूपेण, पुरुषरूपेण, उभयरूपराहित्येन वोपास्यते।

वेदान्तस्य धर्मो न केनापि व्यक्तिविशेषेण प्रवर्तित इत्यव्यक्तिकत्वेन स विश्वधर्मः। इस्लामेशुबौद्धादिधर्मास्तत्तद्व्यक्तिविशेषप्रवर्तिता इति न ते विश्वधर्माः। एतत्सम्प्रदायानुयायिनो हि मूलसिद्धान्तान् विस्मृत्य तत्तद्धर्मप्रवर्तकव्यक्तित्वेन आबद्धा धर्मान्तरं निन्दन्ति। अत एव एषा प्रवृत्तिः विश्वधर्माभिवृद्धिं रुन्धाना पारस्परिककलहसंघर्षान्यायात्याचाराद्यभिवर्द्धनरूपे परिणतिमेति।

अस्मिन् धर्मे न काचित् हठात्कृतिरिति निष्पक्षन्यायाधीश इव स सर्वधर्माध्यात्मिकाचारविचारान् यथास्थानं स्थापयति। न च कश्चिदस्य स्वकीयः प्रवर्तयिता इत्येतस्य आश्रयस्थानीयाः ते सनातनाध्यात्मिक-

---

1. एकं सद्विप्रा बहुधा वदन्ति (ऋ० अ० २ अ० ३ मं० ४६)

नियमा ये च सर्वत्रत्यैः सार्वकालिकैश्च ऋषिभिः स्थिरीकृताः विश्वस्य विभिन्नग्रन्थे, षूपलक्षिताश्चेति प्रकृतिनियमा इव सर्वत्रैव समानाः।

वेदान्तस्य एतदन्यद्वैलक्षण्यं यत्स परमलक्ष्यावाप्तये सर्वेभ्यः समानं मार्गं न निर्दिशति अपि तु विभिन्नान्तःकरणपात्रानुसारं स तत्करोति। अत एवान्तःकरणप्रवृत्त्यनुरूपं कर्मठ-भावुक-योगि-तत्त्वजिज्ञासुरूपेण क्रमशश्चतुर्षु भागेषु विभक्तेभ्यः सर्ववर्गीयमनुष्येभ्यः तत्तदानुकूल्यानुरूपं कर्मयोगभक्तियोग-राजयोग-ज्ञानयोगरूपाश्चत्वारो मार्गा निर्दिष्टाः।

एतेन संक्षिप्तया इत्थमवगन्तुं शक्यते यद् वेदान्तस्य क्षेत्रं कियद् व्यापकम्। किं वा तस्य ऐहिकामुष्मिक-जीवनोपयोगित्वम् इति यथार्थतः अयमत्युदारः समदर्शी धर्मो यश्च न कमपि उपासनाभेदं विरुणद्धि, विविधद्वैतवादिसम्प्रदायोपदिष्टाः सर्वविधविधिविधानोपासनादयः ब्रह्मै-वाहम् इत्यनुभूतिरूपायाः परमपदावाप्तेः साधनमात्रमिति वेदान्तः अमून् सर्वान् विश्वप्रचालिताखिलधर्मसम्प्रदायान् स्वस्मिन् समावेशयति। अत एवायं प्रत्येकधर्मस्य स्थानं सर्वधर्माणां च आश्रयः।

एवंभूतमाहात्म्यस्य वेदान्तस्य नतरां किञ्चिद् अन्यत्तुलामधिरोहति, नतमां च एनमन्यद् अतिशेते। अत एव—

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन[1] तथा शान्तो दान्तः उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यति[2]।

दृश्यते त्वग्र्यया बुद्ध्या[3]।

इत्यादिभिर्वचनैः एतन्निर्णीयते यद् ऐहलौकिकपारलौकिकविषय-विरक्तो यः शमदमोपरतितितिक्षासमाधिचित्तैकाग्र्यादिदैवसम्पत्तिसंयुक्तः भवति स एव वेदान्तविद्याधिकारी। यतो हि एतद् दर्शनं न केवलं मनोविनोदाय बुद्धिविकासाय वा अपि तु निजजीवनसमर्पणपूर्वकं तदुप-दिष्टानुष्ठानाय वर्तते। तथा च आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च[4] एतद्विधिवाक्यानुसारेण वैराग्यादिसाधनसम्पन्नस्यैव पुरुषस्य श्रवणादिभिः वेदान्तविद्याधिगतिरिति विक्षेपरहितया चित्तै-काग्र्यवृत्त्या अभ्यासनैरन्तर्येण परिपक्वतां प्राप्ता असौ अविद्यास्मिताराग-द्वेषादिदुःखविनाशनपूर्वकं सर्वथा आत्यन्तिकदुःखनिवृत्तिं कुर्वाणा अमन्दा-नन्दमनुभावयतीति—

---

१. मुण्डक० १।२।१२ २. बृहदारण्यक० ४।४।२३

३. कठ० ३।१२ ४. बृहदारण्यक २।४।५

को मोहः कः शोकः एकत्वमनुपश्यतः[1]
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्[2]
तरति शोकम् , तरति पाप्मानम्[3]

इत्यादिश्रुतयः अन्तरात्माभिन्नसाक्षात्परब्रह्मानुभवशालिनो विदुषः शोकमोहादिरूपसंसारसमूलविनाशं पिशुनयन्ति। अत एव एषा अनुपमा वेदान्तविद्या सर्वथा श्लाघनीया। या च न केवलं तदधिगन्तृमात्रं नापि वा एकं तत्कुलम् अपि तु तज्जन्मभूम्यादिकं सर्वमेव तत्सम्बद्धं पवित्रयति। यथा चोक्तम्—

कुलं पवित्रं जननी कृतार्था वसुन्धरा पुण्यवती च तेन।
अपारसंवित्सुखसागरेऽस्मिन् लीनं परे ब्रह्मणि यस्य चेतः[4]!

एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति[5] इति श्रुत्यनुसारेण वेदान्तविद्योत्पन्नात्मानन्दस्य स्वल्पतमः अंश एव विषयानन्द इति तथाभूतवेदान्तविद्यासम्पन्नः पुरुषः न विषयानन्दम्, नापि च तत्साधन-भूतान् विषयान् वा कामयते। न तस्य किंचिदन्यत् करणीयं वरणीयं वा अवशिनष्टि। ब्रह्मभूतो हि विद्वान् मूढैः काम्यमानान् सुतवित्तवनिता-देवलोक-ब्रह्मलोकादिभोगान् एकदैवोपभुङ्क्ते एतत् च—सः अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता[6] एतया श्रुत्या परिज्ञाप्यते। किञ्च, अथ मर्त्यः अमृतः भवति एतावदनुशासनम्[7] अर्थात् समस्त-कामनापरित्यागेन सुस्थिरीभूतया ब्रह्मविद्यया मरणधर्मा मानवः अमृतं ब्रह्मभूयम् अवाप्नोतीति ब्रह्मस्वरूपावाप्तिं यावत् एव सर्ववैदिकविधाना-नुष्ठानाद्यपेक्ष्यते। तदनन्तरं न किमप्यनुशासनमिति विद्वान् कृतार्थः संजायते।

पूर्वोक्तप्रकारेण निर्दिष्टानि ब्रह्मविद्यायाः शोकनिवृत्त्यादीनि अनेकोत्तम-फलानि शरीरधारणावस्थायामेव लभते वेदान्तवित्। शरीरपातानन्तरं तु स नामरूपादिगन्धेनापि अस्पृष्टम् अद्वितीयं ब्रह्मस्वरूपमेव समधि-गच्छतीति नित्यनिरतिशयानन्दघनग्राह्यग्राहकादिभेदशून्यस्य जन्मजरा-मरणरहिताद्वितीयब्रह्मणः सायुज्यमेव वेदान्तविद्यायाः सर्वोत्तममन्तिमं फलं, यत् च अस्या विद्याया अनुपमाबाधमाहात्म्यसूचकम्।

---

१. ईश० ७
२. बृहदारण्यक० ४।४।१२
३. मुण्डक० ३।२।९
४. वे० सि० र० पृ० ८८।१
५. बृहदारण्यक० ४।३।३२
६. तै० उ० ब्रह्मवल्ली १
७. कठ० २।३।१५

वेदान्तविद्या न केवलं साधनतः, फलत एव वा अपि तु स्वरूपतः अपि समधिकमहत्त्वशालिनी। यतो हि नासौ घटादि पदार्थावबोधकविद्येव परिच्छिन्नवस्तुप्रकाशिका अपि तु अपरिच्छिन्नब्रह्मप्रकाशिकेति स्वरूपतः अपि सर्वविद्योत्तमा। चतुर्वेदविद्या हि एकवेदविद्यामन्तर्निधत्ते इत्येकविद्यातः चतुर्वेदविद्या इव वेदान्तविद्या इतराखिलविद्यानाम् अन्तर्निधायकतया सर्वथा सर्वतो महीयसी। अत एव भगवती श्रुतिः—

'ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्'[1]

न चास्यास्तुलायां विश्वस्य महतः अपि महीयान् सिद्धान्तः क्षणमात्रं तिष्ठतीत्यत्रान्योन्यविभिन्नसिद्धान्तानामप्याचार्याणामैकमत्यम्। अत एवोक्तम्—

तावद्गर्जन्ति शास्त्राणि जम्बुका विपिने यथा।
न गर्जति महाशक्तिर्यावद् वेदान्तकेसरी॥

इत्थं च विकासस्य, परिपूर्णतायाः, मुक्तेश्च एषा सार्वभौमसार्वजनिकसाधनभूता वेदान्तविद्या एकाङ्गितायाः, अनधिकृतचेष्टायाः परतन्त्रताया अपवित्रतायाश्च दिव्यमौषधम्। आध्यात्मिकवैज्ञानिकानुसंधित्सायाश्च चरमसीमा एषा सैद्धान्तिकव्यावहारिकोभयदृष्ट्योपयोगिनीति वर्तमाने भौतिकयुगे समारूढवायुयानाः समालोडितविज्ञाना वैज्ञानिकाः काममाकाशमार्गेण यथेच्छमुच्चैरुद्गच्छन्तुतमाम्, ग्रहोपग्रहाणां गतिविधिं वैदूर्यं चावगच्छन्तुतमाम् किन्तु दर्शनजगति विशेषतया च वेदान्तदर्शने यावान् आत्मविषयको विचारो भारतीयैः कृतो न तावानन्यदेशीयैः। अगाधं वाङ्निधिं निर्मथ्य नूतनातिनूतनविचाररत्नोद्धरणमद्यापि तन्महर्षिष्वेव परिसीमितम्। नैतदर्थोर्जनैकव्यवसायपरायणाधुनिकमानवशक्तिसाध्यम् आत्ममार्मिकगतिविधिं विचारयितुं यच्च शान्तमेकान्तं च जीवनमपेक्ष्यते तद् भारतीयारण्यकजीवन एव सारल्येन समभवत् न च सभ्यम्मन्यव्यस्ताधुनिककेन्द्रेष्विति विशिष्टाः पाश्चात्यविद्वांसः अपि मुक्तकण्ठं तस्य गुणगरिमाणं गृणन्ति।

## विषयविवेचनपद्धतिनिर्देशः

पूर्वोक्तप्रकारेण अस्य निबन्धस्य विषयपरिचयप्रदानपूर्वकमहत्त्वप्रतिपादनानन्तरं तद्विवेचनपद्धतिनिर्देशः अपि प्रासंगिकः।

कस्याश्चिदपि कृतेस्तात्पर्यनिर्णयः प्रकारद्वयेन क्रियते—

(१) परम्परागतपद्धत्या

---

१. मुण्डक० १।१

(२) समालोचनपद्धत्या च।

तत्राद्यायां परम्परागतपद्धत्यामेकं सिद्धान्तं निश्चित्य व्याख्याता स्वव्याख्येयग्रन्थस्य प्रतिपंक्ति निजाभीष्टसिद्धान्तम् अन्विच्छति। द्वितीयस्यां समालोचनपद्धत्यां च सिद्धान्तविशेषम् अनाश्रित्य सर्वथा निष्पक्षपातं विषयो निरूप्यते। अन्यथा सा पद्धतिः तत्सरणिमारोढुमेव न शक्नोति। पक्षपातलेशेनापि हि अस्यां पद्धत्यां महती हानिः सम्भोभवीति। कुत्रचिन्न तु विषयोपसंहारः नितराम् उपहासास्पदं सम्पद्यते, किन्तु एतत्सर्वं समालोचकस्य ग्रन्थकर्तृसम्प्रदायकुलजन्मभूम्यादीनां पक्षपातित्वे, समालोच्यविषयस्य च वास्तविकतां प्रमाणयितुम् उपयुक्तपर्याप्तसामग्र्यभावे, समुपलब्धसामग्र्यां च आनुमानिकपुटदाने वा सम्भवति नान्यत्रेति समालोचनपद्धतिपटुभिः प्राचीनमीमांसकैः तत्पद्धत्या दर्शनक्षेत्रे तात्पर्यनिर्णयार्थं निम्नांकितनियमा निरधारिषत—

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्।<br>
अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये॥

लोकवेदसाधारणैतन्नियमानुसारं समालोचको निष्पक्षपातं विवेच्यग्रन्थविषयार्थं निर्णायकत्वेन प्रविश्य तत्र तत्र सन्निविष्टान् गूढातिगूढान् भावान् समुद्भावयन् पाठकेषु तदीयरुचिं समुत्पादयति। कपिलकणादगौतमजैमिनिव्यासादिभिःअपि सर्वैः एतन्नियमानुसरणं कृतम् इत्येतत्तेषां सूत्रार्थपर्यालोचनया परिज्ञायते।

यद्यपि इयं पद्धतिः समानवर्ण्यविषयाणाम्, समविषयकसमकालकर्तृणाम् एककर्तृविभिन्नकृतीनां वा कृते विशेषोपयोगिनी तथापि समविषया विभिन्नकालदेशा अपि तत्तुलामधिरोढुं शक्नुवन्तीति वेदान्तरूपसमविषयत्वेन विभिन्नकालदेशीयान् शंकरादीन् अवलम्ब्य अयं प्रयासः। अस्याः पद्धतेर्हि समालोच्यविषयविश्लेषणपूर्वकगुणदोषाध्ययनेन तद्वैशिष्ट्याभिप्रशंसनेन च पद्धत्यन्तरापेक्षया महनीयत्वम्। यतो हि इयं पद्धतिः एतद् निर्णयते यत् कया विशेषतया कतमः कर्त्ता कियान् गरीयान्। इत्थं चैषा बौद्धिकविकासं करोति। जनाभिरुचिं समुत्पाद्य प्रवृत्तिं परिष्करोति, हेयं तिरस्करोति। उपादेयं च अधिकरोति। अतः अनया पद्धत्या इह ब्रह्मसूत्रविषयविवेचने—विशेषतया एतदवचेयं स्याद् यदुक्तभाष्यसिद्धान्तपंचके कतमो मानवजातेः सत्यज्ञानपिपासां सारल्येन समीचीनतया च उपशमयितुं शक्नोति तथा स्वनिहितदार्शनिकविचारैः सह समुचितरूपेण कियदवधि सूत्रार्थानभिव्यनक्तीति।

यद्यपि सर्वेष्वेव सम्प्रदायेषु पार्थक्येन स्वस्वगुणदोषाः । ते च एकै-केषां पक्षपातिनो विरोधिनश्च । अतः एतन्निर्णेतुं दुष्करं यद् दर्शन-शास्त्रस्य कतमा पद्धतिः अपेक्षाकृताधिकतर्कसंगता उपयोगिनितमा च वर्तते । तथापि यदि दर्शनशास्त्रं बहुत्वे एकत्वभावनास्थापने एव पर्य-वस्यति तदा शंकरस्याद्वैतवादं न कतमः अपि अन्यो वादो नापि वा कतमाप्यन्या दार्शनिकपद्धतिः अत्यशेत एतन्निर्विचिकित्सम् ।

यद्यपि एतेषु भाष्येषु कतमद् ब्रह्मसूत्रस्य वास्तविकमर्थम् अभिव्यनक्ति एतद् न लौकिकबुद्धिगम्यम् । यतो हि प्राचीनग्रन्थार्थावगतिसमस्या केवलं वेदेष्वेव न सीमिता अपि तु एषा दर्शनक्षेत्रमपि व्याप्नोति । तत्रापि च बहवो भागाः अद्यावधि मानवमनीषादुरधिगम्याः येषामर्थावगतिर्न तन्मूले अपि तु विशिष्टाक्षरजुषां विदुषां व्याख्यास्वेव निर्विभर्ति । किन्तु दुःख-स्यायं विषयो यत्तद्व्याख्यातृभिर्विद्वद्भिः स्वसम्प्रदायानुसारमेव तत्सू-त्राणि अर्थापयद्भिः स्वसिद्धान्त सामंजस्यभावस्थले च तानि समाहितनिज-सिद्धान्तार्थानि अकारिषत । ते हि आत्मविचाराणां सूत्राक्षरबन्धनौचित्यं न विचारसहम् अमन्यन्त अपि तु एकैकसूत्रानुस्यूतानेकविचारकुसुमं ब्रह्मसूत्रमवगत्य स्वानुकूलं तद् व्याचख्युः । अत एतत्सम्भवति यत् सूत्र-कारस्य तात्पर्यम् एतेभ्यः पंचभ्यः अपि अतिरिंच्यात् तथापि यथोपल-ब्धोपयोगिप्रमाणैरेतेषु कतमदधिकं निजविवेच्यसूत्रानुसारीत्यन्वेषितु-मेवात्र प्रयत्नः ।

## वेदान्तस्तत्स्रोतश्च

श्रुतिपर्याया वेदा उपनिषदश्च वेदान्तस्य आधारभूताः । वेदो हि भारतीयानां सर्वमान्यः प्रामाणिकग्रन्थः । वेद-शब्दश्च ज्ञानवाचको ग्रन्थ-विशेषे रूढ इति वेदस्य (ज्ञानस्य) अन्तः (चरमविकासः) यत्र दृश्यते स वेदान्तः । ऋक्संहितायां च वेदान्तप्रक्रियायाः समस्ततत्त्वानां विशदवर्णनोपलब्ध्या वेदस्य हिन्दुसर्वमान्यप्रामाणिकग्रन्थस्य अन्तः-सारभागो वा वेदान्तः । इत्थं बहुव्रीहिणा तत्पुरुषेण वा वेदान्तः प्रकृत्यैव वेदाधारः ।

किंच, वेदान्तशब्दः, 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपे च मनोहरे' इति कोषात् स्वरूपबोधकेन अन्तशब्देन ज्ञानार्थस्य परब्रह्मार्थस्य वा वेदशब्दस्य वा सत्यं ज्ञानमनंतं ब्रह्म इति श्रुत्या ज्ञानस्वरूपब्रह्मणो वा अन्तः स्वरूपं यस्मिन् सिद्धान्ते स वेदान्त इति बहुव्रीहिणा सिद्धान्त-विशेषबोधकः, वेदस्य अन्तः सारभूतः सिद्धान्तः स्वरूपं वेति तत्पुरुषेण

या लक्षणया तत्प्रतिपादकोपनिषद्-ब्रह्मसूत्र-गीतात्मकप्रस्थानत्रयीबोधको[1] वर्तते। तत्सम्बन्धेन च यत्र यत्र ब्रह्मसाक्षात्कारस्वरूपमोक्षस्य साधनीभूतविवेकवैराग्यादिसाधनसन्दोहस्य च विशेषचर्चा वर्तते तत्सर्वं वेदान्तपदेन व्यपदिश्यते। अस्य सिद्धान्तस्य वेदसारभूतत्वं मुक्तिकोपनिषदि भगवता रामेण इत्थमुक्तम्—

निःश्वासभूता ये विष्णोर्वेदा जाताः सुविस्तराः।
तिलेषु तैलवद् वेदे, वेदान्तः सुप्रतिष्ठितः[2]॥

वेदान्तं परिभाषमाणेन सदानन्देन च वेदान्तो नामोपनिषत्प्रमाणम् इत्थमुपनिषत्प्रमाणः सिद्धान्तो वेदान्तः प्रतिपादितः। उपनिषच्छब्दश्च उपनि-पूर्वक-विशरणगत्यवसादनार्थकसद्धातोः क्विप्-प्रत्ययान्तः। शंकराचार्येण च त्रयाणाम् अपि एतेषाम् अर्थानाम् समीचीनः समन्वयः कठोपनिषत्सम्बन्धभाष्ये निम्नांकितप्रकारेण प्रदर्शितः—

अविद्यादेः संसारबीजस्य विशरणात् विनाशनात्......परं ब्रह्म वा गमयतीति ब्रह्मगमयितृत्वेन योगात्......गर्भावासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्य अवसादयितृत्वेन वा......ब्रह्मविद्या उपनिषत्[3]।

उपनिषच्छब्दस्य च मुख्यया वृत्त्या ब्रह्मप्रतिपादकत्वं गौण्या च तद्विद्याप्रतिपादकग्रन्थविशेषप्रतिपादकत्वमपि तेनैव तत्रैव भाष्ये प्रदर्शितम्—

तस्माद् विद्यायां मुख्यया वृत्त्या उपनिषच्छब्दो वर्तते ग्रन्थे तु भक्त्या। निपूर्वकसद्धातुश्च तिष्ठत्यर्थकः, उप उपसर्गश्च सामीप्यार्थकः इत्युपनिषच्छब्दः सामीप्याश्रयणार्थकत्वेनैव वैविध्येन व्याख्यातः।

एम्० आर० बोडस महोदयस्य[4] मतं यद् एतस्य मूलार्थः अग्निसामीप्याश्रयणं वर्तते। यतो हि एतद्ग्रन्थेषु निहिता वार्तालापा महायज्ञावसरेषु एव भवन्ति स्म। जे० डब्ल्यू० हैवरमहोदयः[5] समाधौ निश्चलभावेन अवस्थानम् उपनिषद्भावेन सम्बध्नन् तपस्याध्यानावाप्तरहस्यात्मकं ज्ञानम् उपनिषत् इत्थमकथयत्। नारायणः गुरोः सामीप्यप्राप-

---

१. भारतीयदर्शनेतिहासः पृ० ३५५ २. मुक्तिकोपनिषत् १।९

३. कठोपनिषत् सम्बन्धभाष्यम्।

४. विन्टरनित्ज—हिस्ट्री आफ् इण्डियन लिटरेचर (उपनिषद् शीर्षके टिप्पणी)

५. तत्रैव

कत्वेन, स्वकीयमनुस्मृतिटीकायाम् उपनिषच्छब्देन तान् ग्रन्थान् बोधितवान् ये शिष्येण गुरुमुपसृत्य अधीयन्ते स्म।

वस्तुतो यत्किंचिद्ज्ञानावाप्तये शिष्यस्य गुरोः सामीप्यासादनम् उपनिषदो मूलार्थः विकासदशान्तरे च अस्यार्थः तद्गोपनीयं ज्ञानं सिद्धान्तो वा समजनि य एवंभूतायां गुप्तस्थितौ प्रदीयते। अत एव तैत्तिरीयोपनिषदः तृतीयानुवाके अथातः संहिताया उपनिषदं व्याख्यास्यामः इत्युपलभ्यते अत एवोपनिषदां कृते सामान्यतः रहसि भवम् एकान्ते प्रतिपाद्यं वा इत्यर्थकः रहस्यम् एष शब्दः प्रयुज्यते। उपनिषत्स्वेव च 'इति रहस्यम्' 'इत्युपनिषत्' इत्यादिशब्दाः गुप्तसिद्धान्ते अर्थे प्रयुक्ताः समुपलभ्यन्ते। अमरेणापि 'धर्मे रहस्युपनिषत् स्यात्' इत्युक्तम्।

प्रायः सर्वासु उपनिषत्सु एतदुपलभ्यते यद् एषा विद्या कस्मैचित् अपात्राय न देया। छान्दोग्योपनिषत्तु एषा विद्या केवलं विश्वासपात्रशिष्याय स्वकीयज्येष्ठपुत्राय एव वा देया न अन्यस्यै कस्मैचिदपात्राय। समुद्ररसनां रसां तदधिकं वा किमपि तद्विनिमये कथं न स दद्यात् इति प्रतिपादितम्—

इदं तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्। प्रणाय्याय वा अन्तेवासिने। नान्यस्मै कस्मै चन यद्यस्या इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्। एतदेव वा ततो भूयः[१]।

अधुना विंशत्यधिकशतद्वयोपनिषदः उपलभ्यन्ते। विंशतिसंख्याकास्तासु प्राचीनाः शेषाश्चार्वाचीनाः। ब्राह्मणग्रन्थोपनिबद्धास्तु युग्मेन विभक्ताः सर्वप्राचीनोपनिषदः षड् एव—

(क) १—ऋग्वेदीयैतरेयब्राह्मणसम्बद्धा···ऐतरेयोपनिषत्।
२—ऋग्वेदीयकौषीतकिब्राह्मणसम्बद्धा···कौषीतक्युपनिषत्।

(ख) १—कृष्णयजुर्वेदीयतैत्तिरीयसंहितोपनिबद्धा···तैत्तिरीयोपनिषत्।
२—शुक्लयजुर्वेदीयशतपथब्राह्मणोपनिबद्धा···बृहदारण्यकोपनिषत्।

(ग) १—सामवेदीयताण्ड्यशाखाछान्दोग्यब्राह्मणोपनिबद्धा···छान्दोग्योपनिषत्।

(घ) २—सामवेदीयतलवकारब्राह्मणोपनिबद्धा···केनोपनिषत्।

इमाः सर्वाः षट् उपनिषदः भारतीयदर्शनविकासस्य आद्यावस्थां सूचयन्ति। वेदान्तदर्शनं च इह मूलरूपेण सुरक्षितं वर्तते। इमाः सर्वा

१. छां० उ० ३.११।५

गद्यमय्यः । एतद्वर्गपरवर्तितमकेनोपनिषद् एव केवलम् अर्धभागः पद्यमयो वर्तते। द्वितीयवर्गोपनिषदां सर्वांशः अधिकांशो-वा पद्यमयः। ब्राह्मणारण्यकान्यतरविभागरूपेण अनुपलब्धा अपि इमा यया कयाचिद्वैदिकशाखया सम्बद्धाः। कतिचिच्च तासु वैदिकसंहितान्तर्गता एवोपलभ्यन्ते। इमा अपि षड् एव—

१–कठोपनिषत् ( काठकसंहिता, कृष्णयजुः )

२–श्वेताश्वतरोपनिषत्
३–महानारायणोपनिषत् } ( तै० सं० कृष्णयजुः )

४–ईशोपनिषत् ( वाजसनेयी संहिता शुक्लयजुः )

५–मुण्डकोपनिषत्
६–प्रश्नोपनिषत् } ( अथर्ववेदः )

वेदान्तविवेचनं यद्यपि एतास्वपि समुपलभ्यते तथापि बृहत्यो वेदान्तः सांख्य-योगतत्त्वसम्मिश्रितः। पूर्वोक्तासु द्वादशोपनिषत्सु परवर्तिन्योः किन्तु महत्त्वपूर्णयोः मैत्रायणी-माण्डूक्योपनिषदोः संयोजनेन चतुर्दशोपनिषदः वेदान्तस्य आधारः। शंकररामानुजादिभिः एता एव स्वभाष्यैः सुभूषिताः। स्वकीयसिद्धान्तविवेचने यथास्थलं प्रमाणत्वेनोद्धृताश्च।

उपनिषदाम् एतदेव साहित्यं वेदान्तः उच्यते, एषा एव च सा विद्या यदर्थमाचार्या ऊचुः 'सा विद्या या विमुक्तये' इति।

उपनिषदां वेदान्ताभिधानस्य इत्थं हेतुत्रयमायाति-आद्यः मंत्रब्राह्मणोपनिषद्रूपं त्रिविधं हि वैदिकं साहित्यम्। तत्र ऋग्यजुःसामसंहितासु संगृहीतं मंत्रसाहित्यम्। यज्ञादिनिर्देशकाः ब्राह्मणग्रन्थाः। दार्शनिकविवेचनात्मकाश्चान्तिमा उपनिषद इति वैदिकसाहित्यस्यान्तिमभागत्वाद् आसां वेदान्तत्वम्। द्वितीयः ब्रह्मचारिणः पूर्वं वेदाध्ययनम्, समाप्तब्रह्मचर्याश्रमस्य च तस्य गृहस्थाश्रमप्रवेशः। तत्र च तदाश्रमसम्बद्धयज्ञादिसम्पादनार्थं ब्राह्मणग्रन्थापेक्षा। तदनन्तरं च वानप्रस्थसन्न्यासाश्रमकृताभिनिवेशस्य वन्यप्रदेशे शान्तमेकान्तं च जीवनं यापयतः ऐहलौकिकपारलौकिकरहस्यजिज्ञासोस्तस्य उपनिषदां साहाय्यस्य आवश्यकता। इत्थम् अध्ययनपरम्परायाम् उपनिषदाम् अन्ते अधिगमात् एतासां वेदान्तत्वम्। तृतीयः, अधीताखिलपुराणज्यौतिषाद्यनवद्यविद्यः अपि अनधिगतवेदसारभूतौपनिषदतत्त्वः न कश्चिदपि विपश्चित् वेदवित् वक्तुं शक्यते नापि च तस्य आत्यन्तिकमानसिकशान्तिरिति औपनिषदज्ञानं

विना अन्यशास्त्रीयज्ञानस्यापूर्णप्रायत्वात् उपनिषदध्ययनेनैव च वेदानामन्तत्वादासां वेदान्तत्वम् ।

अस्यैव च साहित्यस्य वचनपुष्पसंग्रन्थनसाधनभूतत्वेन ब्रह्मसूत्रमपि वेदान्तस्तथा तद्वचनामृतसंग्रहस्वरूपा श्रीमद्भगवद्गीता अपि च वेदान्तपदव्यवहार्या वर्तते । अस्मिन्नेव च वेदान्ते सन्निविष्टाः अद्वैत-विशिष्टाद्वैत-द्वैताद्वैत-द्वैत-शुद्धाद्वैतप्रभृतिवादाः तत्तत्सिद्धान्तप्रवर्तकाचार्यैः तत्र तत्र समुपोह्य संवलिताः वैदिककालादेव च पूर्वपक्षसिद्धान्तपक्षान्यतररूपेण मनीषिमण्डलाध्ययनाध्यापनपद्धतौ अद्यावधिप्रचलिताः तत्तत्सिद्धान्तानुसारिभिः, वस्त्रतिलकदण्डधारणादिना परिवर्तिततज्जीवनयापनपद्धतिभिः, इदानीं व्यावहारिकजीवने अपि च सुरक्षिताः सन्ति ।

उपनिषत्सु च एते वादाः यत्र तत्र बीजरूपेण इत्थमुपलभ्यन्ते—

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति पंचाग्नयो ये च त्रिणाचिकेताः[1] ।
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति[2] ।
ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता ।
अन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्[3] ॥
समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः[4] ॥

इत्यादिश्रुतयो जीवेश्वरयोः भेदप्रतिपादकत्वेन माध्वद्वैतपक्षं समर्थयन्ति ।

एवमेव—

एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्[5] ॥

तथा—

उद्गीथमेतत्परमं तु ब्रह्म तस्मिन् त्रयं सुप्रतिष्ठाक्षरं च[6] ।

---

१. कठोपनिषत् १।३।१ २. मुण्डकोपनिषत् ३।१।१
३. श्वे० उ० १।९ ४. मुं० उ० ३।१।२
५. श्वे० उ० १।१२ ६. तत्रैव १।७

भोक्ता जीवात्मा, भोग्यं प्रकृतिः, प्रेरिता तत्प्रेरकः परमात्मा च एतत्त्रयं ब्रह्मैव ( ईश्वरचिदचित्पदार्थत्रितयस्वरूपो हरिः एतदेव विशिष्टाद्वैतमूलसिद्धान्तः ) एवम्—

उद्गीथ ओंकारः एतद् ब्रह्मणः स्वरूपम्, तच्च त्रिरूपम् इत्यादिश्रुतयो रामानुजविशिष्टाद्वैतपक्षं प्रतिपादयन्ति। इत्थमेव च—

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च[1]॥

अर्थात् तस्य परमात्मनः देहेन्द्रियादिभेदो न वर्तते। स च ज्ञान-बल-क्रियादि-रूपविभिन्नशक्तिसम्पन्नः। एवं तत्रैव—

न तस्य कश्चिद् पतिरस्ति लोके न चेशिता नैव च तस्य लिंगम्[2]।

एवम्—

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च[3]॥
... ... ... ... ... ... ... ... ...

एको वशी निष्क्रियाणां बहूनाम् एकं बीजं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्[4]॥

इत्यादिश्रुतयः, तथा—

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा[5]
... ... ... ... ... ... ... ... ...

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन[6]।
... ... ... ... ... ... ... ... ...

इत्यादिश्रुतयो वल्लभशुद्धाद्वैतमभिव्यंजन्ति। एतन्मते ब्रह्ममायया निर्लिप्तमिति नितरां शुद्धं वर्तते। एतच्च ब्रह्मैव अद्वैततत्त्वम् इति एतस्य मतस्य शुद्धाद्वैतम् इति यथार्थं नाम।

अथ च-स यथा महाराजो जानपदान् गृहीत्वा स्वे जानपदे यथाकामं परिवर्तेत एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते[7]। तथा च-विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च[8]।

---

१. तत्रैव ६।८ २. तत्रैव ६।९
३. तत्रैव ६।११ ४. तत्रैव ६।१२
५. मुं० उ० ३।१।८ ६. तत्रैव ३।२।३
७. बृ० उ० २।१।१८ ८. तै० उ० २।५

इत्यादिश्रुतयो जीवात्मनः कर्तृत्वं प्रमाणयन्ति ।

इत्थमेव च—यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मा अन्तर्यामी अमृतः[1] ।

एवमेव च, सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि[2], तथा केनोपनिषदः यक्षाख्यायिका[3],

आभिः सर्वाभिः श्रुतिभिः इत्थं ज्ञायते यत् जीवः स्वातन्त्र्येण न किञ्चित् कर्त्तुं शक्नोति । यत् किञ्चित् च स करोति तत् सर्वं परमेश्वर-साहाय्येनैव तत्प्रदत्तशक्तिभिर्विधत्ते ।

एतेन एतत् समायातं यत् जीवात्मा कर्त्ता, परमात्मा च तत्प्रेरकत्वेन कर्मणि नियोजकः । इत्थं जीवात्मनो भिन्नत्वम् । श्रुतिषु चापि स्थाने स्थाने तयोर्भेदः[4] प्रदर्शितः । जगतः कारणं च परं ब्रह्म प्रतिपादितम् एतेन तयोरभेदः अपि सिध्यति श्वेताश्वतरोपनिषदि—

एको देवः, एको वशी, इत्यादिभिः जीवेश्वरयोः अंशांशिभावद्वारा निम्बार्कद्वैताद्वैतभावः अभिव्यक्तः ।

अथ च—

इन्द्रं मित्रं वरुणमग्निमाहु रथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ॥

ब्रह्मणो विभुत्वमहत्त्वपूर्णकल्पनावर्णनं पुरुषसूक्ते "पुरुष एवेदं सर्वम्" इत्यादिना तथा अदितिसूक्ते अदितिर्द्यौ रदितिरन्तरिक्षम् इत्यादिना चोपलभ्यते । एवम् अथर्ववेदीययोः स्कम्भोच्छिष्टसूक्तयोः 'कियता स्कम्भः

---

१. बृ० उ० ३।७।२२ २. छा० उ० ६।३।२

३. केनोपनिषत् ३।१।१० ४. ऋ० १।१६४।४६

सूर्यस्य एकत्वे अपि ऐश्वर्याद्यनन्तविभूतियुक्तत्वेन स इन्द्राद्यनन्तनामा । स एव वृष्ट्यादि कारणम्, पापिष्ठप्राणिनियन्ता यमः अन्तरिक्षगामी वायुश्च उच्यते । सायणाचार्येण अस्य मंत्रस्य भाष्यान्ते सूर्यस्य ब्रह्मणः अनन्यत्वेन सार्वात्म्यमुक्तम् भवतीत्युक्त्वा सूर्यस्य ब्रह्मणः अभिन्नत्वेन सर्वरूपता उक्ता । अयं मंत्रः श्वेताश्वतरोपनिषदः तृतीयचतुर्थाध्याय-योरपि प्रतिपादितः ।

प्रविवेशभूतम्'[1] तथा 'उच्छिष्ट इन्द्रश्चाग्निश्च'[2] एवं स्कम्भोच्छिष्टनाम्नोः पर्य्यालोचनेन ब्रह्मणो व्यापकता जीवात्मना च तदभिन्नता अथर्ववेद-सम्मतेति प्रमाणीक्रियते। एवम् अकामो धीरो अमृतः स्वयम्भूः[3]...... एष सिद्धान्तः अद्वैतवेदान्तभावनया महत्त्वपूर्णः। एतेषां सूक्तानाम् अनुसन्धानेन स्पष्टमेतद् यत् प्रजापतिः, पुरुषः हिरण्यगर्भः, स्कम्भः, उच्छिष्टश्च एतत्सर्वं परमतत्त्ववाचकम्। एतदेव च उपनिषदां ब्रह्मतत्त्वस्य ब्रह्मात्मैकत्ववादस्य च पृष्ठभूमिः। एते एव च बीजाः उपनिषत्सु पल्लविताः।

नासदीयसूक्तं च एतेषु सर्वतो महत्त्वपूर्णम्। ऋषीणामाध्यात्मिकदृष्टिः अत्र पूर्णरूपेण अभिव्यक्तीकृता। एतत्सूक्तं येन रूपेण अद्वैतभावनां प्रकटीकरोति न तेन रूपेण अन्यत् कतमदपि सूक्तम्।

तत्रत्यो हि ऋषिः विश्वसमस्याविषयकानि किंमूलं किं योनि वा एतत् विश्वम् इत्यादिप्रश्नोत्तराणि स्वान्तर्दृष्टिसाहाय्यानि नासदासीन्नो सदासीत्तदानीम् इत्यादिना प्रास्तावीत्। एषा च वेदान्तसिद्धान्तनितान्तोदात्तैकत्वभावना या ऋषिणा एकं हि तत् (सा च स च तच्च इत्येकशेषेण सर्व-नाम-रूपात्मकचराचररूपं तत्) इत्थं सर्वसामान्यनपुंसकलिंगेन निर्दिष्टा। इन्द्रवरुणादयश्च तस्यैव अद्वितीयब्रह्मणो विभिन्नरूपाणि। एवमेव छान्दोग्योपनिषदि—

सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्[4]

बृहदारण्यकोपनिषदि च—

मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति[5]॥

इत्यादिषु सर्वत्र सच्चिदानन्दपरब्रह्मणः अद्वितीयताप्रतिपादिता वर्तते। भगवत्यां गीतायामपि—

मत्तः परतरं नान्यत् किंचिदस्ति धनंजय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव[6]॥
सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तद् ज्ञानं विद्धि सात्त्विकम्[7]॥

---

१. अथर्व० १०।७।८ २. तत्रैव ११।७।१
३. अथर्व० १०।८।४४ ४. छा० उ० ६।२।१
५. बृ० उ० ४।४.१९ ६. गीता अ० ७।७
७. तत्रैव १८।२०

उपलभ्यते। एतेन सर्वेण एतदायाति यद् ऋग्वेदीयाद्वैतवाद एव ब्रह्मकमण्डलुब्रह्मद्रवबिन्दुरिवोत्तरोत्तरं जाह्नवीरूपेण विभिन्नधाराभिर्मानवमानसजगदाप्लावयन् निजरूपेणैव स्थाने स्थाने पुराणेषु अन्यत्रापि च विभिन्नदर्शनेषु व्यापकरूपेण परिलक्ष्यते।

किन्तु इत्थमद्वैतवादस्य व्यापकत्वे अपि वेदान्तपदेन स एव सर्वत्र गृह्येत न विशिष्टाद्वैतादयः इति न भ्रमितव्यम्। अद्वैतवादो हि शंकराचार्याभिप्रेतवेदान्तप्रतिपादकान्यतमपद्धतिः। सा च विभिन्नतायाम् एकत्वस्थापिकेति शान्तिसुखमार्गप्रदर्शिका नूनं दिव्यपद्धतिः। यतो हि पारस्परिकविभिन्नताभावाज्ञानमेव सांसारिककलहादिमूलम्। किन्तु तत्त्वमसीति भावनया सर्वस्मिन्नेकीभूते तत्क्षणमेव सर्वघोरोपद्रवशान्तिनिश्चितिः इत्यद्वैतवाद एव विश्वमात्रे शान्तिं स्थापयितुमलम्। अस्यैव चेयं शिक्षा ईशावास्योपनिषदि समुपलभ्यते—

> यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति।
> सर्वभूतेषु चात्मानं ततो न विजुगुप्सते[1]॥
> यस्मिन् सर्वाणि भूतानि आत्मैवाभूद् विजानतः।
> तत्र को मोहः कः शोकः एकत्वमनुपश्यतः[2]॥

अस्यैव च अद्वैतवादस्य उपदेशः संक्षेपेण श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन अर्जुनाय इत्थं प्रदत्तः—

> विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
> शुनि चैव श्वपाके च पण्डिताः समदर्शिनः[3]॥

तथापि रामानुज-निम्बार्क-मध्व-वल्लभादिनैकाचार्यैः निजपद्धतिभिः प्रदर्शिताः विशिष्टाद्वैतादयः अपि अन्ये सिद्धान्ता यथास्थानं वेदान्तपदेन गृह्यन्ते। ते चापि तत्तदवलम्बितभक्तान् तत्तत्प्रकारेण मोक्षं निर्दिशन्ति। शंकरसिद्धान्तेन एतद् जगत् माया भ्रमो वा मन्यते। अन्यैराचार्यैर्मायावादो न स्वीकृतः। तेषां मते जगतः अचिरस्थायित्वम् एव तन्मिथ्यात्वम्। उद्गमस्तु सर्ववेदान्तानाम् भगवान् वेद एव इति प्रदर्शितचरम्। एतेषाम् आध्यात्मिकविचाराणां यावती स्पष्टा स्थितिः वेदे समुपलभ्यते तावती अन्यत्र कुत्रापि हि न परिदृश्यते। तत्र द्यौः, पृथिवी इत्यादिषु एकैका देवता उत्तरोत्तरं तत्तदाराधकान् सन्तोषयितुमक्षमा

---

१. ई० उ० ६ २. तत्रैव ७

३. गीता ५।१८

तन्मनस्सु एतां धारणां दृढीकृतवती यत् एताभ्यः अपि महीयसी नूनं काचिच्छक्तिर्वर्तते यद्वशावर्तिन्यः एताः सर्वाः शक्तयः सन्ति । एषैव भावना बृहदारण्यकोपनिषदि एवमुपलभ्यते—

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवाः याज्ञवल्क्येति……

कतम एको देव इति । प्राण इति स ब्रह्म त्यद् इत्याचक्षते[1] ।

सत्स्वपि वेदवर्णितानेकदेवेषु एषा एव एकदेवत्वभावना प्राचीनाभिः वैदिकीभिः ऋग्भिः सम्बद्धा इति तत्र तत्र एक एव देवो महत्तम उक्तः । इत्थं च सूर्यः ( सविता ) प्रजापति ( सर्वप्राणीश्वर ) नाम्ना सम्बोधितः । कुत्रचिच्च एक एव देवः सामान्ये नपुंसकत्वात् महत्तमदिव्यशक्तिः प्रतिपादितः—'महद्देवानामसुरत्वमेकम्'[2] ।

एतदेव ऋग्वेदीयासु अन्यासु अपि ऋक्षु समुपलभ्यते यत्र च चन्द्रमसि सूर्ये दिवि च अज्ञातायां शक्त्यां सम्बोधितायामपि एतस्य एतत्सर्वरचयितुः नामरूपात्मकजगत्प्रतीकस्य दिव्यतत्वस्य ब्रह्मणः भावना अन्तर्निहिता वर्तते ।

स एवाग्निस्तदादित्य स्तद्वायु स्तदु चन्द्रमाः ।[3]

एतेषां धार्मिकविचाराणाम् अयमेव निष्कर्षः यच्च आश्चर्यजनकप्रकृतिचमत्कृतिपूर्णनाटकादृश्यशक्तिनैसर्गिकविश्वासाद् आरभ्य एकस्य महतः अज्ञातस्य अदृश्यस्य विश्वासे पर्यवस्यति । यस्य वरिवस्या, कामम् अज्ञानेनैव सा समवाप्ताविच्छिन्नता स्यात्, अद्यावधि नैरन्तर्येण निर्वाह्यमाणा समवलोक्यते । औपनिषदैः ऋषिभिः समवाप्तः धार्मिकविचाराणाम् अयमेव अनर्घोनिधिः । चतुर्वेदरत्नाकरनिर्मन्थनोपलब्धः अयं वेदान्तसिद्धान्त एव च रत्नराशिः । एभिः एवं च विचारैः ते ऋषयः महतीम् अज्ञाताम् अदृष्टाम् च निःसीमशक्तिं नामरूपात्मकजगता प्रत्यगात्मना च सम्बद्धाम् अधिगच्छन्तः तस्मिन्नेव प्राचीनविचारशिलाधारे[5] धर्म-

---

१. बृ० उ० २।९।९ २. ऋ० २।३।५५

३. यजु० ३२।१ तै० बा० १०।१।७

४. विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ( यास्कनिरुक्ते २।४ )

५. वस्तुगत्या परकालिकसमस्तभारतीयदर्शनस्य मूलमुपनिषदः । तासां सिद्धान्तेनैव बादरायणकृतवेदान्तसूत्रसिद्धान्तस्य शिलान्यासो विहितः ।

( विंटरनित्सः हिस्ट्री आफ इण्डियन लिटरेचर )
( पृ० २६४-६५ )

दर्शनोभयप्रधानद्वारं भव्यातिभव्यविशालवेदान्तदर्शनप्रासादं निरमिमत इत्यत्र पाश्चात्यानामपि न वैमत्यम्।

एतेन ये अनेकदेवतानामस्तित्वे यज्ञयागादीनां च अमोघफलदायकत्वे न विशश्वसुः तेषामेव कल्पना उपनिषन्नामान्तरवेदान्ते सन्दृब्धाः[1] तथा च यदा ब्राह्मणाः शुष्कयजनयाजनविद्यानिरता आसन् तदैव अन्ये तन्महत्तमप्रश्नविचारनिमग्ना आसन् यच्च अत्युत्तमनिरूपणं पश्चात् उपनिषत्सु उपनिबद्धं संजायते स्म। याज्ञिकपौरोहित्य-साम्प्रदायिकजात्यसम्बद्धेषु एतेषु एव आरण्यका मुनयः परिव्राजकाश्च बभूवुः। ये न केवलं परिहीणसांसारिकसुखान् एव अपि तु ब्राह्मणानां यज्ञयागादिभ्यः सर्वथा मुक्तान् आत्मनः अस्थापयन्[2] इत्यादि वदन्तो विण्टरनित्सादयः पाश्चात्याः परास्ताः। एतस्या विचारपद्धतेः सर्वथा निर्मूलत्वात्। ऋग्वेदादिसंहितासु हि उपनिषत्सु वा न कुत्रापि देवतासत्तायां यज्ञयागाद्यमोघतायां वा शंका कृता वर्तते। सत्स्वपि क्वाचित्कनास्तिकमतनिर्देशेषु तदग्राह्यताप्रदर्शनमात्रमेव तदुपयोगित्वम्। इत्थं च ऋग्वेदीयद्वितीयमण्डलस्य द्वादशे सूक्ते इन्द्रस्तुतौ तत्पराक्रमवर्णनमेव, न चेन्द्रसत्ताशंकापरं तत्। एवं दशममण्डलीयैकविंशत्यधिकशततमं सूक्तं हिरण्यगर्भसूक्तम्। तत्र कस्मै देवाय हविषा विधेम इत्यस्य कस्मै इतिपदस्य सायणाचार्येण, प्रजापतये इत्यर्थो विहितः स च सर्वथा युक्तियुक्तः विण्टरनित्समहोदयेन च कस्मै इत्यस्य प्रश्नार्थकत्वं स्वीकृतम् तच्चानर्गलम्। अस्मिन्नेव सूक्ते 'उपासते प्रशिषं यस्य देवाः' इत्युक्त्या अन्यदेवानां प्रजापत्याद्योपासनोक्त्या स्पष्टतया अन्यदेवतासत्ता स्वीकारात्।

नासदीयसूक्ते चापि यत्र प्रलयवर्णनं तत्रत्यः न अयमभिप्रायः यत् अन्यदेवतासत्ताभावसूचकं तत्प्रकरणम्। प्रलयकाले नरपशु-पक्षीत्यादिवद् देवता अपि न तिष्ठन्ति। अन्यदा तैः सह ता अपि तिष्ठन्ति। अत एव अर्वाग् देवा अस्य विसर्जनेन इति इहैव सूक्ते प्रतिपादितम्। इत्थं च वेदेषु देवतासत्ताविषये न कश्चिदपि सन्देहः।

किन्तु वेदे देवतासत्तास्वीकृत्या न तत्र अनेकेश्वरवादसिद्धान्ताभिप्रायः अनेकेश्वरवादो हि अनेकदेवतानां पारस्परिकस्वतन्त्रसत्तास्वीकृतिः। वेदे च सत्स्वपि अनेकदेवेषु तेषामेकदेवताधीनत्वम् इत्येकेश्वरसिद्धान्तः। अन्यदेवतानाम् तस्मात् परमेश्वरादेव समुत्पत्तिरिति ताः तस्यैवांशाः। अत एव ऋग्वेदीयप्रसिद्धपुरुषसूक्तनासदीयसूक्त-हिरण्यगर्भसूक्तादिषु अय-

१-२. विण्टरनित्सः (हि॰ इ॰ लि॰ पृ॰ २२६-२७)

मेवेकेश्वरसिद्धान्तः प्रतिपादितः इति ऋग्वेदीयकतिपयमन्त्रेषु अन्यदेवता-सत्तासन्देहवद् यज्ञीयविधानानावश्यकतां प्रतिपित्सूनां कल्पना एव उपनिषन्नामान्तरवेदान्तसिद्धान्तस्थापिका एष विचारो नितरामवद्यः। वेदो हि वेदान्तस्य मूलस्रोतः। वेदभागोपनिषदश्च तदाधार इत्येकैकं तद्वाक्यं प्रामाणिकम्।

## वेदोवेदान्तश्च

पूर्वत्रवेदान्तस्य मूलस्रोतो वेदः प्रमाणितम्, अत्र च वेदवेदान्तौ संक्षिप्त्या परिचाय्यमानौ परस्परोद्गमोद्गतभावसम्बन्धातिरिक्तं कथमन्योन्याश्रितौ इति प्रदिदर्शयिषया कुड्यचित्रन्यायेन आदौ वेदवेदान्तयोरर्थविचारः क्रियते।

अर्थविचारः—वेदशब्दो हि विद् धातोः 'करणाधिकरणयोश्च' इति करणार्थघञन्तः। अत एव वेदशब्दनिर्वचनं कृष्णयजुर्वेदीयभाष्यभूमिकायाम् (ऐतरेय्यांच) सायणेन इत्थमकारि—वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया अनेन इति वेदः।

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विन्दन्ति वेदेन तस्माद् वेदस्य वेदता॥

इत्यपि तत्रैव प्रकटीकृतम्। किन्तु वेदशब्दो विद् धातोर्निष्पन्न इति विभिन्नार्थकः। तथापि सर्वेषां तेषामर्थानामत्र सामञ्जस्यम्। विद् धातुर्हि—

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।
विन्दते विन्दति प्राप्तौ श्यन् लुक्श्नम्शेष्विदं क्रमात्।

एतावदर्थकः। तत्र दैवादिको विद्धातुः सत्तार्थक इति वेदानां नित्यत्वेन तेषां सत्ता नित्या। इत्थं सत्तारूपः अर्थः वेदशब्दे चरितार्थः। वेदशब्दो हि ज्ञानार्थकत्वेन प्रसिद्धः—सर्वं ज्ञानं वेदादेवेति सर्वशास्त्रपुराणोपपुराणानाम् उद्गमः वेद एवात्र न कस्यचिद् वैमत्यम्। 'विन्ते-विद' विचारणे इत्यत्र यश्च विचारः स वेदार्थमेवान्तर्निधत्ते। एतदर्थमेव रौधादिको विद् धातुरपि पुरुषार्थचतुष्टयप्रदायकविचारसन्निविष्टत्वेन चरितार्थः।

विद् चेतनास्थाननिवासेषु इति चौरादिकः अपि धातुः। अयम् अर्थः अपि अनेनैव चरितार्थः।

इत्थं वेदशब्दस्य ज्ञानसामान्यवाचकत्वात् आधिभौतिकाध्यात्मिकाखलज्ञानबोधकतया सत्ता-विचार-प्राप्ति-व्याख्यान-ज्ञापनादि सकलार्थानां तत्र सन्निवेश इति वेदेन न केवलं मंत्राणाम् अपि तु तन्मंत्रैः सह तत्तद-

षिप्रोक्ताखिलोपदेशवाक्यानामभिप्रायः। आद्युदात्तो वेदशब्दश्च पाणिनिमते योगरूढ्या ग्रन्थराशिबोधकः।

सनातनसम्प्रदायानुसारेण च ऋग्यजुःसामाथर्वनामभिः प्रसिद्धाः चत्वारो वेदाः। तेषां च संकलनेन एकत्रिंशदधिकैकादशशाखाः आसन्। किन्त्वद्य तासु त्रिचतुरा एव समुपलभ्याः। अवशिष्टाश्च महाकालमहोदरदर्यन्तर्गताः संजाताः। प्रतिशाखं च तत्र विज्ञानम्, स्तुतिः, इतिहासश्च मुख्यो विषयः। तत्र अग्निमीळे इत्यादयः स्तुतिपरका मंत्राः। बहवश्च तेषु सृष्टीतिवृत्तमनुष्यचरितोभयभेदेनेतिहाससम्बद्धाः। अन्ये शुद्धविज्ञानतत्वप्रतिपादकाः। एतदतिरिच्य एतासु संहितासु सूत्ररूपेण कर्मोपासनाज्ञानानामपि निरूपणम्। इत्थं स्तुतिविज्ञानेतिहासकर्मोपासनाज्ञानैतद्विषयषट्कसंक्षिप्तनिरूपकसंहितात्मकैकत्रिंशदधिकैकादशशाखो वेदः।

द्वितीयश्च वेदभागो वेदव्याख्यानस्वरूपो ब्राह्मणात्मकः। अस्य कर्मोपासनाज्ञानभेदेन क्रमशः विध्यारण्यकोपनिषदः त्रयोभागाः। तत्र कर्म (यज्ञादि) प्रतिपादकब्राह्मणभागो विधिः। उपासनाप्रतिपादको ब्राह्मणभागः आरण्यकम्। ज्ञानप्रतिपादकब्राह्मणभागश्च उपनिषन्नाम्ना व्यवह्रियते। इत्थं संहिताविध्यारण्यकोपनिषदित्येतत्पर्वचतुष्टयस्वरूपा वेदस्यैका शाखा सम्पद्यते।

ब्रह्माभिधेयान्तरः संहितात्मको मूलवेदः। शेषाश्च (विध्यारण्यकोपनिषदः) त्रयो ब्राह्मणाः। ब्रह्मब्राह्मणयोश्च समुच्चयो वेदः। अत एवास्य ब्रह्मब्राह्मणात्मकस्य (मंत्रब्राह्मणात्मकस्य) अन्तिमो भागः उपनिषदः इति दार्शनिकमर्यादानुसारेण एष उपनिषद्-भागो वेदान्त उच्यते। ज्ञानप्राप्तिर्हि वेदादेशस्य चरमं लक्ष्यमिति ज्ञानमेव वेदान्तः। ज्ञानपरिनिष्ठित्या एव च कर्मोपासनयोः अत्यन्तावश्यकत्वम् इति धर्मसूत्रकारेण वेदभाष्ये भगवता आपस्तम्बेन 'मंत्रब्राह्मणयोर्वेदनामधेयत्वम्' इति प्रतिपादितम्।

अस्य शब्दराशिरूपस्य वेदस्य अवरब्रह्म-परब्रह्मापरपर्यायं कर्मकाण्ड-ज्ञानकाण्डात्मकं भागद्वयम्। यथा चोक्तम्—

> द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
> शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति'[1] ॥

शब्दब्रह्म एव कर्मकाण्डम्। कर्मशब्दश्चात्र स्वव्यापकार्थत्वेन यज्ञतपोज्ञानादीनां सर्वेषां वेदोक्तसत्कर्मणां वाचकः। तैरेव हि अपहृतमालिन्ये

---

1. मैत्रायण्युपनिषद् ६।२२ तथा त्रिपुरातापिन्युपनिषद् ५।१७।

चेतसि आत्मस्वरूपं प्रतिबिम्बते। अयमेव च वेदान्तापरपर्यायो वेदानां निष्कर्षः। अत एव भगवता कृष्णेन गीतायाम्—

'सर्वकर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इत्युक्तम्।

एतेन ज्ञानकर्मणोः अभिन्नत्वं प्रतिपादितम्। विधिना विहितकर्माणि कुर्वाणस्य स्थितप्रज्ञावस्थैव ज्ञानम्। ग्रन्थाध्ययनमात्रेण च तत्प्राप्त्यसंभवः। इत्थं वेदवेदान्तयोः अभिधेयार्थपर्यालोचनेन एतत्स्पष्टं संजायते यत् किमर्थं वेदो वेदान्तश्च ज्ञानार्थकत्वेन प्रयुज्येते कियच्च एनयो स्तादात्म्यम् कियद्वा एतत्साधनम् आत्मोद्धरणमार्गं निष्कण्टकीकर्तुम् अपेक्ष्यते। अत एव च, 'वेदाद्धर्मो हि निर्बभौ' 'वेद एव द्विजातीनां निःश्रेयसकरः परः', 'सर्वं वेदात् प्रसिध्यति' इत्यादयः विदितवेदितव्यानां महर्षीणां वेदराशिं प्रति श्रद्धांजलयः।

वेदवेदान्तयोः एवं मुख्यार्थपर्यालोचनपूर्वकं तत्तादात्म्यावबोधनानन्तरमिदानीं गौणभेदेनेत्थं वेदान्तार्थावबोधनम्—

उपनिषन्निरूपणप्रसंगे 'तस्माद् विद्यायां मुख्यया वृत्त्या उपनिषत् शब्दो वर्तते ग्रन्थे तु भक्त्या' इति प्रतिपादितचरम्। तथैव च वेदान्तस्य मुख्यया वृत्त्या ज्ञानार्थत्वे अपि तस्य तत्प्रतिपादकग्रन्थपरकः भाक्तः अर्थः न व्याहन्यते। इत्थं वेदान्तं परिशीलयद्भिः अस्माभिः एतद् अवश्यमेव अवधारणीयं यत् उपनिषद्शब्दवद् वेदान्तशब्दः अपि भक्त्या तत्तदवबोधकग्रन्थपरः। उपनिषदाम् अपि च तदन्तर्भूतत्वेन उपनिषदपेक्षया व्यापकश्च। तत्र च आकलिताखिलवेदान्तसिद्धान्ततया गीतोपनिषद्ब्रह्मसूत्रेतिविभिन्नाभिधा प्रस्थानत्रयी सविशेषं निर्देशार्हा। यत्र च स ( वेदान्तः ) रूपद्वये समुपलभ्यते। एकतरद्धि तदीयं विशृंखलितविचारपरिपूर्णम् उपनिषद्रूपं यासां सारभूता गीता उच्यते। द्वितीयं च बादरायणनिर्मितं, सावहितिविहितक्रमं ब्रह्मसूत्ररूपम्। एतदेव हि वेदान्तस्य-सर्वोत्तमं रूपम् इति सर्वैः स्वीकृतम्। यद्यपि एतेषु सूत्रेषु एकैकं वेदान्तविशिष्टाक्षरजुषां विदुषामपि दुरूहं तथापि कण्ठस्था सूत्रग्रथिता एषा वेदान्तविचाररत्नमाला स्वावभासा वेदान्तजिज्ञासून् ब्रह्मजीवजगदादिविचारभ्रान्तेः अन्धतमसात् सारल्येन बहिर्निष्कासयतीति निर्विचिकित्सम्। नूनम्, एषां सूत्राणां मार्मिकव्याख्याः गुरुपरम्परया प्राचलन् ताश्चैव शंकरेण स्वकीये भाष्ये समुपोद्वलिताः। यतो हि शांकरभाष्यं न सूत्राणां व्याख्यानमात्रम् अपि तु पूर्वापरपक्षोपक्रमोपसंहारादिसंवलितं

---

१. गीता ४।३३

वेदान्तसिद्धान्तस्य साक्षात्स्वरूपम् । सूत्राणि तु तदुपयोगिरूपरेखा-मात्रम् । तथापि तेषु परकालिकैः विभिन्नसिद्धान्तस्थापकैः रामानुजप्रभृतिभिः विभिन्नाः टीकाः कृत्वा स्वस्वसिद्धान्तान् स्थापितवन्तः इत्येत-त्तन्महनीयत्वम् ।

वेदवेदान्तयोः इत्थं साधारण्येन अर्थनिरूपणानन्तरं भगवता वेदेन सह गीतोपनिषद्ब्रह्मसूत्राणाम् एकैकं विशेषः सम्बन्धः अधुना निर्दिश्यते ।

वेद उपनिषदश्च:—वेदान्तो नाम उपनिषत्प्रमाणम् तदुपकारीणि शारीर-कसूत्रादीनि चेति सदानन्दोक्त्या मुख्यगौणभेदेन वेदान्तशब्दो द्व्यर्थकः इति तदर्थतया वेदस्यान्तो वेदान्त इति व्युत्पत्त्या वेदान्तशब्द उपनिष-दर्थकः । उपनिषदर्थावबोधनसाहाय्येन च शारीरकसूत्रार्थकः उपनिषद-र्थसंग्राहकत्वेन च श्रीमद्भगवद्गीताद्यर्थक इत्युपनिषदां प्रामुख्येन वेदान्त-त्वम् । मंत्रब्राह्मणात्मकवेदस्यान्तिमो भागो ह्युपनिषदः । तत्र काचिद् उपनिषद् मंत्रभागे अन्तर्भवति अन्या च ब्राह्मणभागे; तथाहि—

ईशावास्योपनिषत् शुक्लयजुर्वेदीयमाध्यंदिनसंहितायाः अन्तिमो भागः ।

श्वेताश्वतरोपनिषच्च इदानीम् अप्राप्यायाः कृष्णयजुर्वेदीयश्वेताश्वतर-संहितायाः शेषो भागः ।

छान्दोग्योपनिषच्च सामवेदीयकौथुमशाखायाः पंचविंशब्राह्मणस्य अन्तिमो भागः ।

इत्थं शुक्लयजुर्वेदीयकाण्वसंहितायाः शतपथब्राह्मणस्यावशिष्टाः षट् अध्यायाः बृहदारण्यकम् । एवमन्या अपि उपनिषदः यस्य कस्यापि वेदस्य अन्तिमो भाग इत्युपनिषदां वेदत्वम् । तदन्तभागतया च वेदान्त-त्वमिति वेदवेदान्तोभयत्वम् उपनिषत्सु न विरुध्यते । यस्मिन्नंशे चात्र भेदः स अधस्तान्निर्दिश्यते ।

ऋग्वेदे प्रकृतितत्वानां देवतारूपेण स्तुतिरिति धार्मिकतायाः बाह्य-रूपस्य सर्वप्रथमविकासः तत्र उपलभ्यते । उपनिषदश्च धार्मिकतायाः आन्तरिकरूपम् अभिव्यक्तीकुर्वन्ति अतस्तत्र नैको मंत्रो देवतादिस्तुतिपरः प्रत्युत तत्रायं विचारो यदेतेषां प्रकृतितत्वानां क आधार इति । सर्वासु उपनिषत्सु देवतास्तुतिपरकमंत्राभावपूर्वकः तत्प्रकृतितत्वजन्यभयाभावा-भासः इति वैदिककालोत्तरोपनिषत्काले प्रतिपदम् अस्माकं धार्मिक-प्रवृत्तिः अन्तर्मुखीभूत्वा परित्यक्तदेवतान्तरा आत्मानं प्रतिगच्छतीति "तत्वमसि" भावनया यदा आत्मैव विश्वात्मा तदा कः कुतो बिभीतात् कस्य च किमर्थं स्तुतिं कुर्यात् । को वा कस्मै किं दद्यात् । इत्थं वेदान्

अपहाय उपनिषदाम् आश्रयः परित्यक्तस्तोत्रः दर्शनसर्वस्वः । तत्र मंत्रापेक्षया ध्यानस्य, अनेकदेवापेक्षया रहस्यात्मकस्य एकस्य महतः तत्वस्य च प्रधानता ।

एतदतिरिक्तम् एतदपि विचारसरणिम् अधिरोहणीयं वर्तते यद् वेदान्तापेक्षया उपनिषत्सु सृष्टिविषयकविचारः अपि समधिगतक्रमिकविकासः । ऋग्वेदीयदशममण्डलावलोकनेन इत्थं ज्ञायते यत् नासदीयपुरुष-हिरण्यगर्भादिसूक्तेषु स्फुरिता दार्शनिकभावना उपनिषत्सु सुदृढीभूता ।

एवं ऋग्वेदो हार्दिकोद्गाराणां कल्पनानां च महान् ग्रन्थश्चेत् तदा उपनिषदः तर्काणां ग्रन्थाः यतो हि ऋग्वेदे पूजासम्बन्धिनः एवंभूताः मंत्रा ये उपनिषत्सु कुत्रापि नोपलभ्यन्ते तथा च आंशिकरूपेण उपनिषत्सु बौद्धिकतर्काणां समाधानं यच्च ब्रह्मसत्तान्वेषणे सुव्यवस्थितरूपेण अभिव्यक्तं प्रतीयते । इत्थं च यदा ऋग्वेदे बहुभिर्मन्त्रैः भक्तः स्वेष्टदेवाय आत्मानं समर्पयन् तत्कृपापरां क्षमां याचते तदा उपनिषत्सु स एव "नैवं यदिदमुपासते"[1] इति वक्तु साहसयते । "नैसर्गिकनैतिक सुव्यवस्थितिस्थापनार्थं स बाह्यम् आदेशं न लभते प्रत्युत बाह्याभ्यन्यरसमवायसारभूतात् आत्मनः तमाप्नोतीति अस्मिन्नंशे वेदोपनिषदां भेदः ।

वेदो गीता चः—पूर्वोक्तप्रकारेणोपनिषदां वेदस्वरूपता प्रमाणीकृता । तासामेव च सारभूता गीतेति तस्या वेदत्वम् अधुना विविच्यते । गीताया वेदसारत्वं प्राचीनैरित्थं प्रतिपादितम्—

वेदोदधिप्रमथितं वासुदेवसमुद्धृतम् ।
सन्तः पिबन्ति सततं गीतामृतरसायनम् ।।

तथा च—

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्[2] ।।

केन च रूपेण उपनिषदां भावानादाय तत्सारभूता गीता निर्मिता इति शंका तु संक्षिप्त्या गीतोपनिषदामधोलिखितविशेषस्थलावलोकनेन उपशमयितुं शक्या—

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।[3]

---

१. केन उ० १।४ २. गीतामाहात्म्ये
३. कठ० १।२।१८

अस्य अक्षरशः अनुवादः गीताया द्वितीयाध्यायस्य निम्नलिखित श्लोके वर्तते—

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतो ऽयं पुराणो न हन्यते हन्यमाने शरीरे[1] ॥

एवमेव कण्ठोपनिषद :—

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते[2] ॥

अस्यानुवादो गीताया निम्नांकितश्लोके लभ्यते—

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते[3] ॥

एवं कठोपनिषद :—

श्रवणायापि बहुभिर्यो न लभ्यः श्रण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः[4] ॥

एतस्य भावो गीतायाम् :—

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तदैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित्[5] ॥

इत्थमेव कठोपनिषद :—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्[6] ॥

एतत्पद्यं गीतायाः निम्नलिखितश्लोकेन तुल्यभावार्थम्—

यदक्षरं वेदविदो वदन्ति विशन्ति यद् यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये[7] ॥

एवम्..........."पन्थामनु प्रविद्वान् पितृयाणाम्[8]
तथा—"परं मृत्यो अनु परे हि पन्थां यस्ते स्व इतरो देवयानात्[9] ।

---

१. गीता २।२०
२. कठोपनिषत् १।२।१९
३. गीता २।१९
४. कठोपनिषत् १।२।७
५. गीता २।९
६. कठ० १।२।१५
७. गीता ८।११
८. ऋ० १०।२।७
९. तत्रैव १०।१८।१

इत्थं ऋग्वेदे उपलभ्यमानम् उपनिषद्भिश्च ततो गृहीतं देवयान-पितृयाणयोः-'तद्य इत्थ विदुः ये चेमे अरण्ये श्रद्धा तप इत्युपासते ते अर्चिषमभिसम्भवन्ति अर्चिषः अहः अह्नः आपूर्यमाणपक्षम् आपूर्यमाणपक्षात् यान् षट् उदङ्ङेति मासांस्तान्" ॥ १ ॥

मासेभ्यः संवत्सरं संवत्सराद् आदित्यम आदित्याच्चन्द्रमसम् चन्द्रमसो विद्युतं तत्पुरुषः अमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद् रात्रिं रात्रेः अपरपक्षम् अपरपक्षात् यान् षड् दक्षिणेति मासान् तान् नैते संवत्सरमभिप्राप्नुवन्ति'[1] ॥ ३ ॥

इत्थं छान्दोग्ये, तथा—यदा वै पुरुषोऽस्माल्लोकात्प्रेति स वायुमागच्छति……तस्मिन् वसति शाश्वतीः समाः[2] ॥

इत्थं बृहदारण्यके, यत्रापि—

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति ॥
तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा[3] ॥

एवं मुण्डके, किञ्च—

स यावत् क्षिप्येन्मनः तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधः अविदुषाम्[4] ॥

यदेतच्छान्दोग्ये मरणानन्तरं गमनस्य च वर्णनं सर्वमेतद्गीतायाः अष्टमाध्यायस्य निम्नांकितश्लोकेषु प्रत्याहृतमुपलभ्यते—

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥

---

१. छा० ५।१०।१-३ २. बृ० ५।१०।१
३. मु० उ० १।१०-११ ४. छा० ८।५

शुक्लकृष्णगती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यथाऽऽवर्तते पुनः[1] ॥

इत्थं न केवलं शब्दशः सारूप्यमेवापि तु गीताश्लोकेषु तत्र तत्रोपनिषदां दार्शनिकता स्पष्टतया परिवर्द्धिता समवलोक्यते, गीतायाः सम्पूर्ण कर्मयोगो ईशावास्योपनिषदः—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे[2] ॥

एतत्पद्याधारः । एतदेव गीतायाः सर्वदर्शनमूलम् । औपनिषदाचारविषये चास्मभ्यम् एतेनैष निर्देशः यत् अस्माकं नैतिकजीवनस्य एतेदव साधनम् एतच्चैव लक्ष्यम् । एतदेव च पद्यं कर्मणा सह फलसन्बन्धाभावागमकम् इति निष्कामभावनया कर्मशीलजीवनशिक्षा भगवद्गीताया मुख्यो विषयः ।

मुण्डकोपनिषदि—अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा[3] । एवं रूपेण यद् विराट्पुरुषस्य वर्णनं तद्गीतायाः एकादशाध्याये भगवतः श्रीकृष्णस्य रूपेण तुलयितुं शक्यते । स्यादेतत् यन्मुण्डकोपनिषद्येष भावो ऋग्वेदीयपुरुषसूक्ताधारः । परमात्मनः सर्वव्यापकत्वेन सर्वशक्तिमत्वेन च स एव वा भावो गीतायां परिवर्द्धितः । कठोपनिषदि सूक्ष्माध्यात्मिकक्रमिकवर्णनमित्थमुपलभ्यते—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः[4] ॥

भगवद्गीता चैतदाध्यात्मिकमहत्वापेक्षया केवलं सूक्ष्मांशाय एव समुपात्तमहत्वेति तस्याः तृतीयाध्यायस्थे द्विचत्वारिंशत्तमे श्लोके—

·········इन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धि र्यो बुद्धेः परतस्तु सः ।

इत्थं परित्यक्तौपनिषदमहदव्यक्ततया सूक्ष्मांश एव सर्वत्र पूर्णरूपेण संक्षिप्तः । एवम्—

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्[5] ।

---

१. गीता ८।२३–२६ २. ई० उ० २
३. मुं० उ० २।१।४ ४. कठ० १।३।१०–११
५. ऋ० १०।९०।१

तथा—विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्यात्[1] एतस्यानुवादो गीतायाः त्रयोदशाध्यायस्य त्रयोदशश्लोके—

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥

तथा—तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः[2] ॥

एतस्य भावो गीतायास्त्रयोदशाध्यायस्य पंचदशश्लोके—

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च यत् ॥

एवं रूपेणोपलभ्यते । इत्थमेव च तैत्तिरीयब्राह्मणे—

'श्रद्धया देवो देवत्वमश्नुते' इत्यस्य,

तथा, ऋग्वेदान्तर्गतश्रद्धासूक्तस्य भावनायाश्चाभिव्यंजक एष श्लोकः—

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिम् अचिरेणाधिगच्छति[3] ॥

एवम्—येन द्यौरुग्रा पृथिवी च दृढा[4]
तथा—'स दाधार पृथिवीद्यामुतेमाम्'[5]

एतद् गीतायाम्—

'गामाविश्य च भूतानि धारयाम्यहमोजसा'[6] इत्थं वर्णितम् ।

एवम्—'केवलाघो भवति स केवलादी'[7] एतद् गीतायाम्

'भुंजते ते त्वघं पापाः'[8] एवं रूपेण,

तथा—न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः[9] 'तयोर्ध्वमायन्नमृतत्वमेति'[10] 'तेषां न पुनरावृत्तिः'[11]

'जायते नावर्तन्ते'[12] 'न च पुनरावर्तते'[13] एतत्सर्वमेकस्मिन्नेव श्लोके

न तद्भासयते सूर्यो न शशांको न पावकः ।
यद् गत्वा न निवर्तन्ते तद्धाम परमं मम[14] ॥

---

१. यजुः १७।१९ 	२. ईं० उ० ५
३. गीता ४।३९ 	४. तै० सं० ४।१।८, ऋ० १०।१२१।५
५. तै० सं० ४।१।८, ऋ० १०।१२१।१ 	६. गीता १५।१३
७. ऋ० १०।११७।६ 	८. गीता ३।१३
९. कठ २।२।१५ 	१०. छा० ८।६।६
११. बृ० ६।१।१५ 	१२. छा० ४।१५।५
१३. छा० ८।१५।१ 	१४. गीता १५।६

गीतायामेवंरूपेणोपलभ्यते।

इत्थम्—'सर्वे वेदा यत्पदमामनन्ति'[1]

'वेदैश्च सर्वैरहमेव वेद्यः'[2]

इन्द्रंमित्रंवरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः[3] ॥
तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः[4]।

'सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति'[5]।

'एकं ज्योति र्बहुधा विभाति'[6]

गीतायाम्—"वायुर्यमोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वंप्रपितामहश्च"[7] तथा—पश्यदक्षण्वान् न विचेतदन्यः[8]।

गीतायाम्— विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः"[9]

एवम्—"न तत्समश्चाभ्यधिकश्च दृश्यते"[10]

"नकिरन्यस्त्वावान्"[11]

गीतायाम्—न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः[12]

एवं—"यज्ञो वै विष्णुः"[13]

गीतायाम्—यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः"[14]

तथा—"ऊर्ध्वमूलो ऽवाक्शाख एषोऽश्वत्थः सनातनः"[15]।

गीतायाम्—"ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्"[16]

एवंगीतान्तर्गतभावानां शब्दानां च वेदवेदान्तवाक्यैः तदर्थैश्च सह साम्यावलोकनानन्तरं गीतान्तर्गतस्य वेदान्तस्य वेदेन सह परिपूर्णतया सम्बन्धमवगन्तुं गीतानुसारेण वेदस्यार्थः अपि अवश्यमभ्युपेयः!

स चेत्थम्—

गीतानुसारं समस्तो विश्वो वेदः। स चाश्वत्थरूपेण तत्र वर्णितः इति न श्वस्तिष्ठतीति व्युत्पत्या दार्शनिकदृष्ट्या विश्वाश्वत्थयोः समानता।

---

१. कठ० १।२।१५
२. गीता १५।१५
३. ऋ० १।१६४।४६
४. यजु० ३२।१
५. ऋ० १०।११४।५
६. अथर्व० १३।३।१७
७. गीता ११।३९
८. ऋ० १०।१२९।२
९. गीता० १५।१०
१०. श्वे० ६।८
११. ऋ० १।५२।१३
१२. गीता ११।४३
१३. यजु० २२।२०
१४. गीता ३।९
१५. कठ० ३।१
१६. गीता ५।१

विश्वो हि ब्रह्मणः एकदिनमेव तिष्ठति । दिनान्तरप्रारम्भात्प्रागेव च सः विनश्यति । तथाहि—

> सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।
> रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥
> अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
> राञ्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥
> भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
> राञ्यागमेऽवशः पार्थ प्रभवत्यहरागमे[1] ॥

इत्थं ब्रह्मणः दृष्टौ संसारस्य एकदिनमेव आयुः । अत एव च सम्यक् प्रकारेण सरणं गमनम् एव च संसारः, गच्छतीति जगद्वा तन्नाम पूर्णरूपेण यथार्थम् । एवमेव वेदविश्वयोरपि गीतायामेकत्वमित्थं प्रतिपादितम्—

> ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् ।
> छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्[2] ॥
> ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः[3] ॥

एवंभूतं विश्वरूपम् अश्वत्थवृक्षं यस्तात्विकदृष्ट्या जानाति स एव वेदतात्पर्यमवगच्छति । ततात्विकपरिज्ञानमेव वेदावगतिरिति वेद एवाश्वत्थनाम्ना वर्णितः । एतज्ज्ञानस्याभिप्रायस्तु गीतायामनया युक्त्योक्तः—

> इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
> एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः[4] ।

यथा च क्षेत्रं क्षेत्रज्ञ स्तथैव वेदो वेदविच्च, इत्यखिलक्षेत्रज्ञार्थं भगवता स्वयमेवोक्तम् 'वेदविदेव चाहम्'[5] । अर्जुनेनापि भगवद्विभूतिदर्शनानन्तरम् उक्तम्—'वेत्तासि वेद्यं च परं च धाम'[6] । एतेनैतदायातं यद् यथा क्षेत्रं क्षेत्रज्ञश्च तथैव लोकत्रयं तत्परिज्ञाता चेति विश्वः ( संसारः ) वेदपदवाच्यः तदन्तश्च वेदान्तः । अत एव संसारान्मुक्तिरेव वेदान्तः ।

कथं च विश्वापरपर्यायस्य तस्य वेदस्य अन्तः क्रियेत इति विचिकित्सायां गीता भगवदुक्त्या निर्दिशति—'निस्त्रैगुण्यो भव' अर्थात्

---

१. गीता ८।१७।१९ २. गीता ५।१
३. कठ० ३।१ ४. गीता १३।१
५. गीता १५।१५ ६. गीता ११।३८

'त्रैगुण्यविषया वेदाः'[1] इत्यत्र वेदानां त्रैगुण्यविषयत्वं प्रतिपादितम्। निस्त्रैगुण्यमेव च वेदानाम् अन्तः इति तदर्थमर्जुनाय भगवदुपदेशः। 'वेदान्तकृद् वेदविदेव चाहम्' इत्यपि तस्यैव उक्तिः। तस्य च वेदस्य विश्वरूपिणः अश्वत्थस्य छेदनोपायः भगवता असंगः उक्तः—

'अश्वत्थमेनं सुविरूढमूलम् असंगशस्त्रेण दृढेन छित्वा'[2]।

असंगशस्त्रमेव हि तच्छेदनसाधनम्। गुणातीतो हि जीवो (निस्त्रैगुण्यः) यदा ईश्वरो भवति तदैव तन्मुक्तिरिति तदैव तद्वेदान्ते स सच्चिदानन्दरूपेण अवभासते। एष भावो गीतायामित्थमभिव्यक्तः,

"ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च"[3]॥

अविनाशिकारणस्य ब्रह्मणः अमृतस्य नित्यधर्मस्य अखण्डैकरसस्यानन्दस्य [illegible]श्रयः अहमेवेति भावः। अत्र ब्रह्मपदेन महतो ब्रह्मणः, अमृताव्ययपदाभ्यां च सद्रूपस्य, शाश्वतधर्मेण च चिद्रूपस्य तथैकान्तिकशब्देन चानन्दस्याभिसन्धिः। एतेन वेदान्तावाप्तावस्था स्पष्टतया सूच्यते। गीतान्तर्गतवेदवेदान्तयोरयमेव सम्बन्धो यन्निरूपणेन एकेश्वरानेकेश्वरप्रभृत्यनेकवादानां विलक्षणःसमन्वयः तत्र प्रदर्शितः। अत एव च गीता समग्रवेदानां सार उच्यते इति तस्या वेदानतिरिक्तत्वम्।

## वेदो वेदान्तसूत्रं च

वेदवेदान्तार्थविचारपूर्वकं वेदमूलकोपनिषद्गीतयोर्वेदत्वं प्रमाणीकृत्य अधुना वेदान्तसूत्राणां वेदमूलकत्वेन वेदत्वं प्रदर्श्यते।

वेदान्तसूत्रणाम् अधिगन्तृभिः स्पष्टमेतत्प्रतीयते यद् ब्रह्मसूत्रप्रणयने बादरायणस्य उद्देश्यद्वयमासीत्-एकम् आपाततो विरोधिनीषु श्रुतिषु तदर्थसामंजस्यस्थापनम् द्वितीयम् औपनिषदतत्वसंक्षेपणम्। अतो वेदान्तसूत्ररचनावसरे वेदविषयकं महर्षेर्बादरायणस्य दृष्टिकोणज्ञानमत्यन्तावश्यकम्।

'अथातो ब्रह्मजिज्ञासा' इत्यस्मिन् सूत्रे ब्रह्मजिज्ञासानन्तरं महर्षिणा बादरायणेन' जन्माद्यस्य यतः 'इतिसूत्रे ब्रह्मणो लक्षणं प्रतिपादितम्। ततः 'शास्त्रयोनित्वात्' इति सूत्रेण एतत्प्रदर्शितं यत् 'औपनिषदं पुरुषं'

---

१. गीता २।४५ २. गीता १५।३
३. गीता १४।२७ ४. बृ० उ० ३।९।२६

पृच्छामि' इत्यादिश्रुतिषु यद्ब्रह्म अभिसंहितं तस्य ज्ञानं शास्त्रात्' ( वेदात् ) भवति । ईशावास्यमिदं सर्वम्......इत्याद्युपजीव्य निर्मितं 'तत्तुसमन्वयात्' एतत्सूत्रं तस्यैव महिमानं प्रकटीकरोति ।

'न तदस्ति विना यस्मात् मया भूतं चराचरम्'[2] ।

तथा—मत्स्थानि सर्वभूतानि'[3]

इत्यादि रूपेण भगवती गीता तदेव परिपुष्णाति । 'नैषा तर्केण मतिरापनेया'[4] इत्यत्र श्रुतौ यथा तर्कस्य तद्ब्रह्मणः प्राप्तौ न किमपि स्थानम् एतत्स 'तर्काप्रतिष्ठानात्' इत्यादिना निरदिशत् । इत्थमेव च श्रुतिमाश्रित्य स साख्यशंकाः पर्यहरत् । एवमादितः समारभ्य समाप्तिपर्यन्तं महर्षि बादरायणः श्रुतिं तदनुसारिणीं स्मृतिं वा अतिरिच्य अन्यत् प्रमाणं न आश्रितवान् । तस्य दृष्टौ वेदस्यैव ..त्यत्वं सर्वज्ञत्वं चेति स्वकीये ब्रह्मसूत्रे स यथास्थलं द्विपंचाशत्स्थानेषु 'श्रुतत्वाच्च' इत्यादितः अग्रे तत्तत्श्रुतीः आश्रित्य निजभावमभिव्यक्तवान् ।

एतस्मिन् विषये युक्तिरपि सर्वथा अनुकूला । अद्वैतं ब्रह्म न लौकिकविषयः । अतः वेदप्रमाणमतिरिच्य न अन्यत् किमपि एवं प्रमाणं येन ब्रह्मणः अस्तित्वं स्वरूपं वा निर्णेतुं शक्येत । अद्वैतं ब्रह्म सर्वथा निर्विशेषम् अप्रमेयं चेति कल्पनातीतम् । अतः अनाद्यपौरुषेयवेदावगतसत्ताकस्य तस्य सम्भावनासम्भावनयोरनुसन्धानं कर्तुं सयुक्तिकविचारैर्वयं प्रवर्तामहे अन्यथा अस्मन्मनसि अस्य अनुसन्धानस्य प्रवृत्तिरपि न सम्भवेत् ।

एतदलौकिकब्रह्मविषयकनिर्भ्रान्ततत्वोपदेशार्थमेव सर्वज्ञनित्येश्वरनिःश्वसितवेदमाश्रित्य भगवान् बादरायणो ब्रह्मसूत्राणि विरचितवान् । यतो हि वेदनिरपेक्षलौकिकप्रमाणैः ऐकमत्यस्य सर्वथा असम्भावना । 'मुण्डे मुण्डे मतिर्भिन्ना' च इत्येष विभेद एव अप्रामाणिकताया मूलम् । अत एव श्लोकवार्तिके श्रीनिवासाचार्येण उक्तम्—

निर्दोषत्वैकवाक्यत्वं क वा लोकस्य दृश्यते ।
सापवादा यतः केचित् मोक्षस्वर्गावपि प्रति ॥ ८ ॥

अतः ईश्वरवाक्यभूतस्य नित्यवेदस्यैव निर्दोषत्वात् सत्यत्वाच्च सत्ये मतान्तराभावात् तत्रैवालौकिकविषयैकमत्यसम्भवः ।

---

१. ई० उ० १ — २. गीता १०।३९
३. तत्रैव ९।४ — ४. कठ० २.९
५. अत एव च नित्यत्वम् (ब्र० सू० १।३।२९) — ६. श्लो० वा० १।६

ब्रह्मसूत्रेषु हि भगवता बादरायणेन न स्वकीयं मतं प्रतिपादितम् अपि तु श्रुतिमीमांसाव्याजेन अलौकिकतत्वमेव उपदिष्टम् इति वेदब्रह्मसूत्रयोः सम्बन्धः स्पष्टः। यतो हि ऋग्वेदादौ यत्र—तत्र प्रकीर्णाः दार्शनिकबीजा एव उपनिषत्सु अंकुरिताः[1] पल्लविताश्च संजाताः। भगवता बादरायणेन च स्वतत्वोपदेशाय उपनिषदः ऋचश्चैव समाश्रिताः न व्यक्तिविशेषणप्रमाणीभूतोपदेशाः इति तत्तत्वोपदेशो निर्भ्रान्तः। अत्र तर्कपादीयसूत्राणि अतिरिच्य सर्वेष्वपि वेदान्तसूत्रेषु कतमत्सूत्रं कतमाम् ऋचम् औपनिषदोक्तिं वा उपजीव्य विरचितम् इत्येषा जिज्ञासा अवयुत्यानुवादरूपेण चतुःसूत्र्यामत्र, विस्तरेण तु श्रीभगवदाचार्यकृतब्रह्मसूत्रवैदिकभाष्ये[2] चिद्घनानन्दकृतब्रह्मसूत्रभाष्यनिर्णये च शान्तिं नेया, तथाहि—

अथातो ब्रह्मजिज्ञासा ब्र० सू० १।१।१ अथा ते अंगिरस्तमाग्ने वेधस्तमप्रियम्। वोचेम ब्रह्म सानसि[3]। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च[4]।

जन्माद्यस्य यतः (ब्र० सू० १।१।२)

'ऋतं च सत्यं च...दिवं च पृथिवीं चान्तरिक्षमथो स्व'[5] इत्युत्पत्तिः

'सदाधार पृथिवीं द्यामुतेमाम्'[6] इतिस्थितिः।

'सं समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ'[7] इत्यनेन प्रलयः

'यतो वा इमानि भूतानि जायन्ते यत्प्रयन्त्यभिसंविशन्ति'[8]

'एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्'[9]

'तस्माद् वा एतस्माद् आत्मन आकाशः सम्भूतः'[10]

इति श्रुत्या यतः आद्यस्य आकाशस्य जन्म इत्यर्थो वा ज्ञेयः

शास्त्रयोनित्वात् ब्र० सू० १।१।३

'यतो भूमिं जनयन् विश्वकर्मा'[11] 'द्यावाभूमी जनयन् देव एकः'[12]

---

१. द्रष्टव्यम्—वेदान्तस्तत्स्त्रोतश्च

२. अस्य भाष्यस्य आद्यम् अध्यायद्वयमेव मुद्रितम्। शेषग्रन्थपरिपूर्त्यै आचार्यः बद्धपरिकरः।

३. ऋ० १।७५।२ ४. बृ० उ० २।४।५

५. ऋ० १०।१९०।१–३ ६. यजु० १३।४

७. अथर्व० ६।६३।४ ८. तै० उ० ३।१

९. माण्डूक्योपनिषत् ६ १०. तै० उ० १।१

११. यजुः० १७।१८ १२. तत्रैव १७।१९

'नावेदविन्मनुते तं बृहन्तम्'[1] 'सर्वे वेदा यत्पदमामनन्ति'[2] वेदैश्च सर्वैरहमेववेद्यः'[3]

तत्तु समन्वयात् ( ब्र० सू० १।१।४ )

सम्यग्वाच्यतया अन्वयः समन्वयः तस्मात्, अबाधितरूपतया औपनिषद्वाक्येषु च तस्यैव सम्यग्वाच्यतया शास्त्रयोनित्वस्य समन्वयादित्यर्थः। तथाहि—

दिव्यो गन्धर्वो भुवनस्य यस्पतिरेक एव नमस्यो विक्ष्वीड्यः।
तं त्वा यौमि ब्रह्मणा दिव्य देवनमस्ते अस्तु दिवि ते सधस्थम्[4] ॥

तथा—तदेजति तन्नैजति तद्दूरे तद्वन्तिके[5]

'अनेजदेकं मनसो जवीयः'[6]

'आत्मा वा इदमेक एव अग्र आसीत्'[7]

इत्यादिषु संहिताश्रुतिषु समर्थितानि जगदेकपतित्वादीनि न कस्मिंश्चित् सामान्ये चेतने अबाधितरूपेण समनुयन्ति। परमेश्वरे तु तस्यापरिमितशक्तिमाहात्म्यतया सर्वमबाधितरूपेणैव चारितार्थ्यमेतीति सर्वमनवद्यम्।

इत्थं ब्रह्मसूत्रे बादरायणीयमतं सर्वथा श्रुत्यनुकूलं श्रुत्यधीनयुक्तिमूलकं चेति वेदान्तदर्शनस्य सम्बन्धो ऋगादिभिर्वेदैर्न विरुध्यते। नूनम्, द्वितीयाध्यायद्वितीयपादरचनायां महर्षिर्बादरायणः तर्कमेव केवलमाश्रितवान् तथापि तत्तत्सूत्रबीजानां पूर्वपक्षरूपेण 'ईक्षतेर्नाशब्दम्' इत्यादौ वर्तमानतया सांख्य-योग-वैशेषिक-बौद्ध-जैन-शैवमतप्रदर्शकसूत्राणां न श्रुत्याधारविरुद्धता। तत्र महर्षेः बादरायणस्य सांख्यादिमतखण्डने श्रुतियुक्त्योरुभयोः प्राधान्यम्। 'सम्पत्तेरितिजैमिनिस्तथाहि दर्शयति' इत्यादौ जैमिनीयमतस्य 'आमनन्ति चैनमस्मिन्' इत्यादिसूत्रैः खण्डने च श्रुतेरेव प्राधान्यम्। इत्थं ब्रह्मसूत्रे श्रुति-संहितामूलकवेदान्तस्यैव प्रतिपादनाद् वेदान्तसूत्राणां वेदत्वं ज्ञानचक्षुष्मतां मतिमतां प्रत्यक्षम्।

## वेदान्तसूत्रं तत्प्रणेता च

वेदान्तसूत्रम्—

गुरुमुखेभ्यः अधिगतानां श्रुतानां वा विस्तृतविषयाणां वा चिरस्मरणार्थं संक्षिप्तया तत्तद्विषयसूत्ररचना प्रारभ्यत। इमानि सूत्राणि संस्कृत-

१ शाट्यायन्युपनिषत् ४
२. कठ० १।१।१५
३. गीता १५।१५
४. अथर्व० २।२।१
५. ई० उ० ५
६. तत्रैव ४
७. ऐतरेयोपनिषत् १।१

साहित्यस्य प्रत्यङ्गं लिखितानि अपि शनैः शनैः एतावदन्तर्निहितसूक्ष्मविचाराणि संजातानि यत् एतेषाम् 'अल्पाक्षरमसंदिग्धम्—एतद्रूपं विराट् इव विश्वतोमुखम् संवर्ध्य विभिन्नसाम्प्रदायिकव्यक्त्यनुकूलार्थद्योतकतामारभत। सनकादिसिद्धान् उद्धर्तुकामात् महेश्वरात् आगतानाम् 'अइउण्'[1] इत्यादि सूत्राणाम् अपि आध्यात्मिकः अर्थः वैयाकरणेषु प्रसिद्धः। दार्शनिकक्षेत्रे सामान्येन, वेदान्तसूत्रेषु च विशेषेण एतत्संजातम् इति स्वप्रतिपादकब्रह्मवत् एव तानि दुरूहाणि दुरवबोधानि च वर्तन्ते। फलस्वरूपम् आदितः प्रभृति अन्तपर्यन्तं प्रतिपादितस्यापि एकस्यैव ब्रह्मविषयस्य विभिन्नसम्प्रदायानुकूलं तत्तत्सूत्राणां विभिन्ना अर्थाः क्रियन्ते। अतः एकमेव वेदान्त ( ब्रह्म ) सूत्रं द्वैताद्वैतविशिष्टाद्वैतद्वैताद्वैत-शुद्धाद्वैतप्रभृत्यनेकवादानामाधारभूतं मन्यते।

सूत्रलक्षणं तु श्रीमध्वाचार्येण स्वभाष्ये—

अल्पाक्षरमसंदिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः[2]॥

तथा वाचस्पतिमिश्रेण भामत्याम्—

लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः[3]॥

इत्युक्तम्। यथोपक्रम-प्रामाणिक-विभिन्नदार्शनिकव्याख्यानानामाधारभूतानि इमान्येव तत्तद्दर्शनसूत्राणि। एभ्य एव च सर्वदार्शनिकपद्धतिमुख्यसिद्धान्तानाम् उद्गमः इति तत्तत्सिद्धान्तस्थापका भाष्यवृत्यादिकाराः सूत्राक्षरसाहाय्येन एव सर्वं स्वाभिमतं प्रकाशयन्ति। तन्त्रवार्तिके कुमारिलभट्टेन अपि एतदेव प्रतिपादितम्—

सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम्॥

अयं ग्रन्थो निजविषयस्य ब्रह्मणः प्रतिपादनानुकूलम् एव 'ब्रह्मसूत्रम्' 'उत्तरमीमांसा' 'वेदान्तदर्शनम्' व्याससूत्रम् इत्यादिभिर्नामभिः प्रसिद्धम्। अस्य च आदिमं सूत्रम् 'अथातो ब्रह्मजिज्ञासा' इति ब्रह्मज्ञानाय विरचितस्यास्य ग्रन्थस्य 'ब्रह्मसूत्रम्' इति उपयुक्तं नाम। ब्रह्मप्रतिपादनोपनिष-

---

१. पा० म० भा० पृ० १२२-१२५ नि० सा० प्रेस०

२. ब्र० सू० १।१।१ अत्र मध्वोद्धृतं स्कन्दपुराणवचनम्

३. ब्र० सू० १।१।१ भामती ( वें० प्रेस पृ० ४२ )

दपरनामवेदान्तानां मीमांसया वेदान्तानां च वेदस्य उत्तरभागतया तस्य उत्तरमीमांसा इत्यपरं नाम संगच्छते। भिक्षुत्वसम्पादकत्वेन च एतेषां 'भिक्षुसूत्रम्' इत्यपि नाम। यतो हि एतेषाम् अध्ययनेन ब्रह्मज्ञाने ब्रह्म-रूपत्वेन सर्वज्ञानात् कर्मसु अनादरेण भिक्षुत्वसम्पत्तिः। यथा चोक्तं मनुना—

'वेदान्तान् विधिवत् श्रुत्वा सन्यसेदनृणो द्विजः'। इत्थमेव च अस्य ग्रन्थस्य वेदान्तसिद्धान्तोपजीव्यत्वेन दार्शनिकरीत्या तत्त्वनिर्णायकत्वेन च 'वेदान्तदर्शनम्' व्यासेन रचितत्वात् 'व्याससूत्रम्' इति चाभिधेयम् उपपद्यते। श्रुतिस्मृतितर्काभिधवेदान्तप्रस्थानत्रय्यां 'तर्कप्रस्थानं' ब्रह्म-सूत्रमिति वेदान्तविदः।

प्रणेताप्रणयनकालश्च—एतेषां सूत्राणां प्रणेतुर्विषये निजयुक्त्यनुसारं विभिन्ना जनवादाः। मतबाहुल्येन गीताया रचयितु र्वेदव्यासस्य बादराय-णस्य च एकव्यक्तित्वे सत्यपि केचिद् वदन्ति यत् शंकराचार्येण स्वभाष्ये महाभारतस्य रचयिता व्यासः[1] सूत्राणां च प्रणेता बादरायणो[2] निर्दिष्ट इति शंकरानुसारम् एतौ व्यास-बादरायणौ परस्परं भिन्नौ। केषांचिच्च मते एतेषां सूत्राणाम् रचयिता ( कृष्णद्वैपायनो ) व्यासः, अन्येषां मते बादरायणः इतरेषां च मते तौ अभिन्नौ मतान्तरे तु भिन्नौ। यतो हि ग्रन्थे बादरायण इति नामोल्लेखस्तु बहुषु सूत्रेषु वर्तते किन्तु व्यास इति नाम एकस्मिन्नपि सूत्रे कुत्रापि नोपलभ्यते अतः बादरायण एव ग्रन्थस्य कर्ता न व्यास इत्यपि विप्रतिपत्तिः।

केचित्तु 'ग्रन्थमध्ये स्वनामोल्लेखस्य अहंयुताप्रदर्शनपरत्वात् अयं बादरायणः अपि न सूत्रकारः, पुराणानां च अप्रामाण्यात् कृष्णद्वैपायनस्य व्यासस्यापि ग्रन्थकर्तृत्वं व्याहन्यते। अतः बौद्धादिमतनिरसनशीलेन ब्रह्मसूत्रेषु तत्तन्मतनिरसनाच्च दिङ्नागवसुबन्धुप्रभृतीनां परवर्तिना ईशवीयपूर्वषष्ठशताब्दीतः ईशवीयद्वितीयशताब्दीमध्यवर्तिना केनचित् आधुनिकेन बादरायणेन एतद्ग्रन्थकर्त्रा[3] भवितव्यम्। व्यासबादरायणयो-र्भिन्नता च सामविधान ( पंचविंश ) ब्राह्मणे इत्थं प्राप्यते—

सः अयं प्राजापत्यो विधिः, तमिमं प्रजापतिर्बृहस्पतये प्रोवाच बृहस्प-तिर्नारदाय नारदो विष्वक्सेनाय विष्वक्सेनो व्यासाय पाराशर्याय व्यासः

---

1. शां० भा० वे० सू० २।३।४७ 2. शां० भा० वे० सू० ४।४।२१
3. ब्रह्मसूत्र के वैष्णव भाष्यों का तुलनात्मक अध्ययन पृ० १३–१६ तथा ब्र० सू० वैदिकभाष्य भूमिका पृ० ५

पाराशर्यो जैमिनये जैमिनिः पौष्पिण्ड्याय पौष्पिण्ड्यः पाराशर्यायणाय पाराशर्यायणो बादरायणाय इति वदन्ति ।

पश्चात्त्यो विद्वान् मैक्समूलरमहोदयः महाभारत-ब्रह्मसूत्रयोः विषयप्रतिपादनपरिपाटीवैषम्येण तयोर्भिन्नरचयितृत्वं समूहते[1] 'क्व महाभारतीया व्याख्यानात्मकपरिपाटी यत्र स्वल्पातिस्वल्पतथ्यानाम् अपि सविस्तरं वर्णनं क्व च ब्रह्मसूत्राणां संक्षिप्त्यतिसंक्षिप्त्या विषयदुरवगाहत्वम्' इत्थं चोभयोर्महदन्तरमिति नूनं तयोः कर्त्तारौ भिन्नौ इति तदभिप्रायः। किन्तु विषयप्रतिपादनपरिपाटी विषयदेशकालाद्यनुरूपं प्रतिग्रन्थं भिन्ना भवति। अतः एष तर्कः प्रामाण्याधारं न अधिरोहति। ब्रह्मसूत्रविरचनसमयं यावत् परम्परया समधिगतसमधिगम्यमानव्याख्यानां वैज्ञानिकानां रमणीयविषयाणां च कृते अधिकोपयोगितया सूत्रशैली समधिकमान्यतापदम् आसीना समजायत। महाभारतादिकथाश्च अक्षरशः स्मरणं न अपेक्षन्ते स्म इति स्पष्टतया अपेक्षितविषयवर्णनपरिपाटीकयोः उभयोर्भेदः अदोषावहः। वेदान्तसूत्रमहाभारतयोरेककर्तृत्वं श्रीभाष्ये रामानुजाचार्येण पंचरात्रतन्त्रस्य प्रामाण्यं सुदृढीकुर्वता इत्थं प्रतिपादितम्—सूत्रकारेण वेदान्तन्यायाभिधायीनि सूत्राण्यभिधाय वेदोपबृंहणाय च भारतसंहितां शतसहस्रिकां कुर्वता मोक्षधर्मे ज्ञानकाण्डे अभिहितम्...कथमेवं ब्रुवाणो बादरायणो वेदविदग्रेसरो वेदान्तवेद्यपरब्रह्मभूतवासुदेवोपासनार्चनादिप्रतिपादनपरस्य सात्वतशास्त्रस्याप्रामाण्यं ब्रूयात्। यद्यपि महाभारते ब्रह्मसूत्राणामुल्लेखो न वर्तते महाभारतीयभीष्मपर्वान्तर्गतगीतायाः 'ब्रह्मसूत्रपदैश्चैव'—इत्यनेन अन्येषां केषांचित् ब्रह्मप्रतिपादकसूत्राणां निर्देश इति केचित्कथयन्ति तन्न समीचीनं प्रतिभाति। तस्मिन् श्लोके हि निस्सन्देहं व्यासरचितसूत्राणामेवनिर्देशः। किमर्थं कश्चिद् रचयिता स्वकीये अन्यस्मिन् ग्रन्थे निजकृतिमपहाय अन्यकृतग्रन्थस्य उल्लेखं विदध्यात्? अत एव पाश्चात्यो मनीषी मैक्समूलरमहोदयः अपि स्वकीये भारतीयेतिहासे [2]एतदानुलोम्यमेवाभिव्यक्तवान्। कल्याणगीताविशेषाङ्के[3] कल्याणकल्पतरौ[4] अपि च 'ब्रह्मसूत्रपदेन ब्रह्मसूत्राणामेव निर्देशः। गीतारहस्ये तिलकस्यापि अयमेव अभिप्रायः। एतेन

---

१. मैक्समूलर इण्डियन फिलासफी द्वि० भा० पृ० ५

२. तत्रैव पृ० ११२

३. कल्याण गीता विशेषाङ्क पृ० ७५०

४. कल्याणकल्पतरु गीता विशेषांक नं० १ पृ० ५०

'ब्रह्मसूत्रपदेन इह ब्रह्मसूत्राणां, व्यासप्रणेतृत्वाभिप्राये महाभारते अवश्यं तन्निर्मातृत्वं निर्दिश्येत' 'इत्युक्तम् अपास्तम्। स्वरचितग्रन्थे अन्यनिर्मितग्रन्थसूत्राणां निर्देशकल्पनाया व्यर्थकल्पनापत्तेः। उपस्थितं परित्यज्य अनुपस्थितकल्पने मानाभावाच्च तत्र निजनिर्मितसूत्राणां निर्देशस्यैव स्वीकारे सर्वसामंजस्यात्। ब्रह्मसूत्रेषु गीतायाः अनेकश्लोकशब्दावल्या यत्किञ्चित् परिवर्तनेन उपलम्भात् तेषां गीतापरकालीनत्वम् इत्यपि न; गीतायाः स्वयं यत्र तत्र प्राचीनोपनिषद्वाक्यसम्वलितत्वाद् वेदान्तसूत्राणाम् अपि केषांचिच्छब्दानामौपनिषदत्वात्। गीताब्रह्मसूत्रयोः विरचयितु एकत्वम् आकलयताम् उभयोः शाब्दिकसाम्यसमस्यासंदिग्धेः शशशृङ्गायितत्वात्।

पुराणेषु व्यासनिर्मितसूत्राणां न कुत्राप्युल्लेखः नापि च तत्प्रणयनाध्यापनयोर्निर्देशः[2] इत्यपि न समीचीनम् निम्नाङ्कितैः उद्धरणैः तत्तर्कस्यापि तुच्छीकृतत्वात्—

( अ ) श्रीमद्भागवते—

'जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्[3]' अयमादिमः श्लोकः। अस्मिन् ग्रन्थे भागवतधर्मस्य प्रामुख्ये सत्यपि अस्य मंगलाचरणं 'यतो वा इमानि भूतानि जायन्ते', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि श्रुतिप्रतिपादितब्रह्मणो ध्यानेन 'जन्माद्यस्य यतः' इति ब्रह्मसूत्रीयद्वितीयसूत्रप्रारब्धश्लोकेन कृतं वर्तते। 'अन्वयात् इतरतः' इत्यनेन 'ईक्षतेर्नाशब्दम्[4]' इत्यस्य संकेतः इति 'एतच् श्लोकटीकायां श्रीधरः। यद्यपि सर्वेषां पुराणानां व्यासकर्तृत्वं संदेहास्पदं तथापि वेदव्यासकृत्या श्रीमद्भागवतं प्रसिद्धयितुं ग्रंथकारस्य ब्रह्मसूत्रीयप्रमुखसूत्रेण प्रारम्भ एतत्सूचयति यद्वेदव्यासस्य ब्रह्मसूत्ररचयित्रा सह घनिष्ठः सम्बन्धः प्राचीनपरम्परया स्वीक्रियते स्म।

---

१. ब्र० सू० वै० भा० अध्ययने पृ० १४–१५

२. ब्र० वै० भा० अ० पृ० १४

३. श्रीमद्भागवते १।१।१ प्रस्थानत्रय्यनन्तरं 'व्याससमाधिभाषा' रूपेण प्रसिद्धस्य श्रीमद्भागवतस्य प्रमाणचतुष्टये इत्थं परिगणनमुपलभ्यते—

वेदाः श्रीकृष्ण वाक्यानि व्याससूत्राणि चैव हि।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्॥

( शुद्धाद्वैतमार्तण्डे पृ० ४९ )

४. ब्र० सू० १।१।५

( आ ) श्रीमद्भागवतप्रथमस्कन्धपञ्चमाध्याये व्यासनारदसंवादः !

तत्र नारदो व्यासमभिधत्ते—'यत् सनातनं ब्रह्म तत् भवता जिज्ञासितं तदधिगतं चेतिकथं त्वम् आत्मानम् अकृतार्थम् इव शोचसि—'जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनम्'[1] ।

अत्रत्यः 'यत् सनातनं ब्रह्म तत् भवता जिज्ञासितम्' एष भागः निश्चयेन 'अथातो ब्रह्मजिज्ञासा' एतत् सूत्रं तथा यत्सनातनं ब्रह्म तद् भवता अधिगतम् ( प्राप्तम् ) एष भागः ब्रह्माधिगतेश्च मोक्ष एव फलमिति सर्वत्र वेदान्तेषु प्रतिपादितत्वात्—'एतस्मान्न पुनरावर्तन्ते'[2] ।

'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते । नावर्तन्ते'[3] ।

'न च पुनरावर्तते न च पुनरावर्तते'[4] ।

इत्यादिश्रुतिसम्मतम् 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्'[5] इति सूत्रं सूचयन् आद्यन्ताभ्याम् प्रत्याहाररूपेण संक्षिप्त्या सम्पूर्णं ब्रह्मसूत्रं सूचयति । इत्थं श्लोकस्य भावार्थः एतदभिव्यञ्जयति यद् भागवतस्य रचयिता एतत्स्वीकरोति यद् ब्रह्मजिज्ञासमानेन व्यासेन कश्चिद् दर्शन-ग्रन्थः विरचितः । एतस्माच्च पूर्वस्मिन् श्लोके महाभारतस्य व्यासकर्तृत्व-मुक्तं वर्तते—'कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम्[6] ।

एतेन महाभारतब्रह्मसूत्रयोः एककर्तृत्वं स्पष्टतया प्रमाणीक्रियते, व्यासस्य ब्रह्मसूत्रकर्तृत्वं स्कन्दपुराणे अपि—

'उत्सन्नान् भगवान् वेदान् उज्जहार हरिः स्वयम् ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा[7] ॥

वायुपुराणे अपि—

अस्मत्सम्मत एवार्थो भवता सम्प्रदर्शितः ।
पुराणेष्वितिहासेषु सूत्रेष्वपि च नैकधा ॥
अक्षरं ब्रह्म परमं सर्वकारणकारणम्[8] ।

मत्स्यपुराणे अपि—

अङ्गानि चतुरो वेदान् पुराणं न्यायविस्तरम् ।
मीमांसां धर्मशास्त्रं च परिगृह्य मया कृतम्[9] ॥

---

१. श्रीमद्भागवते १।५।४
२. प्रश्नोपनिषद् १।१०
३. छां० उ० ४।१५।६
४. तत्रैव ८।१५।१
५. ब्र० सू० ४।४।२२
६. श्रीमद्भागवतम् १।५।३
७ माध्वभाष्ये स्कन्दपुराणवचनम्
८. वायुपुराणे १०४।१०८
९. मत्स्य पु० अ० ५३।६

देवीभागवते अपि च ब्रह्मयज्ञनिरूपणे नारदनारायणसंवादे—

अथातो धर्मजिज्ञासा अथातो ब्रह्म[1] इत्यपि' इत्युपलभ्यते यस्य पर-भागो नियतम् 'अथातो ब्रह्मजिज्ञासा इति ब्रह्मसूत्रीयमादिमं सूत्रं निदिशति ।

वेदान्तसूत्राणां व्यासस्य कर्तृत्वे अन्या एषा आपत्तिः यत् पुराण-वर्णितपरम्परानुसारं याज्ञवल्क्यो[2] व्यासस्य प्रशिष्यः । क्रुद्धेन च तद्गुरुणा वैशम्पायनेन आज्ञप्तः स तदधीतयजूंषि भुक्तान्नवद् अवमत्; तानि च अन्ये अन्तेवासिनः तित्तिरयो भूत्वा अग्रहीषुः । सैव तैत्तिरीया संहिता । याज्ञवल्क्येन च स्वतपःसन्तोषितात् सूर्यात् पुनः स वेदः अधिगतः । स च शुक्लत्वात् ( शुद्धत्वात् ) शुक्लयजुर्वेदनाम्ना प्रसिद्धिं प्राप्तः । बृहदारण्यकोपनिषदि याज्ञवल्क्येन प्रतिपादितानां श्रुतीनां ब्रह्म-सूत्रेषु मीमांसा कृता वर्तते । प्रथमाध्यायद्वितीयपादीयविंशे सूत्रे 'शारीर-श्चोभये भेदेनैनमधीयते' इत्यत्र उभये इत्यनेन शुक्लयजुषां काण्व-माध्यन्दिनशाखयोर्निर्देशः । एतत्सर्वं बादरायणं याज्ञवल्क्यात्परवर्तिनं सूचयति । तच्च तावतः प्राचीनस्य वेदव्यासस्य कृते सर्वथा असम्भवि इति वेदव्यासाद् भिन्नः अर्वाचीनः ब्रह्मसूत्रकर्ता बादरायणः सिध्यति ।

इदानीं प्रस्तुता एषा पौराणिककथा सत्यतानिकषे निकषणीया-विष्णुपुराणे याज्ञवल्क्यपराशरयोर्नामोल्लेखः । एतेन एतत्स्पष्टं यद् व्यासप्रशिष्यौ, वैशम्पायनशिष्यौ पराशरयाज्ञवल्क्यौ व्यासपितृपराशर-योगियाज्ञवल्क्याभ्यां भिन्नौ अर्वाचीनौ च, किंच, यजुर्वेदीयशुक्लकृष्ण-भागयोः संकलनपरिपाटीपर्य्यवेक्षणे आद्ये ( शुक्ले ) केवलं क्रमबद्धा मंत्राः । शतपथब्राह्मणरूपे ब्राह्मणभागश्च पृथक्कृतः । द्वितीये ( कृष्णे ) कर्मकांडीयांशः अपि सहैव संकलितः इतीयान् भेदः । शुक्लयजुर्वेदे न कश्चिद् अपि एवंभूतः अंशः वर्तते यः कृष्णयजुर्वेदे नोपलभ्येतेति वान्तज्ञानातिरिक्तं न किंचिन्नवीनं तेन सूर्याद् उपलब्धम् । किंच, अधि-गतविद्योत्पन्नज्ञानस्य आत्मगुणत्वेन द्रव्यरूपानिगीर्णान्नवद्वमनस्य सर्वथा असम्भवतया शुक्लकृष्णयोः शुक्लः अर्वाचीनतरः शुद्धतरश्चेत्ययमेव तथ्यार्थः शुक्लयजुषां क्रमबद्धतयैव अभिव्यज्यते ।

वस्तुतस्तु तित्तिरिनामकाचार्यप्रवर्तितशाखैव तैत्तिरीयशाखा उच्यते । 'तेन प्रोक्तम्[3] इत्यधिकृत्य 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्'[4] इत्यनेन

---

१. दे० भा० ११।२०।१० २. वि० पु० तृ० अं० अ० ४
३. ( अ० ४।३।१०१ ) ४. ( अ० ४।३।१०२ )

तित्तिरिणा प्रोक्तमधीयते इति तैत्तिरीयाः इत्युक्त्वा भट्टोजिदीक्षितेन अपि अयमेव भावो व्यक्तीकृतः।

यद्यपि सिद्धान्तकौमुद्यां 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु'' इति सूत्रे भाल्लविनः, शाट्यायनिनः इत्युदाहृत्य पुराणेति किम् याज्ञवल्क्यानि ब्राह्मणानि इति प्रत्युदाहृतम्। इत्थं याज्ञवल्क्यो न पुराणो मुनिरित्यायाति तथापि 'याज्ञवल्क्यादिभ्यः प्रतिषेधः तुल्यकालत्वात्'' तद्विषयता चेति न इति पातञ्जलमहाभाष्योपन्यासात् याज्ञवल्क्यः पुराणो मुनिरिति सिध्यति अन्यथा ( तस्य अर्वाचीनत्वे ) पुराणपदेनैव तद्व्यावृत्तिसिद्धे वार्तिकारम्भो व्यर्थ एव स्यात्।

किंच, अन्तर्याम्यधिकरणीय–शारीरश्चोभये–इत्यादि सूत्रे उभये इत्यनेन काण्वमाध्यन्दिनयोरेव ग्रहणमिति शांकरभाष्यादौ निर्देशे सत्यपि सूत्रे नामग्राहम् उल्लेखाभावात् तेन भेदाभेदवादिनौ अपि ग्रहीतुं शक्येते इति याज्ञवल्क्यश्रुतिमीमांसा एव निर्मूला।

इत्थं च एषा पौराणिकी कथा कस्यापि तथ्यस्य पुष्टौ प्रमाणत्वेन न उपन्यसनीया। निश्चप्रचतया हि बहुतिथे काले गते शुक्लयजुर्वेदानुयायिभिः स्वसंहिताप्रतिष्ठा–तिष्ठापयिषया एषा कथा कल्पिता। वैदिक साहित्ये च न कुत्रापि एषा उद्लिख्यतेति व्यासो निश्चितरूपेण योगियाज्ञवल्क्यात् परकालीनः। शतपथब्राह्मणे स्थाने स्थाने तन्नामोल्लेखः। बृहदारण्यकोपनिषदि अपि तद्विचाराः महत्वपूर्णाः। केवलं भाषाप्रामाण्यम् एव एतत्प्रमाणयितुं पर्याप्तं यद्व्यासयाज्ञवल्क्ययोः काले अनेकेषां वर्षाणां व्यवायः। शतपथब्राह्मणम् वैदिकम्। अस्याक्षरेषु स्वरांकनम् इत्येतत् प्राचीनग्रन्थेष्वन्यतमम्, तत्र च याज्ञवल्क्यस्य उल्लेखः तं ततः अपि प्राग्भाविनं प्रमाणयति; महाभारतस्य च भाषा पूर्णतया लौकिकी। सा च रामायणादपिपरवर्तिनी। वैदिकसंहितासु ब्राह्मणग्रन्थेषु च समुल्लिखितानां वैदिकाख्यानानामत्यन्तपरवर्तिविकसितरूपं महाभारते उपलभ्यते। महाभारतं च स्वपूर्ववर्तिसमस्तवैदिकसाहित्यस्य अस्तित्वं स्वीकरोति। अतः एतत्स्पष्टं यन्महाभारतस्य रचयितुः स्थितिः शतपथब्राह्मणकालात् प्राक् न कथमपि सम्भवतीति।

वेदव्यासस्य वेदानां व्यसने पुराणानां कर्तृत्वे च केवलम् एतावत्सत्यं प्रतिभाति यत् प्राचीनकालात् गुरुपरम्परया वंशपरम्परया वा शाखाभेदेन मौखिकाध्ययनाध्यापनरूपेण समागतान् वेदमन्त्रान्, प्राप्ताः

---

१. ( पा० ४।३।१०५ )

२. वार्तिकम् ४।३।१०५

प्राप्यमाणाः कथाश्च सुसंगत्या व्यासः समकलयत्[1] कालान्तरे च एवं भूताः कथास्तत्र सम्बद्धा यासाम् अवलोकनेन न केवलं याज्ञवल्क्य एव अपि तु पराशरः अपि व्यासस्य प्रशिष्यतामापन्नो निश्चीयते[2]। पाश्चात्येन वेबरमहोदयेन तु शुक्लकृष्णयजुषां विषये अन्यथापि विशेषः विचारः कृतः[3]। शुक्लयजुर्वेदे भाष्यम् आरिप्सुना महीधरेणापि अस्मिन् विषये लेखनी चालिता किन्तु तत्सर्वमिह अप्रासंगिकत्वेन विस्तरभिया च न प्रपंच्यते। जिज्ञासुभिश्च तत्सर्वं ततः एव अवगमेलिमम्।

एवं व्यासबादरायणयोरेकत्वे मतभेदे अपि तयोर्भिन्नत्वं प्रमाणयितुं न किमपि द्रढीयो गमकम्। 'यत्तु महाभारतीयादिपर्वणि व्यासस्य द्वैपायन-वेदव्यासनाम्नो र्व्युत्पत्तिरुपलभ्यते[4] बादरायणस्य तु न इति बादरायणो न व्यासः। व्याकरणेनापि बादरायणशब्दस्य न निष्पत्तिः। नडादिगणे बदरशब्दस्य पाठे सत्यपि तस्य वेदव्यासवंश्याभावात् 'नडादिभ्यः फक्' इति फका तदसिद्धेः' इति[5] तन्न समीचीनम्। वेदव्यासस्य मूलतः न व्यासो नापि च द्वैपायनो नाम। स हि वेदान् व्यसति स्मेति कर्मण्यणि वेदव्यासः। स एव च भीमो भीमसेनवत् नामैकदेशे नाममात्रस्य ग्रहणे व्यासः। एवं द्वीपाददूरभवम् इति [6]चातुरर्थिके ( भावार्थके वा ) अणि द्वैपम्, तथाभूतमयनं यस्येति द्वैपायनः। इत्थं व्यासद्वैपायनशब्दयोः विशेषणमात्रत्ववत् बदरीषण्ड-मण्डितबदरिकाश्रमे तपश्चरणात् बदराः सन्त्यस्मिन् देशे ( स्थाने ) इति चातुरर्थिके[7] ( भवार्थके वा ) अणि तत्र तथाभूतं वा अयनं यस्येति विग्रहे निष्पन्नस्य बादरायणशब्दस्यापि विशेषणमात्रत्वम्। तदुक्तं श्रीमद्भागवते—

तस्मिन् स आश्रमे व्यासो बदरीषण्डमण्डिते।

---

१. ( सत्यकेतु विद्यालंकारः ) भारतीय संस्कृति और उसका इतिहास पृ० ८८—८९

२. वि० पु० तृ० अंशे ४ अ०

३. वेबर हिस्ट्री आफ इण्डियन लिटरेचर पृ० १०४-११६

४. म० भा० ६३।८६-८८

५. ( डा० रामकृष्णः ) ब्र० सू० वै० भा० तु० अ० पृ० १५-१६

६. अदूरभवश्च ( अ० ४।२।७० ) अथवा 'तत्र भवः ( अ० ४।३।५३ ) भूधातोस्त्यत्यर्थके अपि तत्र जातः' (४।३।२५) इति सूत्रारम्भसामर्थ्यात् इह सत्तार्थे एव अण्।

७. १८२ तदस्मिन्नस्तीति देशे तन्नाम्नि। ( अ० ४।२।६७ )

आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम्[१] ।

एवमेव पराशरशब्दात् गर्गादित्वात् अनन्तरापत्ये अपि गोत्रत्वारोपात् रामो जामदग्न्यवत् 'गर्गादिभ्यो यञ्' इति यञि पराशरस्यापत्यं पाराशर्यः इत्यपि तस्य अन्यतमं विशेषणम् । प्राचीनातिप्राचीनपुराणेषु व्यासबादरायणयोः एकत्वमनुपदमुपलभ्यते । महाभारतश्रीमद्भागवताभ्यां च इत्थं तयोरेकत्वम्—

क्षेत्रे विचित्रवीर्यस्य कृष्णद्वैपायनः पुरा ।
त्रीनग्नीनिव कौरव्यान् जनयामास वीर्यवान्[२] ॥
क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः[३] ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥
निर्गते नारदे तत्र भगवान् बादरायणः ।
·········तस्मिन् स आश्रमे व्यासः[४] ॥

शुको व्यासपुत्र इत्यत्र न कस्यापि वैमत्यम् । तदभिधायकौ च वैयासकि–बादरायणि शब्दौ श्रीमद्भागवते बहुत्र उपलभ्येते—

'हरे गुणाक्षिप्तमति भगवान् बादरायणिः'[५] ।

'एवं निशम्य भृगुनन्दनसाधुवादं वैयासकिः[६] स भगवानथ विष्णुरातम्' । शांकरभाष्ये अपि—

'शुकः किल [७]वैयासकिर्मुमुक्षुरादित्यमंडलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव' । श्रीमद्भागवतस्य—

य प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ।

पुत्रेति······अयम् श्लोकः पूर्वोक्तभाष्यस्य मूलम् प्रतिभाति । देवीभागवते व्यासबादरायणयोरित्थमेकत्वम्—

इति राज्ञो वचः श्रुत्वा भगवान् बादरायणः[८] ।

निजगाद······ततः 'व्यास उवाच'इति सम्बन्धशब्दः । ब्रह्मसूत्राणाम् प्रत्येकाध्यायसमाप्तौ तत्पुष्पिकायाम् 'इति श्रीवैयासिक्यां[९] शारीर-

---

१. श्रीमद्भा० १।७।२ तथा बादरायण पदेन बदरिकाश्रमवासोक्तिः" इति रत्नप्रभा पृ० २५५५ २. म० भा० आदिपर्व १।९५
३. श्रीमद्भा० ९।२२।२५ ४. तत्रैव १।७।१–२
५. तत्रैव १।७।११ ६. तत्रैव १०।१।१४
७. ब्र० सू० ४।२।१४ शां० भा० ८. दे० भा० १२।८।९–१०
९. ब्र० सू० शां० भा० भामतीरत्नप्रभाटीका 'खेमराजप्रेस बम्बई तथा ब्र० सू० गीताप्रेस एवं ब्र० सू० मध्वभाष्यसमेतम् ( कलकत्ता )

कमीमांसायाम्' इत्यादिपाठः । तत्तद्ग्रन्थरचयितृरूपेण स्वकीयं नाम ग्रन्थस्थितिं यावत् चिरं स्थिरयितुं ग्रन्थपुष्पिका ग्रन्थकारैरेव लिख्यते । अतः आसां प्रामाणिकत्वं निस्सन्देहम् । सत्यपि संदेहाग्रहे शंकरादपि पूर्वमस्याः स्थितिः एतत्तु सूचयत्येव यत् प्राचीनकालत एव ब्रह्मसूत्ररचयिता व्यासः विद्वद्भिरभिमतः आसीत् शंकरेण च ब्रह्मसूत्रीयान्तिमसूत्रोपक्रमणे स्वभाष्ये बादरायणस्य ब्रह्मसूत्रकर्तृत्वं प्रतिपादितमेवेति व्यास-बादरायणयोरेकत्वं समायातम् । अत एव शंकरमतानुयायिभिर्वाचस्पत्यानन्दगिर्यादिभिश्चापि' तदेव स्वीकृतम् । रामानुजेन श्रीभाष्यमंगलाचरणे तद्व्याख्यातृभिश्च श्रुतप्रकाशिकादिटीकास्वपि तथैव स्वाभिमतं प्रदर्शितम् ।

यत्तु 'भावं तु बादरायणोऽस्ति हि'[2] तथा 'स्मरन्ति[3] च' इति ब्रह्मसूत्रयोः शांकरभाष्ये 'व्यासादयः' इति नामोल्लेखात् व्यासः स्मृतिकारः तथा 'अनावृत्तिः शब्दात्[4]' इति सूत्रोपक्रमणे च 'बादरायण' इति नामोल्लेखात् बादरायणः सूत्रकारः इति स्पष्टतया तयोर्भिन्नत्वं शंकराभिमतम् इति तन्न; पूर्वोक्तप्रमाणैः व्यासबादरायणयोः पर्यायत्वेन एकत्वे सिद्धे कुत्रचित् स्मृतिकारविशेषत्वेन व्यासस्य कुत्रचिच्च सूत्रकारविशेषत्वेन बादरायणस्य नामोल्लेखे तद्भेदशंकोत्पत्तेः कमठीस्तन्यायितया यथाकालं यथाकार्यं च शंकरः, त्रिपुरारिः, विष्णुः, मधुहा; जगदम्बा, महिषमर्दिनी इत्यादिपर्यायवद् व्यासबादरायणयोरपि पर्यायत्वेन यथाकूतं तत्र तत्र भिन्ननामोल्लेखस्य सार्थक्यात् ।

द्वैपायन एव बादरायण इत्यत्र कोषस्यापि प्रामाण्यम्—

'माठरो, द्वैपायनः, पाराशर्यः, कानीनो, बादरायणो, व्यासः[5]' ।

× × × ×

---

१. (१) ब्रह्मसूत्रकृते तस्मै वेदव्यासाय धीमते ( भामती मं० ५ ) 'तं जिज्ञासुमुपलभमानो भगवान बादरायणः ( र० प्र० १।१।१ )

(२) श्रीमद्व्यासपयोनिधिः ( न्या० नि० मं० ५ ); श्रुतप्रकाशिका पृ० ५८–५९

(३) भगवान बादरायणः सूत्रितवान् 'अथातो ब्रह्मजिज्ञासा' ( न्या० नि० पृ० ३ )

२. ब्र० सू० १।३।३३ ३. तत्रैव १।३।४७

४. तत्रैव ४।४।२२ ५. हेमचन्द्रः

'बादरायणः सत्यवतीसुतः, सत्यरतः, पाराशरिः'[1]

× × ×

कृष्णद्वैपायनः, सत्यभारतः, पाराशरिः[2], सत्यरतः'

एतेन व्यासबादरायणयोर्व्यक्तित्वविवादे पाश्चात्यैरुद्भावितानां पौरस्त्यैरपि च कैश्चिदादृतानां सर्वेषां तर्काणां निर्मूलकत्वात् एतदाधारेण ब्रह्मसूत्रकर्त्तुर्बादरायणस्य आधुनिकत्वं स्वीकृत्य ब्रह्मसूत्राणामर्वाचीनत्वम् अभ्युपगच्छन्तः परास्ताः।

यत्तु कैश्चिद् ब्रह्मसूत्रेषु बौद्धाद्याधुनिकमतखण्डनोपलब्ध्या अयं ग्रन्थः गौतमबुद्धाविर्भावानन्तरं नागार्जुन-दिङ्नागवसुबन्धुप्रभृतिभ्यः अपि परकालीनेन केनचिद् व्यासेन ( व्यासनामधारिणा ) विदुषा विरचितः इति तन्न, गौतमबुद्धाविर्भावात् प्रागेव द्वाविंशतिसंख्याका बुद्धाः समभवन् गौतमस्तु त्रयोविंशोबुद्ध इति बौद्धजातकादिग्रन्थेषूपलभ्यते। कलेः आदौ व्याससमकालिकः क्रकुच्छन्दनामा कश्चिद्बुद्धः आसीत्। ततः कनकमुनिः ततः कश्यपः ततश्च गौतमबुद्ध इति लङ्कावतार[3]सूत्र-महावस्तु-ललितविस्तरादौ प्रसिद्धम्।

बौद्धजैनमतानां प्राचीनता पौराणिक-वैदिकग्रन्थेभ्य अपि प्रमाणीक्रियते। विष्णुपुराणे[4] मायामोह-पराशरसंवादो लभ्यते। तत्र मायामोहः वेदान्तोक्तविज्ञानस्वरूपोपदेशेन जगतो भ्रान्तिस्वरूपतां प्रदर्शयन् 'तद्यथा कर्मचितो लोकः क्षीयते' इत्यादिना कर्मनिन्दासूचकश्रुत्युपदेशेन कर्मपरान् सर्वान् यागाद्यनुष्ठानात् निवर्तयामास इति ब्रह्ममार्गपरिभ्रष्टास्ते 'बौद्ध' इति नाम्ना प्रसिद्धिं गताः।

किंच वेदान्तसारादिषु बहुषु प्राचीनार्वाचीनग्रन्थेषु बौद्धविज्ञानवाद-शून्यवादयोर्बीजभूतानि वेदान्ततात्पर्यपूर्वपक्षरूपाणि श्रुतिवाक्यानि समुपलभ्यन्ते। तथाहि—बौद्धस्तु 'अन्यः अन्तरात्मा विज्ञानमयः'[5] इत्यादिश्रुतेः कर्त्तुरभावे करणस्य शक्त्यभावात् अहं कर्त्ता अहं भोक्ता इत्यनुभवाच्च बुद्धिरात्मा इति वदति। अपरो बौद्धः 'असदेव इदमग्र आसीत्'[6] इत्यादिश्रुतेः सुषुप्तौ सर्वाभावात् 'अहं सुप्तः' 'सुषुप्तौ नाहमासम्' इत्युत्थितस्य स्वभावपरामर्शविषयानुभवाच्च 'शून्यम्' आत्मा इति

१. शब्दरत्नावली २. त्रिकाण्डशेषः
३. लं० सू० ७०२ ४. वि० पु० अं० ३अ० १८।१५–१८
५. तै० उ० २।४।१ ६. छां० उ० ६।२।१

वदति । इत्थमुक्तवचनैर्बौद्धादीनां वैदिकमतमूलकत्वं सिध्यति । उपनिषत्सु च तत्तन्मतेषु उपलभ्यमानेषु सर्वास्तिवाद-विज्ञानवाद-शून्यवादाद्युल्लेखः वस्तुतो भारतीयमतानुसारेणेति बीजरूपेण सर्वेषामेतेषां मतानां वैदिकमूलकत्वम् । ब्रह्मसूत्रे हि अतिप्राचीनान् ऋषीन् अपहाय अर्वाचीनानां केषामपि सम्प्रदायप्रतिष्ठापकानां दार्शनिकसिद्धान्तस्थापकानाम् आचार्याणां वा नामनिर्देशो नोपलभ्यते । तत्र निराकृतमपि सांख्यमतमतिप्राचीनमेव । तथैव खण्डिताः न्यायवैशेषिकसिद्धान्ता अपि न प्रचलितगौतमकणादप्रतिपादिताः । सर्वास्तिवादविज्ञानवादशून्यवादानां समुपलभ्यमाने अपि ब्रह्मसूत्रे खण्डने तेषामत्यन्तार्वाचीनैतिहासिकबौद्धमतविशेषे प्रमाणाभावः ।

वैभाषिकाणां सौत्रान्तिकानां च सर्वास्तिवादसिद्धान्तो बीजरूपेण कथावत्थुप्रभृतिप्राचीनबौद्धग्रन्थेषु उपलभ्यते । योगाचारसम्प्रदायस्य स्थापयितुः मैत्रेयनाथात् योगाचार्यासंगाद् अपि च प्राक् विज्ञानवादः अविद्यत । लंकावतारप्रभृतिग्रन्थेषु स्पष्टतया स वर्तते एव । पालीसाहित्ये अपि च स्पष्टस्तन्निर्देशः । माध्यमिकमते च नागार्जुनग्रन्थेषु आर्यदेवधर्मत्रातप्रभृत्यनेकाचार्यग्रन्थेषु उपलभ्यमानः अपि शून्यवादः न केवलं नागार्जुनादप्यर्वाक् अपि तु अश्वघोषग्रन्थेष्वपि अतिप्राचीनपालीग्रन्थेषु अपि प्राप्यते । प्राचीनोपनिषदादिष्वपि सूक्ष्मरूपेण एतेषां सर्वसिद्धान्तानां समुल्लेखः कृतो वर्तते । तथा हि—

'नासदासीन्नो सदासीत् तदानीम्'[1] ।

'न मृत्युरासीदमृतं न तर्हितस्मादन्यन्न परः किंचनास'[2] एवं वेदे तथा—

'स पर्यगात् शुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्'[3] ।

'य एकः अवर्णः,'[4] 'स एष नेति आत्मा'[5]

'तद्ध एक आहुरसदेवेदमग्र' आसीत् एकमेवाद्वितीयम् । तस्मादसतः सज्जायत'[6] । एवमुपनिषत्सु चोपलभ्यमाना धारणैव बौद्धानां शून्यवादरूपेण जगन्नास्तित्ववादविचारधारारूपेण च परिपूर्णतया विकसिता । एतदतिरिच्य बौद्धानां 'सर्वं दुःखम् दुःखम् तथा यत्सत् तत्सर्वं क्षणिकम्' एष सिद्धान्तः अपि—

---

१. ऋ० १०।१२९।१ २. तत्रैव १०।१२९।२

३. ई० उ० ८ ४. श्वे० ४।१

५. बृ० ४।४।२२ ६. छां० उ० ६।२।१

'श्वोभावा मर्त्यस्य यदन्तक एतत्सर्वेन्द्रियाणां जरयन्ति तेजः' ।

'अपि सर्वं जीवितमल्पमेव, अभिध्यायन् वर्णरतिप्रमोदान् अतिदीर्घे जीविते को रमेत'[1] ।

एतस्य अनुवादमात्रम् ।

बृहदारण्यकोपनिषदि—

'ते ह स्म पुत्रेषणायां च वित्तेषणायां च लोकैषणायां च व्युत्थाय अथ भिक्षाचर्यमाचरन्ति'[2] । एतद्बौद्धजिनयोर्भिक्षुत्वं लक्षयति । ऐतरेयोपनिषदि—

इमानि पंचमहाभूतानि अण्डजानि च अश्वा गावः पुरुषाः यत्किंचेदं प्राणिजंगमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्[3] ।

अत्र तत्वविज्ञानेन सह विज्ञानवादस्य मुख्यसिद्धान्तस्य स्पष्टोल्लेखः । श्रमण–प्रतिबुद्धेत्यादीनां केषांचित् बौद्धपारिभाषिकशब्दानामुल्लेखः शतपथब्राह्मणे तैत्तिरीयारण्यके अपि समुपलभ्यते[4] । किञ्च, ब्रह्मसूत्रेषूपलभ्यमानाः 'इतरेतरप्रत्ययत्व–पूर्वनिरोधादिशब्दाः एव परकालीनैर्बौद्धैगृहीताः, बौद्धमतस्य प्राचीनत्वेन तच्छब्दा अपि कालक्रमानुसारेण पूर्वत एव परम्परया प्रचलिताः स्युरिति वा इत्यपि कल्पयितुं न अविचारसहम् ।

एतेन एतदवगम्यते यद् बौद्धसिद्धान्तमौलिकतत्वानि, नास्तित्ववादसिद्धान्तः, आत्मतत्वास्वीकृतिः, नैराश्यपूर्णविषयसुखजुगुप्सा, ज्ञानस्य चादर्शसिद्धान्तः कर्मणः महत्वं च एतत्सर्वम् प्राचुर्येण उपनिषत्सु वर्तते । तत्साहाय्येनैव बौद्धैर्विभिन्नदर्शनानि स्थापितानि यानि औपनिषददर्शनेभ्यः प्रतीयमाननितान्तभिन्नतानि अपि समुपलभ्यमानौपनिषदपर्याप्तप्रेरणानीति बौद्धजैनयोः प्रागपि तन्मताङ्कुरस्थितेः प्रमाणितत्वात् तन्मतखण्डनेन बुद्धापेक्षया ब्रह्मसूत्राणामर्वाचीनत्वं प्रतिपादयन्तः परास्ताः ।

बुद्धात्पूर्वं ब्रह्मसूत्राणां स्थितिर्गीतया अपि प्रमाणीक्रियते । गीता हि महाभारतीयभीष्मपर्वांशः इति न बुद्धस्य तन्मतस्य वा तत्र कुत्राप्युल्लेखः ।

'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः'[5] ।

---

१. कठ० १।१।२०　२. बृ० उ० ४।४।२२

३. ऐ० उ० ५।३　४. तै० आ० २।७ तथा शत० ब्रा० १४।४।२।१७

५. गीता १३।४

इत्यत्र गीताश्लोके ब्रह्मसूत्रस्य स्पष्टोल्लेखो[1] ब्रह्मसूत्राणां गीतापेक्षया पूर्ववर्तित्वं द्रढयति। मैक्समूलरमहोदयः अपि ब्रह्मसूत्रं गीतापेक्षया [2]पूर्ववर्ति स्वीकरोति। स एतदपि मनुते यद् 'ब्रह्मसूत्रम्' एतत् अस्य ग्रन्थस्य[3] नाम अपि गीतोक्तशब्देनैव स्पष्टीक्रियते। [4]शंकरमतिरिच्य [5]रामानुजमध्वादिभिरपि भाष्यकारैः ब्रह्मसूत्रपदेन एतान्येव ब्रह्मसूत्राणि स्वीकृतानि।

इत्थं गीतापेक्षया ब्रह्मसूत्राणां प्राचीनत्वे ब्रह्मसूत्रेषु च 'स्मृतेश्च[6] 'स्मरन्ति च[7] 'योगिनः प्रति च स्मर्यते[8] स्मार्ते चैते' इत्यादिरीत्या गीताया निर्देशेन च तयोः पौर्वापर्यविनिगमनाविरहे एतत्समुचितं प्रतिभाति यद् वर्तमानब्रह्मसूत्ररचनायां गीतारचयितुर्योगः अवश्यमासीत्। एतच्च एतेन अपरथापि प्रमाणीक्रियते यद् गीताब्रह्मसूत्रयोरुभयोरपि भागवतसम्प्रदायस्य चतुर्व्यूहानां परित्यागेन सांख्यमतस्य खण्डनं कृतं वर्तते। गीता च सांख्यसम्बन्धिनः सृष्टिनियमान् स्वीकरोति। यत्किंचित्परिवर्तनेन च प्रकृतिं परब्रह्मणः सहायिकामाकलयति। ब्रह्मसूत्रेष्वपि च सूत्रकारः सांख्याभिमतद्वैतमतं खण्डितवान्, एतत्स्वीकर्त्तुं चापि न व्यरौत्सीत् यत् प्रकृतिः परब्रह्माधीनेति। अत एव गीतारहस्ये[9] लोकमान्यतिलकः अपि गीताब्रह्मसूत्रयोः कर्त्तुः एकत्वं सप्रमाणं विवेचितवान्।

इत्थं स्पष्टमेतद् यत् बौद्धसिद्धान्तानामुल्लेखे सत्यपि ब्रह्मसूत्राणामर्वाचीनता कथमपि वक्तुं न शक्यते। नास्तिकसिद्धान्तरूपे एते सिद्धान्ताः पूर्वकालत एव वर्तन्ते स्म। ब्रह्मसूत्राणां रचनाकालविषये सर्वोत्कृष्टम् अकाट्यं च प्रमाणं 'पाराशर्यशिलालिभ्यां भिक्षु-

---

१. मधुसूदनेन तु 'ब्रह्मसूत्रपदैः' एतस्य ब्रह्मसूचकपदैरुपनिषद्वाक्यैरित्यर्थः कृतो गीतायाम्

२. सिक्स सिस्टम्स आफ फिलासफी पृ० ११२

३. तत्रैव पृ० ११८

४. प्रो० कर्मरकरस्य एष विचारो यत् इह ब्रह्मसूत्रपदेन विवेचितक्षेत्रक्षेत्रज्ञानां केषांचित् प्राचीनतराणामन्येषां ब्रह्मसूत्राणां निर्देश इति शंकरतात्पर्यम्

५. ब्रह्मसूत्रपदैश्चैव, एवं बहुधागीतं क्षेत्रक्षेत्रज्ञयाथात्म्यं मया संक्षेपेण सुस्पष्टमुच्यमानं शृणु इत्यर्थः [ रामानुजगीता भाष्यम् पृ० ११८ ]

६. ब्र० सू० १।२।६ ७. तत्रैव २।३।४७

८. तत्रैव ४।२।२१

९. द्रष्टव्यम्—गीतारहस्यम् पृ० ५३२-५३९

नटसूत्रयोः"[1] एतत्पाणिनीयसूत्रमस्ति। तत्र हि पाराशर्येण निर्मितानि सूत्राणि अधिगच्छताम् भिक्षूणां 'पाराशरिणः' इति संज्ञा निर्दिष्टा। महाभारतादौ च व्यासपितरमतिरिच्य अन्यस्य कस्यचित् तावत् प्राचीनस्य पराशर इति नाम न उपलभ्यते। पाराशर्यव्यासस्य च नाम तैत्तिरीयारण्यके[2] अपि समायातम्। अतः पाणिनीयसूत्रे पाराशर्यशब्देन नूनं व्यासस्यैवनिर्देशो नान्यस्येति पराशरशब्दस्य गर्गादित्वेन यञि यस्य कस्यचिदपि पराशरगोत्रोत्पन्नस्य 'पाराशर्य' इति शब्देन बोधः कर्तुं शक्यते[3] इत्यविचारसहम्' पाराशर्ययोः केवलं व्यासशुकदेवयोरेव सर्वत्रोल्लेखोपलब्धिः। तत्र शुकदेवः परमहंस एवासीदिति तदनन्तरं तद्वंशपरम्पराया एव समाप्तिः। अतः नियतं ब्रह्मसूत्राणां रचना बुद्धात् प्राक्कालिकी भिक्षुसूत्रवेदान्तसूत्रयोरेकत्वं च।

यद्यपि अस्यां परिस्थित्यामयं प्रश्नः प्रकृत्या समुदेति यत् ब्रह्मसूत्राणामेतावत्प्राचीनत्वे कथं तत्र 'परकालिकदार्शनिकसिद्धान्तानां खण्डनम् किन्तु एतस्य इदमेवोत्तरं यत् सूत्रकारेण कस्यचिदपि सम्प्रदायप्रवर्तकस्य नाम नोदलिख्यत। औपनिषदकालानन्तरं प्रवृत्ते दार्शनिककाले विभिन्ना आध्यात्मिकविचारधाराः प्राचलन् ता एव च कालान्तरे एकैकस्य निश्चितसम्प्रदायस्य रूपमधारयन्। अतः बादरायणस्य तत्कालिकविचारधाराणां स्वग्रन्थे सन्निवेशः न कथमपि तद्ग्रन्थस्य बौद्ध-सांख्यादिमतपरकालिकत्वं प्रमाणयितुमलम्।

अस्य ग्रन्थस्य भिक्षुसूत्रनामविषये अपरा एषा आपत्तिः यत् ब्रह्मसूत्राणामेतन्नाम न कुत्रापि लभ्यते नापि च तानि भिक्षुनियमविधायकानि इति। किन्तु एषा आपत्तिः उक्तपाणिनिसूत्रार्थापरिज्ञाननिबन्धना। यतो हि एतत्सूत्रव्याख्यया अवगम्यते यत् पाराशर्येण प्रोक्तानि सूत्राणि अधीयानाः पाराशरिणो भिक्षवः कथ्यन्ते (पाराशर्येण प्रोक्तं सूत्रमधीयते इति पाराशरिणो भिक्षवः) तत्रभिक्षुसूत्रशब्देन भिक्षुत्वसम्पादकं सूत्रं भिक्षुसूत्रमित्यभिसंहितम्। नटसूत्रज्ञाने नटत्वसम्पत्तिवद् ब्रह्मज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात् कर्मस्वनादरेण भिक्षुत्वसम्पत्तेः। यथाचोक्तं मनुना—'वेदान्तान् विधिवत् श्रुत्वा सन्यसेदनृणो द्विजः'।

ब्रह्मसूत्राणामद्यापि व्याससूत्रम्, बादरायणसूत्रम्, वेदान्तदर्शनम् इत्यादीनां विभिन्ननाम्नां सत्वात्, स्यादेतत्, तस्मिन् समये एतदेव

---

१. (अ० ४।३।१०) २. तै० आ० १।९।२

३. ब्र० सू० वै० भा० तु० अ० पृ० १७

नाम प्रचलितं भवेत्। भिक्षुशब्दोल्लेखस्तु 'ब्रह्मप्रतिपादकं सूत्रं ब्रह्मसूत्रम्' एवं व्यासनिर्मितं सूत्रं 'व्याससूत्रम्' इत्यादिनामवद् भिक्षुत्वसम्पादकं सूत्रं भिक्षुसूत्रमित्यर्थद्योतनाय एवेति तत्सार्थक्यम्। अत एव भिक्षुसूत्रमिति प्रतीकमुपादाय तत्वबोधिन्यां[1] 'चतुर्लक्षणीरूपम्' इति व्याख्यातम्। तत्र लक्ष्यते विचार्यते सिद्धान्तविशेषः अनया अस्यां वेति विग्रहेण लक्षणीशब्दः 'करणाधिकरणयोश्च' इति ल्युट्प्रत्ययान्तः अध्यायवाचकश्च। अत एव यथा पूर्वमीमांसायाः कृते मीमांसापरिभाषादौ 'इह खलु महर्षिणा जैमिनिना द्वादशलक्षण्यां पूर्वमीमांसायाम्[2]...' इत्थं द्वादशलक्षणीशब्दप्रयोगः तथैव उत्तरमीमांसायाः कृते चतुर्लक्षणीशब्दप्रयोगः। तत्र चतुर्लक्षणीरूपमिति शब्देन स्पष्टतया 'सर्वं ह्येतद् ब्रह्म स अयमात्मा चतुष्पात्'[3] इति माण्डूक्योपनिषदि निर्दिष्टस्य स्थूल-सूक्ष्म-कारण-तुरीय चतुर्भेदात्मकस्य ब्रह्मणः पूर्वं समग्रग्रन्थसारभूतया चतुःसूत्र्या, ततः प्रत्यध्यायं चतुर्भिः पादैः, ततश्चतुर्भिरेवाध्यायैः प्रतिपादकत्वात् ब्रह्मसूत्राणामेव निर्देशः। बालमनोरमायामपि[4] चैतत्सूत्रमादाय 'भिक्षवः सन्यासिनः तदधिकारिकं सूत्रं भिक्षुसूत्रं व्यासप्रणीतं प्रसिद्धम्' इत्युक्तम्। भामत्यामपि[5] च शारीरकमीमांसायाः कृते 'चतुर्लक्षणी शारीरकमीमांसा' एष शब्दः प्रयुक्तः। इत्थं च अध्ययनार्थं निर्मितानां सूत्राणां भिक्षुनियमविधायकत्वं स्वत एवापास्तम्।

पाणिनि र्हि निश्चितरूपेण बुद्धात्प्राचीनः। तस्य समयः सप्तमशताब्दी नवमशताब्दी वा ईशवीयपूर्वं इति डा० बेल्वल्करः सी० वी० वैद्यश्च अष्टाध्यायीसूत्रप्रमाणैः क्रमशो निर्धारयतः[6]। स च वैदिकलौकिकसंस्कृतयोः सन्धिकालः। तस्मिन् समये वैदिककल्पसूत्राणां तथा गृह्यसूत्र-श्रौतसूत्र-शुल्वसूत्राणां च रचना परिपूर्णतां गता आसीत्। तदनुसारेणैव च अन्येषामपि सूत्रग्रन्थानां रचना क्रियमाणा आसीत् इति सम्पूर्णोपनिषदां मूलभूतसिद्धान्तान् संक्षेपेण एकत्र उपलब्धुं [7]व्यासेन

---

१. कौ० त० बो० निर्णयसागरप्रेस पृ० २६४ तथा पा० म० भा० ४।३।११०

२. मीमांसापरिभाषा पृ० १

३. मां० उ० २

४. बा० म० चौखम्बाप्रेस पृ० ७७९

५. शारीरकमीमांसाभाष्यम् ( खेमराज प्रेस पृ० ४२ )

६. एम्. बी. महाशब्दे इण्ट्रोडक्शन टु सिद्धान्तकौमुदी पृ० २८

७. व्यास एव कृष्णद्वैपायनः।. तस्य समयो भगवता शंकरेण स्वयं याव-

ब्रह्मसूत्राणि प्रणीतानि। इत्थमेनेषां सूत्राणामपि निर्माणं प्रायः वैदिककाले एव अभवत्। महाभारतस्यापि अयमेव रचनाकालः किन्तु वैदिकसाहित्यकालविभाजनस्य अद्यावधि समुचितनिर्णयाभावात् ब्रह्मसूत्राणामपि निश्चितरचनाकालोल्लेखः सर्वथा असम्भवः। तथापि पाणिनीयकालाधारेण ईशवीयपूर्वद्वादशशताब्दीतः ईशवीयपूर्वनवमशताब्द्या अन्तर्गतः कश्चिदवश्यमेषां प्रणयनकालः असामंजस्योत्पादको न प्रतिभाति।



---

-दधिकारमवस्थितिः ( ब्र० सू० ३।३।३२ ) इत्यादि सूत्रे 'कलिद्वापरयोः सन्धौ कृष्णद्वैपायनो बभूव' एवं स्वीकृतः।

भारतीयपरम्परा तु—

'अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः।
कृपः परशुरामश्च सप्तैते चिरजीविनः॥'

एवं व्यासं चिरजीविष्वन्यतमं मनुते।

# द्वितीयः अध्यायः

## ( बहिरंगपरिचयः )

### ब्रह्मसूत्राणां मूलरूपस्य परिचयस्तत्समीक्षणं च

विगताध्याये भूमिकास्वरूपः समालोच्यविषयस्य सामान्यः परिचयः प्रदत्तः । इदानीमिह विशेषेण तत्सम्बद्धब्रह्मसूत्राणां प्रत्यध्यायपादविषय-विश्लेषणादिकमुपन्यस्यते ।

सूत्रकारेण बादरायणेन अयं ग्रन्थः चतुर्षु अध्यायेषु प्रत्यध्यायं चतुर्षु च पादेषु विभक्तः । तत्र सर्ववेदान्तवाक्यानाम् एकमात्रब्रह्मप्रतिपादने एव अन्वयात् प्रथमाध्यायस्य समन्वयाध्यायो नाम । अस्य प्रथमे पादे स्पष्ट-ज्ञापकश्रुतिसमूहस्य द्वितीयस्मिंश्च अस्पष्टब्रह्मभावात्मकश्रुतिसमूहस्य तृतीयस्मिंश्चतुर्थे च संशयात्मकश्रुतीनां समन्वयः कृतो वर्तते ।

द्वितीयस्मिंश्चाध्याये सर्वे विरोधाभासा निराकृता इति द्वितीयाध्यायस्य अविरोधाध्यायो नाम । अस्य प्रथमे पादे स्वमतप्रतिष्ठापनार्थं स्मृतितर्का-दिविरोधानां परिहारः । द्वितीयस्मिंश्च विरुद्धमतेषु दोषारोपणपूर्वकवेदान्त-मतप्रतिष्ठापनम् । तृतीयस्मिंश्च ब्रह्मणः आकाशादितत्वोत्पत्तिः । चतुर्थे च भूतविषयकश्रुतीनां विरोधपरिहारो विहितः । फलतः अस्मिन् अध्याये विरोधिदर्शनखण्डनपूर्वकं युक्तिप्रमाणाभ्यां वेदान्तमतस्य अविरोधाभिधानं वर्तते ।

तृतीयस्मिंश्च अध्याये परब्रह्मप्राप्तेः साधनभूताया ब्रह्मविद्यायाः अन्या-न्योपासनानां च विषये निर्णयः कृतो वर्तते । अतः तृतीयाध्यायस्य साधनाध्यायो नाम । अत्र ब्रह्मजीवलक्षणनिर्देशपूर्वकं मुक्तेर्बहिरंगसाधनानां यज्ञदानादीनाम् अन्तरंगसाधनानां शमदमनिदिध्यासनादीनां च निरूपणं वर्तते ।

चतुर्थाध्यायस्य च फलाध्यायो नाम । अत्र सगुणनिर्गुणविद्याफलानां साङ्गोपाङ्गविवेचनपूर्वकं ताभिः विद्याभिः सह साधकाधिकारानुरूपम् उपलप्स्यमानानां फलानां विषये निर्णयः कृतो वर्तते । अत्रैव च जीवो-न्मुक्ति-जीवोत्क्रान्ति-सगुण-निर्गुणोपासनाफलतारतम्यविचारः । सम्पूर्ण-

ग्रन्थस्य षोडशसंख्येषु पादेषु संक्षेपेणैतत्सर्वं विवेचनं षोडशसंग्रहनाम्ना प्रसिद्धम् ।

एतेषां चतुर्णामपि अध्यायानामेकैकस्य तत्तदध्यायस्य नामसंगत्यर्थं तु—

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इत्यत्र प्रतिपादितानां षण्णां हेतूनां मध्ये प्रधानत्वेन आद्यस्यैव उपक्रमोपसंहाररूपस्य आश्रयणं कर्त्तुं योग्यम् । अतः आदिमस्य समन्वयाध्यायस्येत्थमध्यायसंगतिः—अस्य अध्यायस्य 'समन्वयाध्यायः' इति नाम । तस्य च आदिमं सूत्रम् 'अथातो ब्रह्मजिज्ञासा' इति प्रथमत्वाद् अयमेव उपक्रमः । अस्य अध्यायस्य अन्तिमं सूत्रम् 'एतेन सर्वे व्याख्याताः व्याख्याताः' अयमेव च उपसंहारः । प्रथमाध्यायस्यावशिष्टानि सूत्राणि एतत्सूत्रद्वयान्तःपातीनीति तैः सर्वैः एतत्सूत्रद्वयानुकूलार्थैर्भवितव्यम् । तत्र 'अथातो ब्रह्मजिज्ञासा' इति सूत्रेण वेदान्तवाक्यानि अवलम्ब्य ब्रह्मविचारो विधेयः इत्युक्त्वा परवर्तिसूत्रसमूहैः तमेव विचारं परिसमाप्य उपसंहाररूपेण 'एतेन सर्वे व्याख्याताः व्याख्याताः' इत्युक्तम् । एतेषु सूत्रेषु संशयाद्यपनयनरूपमेव व्याख्यानम् । अतः अधिकारिणाम् ब्रह्मविषयकसंशयादिनिरसनमेव अस्याध्यायस्य सर्वैः सूत्रैः कृतम् । येषां वाक्यानां ब्रह्मपरत्वं संदिह्यते तेषां ब्रह्मपरत्वस्थापनेनैव तत्संशयनिराश इत्येतादृशसंशयनिरासो ब्रह्मविषयकवेदान्तवाक्यानां किंचिदनुगतार्थप्रदर्शनपरः । एतदेव चानुगतार्थप्रदर्शनं समन्वयापरनामकम् इत्यौपनिषदवाक्यानां (वेदान्तानाम्) सम्यक्तात्पर्यवत्त्वेन ब्रह्मणि अन्वयात् (सम्बन्धात्) अस्य अध्यायस्य समन्वय इति नाम चरितार्थम् । अयमेव च अर्थः ब्रह्मसूत्रप्रथमाध्यायीयाद्यन्तसूत्रद्वयेनोपलभ्यते । तेन आद्यन्तसूत्रयोः उपक्रमोपसंहाराख्यलिंगेन आदिमाध्यायस्य समन्वयाध्यायो नाम संगच्छते ।

द्वितीयश्च अध्यायः सर्वैः भाष्यकारैः अविरोधाध्यायनाम्ना आख्यातः । प्रथमाध्यायवद् इहापि उपक्रमोपसंहाराख्येन तात्पर्यनिर्णायकलिंगेन अस्य अध्यायस्य संगतिः । तथाहि—द्वितीयाध्यायस्य आदिमं सूत्रं 'स्मृत्यनवकाशदोषप्रसंगात्—' इत्यादि । अन्तिमं च 'वैशेष्यात्तु तद्वादस्तद्वादः' अत्र प्रथमसूत्रेण अविरोधप्रदर्शनमेव उपक्रान्तं भवति तथैव चैतदध्यायस्य अन्तिमसूत्रेण स एव अविरोधः पुनरुपदिष्टः, तत्र प्रथमे पादे समन्वयस्य सांख्यादिस्मृतियुक्तिभिः विरोधपरिहारः, द्वितीये पादे सांख्यागमानां भ्रान्तिमूलत्वम् अविरोधाय कथितम् । तृतीये च प्रतिवेदान्तं सृष्टिश्रुतीनां

जीवात्मश्रुतीनां च व्योमादिमहाभूतानां जन्मलयक्रमादिकथनेन अविरोधः प्रतिपादितः। चतुर्थे च लिंगशरीरश्रुतीनामविरोधः। एवं स्मृतिन्याय-मतान्तरश्रुतिभिः वेदान्ततात्पर्यस्य ब्रह्मणि अविरोधसाधनेन अस्य अध्यायस्य अविरोधाध्यायनामसंगतिः।

तृतीयाध्यायः सर्वैर्भाष्यकारैः साधनाध्यायनाम्ना निर्दिष्टः। स च कथं पूर्वोक्तोपक्रमोपसंहाराख्येन लिंगेन एतदन्तर्गताभ्याम् आद्यन्तसूत्राभ्यां याथार्थ्यमवलम्बते इत्येतदिह विवेच्यम्। तृतीयाध्यायस्य आदिमं सूत्रं 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्'—अन्तिमञ्च, 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः' इति।

तत्र जीवो देहान्तरप्राप्तौ सूक्ष्मदेहेन सह गच्छति एतत् छान्दोग्यो-पनिषदि ( ५।३।१ ) इत्यतः ( ५।६।२ ) पर्यन्तं निरूपितं वर्तते। अन्तिम-सूत्रेण च एतदुच्यते यत् मुक्तिफलाय कश्चिदपि नियमो न वर्तते—ब्रह्म-ज्ञानोपलभ्यमानमुक्तिरूपं फलम् अस्मिन्नेव जन्मनि जन्मान्तरे वा अस्मिन्नेव लोके लोकान्तरे वा उपलभ्यते इत्येतत् न नियमः। यदा एव अस्य हृदयस्य कामनानां सर्वथा अभावस्तदा एव तस्य साधकस्य अमृतत्वम् इतीहैव तस्य ब्रह्मावाप्तिः तथाहि—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म[1] समश्नुते॥

इत्यादि वचनैः श्रुतौ मुक्तस्य स्वरूपनिश्चितिरिति यः इमां स्थितिम् अस्मिन्नेव शरीरे प्राप्नोति स इहैव ब्रह्म अवाप्नोति यश्च तथा अवस्थां न प्राप्नोति स लोकान्तरे ब्रह्म अवाप्नोति। इत्थं च नूनमेव एतत्सूत्रद्वयेन अत्र साधनमेवालोच्यते एतत्स्पष्टतया न प्रतिभासते यतो हि प्रथमसूत्रेण जीवात्मनः परलोकगमनवर्णनेन अन्तिमसूत्रेण च मुक्तिविषयकवर्णनेन अस्य अध्यायस्य फलाध्यायनामैव समुचितमासीत् किन्तु तन्न विचार-सहम् यतो हि आरम्भसूत्रे परलोकगमनकथावतरणेन भोग्यभोगसाधनयो र्जगज्जीवनयोः अनित्यत्वे उक्ते तयोरनित्यत्वचिन्तनेन मनसि वैराग्ये संजाते नित्यब्रह्मज्ञानावाप्तिप्रवृत्तिः उपतिष्ठते। इत्थं च एतद् द्वयम् ( जगत् जीवनं च ) एव एतद्ग्रन्थप्रतिपाद्यब्रह्मज्ञानसाधनाय इह मुख्य-त्वेन परिगृह्यते। नित्यानित्यवस्तुविवेकवैराग्याभ्यां विना कस्यापि ब्रह्म-

---

१. कठोपनिषत् २।३।१४ तथा बृ० उ० ४।४।७

ज्ञानाधिकारः न सम्भवतीति मानसिकमलापनोदाय एतयोः अतिशयेन उपयोगिता वर्तते। इत्थं चैतत्सूत्रेण ब्रह्मज्ञानसाधनमेवोपदिष्टमिति निश्चीयते। एवमेवान्तिमसूत्रे अनियम इति शब्देन मुक्तिफलस्य साधन-निरपेक्षत्वे उक्ते अभावबुद्धिं प्रति प्रतियोगिज्ञानस्य सप्रयोजनतया नियम-शब्देन तद्वाच्यसाधनमेव तत्र लक्षितम्। इत्थञ्च उपक्रमोपसंहारस्थानीयपूर्वोक्तद्वयस्यार्थावलम्बनेन एतदध्यायस्य साधनाध्याय इति समुचितं नाम प्रतीयते।

चतुर्थोऽध्यायश्च फलाध्यायनाम्ना प्रसिद्धः। कियदेतस्यैतदभिधानं समुचितमिति जिज्ञासायां पूर्ववदेव उपक्रमोपसंहाराख्यलिंगमाश्रीयते तच्चेत्थम्—'आवृत्तिरसकृदुपदेशात्' एतत् अस्य अध्यायस्य आदिमं सूत्रम्, प्राथम्यात् अस्यैव उपक्रमत्वम्। 'अनावृत्तिः शब्दात्' एतच्चान्तिमं सूत्रम्। अन्तिमत्वात् अस्यैव उपसंहारत्वम्। यतो हि प्रथमसूत्रेण ब्रह्मज्ञानफललाभाय श्रवणादीनामसकृदावृत्तिः करणीया अन्तिमसूत्रेण च संसारे ब्रह्मविदां पुनरावृत्तिर्न भवति एतन्निर्दिश्यते इत्थमेतत्सूत्र-द्वयार्थे समाह्रियमाणे साधनस्य फलवर्णनमेवावगम्यते एतत्सर्वभाष्यकार-सम्मतम्।

एवं च एतदध्यायान्तर्गतसर्वसूत्राणां फलपरत्वेनैव व्याख्यायाः समुचितत्वात् श्रौतब्रह्मज्ञानफलवर्णनाय विरचितस्य अस्य अध्यायस्य फलाध्यायनाम्नाप्रसिद्धिर्यथार्था।

इत्थं प्रथमाध्यायस्य समन्वयसंगतिः, द्वितीयस्य च अविरोधसंगतिः, तृतीयस्य साधनसंगतिः, चतुर्थाध्यायस्य च फलसंगतिरित्येतत् युक्ति-सिद्धं सूत्राक्षरार्थलभ्यं चेति सर्वमनवद्यम्।

एवं चतुर्भिरध्यायैः षोडशपादैश्च युक्तमेतद्वेदान्तदर्शनं षोडशकला-त्मकब्रह्मस्वरूपम्। अतएव अस्मिन् षोडशपादाः, 'पादोऽस्यविश्वा-भूतानि' त्रिपादस्यामृतं दिवि इति श्रुत्या चतुर्भागात्मकब्रह्मणः एकभागे च सृष्टिः भागत्रयं च शुद्धम् इत्येतत्सिद्धान्तद्योतनाय एवात्र चतुरध्यायाः। हरिदीक्षितेन ब्रह्मसूत्रवृत्तिप्रारम्भे एतत्सर्वमित्थं संक्षिप्तम्—

> शास्त्रं ब्रह्मविचाराख्यमध्यायाश्च चतुर्विधाः।
> समन्वयाविरोधौ द्वौ साधनं च फलं तथा॥

———

# प्रत्यध्यायं प्रतिपाद्यं विषयपरिचयः तत्समीक्षणं च

## प्रथमाध्यायस्य प्रथमः पादः

( १ ) अस्मिन् पादे शंकरमते स्पष्टतया ब्रह्मबोधकश्रुतिवाक्यानां समन्वयः।

( २ ) रामानुजमते च अस्पष्टतरजीवादिलिंगकवाक्यविचारः।

( ३ ) निम्बार्कमते च जिज्ञास्ये श्रीवासुदेवे श्रुतीनां समन्वयः।

( ४ ) मध्वमते च नामात्मकानामन्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयः।

( ५ ) वल्लभमते च शब्दसंदिग्धश्रुतीनां ब्रह्मणि समन्वयः।

सविश्लेषण—प्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

(१।१।१) अस्य सूत्रस्य 'अथातः' एतदंशेन जिज्ञासुशिष्यस्य योग्यता तथा 'ब्रह्मजिज्ञासा' एतदंशेन अस्य ग्रंथस्य विषयः—ब्रह्मविद्या अवधार्यते। अस्य सूत्रस्य 'अथ' शब्दस्य अर्थः रामानुजनिम्बार्कानुसारं कर्म-तत्फल-ज्ञानानन्तरं ब्रह्मणो जिज्ञासा वर्तते। तथा हि—

( अ ) अत्रायमथशब्दः आनन्तर्ये भवति। अधीतसांगसशिरस्क-वेदस्याल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिर-फलब्रह्मजिज्ञासा ह्यनन्तरभाविनी'[1]।

( आ ) अथाधीतषडंगवेदेन कर्मफलक्षयाक्षयत्वविषयकविवेक······तन्निश्चितकर्म-तत्प्रकार-तत्फलविषयकव्यवसायजातनिर्वेदेन[2]···'इत्यादि। षडंगवेदाध्ययनं विना ब्रह्मसूत्राध्ययनस्य अधिकारो न भवति। यतो हि श्रुतिवाक्यानि लक्ष्यीकृत्य एव अस्य ग्रन्थस्य अधिकांशसूत्राणां रचना संजातेति तासां श्रुतीनां पठनं विना अयं ग्रन्थः न बोधगम्यो भवितुं शक्नोति। स्थाने स्थाने जैमिनिसूत्राणामपि निर्देशः इति तेषां तथ्यानां सम्यग् अवगत्यर्थं पूर्वं जैमिनिकृतमीमांसाध्ययनमप्यावश्यकम्। यतो हि सा धर्ममीमांसा इयं च ब्रह्ममीमांसा। यावत् वेदोक्तधर्माचरणस्य तत्फलान्तवत्ताविषयस्य च सम्यक्परिज्ञानं न भवति तावत् अनादिकालाचरितकर्मसंस्कारा न नश्यन्ति इति ब्रह्मजिज्ञासायाः उदयः अपि न संजायते। अतः वेदाध्ययनानन्तरं पूर्वं धर्ममीमांसा अध्येतव्या येन कर्म तत्फलं च सम्यगवगतं भवेत्। तदनन्तरं विचारद्वारा तत्फलस्य अन्तवत्ताविषये निश्चितं ज्ञानमुत्पद्यते। एवं कर्मफलानित्यत्वस्य ज्ञानोदये कर्मसु अनास्था उत्पद्यते येन प्रकृत्या श्रुत्युक्तकर्मातीतब्रह्मणो जिज्ञासा संजायते।

---

1. ब्र०सू० १।१।१ श्रीभाष्यम् पृ० १ 2. ब्र०सू० १।१।१ निम्बार्कभाष्यम् पृ० ७

शंकरेणापि स्वभाष्ये 'अथ' शब्दस्य 'अनन्तरम्' 'अयमेवार्थः कृतः। किन्तु तेनैतत्कथितं यत् वेदाध्ययनानन्तरं धर्मजिज्ञासायाः अभावे अपि केषांचित् मनसि उपनिषत्पाठेनैव ब्रह्मजिज्ञासा उदेतुं शक्नोति। धर्मजिज्ञासाया ब्रह्मजिज्ञासायाश्च न अङ्गाङ्गिभावः, धर्म-ब्रह्मज्ञानयोः कश्चित् साध्यसाधकभावः अपि न वर्तते। अतः धर्मज्ञानानन्तरं ब्रह्म-जिज्ञासा भवति सा वा कर्तव्येत्यर्थो नोचितः अपि तु (१) नित्या-नित्यवस्तुविवेकः (२) ऐहिकामुष्मिकफलभोगविरागः (३) शमः—बहिरिन्द्रियसंयमः (४) दमः—अन्तरिन्द्रियनिग्रहः (५) तितिक्षाशीतो-ष्णक्षुत्तृडित्यादिद्वन्द्वसहिष्णुता (६) उपरतिः—विषयानुभवेभ्यः इन्द्रिय-विरतिः (७) समाधानम्—आत्मतत्वध्यानम् (८) श्रद्धा—गुरुवेद-वाक्येषु आस्था (९) मुमुक्षुत्वम्—मोक्षं प्रति प्रबलेच्छा चैतत्समस्तं यदा अधिकारिणि प्रतिष्ठितं संजायते तदनन्तरमेव स ब्रह्मज्ञानस्य पात्रं भवति। अत एव शंकरमतेन अथ शब्दस्यार्थः शांकरभाष्ये एवं प्रतिपादितो वर्तते—'नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं च·········तस्मादथशब्देन यथोक्त-साधनसम्पत्त्यानन्तर्यमुपदिश्यते'' इत्यादि।

एवं पूर्वोक्तैः त्रिभिरप्याचार्यैः 'अथ' शब्दस्य आनन्तर्यरूप एवार्थः गृहीतः। तत्र शंकरमते एतद्वक्तव्यमस्ति यद् वेदोपनिषत्पाठानन्तरं यस्य कस्यचिद् हृदि ब्रह्मजिज्ञासा उत्पत्तुं शक्नोति। पूर्वजन्मसंस्कारबलात् केषांचित् हृदये शैशवावस्थायां वेदाद्यध्ययनं विनापि ब्रह्मजिज्ञासा उत्पद्यमाना समुपलभ्यते। अतः ब्रह्मजिज्ञासाविषये कर्मणः कर्मज्ञानस्य च नितरां सम्बन्धाभावः स्वीकर्तुं न शक्यते। ब्रह्मदर्शनसम्बन्धे नूनं कर्मणः साक्षात् फलजनकता न वर्तते किन्तु ब्रह्मजिज्ञासोत्पादने कर्मणः कर्मफलविज्ञानस्य च सुतराम् उपयोगिता अस्त्येव। ब्रह्मजिज्ञासोत्पा-दनमेव च कर्मानुष्ठानस्य श्रेष्ठं फलम्। श्रुत्या अप्येतदनुमोदितम्—

'तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा'[2]····। किंच, यस्य हृदये नित्यानित्यविवेकोत्पत्तिः संजाता तेनां-शिकरूपेण ब्रह्मतत्त्वमुपलब्धमेव। यतो हि 'आत्मा एव नित्यः समस्तं च जगदनित्यम्' एतद्येन विज्ञातं स एवनित्यानित्यविवेकी। यश्च एवं-भूतेन नित्यानित्यविवेकेन सम्पन्नः नित्ये आत्मनि चित्तसमाधान-रूपसाधनविशिष्टश्च तस्य हृदये तदतिरिक्तायाः कस्याश्चिदपि जिज्ञासायाः उत्पत्तिः सर्वथा असम्भवा। यदा हि स आत्मैव एकमात्रं नित्यं

१. ब्र॰ सू॰ १।१।१ शा॰ भा॰ पृ॰ ७५     २. बृ॰ उ॰ ४।४।४

वस्तु इति परिज्ञातवान्, तथाभूतात्मसाक्षात्कारार्थं समाधानरूपेण साधनेन सम्पन्नश्च अभूत् तदा तद्रिक्तः कश्चिदन्यो जिज्ञासाविषय एव न अवशिनष्टि अतः आत्मानात्मविवेकशमदमादिसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा जायते एवं सूत्रार्थः न संगच्छते। एतदतिरिच्य, बौधायनमुनिकृता ब्रह्मसूत्रवृत्तिः शंकरात्प्राचीना[1] अतः आचार्यपरम्परया यादृशी ब्रह्मसूत्रव्याख्या प्रचलिता आसीत् तदनुसारमेवेयं वृत्तिरपि लिखिता स्यात् इति तदनुकूलमेव सूत्राणां व्याख्या अधिकं संगता प्रतिभाति।

वल्लभाचार्येण 'अथ योगानुशासनम्'[2] इतिवत् अथशब्दस्य आरम्भवाचकत्वं स्वीकृत्य एतत्प्रदर्शितं यद् अन्याचार्योक्तसाधनसामग्रीं विनापि ब्रह्मजिज्ञासा सम्भवति किन्तु शंकरेण अथशब्दस्य आरम्भवाचकत्वे 'नाधिकारार्थः'[3] इत्युक्त्वा विरोधः प्रदर्शितः। शंकरस्य एतत्तात्पर्यं यत् 'अथातो ब्रह्मजिज्ञासा' इत्यत्र जिज्ञासा शब्दस्य अर्थः यदि ज्ञानस्य इच्छा इति मन्येत तदा अथ शब्दस्य आरम्भवाचकत्वे 'ब्रह्मज्ञानस्य इच्छा प्रारभ्यते' इति सूत्रार्थः सम्पद्येत स च असंगतः। इच्छा हि न प्रारभ्यते प्रत्युत इच्छया विचारः क्रियते। यदि च इत्थं स्वीक्रियेत यत् जिज्ञासा शब्दः लक्षणया विचारार्थकः तदा कर्तव्यपदाध्याहारस्य आवश्यकता समुत्पद्यते—अन्यथा तदभावे अर्थसिद्धिर्न स्यात्। कृते चाध्याहारे 'ब्रह्मविचारः कर्तव्यः' इति सूत्रार्थो भवेत्। अस्य च अयमर्थः यत् ब्रह्मविचारस्य प्रारम्भः कर्तव्य इति। एवं कर्तव्यपदेनैव अथशब्दार्थानुगतौ अथशब्दो व्यर्थः स्यात्। अतः अथशब्दस्य आनन्तर्यरूप एवार्थः समुचितः।

मध्वाचार्येण तु 'अथशब्दो मंगलार्थः अधिकारानन्तर्यार्थश्च'[4] इत्युक्त्वा अथशब्दस्य विभिन्नार्थानामेव निर्देशः कृतः न तु पूर्वोक्तसूत्रे कस्यचिदपि विशेषार्थस्य द्योतकता प्रकटिता। आम्, तत्रत्यया गारुडोक्त्या अथातः शब्दयोः वीर्यातिशयाधायकत्वेन सूत्राणां तत्पूर्वकोच्चारणपरम्परा अवश्यं प्रदर्शिता।

कर्मणां कर्मफलानां च सीमितत्वाद् अनित्यत्वाच्च 'ब्रह्मज्ञानेनैव

---

१. भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः' (श्री भाष्यम् पृ० १)

२. पा० यो० सू० पृ० १ ३. ब्र० सू० १।१।१ शां० भा० पृ० ६२

४. ब्र० सू० १।१।१ म० भा० पृ० २

नित्यानन्दप्राप्तिः सम्भवतीति ब्रह्मजिज्ञासाया आवश्यकता' एष 'अतः' शब्दस्य अर्थः। अत्र च पंचानामप्याचार्याणाम् ऐकमत्यम्।

( १।१।२ ) अस्य सूत्रस्य विषये पंचानामप्याचार्याणाम् इत्थम् ऐकमत्यं यत् इह अनन्ताङ्गविशिष्टस्य, अनन्तनामरूपप्रकाशितस्य, अचिन्त्यवैचित्र्यस्य, विश्वस्य सृष्टिस्थितिप्रलयकर्तृणश्च जिज्ञास्यब्रह्मणः तथाभूतं लक्षणं प्रतिपादितं वर्तते।

वल्लभाचार्येण तु 'सत्यं ज्ञानमनन्तं ब्रह्म' इति स्वरूपलक्षणाकथने कार्यलक्षणस्य वक्तुमशक्यत्वात्, ब्रह्मणः जगत्कर्तृत्वस्य सर्वसम्मतत्वाभावेन विवादाध्यसितत्वाच्च 'अथवा किमनया कुसृष्ट्या 'जन्म आद्यस्य आकाशस्य यतः' इति 'तस्माद्वा एतस्माद् आत्मनः आकाशः सम्भूत इत्येव विचार्यते''[1] इत्यर्थे स्वारस्यं प्रदर्शितम्।

( १।१।३ ) सर्वेषां भाष्यकाराणां मतेन अस्य सूत्रस्य अयमर्थः यत् उपर्युक्तलक्षणसम्पन्नस्य ब्रह्मणः सम्बन्धे तस्य जगत्कारणत्वे च शास्त्रमेव एकमात्रं प्रमाणम्। शंकरेण तत्पुरुषबहुव्रीहिभ्यामेतत्सूत्रमित्थं द्विधा व्याख्यातम् (१) ( महतः शास्त्रस्य योनिः कारणम्, (२) ब्रह्मणः यथावत्स्वरूपाधिगमे शास्त्रं योनिः कारणं प्रमाणम् यस्य ( शास्त्रादेव प्रमाणात् जगतो जन्मादि कारणं ब्रह्म अधिगम्यते इत्यभिप्रायः ) किन्तु अत्र बहुव्रीहिरेव समुचितः। तत्पुरुषस्वीकारे तु एतत्सूत्रमपि 'जन्माद्यस्य यतः' इत्यनेनैव गतार्थं भवेत्। वल्लभमते द्वितीयं तृतीयं चोभयमेकमेव सूत्रम्।

( १।१।४ ) समस्तश्रुतिवाक्यानां प्रतिपाद्यो विषयः ब्रह्म एव। एकस्मिन्नेव ब्रह्मणि समस्तश्रुतीनां समन्वयः इत्युक्तलक्षणसम्पन्नं ब्रह्म एव एकमात्रशास्त्रप्रमाणगम्यम्, 'सर्वे वेदा यत्पदमामनन्ति'[2] इति श्रुतिरपि एतदेव प्रतिपादयति।

वल्लभाचार्येण अस्य सूत्रस्य अयमर्थः कृतो यत् तत् ब्रह्म एव जगतः समवायिकारणम्। यतो हि तत् अस्ति-भाति-प्रियरूपेण सत्-चित्-आनन्दरूपेण च सर्वत्र व्याप्तं वर्तते—

'तद् ब्रह्मैव समवायिकारणम्। कुतः ? समन्वयात्, सम्यगनुवृत्तत्वात्। अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेणान्वयात्। नामरूपयोः कार्यरूपत्वात्'[3]।

---

१. ब्र० सू० १।१।२ अणु० भा० पृ० १३ ( कलकत्ता सं० )

२. कठ० उ० १।२  ३. अ० भा० चौ० सं० पृ० ८३

किन्तु अयमर्थः समीचीनो न प्रतीयते यतो हि एतस्मात् पूर्वस्मिन् सूत्रे ब्रह्मणः शास्त्रयोनित्वं निर्दिष्टं वर्तते अग्रिमेषु च सूत्रेषु शास्त्रस्य ब्रह्मणि समन्वयः प्रदर्शितः। अतः तच्छब्दस्य 'तत् समवायिकारणं ब्रह्म' अयम् अर्थः असंगतः।

( १।१।५-११ ) एषु सूत्रेषु एतद् विवेचितं वर्तते यत् सांख्याभिमत-जडप्रधानं जगतः कारणं न भवितुं शक्नोति। यतो हि श्रुतिषु तथा न प्रतिपादितं वर्तते। किंच, ईक्षणम् इच्छाकरणं वा चेतनगुणः। एतद्-गुणविशिष्टमेव च जगतः कारणमुक्तम्। शंकर-रामानुज-निम्बार्कानु-सारेण च एतेषां सूत्राणामयमेव सारांशः। यतो हि त्रिभिरपि—'सदेव सोम्येदमग्र आसीत्', 'तदैक्षत बहु स्यां प्रजायेय';[1] तथा, स ऐक्षत लोकान्नु सृजै,[2] आसां श्रुतीनां निर्देशः कृतः, तथापि च एतदवश्यमे-वावधारणीयं वर्तते यत् तैः सर्वैः स्वस्वसम्प्रदायानुसारमेव निजसिद्धान्त-दृष्ट्या सूत्राणि व्याख्यातानि। उदाहरणार्थम् एतदधिकरणान्ते 'श्रुत-त्वाच्च' इत्यस्मिन् सूत्रे रामानुजेन प्रतिपादितम्—'अत एव निर्विशेष-चिन्मात्रब्रह्मवादः अपि सूत्रकारेण आभिः श्रुतिभिः निरस्तो वेदितव्यः। पारमार्थिकमुख्येक्षणादिगुणयोगिजिज्ञास्यं ब्रह्मेति स्थापनात्, निर्विशेष-वादे हि साक्षित्वमप्यपारमार्थिकम्। वेदान्तवेद्यं ब्रह्मजिज्ञास्यतया प्रतिज्ञातम्। तच्च चेतनमिति ईक्षतेर्नाशब्दमित्यादिभिः सूत्रैः प्रति-पाद्यते। चेतनत्वं नाम चैतन्यगुणयोगः। अतः ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव'[3]।

मध्वाचार्येण अपि अस्य अधिकरणस्य ( एषां सूत्राणाम् ) प्रायः अयमेवार्थः कृतः यत् 'अशब्दमस्पर्शमरूपमव्ययम्'; 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यादिषु श्रुतिषु यद् ब्रह्मणः अदृश्यत्वादिकं प्रतिपादितं तस्यायमेवाभिप्रायः यत् तत् ब्रह्म अप्रसिद्धत्वात् 'ईदृक् तत्' एवं न वाच्यम् नापि च ज्ञेयम्। यथा चोक्तं गारुडे—

> न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते।
> पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः॥
> अप्रसिद्धेरवाच्यं तद् वाच्यं सर्वागमोक्तितः।
> अतर्क्यातर्क्यमज्ञेयं ज्ञेयमेवपरं स्मृतम्[4]॥

---

१. छा० उ० ६।२।१-३ २. ऐ० उ० १।१।१

३. ब्र० सू० १।१।११ श्रीभाष्यम् पृ० १२४

४. ब्र० सू० १।१।५ म० भा० पृ० ८

वल्लभाचार्यैः, अपि प्रायः एतत्तुल्यार्थ एव। तस्यैतत्कथनं यत् ब्रह्म व्यवहारातीतम् इति वक्तुं न शक्यते–'ब्रह्मणो न व्यवहारातीतत्वम्[1]', यतो हि श्रुतिः प्रतिपादयति, 'तदैक्षत बहु स्याम् प्रजायेय[2]'। एतस्य तात्पर्यमेवैतद् यत् तत् आत्मानं व्यवहार्य्यम् अकरोत्।

एतावत्पर्यन्तं सामान्यरूपेण एतन्निरूपितं यद् वेदान्तशास्त्रस्य जिज्ञास्यं चेतनं ब्रह्म एव अस्य जगतः सृष्टि-स्थिति-लयकारणम्। जीवानां तदधिष्ठातृ, तस्य च न अन्यत् किमपि उत्पादकम् नापि च किमपि तस्य अधिष्ठातृ। निम्नाङ्कितश्रुतिः इममेव सर्वज्ञमीश्वरं निर्दिशति-

स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः[3]।

'तस्मात् सर्वज्ञं ब्रह्म जगतः कारणं न चाचेतनं प्रधानमन्यद्वेति सिद्धम्[4]'।

( १।१।१२–१९ ) 'जन्माद्यस्य यतः' इति सूत्रमारभ्य 'श्रुतत्वाच्च' इति सूत्रं यावत् वेदान्तशास्त्रप्रतिपाद्य-सर्वज्ञसर्वशक्तिमद्ब्रह्मणो जगतः सृष्टि-स्थिति-लयहेतुत्वं प्रदर्श्य अतः परं ग्रन्थारम्भस्य किमुद्देश्यम् इति शंकायां शंकरस्य एतन्मतं यद् वेदान्तवाक्येषु सगुणनिर्गुणबोधक-वाक्यानि बहूनि सन्ति। तेषु कस्य वाक्यस्य सगुणोपासनविधानद्वारा निर्गुणे समन्वयः कस्य च गुणविवक्षां विनैव साक्षाद् ब्रह्मणि समन्वयः। एवं सगुणनिर्गुणोभयब्रह्मप्रतिपादकवाक्यानाम् अर्थं संक्षेपेण बोधयन् एतस्य अधिकरणस्यारम्भः[5]।

वल्लभेन अस्य अधिकरणस्य अष्टसूत्रात्मकत्वे अयं हेतुः उक्तः यत् 'षडिन्द्रियस्वरूपानन्दभेदेनानन्दस्य अष्टविधत्वात् 'अष्ट सूत्राणि'[6]। रामानुजेन च एतदधिकरणीयानि इमानि सूत्राणि पूर्वाधिकरणतः सम्बद्धानि[7]।

शंकरः इदम् अधिकरणम् उपक्रममाणः इत्थं संशयमुत्पादितवान्-यत् तैत्तिरीयोपनिषदि अन्नमयम्, प्राणमयम्, मनोमयम्, विज्ञानमयं

---

१. ब्र० सू० १।१।८ अ० भा० पृ० १४४

२. छा० उ० ६।२।३　　३. श्वे० उ० ६।९

४. ब्र० सू० १।१।११ शां० भा० पृ० २६९

५. एवमेकमपि ब्रह्म अपेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते ब्र० सू० १।१।११ शां० भा० पृ० २७८

६. अ० भा० पृ० १६४　　७. श्री भा० पृ० १२५

चानुक्रम्य 'तस्माद्वा एतस्माद् विज्ञानमयात् अन्योऽन्तर आत्मा आनन्दमयः'[1] अत्र आनन्दमयशब्देन किम् 'सत्यं ज्ञानमनन्तं[2] ब्रह्म' एतच्छ्रुतिप्रतिपादितं प्रकृतम् आनन्दमयं ब्रह्म विवक्षितम् अथवा अन्नमयादिवत् ब्रह्मणः अर्थान्तरम् अमुख्यः संसारी जीवो विवक्षितः ? इह सर्वेषां भाष्यकाराणामैकमत्येन एतत्कथनं यद् अत्र आनन्दमयशब्देन ब्रह्मण एव निर्देशो न जीवस्य। तथाहि शंकराचार्यः—

'पर एव आत्मा आनन्दमयो भवितुमर्हति। कुतः ? अभ्यासात्' परस्मिन्नेव हि आत्मनि आनन्दशब्दो बहुकृत्वः अभ्यस्यते। आनन्दमयं प्रस्तुत्य 'रसो वैः सः' इति तस्यैव रसत्वमुक्त्वा उच्यते-'रसं ह्येवायं लब्ध्वा आनन्दी भवति इति। को वा ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। एष ह्येव 'आनन्दयति'। श्रुत्यन्तरे च 'विज्ञानमानन्दं 'ब्रह्म' इति ब्रह्मण्येव आनन्दशब्दो दृष्टः। एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासात् (दर्शनात्) आनन्दमय आत्मा ब्रह्मेति गम्यते'[5]।

एवं रामानुजः—आनन्दमयः परमात्मा। कुतः ? अभ्यासात्' सैषा आनन्दस्य मीमांसा भवति इत्यारभ्य 'यतो वाचो निवर्तन्ते' इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कः अभ्यस्यमानः आनन्दः अनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मनि असम्भवन् निखिलहेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति'[6]।

तथैव च निम्बार्कः—आनन्दमयः परमात्मैव न तु जीवः। कुतः ? परमात्मविषयकानन्दपदाभ्यासात्[7]।

मध्वाचार्यः—आनन्दमयो ब्रह्मादिप्रकृतिर्विष्णुर्वा 'तदेव ब्रह्म परमं कवीनाम्' एवमेव ब्रह्म इत्याचक्षते—

ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते।
असम्पूर्णाः परे यस्मात् उपचारेण वा भवेत्॥

---

१. तै० उ० २।५ २. तत्रैव २।१
३. तै० उ० २।७ ४. बृ० ३।९।२८
५. ब्र० सू० १।१।१२ शां० भा० पृ० २८१
६. ब्र० सू० १।१।१३ श्री० भा० पृ० १२७
७. ब्र० सू० १।१।१२ नि० भा० पृ० १०९

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।
वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ॥

इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात्'[1] ।

तथा च वल्लभः—आनन्दमयः परमात्मा । नान्नमयादिवत् पदार्थान्तरम्........'तस्मादानन्दमयं ब्रह्मैव'[2] ।

यद्यपि शंकरेण एतस्य अधिकरणस्य अन्ते 'यद्यप्यन्नमयादिभ्य इव आनन्दमयादन्यः अन्तर आत्मेति न श्रूयते तथापि नानन्दमयस्य ब्रह्मत्वम् । यत आनन्दमयं प्रकृत्य [3]श्रूयते—तस्य प्रियमेवशिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा[4], इत्यादिना 'तत्र यद् ब्रह्म मंत्रवर्णे प्रकृतम् सत्यं ज्ञानमनन्तं ब्रह्म इति तदिह 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यादि निर्दिश्य एष स्वकीयः सिद्धान्तः स्थापितः यत् आनन्दमयशब्दो न निर्विशेषब्रह्मबोधकः अपितु सविशेषब्रह्मबोधकः । निर्विशेषं हि ब्रह्म न आनन्दमयम् अपि तु आनन्दस्वरूपम् तस्यैव च श्रुतिषु अभ्यासः'[5] । किंच 'ब्रह्म पुच्छं प्रतिष्ठा' एतदुक्त्वा तदग्रे 'तदप्येष श्लोको भवति असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः[6] इति । अस्मिंश्च श्लोके अननुकृष्य

१. ब्र० सू० १।१।१२ म० भा० पृ० ११

२. ब्र० सू० १।१।१२ अ० भा० पृ० १६६–६८

३. ब्र० सू० १।१।१९ शां० भा० पृ० १९९ ४. तै० उ० २।५

५. नचानन्दमयस्याभ्यासः श्रूयते, प्रातिपदिकार्थमात्रमेव हि सर्वत्र अभ्यस्यते, रसो वै सः रसं ह्येवायं लब्ध्वा आनन्दी भवति को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति, सैषा आनन्दस्य मीमांसा भवति । आनन्दं ब्रह्मणो विद्वान्, आनन्दो ब्रह्मेति व्यजानात् यदि चानन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत् तत उत्तरेष्वानन्दमात्रप्रयोगेषु अप्यानन्दमयाभ्यासः कल्प्यते, नत्वानन्दमयस्य ब्रह्मत्वमस्ति, तस्मात् श्रुत्यन्तरे विज्ञानमानन्दं ब्रह्म ( बृ० ३।९।२८ ) इत्यानन्द प्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात् 'यदेष आकाश आनन्दो न स्यात् इत्यादिर्ब्रह्मविषयः प्रयोगो न त्वानन्दमयाभ्यास इत्यवगन्तव्यम्' ( ब्र० सू० शां० भा० १।१।१९ अच्युतग्रन्थमाला सं० पृ० ३०५–६ )

६. तै० २।६

आनन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद् गम्यते 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वम्[1]।

'अपि च आनन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्म अभ्युपगन्तव्यम् । निर्विशेषं तु ब्रह्मवाक्यशेषे श्रूयते । वाङ्मनसयोरगोचरत्वाभिधानात्[2]—'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन[3]।'

तथापि रामानुजेन शंकरस्य एतदभिमतम् इत्थं खण्डितम्—'ननु च 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यानन्दमयादन्यद् ब्रह्मेति प्रतीयते । नैवम्, ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते········यदि चानन्दमयादन्यद् ब्रह्म अभविष्यत् 'तस्माद्वा एतस्माद् आनन्दमयादन्यः अन्तर आत्मा ब्रह्म इत्यपि निरदेक्ष्यत । न चैवं निर्दिश्यते··········अत आत्मशब्देन प्रक्रान्तं ब्रह्मानन्दमय इति निश्चीयते[4]।'

एतत्प्रकरणस्य 'कामाच्च नानुमानापेक्षा'[5] अस्य सूत्रस्य व्याख्या पंचभिरपि आचार्यैः भिन्नभिन्नरूपेण कृता वर्तते । तथा हि—

शंकरः—आनन्दमयाधिकारे च सः अकामयत बहु स्याम् प्रजायेय इति कामयितृत्वनिर्देशान्नानुमानिकमपि सांख्यपरिकल्पितमचेतनं प्रधानम् आनन्दमयत्वेन कारणत्वेन वा अपेक्षितव्यम्[6]।

वल्लभः—जडा प्रकृति र्नास्तीति कारणत्वेन निराकृतैव । आनन्दमयनिरूपणानन्तरं सः अकामयतेति श्रूयते । स कामश्चेतनधर्मः । अतश्चेतन एवानन्दमय[7] इति ।

इत्थं शंकरवल्लभयोरेतत्तात्पर्यं यद् आनन्दमयाधिकारे 'सः अकामयत' एतत्प्रतिपादितम्, कामश्च चेतनधर्म इति जडप्रकृतिः आनन्दमयो न भवितुं शक्नोति । किन्तु—

रामानुजः—जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा । तथैव हि चतुर्मुखादीनां कारणत्वम् । इह च सः अकामयत बहु स्यां प्रजायेय इत्यचित्संसर्ग-

---

१. ब्र० सू० १।१।१९ शां० भा०

२. तत्रैव ३. तै० २।९

४. ब्र० सू० १।१।१२ श्रीभाष्यम् (कांचीपुर) ग्रन्थमाला संस्करणम् पृ० १२६

५. ब्र० सू० १।१।१८६. तत्रैव शां० भा० १।१।१८ पृ० २९५

७. ब्र० सू० १।१।१८ अ० भा० पृ० ४४ ( कलकत्ता सं० )

रहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टि', 'इदं सर्वमसृजत् यदिदं किं चेत्याम्नायते । अतः अस्य आनन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते । ततश्च जीवादन्य आनन्दमय'[1] इति प्रतिपादयति । निम्बार्कस्य चापि 'प्रत्यगात्मनः कारणत्वस्वीकारे अनुमानस्य प्रधानस्य करणादिरूपस्य अपेक्षा भवेत् । कुलालादेर्घटादिजनने मृदाद्यपेक्षावत् ; अप्राकृतस्यानन्दमयस्य सर्वशक्तेः पुरुषोत्तमस्य तु न, कुतः ? कामात् संकल्पादेव 'सः अकामयत बहु स्याम्' इत्यादिश्रुतेः । अतस्तद्भिन्न आनन्दमयः'[2] इत्यभिप्रायः ।

इत्थं रामानुजनिम्बार्कौ जीवादन्यमानन्दमयं प्रतिपादयतः ।

मध्वाचार्यस्याशयस्त्वेतद्भिन्नः । सः अनुमानशब्देन प्रकृतिं न अपि तु अनुमानमेव गृह्णाति तथा एतत्स्वीकरोति यत् अनुमानं तु यथाकामं कर्त्तु शक्नोति अतोविष्णुस्वरूपसर्वान्तर्यामिकब्रह्मविषये न पृथगनुमानमपेक्षते । 'नैषा तर्केण मतिरापनेया' इति श्रुतेः अपि एतदेव तात्पर्यम्[3] ।

अत्र रामानुजनिम्बार्कयोरर्थः अधिकोपयुक्तः प्रतीयते । यतो हि एतयोर्विचारः ब्रह्मजीवसम्बद्धः । स एव च पूर्वसूत्रेषु कृतो वर्तते । शंकरवल्लभाभ्यां चात्र प्रधानं व्यर्थमेव पुनरुपक्रान्तम् । एतद्विषयकविचारस्तु अतः पूर्वम् ईक्षत्यधिकरणे एव समाप्तः । प्रधानस्य ब्रह्मत्वं च तत्रैव खण्डितम् ।

अस्य पादस्य विषयप्रतिपादकशेषाधिकरणेषु मध्वमतिरिच्य अन्येषां सर्वेषामाचार्याणामैकमत्यम् । मध्वाचार्येण तु अन्तिमाधिकरणयोरन्तिमेषु अष्टसु सूत्रेषु विभिन्नैर्वाक्यैः स्वाभिप्रायः प्रदर्शितः ।

(१।१।२०-२१) अत्र एतद्वर्णितं वर्तते यत् 'अथ य एषः अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः'[4]......अथ य एषः अन्तरक्षिणि पुरुषो दृश्यते'[5] अत्र सूर्यनेत्रयोः अभ्यन्तरे यस्य हिरण्मयपुरुषस्य निर्देशो वर्तते स परमेश्वर एव । तथा च—

शंकरः—'य एषः अन्तरादित्ये य एषः अन्तरक्षिणि इति च श्रूयमाणः पुरुषः स परमेश्वर एव न [6]संसारी' ।

---

१. ब्र० सू० १।१।१८ श्री भाष्यम् पृ० १२७

२. ब्र० सू० १।१।१८ निं० भा० पृ० ११०

३. ब्र० सू० १।१।१८ म० भा० पृ० १४ कलकत्ता सं०

४-५. छा० १।६।६-७ तथा १।७।१५

६. ब्र० सू० १।१।२० शां० भा० पृ० २१८

रामानुजः—'आदित्यमण्डलाद्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव'[1]।

निम्बार्कः—आदित्याक्ष्णोरन्तरस्थो मुमुक्षुध्येयो हि परमात्मैव न तु जीवविशेषः[2]।

मध्वः—अन्तः श्रूयमाणो विष्णुरेव यतो हि 'अन्तः समुद्रे मनसा चरन्तं ब्रह्मान्वविन्दत्' तथा अन्तरादित्येन मनसा चरन्तं देवानां हृदयं ब्रह्मान्वविन्दत्'[3] इत्यादिना तस्यैव निर्देशः।

वल्लभः—'''सूर्यमण्डलस्थः परमात्मैव'[4]।

अत्र 'भेदव्यपदेशाच्चान्यः'[5] एतत्सूत्रम् एतदर्थं विशेषेण अवधारणीयं वर्तते यदिह ब्रह्मजीवयोर्भेदः स्पष्टतया प्रतिपादितो वर्तते।

(१।१।२२) एतत्सूत्रमेतन्निर्दिशति यत् 'अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्' इति छान्दोग्ये वर्णितः आकाशः न भूतविशेषः अपि तु ब्रह्म एव।

(१।१।२३) अत्र एतत्प्रतिपादितं वर्तते यत् 'कतमा सा देवतेति प्राण इति होवाच',[6]......इत्यादि श्रुतौ प्राणपदवाच्यं ब्रह्मैव।

(१।१।२४–२७) इमानि सूत्राणि एतत्प्रतिपादयन्ति यत् 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु[7]......एतस्यां श्रुतौ ज्योतिः शब्दः न साधारणप्रकाशस्य अपि तु ब्रह्मण एव वाचकः।

(१।१।२८–३१) अत्र एतदुक्तं वर्तते यत् 'स होवाच प्राणः अस्मि प्रज्ञात्मा मामायुरमृतमित्युपास्स्व'[8] तथा एतदग्रे 'अथ खलु प्राण एष प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति'[9] तत्पश्चाच्च 'न वाचं विजिज्ञासीत वक्तारं विद्यात्'[10] इत्याद्युक्त्वा अन्ते 'स एष प्राण एव प्रज्ञात्मानन्दः अजरः अमृतः'[11] इति प्रतिपादनेन प्राणशब्दाद् ब्रह्मैवाभिप्रेतम्।

---

१. ब्र० सू० १।१।२१ श्रीभाष्यम् पृ० १३९

२. ब्र० सू० १।१।२०। नि० भा० पृ० १५३

३. ब्र० सू० १।१।२० म० भा० पृ० १४ (कलकत्ता)

४. ब्र० सू० १।१।२० अ० भा० पृ० २३० (चौखम्बा)

५. ब्र० सू० १।१।२१

६. छा० १।९।१

७. तत्रैव १।११।४

८. तत्रैव ३।१३।७

९. कौ० उ० ३।१।२

१०. तत्रैव ३।१।३

११. तत्रैव ३।८

१२. तत्रैव ३।८

अत्र एकत्रिंशत्तमे सूत्रे 'उपासात्रैविध्यात्' इति पंचम्यन्तपदस्य शंकरेण द्विधा व्याख्या कृता—

( १ ) अत्र पूर्वोक्तश्रुतिषु प्राणपदेन प्राण-जीव-ब्रह्मसु कतमस्याभिप्रायः इत्याशङ्क्य एकेन अर्थेन एतत्प्रतिपादितं यत्प्राणशब्देनात्र ब्रह्मणः बोधो न भवितुं शक्नोति। यतो हि अत्र जीवस्य मुख्यप्राणस्य चापि लिंगमुपलभ्यते—'यो वै प्राणः स प्रज्ञा, या वै प्रज्ञा स प्राणः स ह्येतावस्मिन् शरीरे वसतः, सहोत्क्रामतः'[1] 'एषा श्रुतिरेतत्प्रतिपादयति यत् इह प्राणशब्दस्य अर्थः जीवो मुख्यप्राणश्च वर्तते अन्यथा 'स ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः' एतच्छ्रुतिवाक्यं न संगच्छेत। प्राणपदेन ब्रह्मणो बोधे हि कः कस्मात् उत्क्रामेत्। अतः अत्र मुख्यप्राणजीवयोरन्यतरस्य उभयोर्वा प्रतीतिर्न ब्रह्मण इत्युपलभ्यते। किन्त्वग्रे निम्नाङ्कितरूपेणात्रेत्थमरुचिः प्रदर्शिता यत् प्राणशब्देन ब्रह्मण एव बोधः। मुख्यप्राणजीवयोरन्यतरस्य उभयोर्वा बोधे जीवोपासनम् मुख्यप्राणोपासनम्, ब्रह्मोपासनम् चेत्थम् त्रिविधमुपासनं प्रसज्येत। तच्चायुक्तम्। तदनन्तरमस्या विप्रतिपत्तेरित्थं परिहारः कृतः यत् 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादिना यद् जीवलिंगं प्रदर्शितं तेन ब्रह्मज्ञानावबोधे न कापि बाधा जायते। यतो हि 'न हि जीवो नाम अत्यन्तभिन्नो ब्रह्मणः, 'तत्त्वमसि' अहं ब्रह्मास्मि' इत्यादिश्रुतिभ्यः बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सन् जीवः कर्ता भोक्ता चेत्युच्यते'[2]। एवमेव 'स ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामत' एवं प्राणप्रज्ञात्मनोर्भेदप्रदर्शनं प्राणशब्देन ब्रह्मणो बोधे न संगच्छेत इत्यप्ययुक्तम्। यतो हि प्रत्यगात्मनः उपाधिभूतयोः ज्ञानशक्ति—क्रियाशक्त्योः यदाश्रयौ बुद्धिप्राणौ तयोः भिन्नरूपेण निर्देशस्तु समुचितः किन्तु तदुपाधिद्वयोपहितस्य ( विशिष्टस्य ) प्रत्यगात्मनः स्वरूपेणाभेदः। अतः प्राण एव प्रज्ञात्मा इत्येकीकरणमविरुद्धम्।

( २ ) 'उपासात्रैविध्यात्' इत्यस्य द्वितीयेन अर्थेन च इत्थं जीवमुख्यप्राणयोर्ब्रह्मबोधकत्वे अविरोधः प्रदर्शितः त्रिविधमिह ब्रह्मोपासनं विवक्षितम्—प्राणधर्मेण, प्रज्ञाधर्मेण, स्वधर्मेण च; तत्र।

( १ ) आयुरमृतमुपास्स्वायुः प्राणः·····इत्यादिप्राणधर्मः।

( २ ) अथ यथास्यै प्रज्ञायै सर्वाणि भूतानि एकीभवन्ति···इत्यादिप्रज्ञाधर्मः।

---

१. कौ० उ० ३।२

२. ब्र० सू० १।१।३१ शां० भा० पृ० १९१

( ३ ) ताः वा एताः...स एष प्राण एव प्रज्ञात्मा इत्यादिर्ब्रह्म ( स्व ) धर्मः।

तस्माद् ब्रह्मण एव एतदुपाधिद्वयधर्मेण चैकमुपासनं त्रिविधं विवक्षितम्...तस्माद् ब्रह्मवाक्यमेतदिति सिद्धम्[१]।

पूर्वोक्तयोरुभयोरर्थयोः वल्लभेन प्रथममर्थं स्वीकृत्याणुभाष्ये इत्थमुक्तम् 'जीवधर्मा ब्रह्मणि न विरुध्यन्ते। आश्रितत्वात्। जीवस्यापि ब्रह्माधारत्वात् तद्धर्माः अपि भगवदाश्रिता एव......तस्माज्जडजीवरूपत्वात् सर्वात्मकं ब्रह्मैवेतिमहावाक्यार्थः[२] सिद्धः। रामानुजाचार्येण च 'उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम्...अतः अत्र इन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम्[३] एवमुक्त्वा निम्बार्केण च 'न वाचं विजिज्ञासीत वक्तारं विद्यात्[४] इत्यारभ्य......तद्योगात्' इत्यन्तेन शंकरस्य द्वितीयः अर्थः अनुसृतः।

मध्वाचार्येण च एतत्सूत्रविषयकः स्वकीयः भाव इत्थमभिव्यक्तः—

अन्तर्बहिःसर्वगतत्वेन इत्युपासनात्रैविध्याद् इहाश्रितत्वाच्च यत्र तमेव सीमानम्...

केषांचित्सर्वगतत्वेन केषांचिद् हृदये हरिः।  
केषांचिद्बहिरेव स्यात् उपास्यः पुरुषोत्तमः॥  
अग्नौ क्रियावतां विष्णु र्योगिनां हृदये हरिः।  
प्रतिमास्वल्पबुद्धीनां सर्वत्र विदितात्मनाम्[५]॥

---

## प्रथमाध्यायस्य द्वितीयः पादः

( पादपरिचयः ) प्रथमपादे एतत्प्रदर्शितं यत् आनन्दमयः, आकाशः, ज्योतिः तथा प्राणः इत्यादिभिः नामभिः उपनिषत्सु जगदुत्पत्तिस्थितिप्रलयकारणं यत् प्रतिपादितं तद् ब्रह्म। एतत्प्रसंगे समागतेन प्राणशब्देन

---

१. ब्र० सू० १।१।३१ शां० भा० ३९२

२. ब्र० सू० १।१।३१ अ० भा० पृ० ५९–६० ( कलकत्ता )

३. ब्र० सू० १।१।३२ श्रीभाष्यम् पृ० १४५–४६

४. ब्र० सू० १।१।३१ नि० भा० पृ० १६४

५. ब्र० सू० १।१।३१ म० भा० ( ब्र० पु० ) पृ० १९

'मनोमयः प्राणशरीरः' आदिवचनानि स्मार्यन्ते अतः तेषु विचारं कर्त्तुं द्वितीयपादस्यारम्भः।

अस्मिन् पादे—

( १ ) शंकरमते उपास्यवाचकास्पष्टश्रुतिवाक्यानां समन्वयः।
( २ ) रामानुजमते च पुनरस्पष्टजीवादिलिंगकवाक्यानां विचारः।
( ३ ) निम्बार्कमते च स्पष्टास्पष्टजीवादिलिंगकवाक्यानां वासुदेवे समन्वयः।
( ४ ) मध्वमते च लिंगात्मकानामन्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयः।
( ५ ) वल्लभमते च जीवसंदिग्धश्रुतीनामाधेयरूपे ब्रह्मणि समन्वयः।

सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

( १।२।१-८ ) छान्दोग्योपनिषदि पूर्वं 'सर्वं खल्विदं ब्रह्म'[1] इत्यादिना सर्वं जगद् ब्रह्मस्वरूपमाकलय्य तदुपासना उक्ता। तदनन्तरं तत्कृते सत्यसंकल्प आकाशात्मा[2] सर्वकर्मा इत्यादीनि विशेषणानि प्रयुक्तानि यानि च जीवात्मनः प्रतीयन्ते। ततः स एव अणीयान् ज्यायान् च इत्युक्त्वा स एव हृदयाभ्यन्तरस्थः स्वकीयात्मा प्रतिपादितः तदेव च[3] ब्रह्म इत्यपि प्रतिपादितम्। अस्यां परिस्थित्यां प्रकृत्या एषा जिज्ञासा उत्पद्यते यत् उक्तोपास्यदेवः कः ? जीवात्मा परमात्मा वा कश्चिदेतदुभयभिन्नो वा ? एतन्निर्णेतुमेव अस्य प्रकरणस्य प्रारम्भः।

आद्यानाम् अष्टानां सूत्राणामस्मिन् प्रकरणे मध्वातिरिक्तानामन्येषां चतुर्णामाचार्याणां मते एतत्प्रतिपादितं वर्तते यत् छान्दोग्योपनिषदः 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तः अवाकी अनादरः' इत्यत्र यस्योपास्यदेवस्य वर्णनं कृतं वर्तते तद् ब्रह्म अस्ति न जीवात्मा। एतत्प्रकरणं ब्रह्मजीवयोः स्वरूपं वर्णयति—'अनुपपत्तेस्तु न शारीरः', 'कर्मकर्तृव्यपदेशाच्च' 'शब्दविशेषात्', 'स्मृतेश्च' एवं 'सम्भोगप्राप्तिरिति चेन्न'[10]

१. छा० ३।१४।१   २. तत्रैव ३।१४।१
३. छा० ३।१४।२   ४. छा० ३।१४।३-४
५. तत्रैव ३ १४।२   ६. ब्र० सू० १।२।३
७. ब्र० सू० १।२।४   ८. ब्र० सू० १।२।५
९. ब्र० सू० १।२।६   १०. ब्र० सू० १।२।८

वैशेष्यात्' एषु सूत्रेषु या विशेषताः प्रतिपादिताः ता ब्रह्मण्येव चरितार्था न जीवे।

अत्रत्यस्य सप्तमसूत्रस्य[1] 'तद्व्यपदेशात्' अस्य पदस्य सर्वैः आचार्यैः अल्पत्व ( अणुत्व ) व्यपदेशात् अयमेवार्थः कृतः। यतो हि 'एष म आत्मा अन्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा[2]....'इत्यस्यां श्रुतौ एतत्प्रतिपादितं वर्तते यत् स उपास्यो देवः व्रीहीत्यादिभ्यः अपि अणीयान् अस्ति। एवमेवास्मिन् सूत्रे 'व्योमवच्च एतदपि पदं द्रष्टव्यं वर्तते यद्द्वारा स एव उपास्यो देवः आकाशवद् विस्तृतः प्रतिपादितः।

यद्यप्युक्तछांदोग्यमंत्रेषु तस्योपास्यदेवस्य स्थानं हृदयम् उक्तं वर्तते तथाहि—एष म आत्मा अन्तर्हृदये अणीयान्[3] तथा 'एष म आत्मा अन्तर्हृदये एतद्ब्रह्म[4] एवं च स व्रीहेरपि श्यामाकाद् श्यामाकतण्डुलाद्वा अणीयान् उक्तः इति कथं तद् ब्रह्म भवितुं शक्नोति इत्येषा शंका उत्पद्यते किन्तु अस्याः शंकाया निवारण शंकरेण इत्थं कृतम्—'नायं दोषः, न तावत् परिच्छिन्नदेशस्य......एवं ब्रह्मापि[5], न स परमात्मा एकदेशी, अपि तु सः अन्तर्बहिश्च सर्वत्र वर्तते। 'तदन्तरस्य बाह्यश्च।' सर्वत्र वर्तमानः अपि स तथैव एकत्र वर्तते यथा समस्तराज्याधिपः सन्नपि राजा स्वराजधानीस्थः उच्यते। एवं ध्येयः सन् स अर्भकौकाः अणीयाँश्च उच्यते। इत्थं च यथा सर्वव्यापकत्वे अपि शालग्रामे हरिस्मरणमुपदिश्यते यथा वा वैद्युतशक्तेः सर्वत्र व्यापकत्वे अपि तद्ग्राहकस्थानेष्वेव सा गृहीता भवति तथैव बुद्धिवृत्त्या परमात्मा हृदये एव गृह्यते। अत एव तद् ध्येयस्थानमुच्यते।

किंच, व्रीहेः सर्षपाद् वा तस्य अणीयस्त्वप्रतिपादनेन न श्रुतेरेतत्तात्पर्यं यत् स तावान् अणीयान् वर्तते अपि तु तस्यात्यन्तसूक्ष्मत्वे इन्द्रियाग्राह्यत्वे एव च तात्पर्यम्। अत एव च तस्मिन्नेव मंत्रे स पृथिव्याः अन्तरिक्षात् द्युलोकात् किं बहुना समस्तलोकेभ्यः अपि महीयानुक्तः। अतः स उपास्यो देवः परब्रह्मपरमात्मा एव नान्यः। तथा सर्वव्यापकत्वे अपि यथा आकाशः सूचीछिद्रे घटाकाशे वा एकदेशीयः महाकाशापेक्षया लघीयाँश्च प्रतीयते तथैव परब्रह्मापि 'अणोरणीयः महतो महीयश्चे'त्यत्रश्रुतेस्तात्पर्यम्।

---

1. अर्भकौकस्त्वात्तद्व्यपदेशाच्च... 2. छा० ३।१४।३
3. तत्रैव ३।१४।३—४ 4. तत्रैव ३।१४।४
5. ब्र० सू० १।२।७ शां० भा० पृ० ४२०

रामानुजाचार्येण च एष एव अभिप्राय इत्थम् अभिव्यक्तः—'परमात्मैव ह्यणीयान् इत्येवं निचाय्यत्वेन व्यपदिश्यते······। न पुनरणीयस्त्व-मेवास्य स्वरूपम् इति। व्योमवच्चायं व्यपदिश्यते। स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते। ज्यायान् पृथिव्याः, ज्यायान् अन्तरिक्षात्, ज्यायान् दिवो, ज्यायान् एभ्यो लोकेभ्य इति अत उपासनार्थमेवाल्पत्वव्यपदेशः'[1]।

निम्बार्केणापि अयमेव भावः इत्थम् अनुसृतः—एष म आत्मा हृदये······इत्यल्पायतनत्वात्, अणीयान् व्रीहेर्वा इत्यल्पत्वव्यपदेशा-च्चात्र न ब्रह्मेति चेन्नैव, तथात्वेन ब्रह्मणः इहोपास्यत्वात्। बृहतः अल्पत्वं तु गवाक्षव्योमवत् संगच्छते'[2]।

मध्ववल्लभाभ्यामपि च शंकरानुसारी एवार्थः प्रतिपादितः।

एवमेव अष्टमसूत्रे···'वैशेष्यात्' अस्य शब्दस्य रामानुजमतिरिच्य सर्वैरेवाचार्यैः अयमेव अर्थः कृतः यत् जीव इव ब्रह्म सुखदुःखयोः भोगं न करोति यतो हि ब्रह्मजीवयोः महदन्तरं वर्तते, तथाहि शंकरः—'विशेषो हि भवति शारीरपरमेश्वरयोः। एकः कर्त्ता भोक्ता धर्माधर्म-साधनः सुखदुःखादिमांश्च एकस्तद्विपरीतः अपहतपाप्मत्वादिगुणः। एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य'[3]।

निम्बार्कः—'सर्वहृदयसम्बन्धात् सुखसम्भोगप्राप्तिर्ब्रह्मणः अपि जीवस्य इवेति चेन्नायं दोषः स्वकृतकर्मफलभोक्तृत्वेन अपहतपाप्मत्वेन च जीवब्रह्मणोरत्यन्तविशेषात्' इत्थं तदेव प्रतिपादयति[4]।

मध्वस्याप्येतदेव तात्पर्यम्।

'सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः।
स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः'[5]॥

वल्लभेन च 'वैशेष्यात्' एष शब्दः इत्थं व्याख्यातः—'विशेषस्य भावः वैशेष्यम्। तस्मात्। सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषः। तद्भावो ब्रह्मणि वर्तते न जीवे इति जीवस्य भोगो न ब्रह्मणः'[6] इति।

---

१६. ब्र० सू० १।२।७ रामानुजभाष्यम् पृ० १५०–५१
१७. ब्र० सू० १।२।७ नि० भा० पृ० १७८
१८. ब्र० सू० १।२।८ शां० भा० पृ० ४२३–२४
१९. ब्र० सू० १।२।८ नि० भा० पृ० १७९
२०. ब्र० सू० १।२।८ म० भा० ( गरुडपुराणवचनम् ) पृ० २१
२१. ब्र० सू० १।२।८ ब० भा० पृ० २९७ ( चौ० सं० )

रामानुजाचार्यस्य तु एतत्कथनमस्ति यत् शरीरान्तर्वर्तित्वमेव केवलं न सुखदुःखोपभोगहेतुः । अपि तु पुण्यपापरूपकर्मणां पारवश्यमेव सुखदुःखोपभोगहेतुः । अपहतपाप्मनि परमात्मनि नैष सुखदुःखोपभोगसम्भवः । जीवे त्वस्ति । एतावान् एव जीवापेक्षया ब्रह्मणि विशेषः[1] । श्रुतिरपि एतदेव प्रतिपादयति 'एकस्तयोः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यः अभिचाकशीति[2] ।

( १।२।६-१० ) एतत्प्रकरणमेतन्निर्दिशति यत्—'यस्य ब्रह्म च क्षत्रं चोभे भवत[3] ओदनः' इत्यादिश्रुतौ यस्य निर्देशः तत् परब्रह्म अस्ति ।

( १।२।११-१२ ) एतत्प्रकरणमेतन्निश्चिनोति यत् 'ऋतं पिबन्तौ सुकृतस्य[4] —' इत्यादिश्रुतौ प्रतिपादितयोः द्वयोः भोक्तुर्जीवात्मनः परमात्मनश्च ग्रहणम् ।

रामानुजमतिरिच्य अन्यैः सर्वैराचार्यैरेतदधिकरणद्वय स्वीकृतम् । रामानुजेन तु नवमसूत्राद् द्वादशसूत्रपर्यन्तमेकमेवाधिकरणं प्रतिपादितम् तच्चाकिंचित्करम् ।

अत्र एकादशसूत्रे 'आत्मानौ' एतद् द्विवचनं जीवात्मपरमात्मनोर्बोधकम् । छायातपरूपेण च तयोरेव निर्देशः । परमात्मा सर्वज्ञः पूर्णज्ञानस्वरूपः स्वप्रकाशश्चेत्यातपनाम्ना तन्निर्देशः । जीवात्मा चाल्पज्ञः । यच्च किञ्चित् तत्र ज्ञानं वर्तते तदपि परमात्मन एव अंशस्वरूपम् अत एव स छायानाम्ना अभिहितः ।

'विशेषणाच्च' एतद्द्वादशसूत्रं द्वयोः वैशिष्ट्यं पार्थक्येन निर्दिशति 'तस्यैतत्तात्पर्यं यत् 'सोऽध्वनः परमाप्नोति तद्विष्णोः[5] परमं पदम्' तथा 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति'[6] अत्र गन्तृगन्तव्यत्वेन, मन्तृमन्तव्यत्वेन च विशेषणात् जीवेश्वरयोर्निर्देशः । अत एव शंकरेणापि इत्थमुक्तम्—

'विशेषणं च विज्ञानात्मपरमात्मनोरेव सम्भवति । 'आत्मानं रथिनं विद्धि शरीरं रथमेव[7] तु' इत्यादिना परेण ग्रन्थेन रथरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति । तथा—'सोऽध्वनः परमाप्नोति इति च परमात्मानं गन्तव्यं कल्पयति'[8] ।

---

१. ब्र० सू० १।२।८ रा० भा० पृ० १५१
२. मु० उ० ३।१।१
३. क० उ० १ २.२५
४. तत्रैव १।३।१
५. कठोपनिषत् १।३।९
६. तत्रैव १।२।१२
७. तत्रैव १।३।३
८. ब्र० सू० १।२।१२ शां० भा० पृ० ४४२

रामानुजेन अस्मिन् सूत्रे श्रीभाष्ये इत्थं प्रतिपादितम्—'अस्मिन् प्रकरणे जीवपरमात्मानौ एव उपास्यत्वोपासकप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते'[1]।

( १।२।१३–१७ ) अस्मिन् प्रकरणे एतत्प्रतिपादितं वर्तते यत् छान्दोग्योपनिषदः, 'य एषः अक्षिणि पुरुषो दृश्यते एष[2] आत्मा'···इति मंत्रे यस्य पुरुषस्य स्थितिः प्रतिपादिता स ब्रह्म। अत्र पंचदश–षोडशसूत्रयोर्मध्ये रामानुजेन 'अत एव च स ब्रह्म' तथा निम्बार्केण 'अत एव च तद् ब्रह्म' एतदतिरिक्तं सूत्रं स्वीकृतं किन्तु स भावः पूर्वापरसूत्रयोः कारणवाचकपंचम्यन्तपदेनैव गतार्थ इति तथाकरणं व्यर्थम्। तत्परकालीनमध्ववल्लभाभ्यामपि नैतदतिरिक्तं सूत्रं स्वीकृतम्।

( १।२।१८–२० ) एतदधिकरणम् एतत्प्रदर्शयति यत् बृहदारण्यकोपनिषदः 'एष त आत्मा अन्तर्याम्यमृतः' अदृष्टः[3] इत्यादिमंत्रे यस्य अन्तर्यामिनो वर्णनं स ब्रह्म। स च सांख्योक्तं प्रधानं न, यतो हि तत्र तेषां गुणानामभावः। न चापि स जीवो भवितुमर्हति यतो हि काण्वमाध्यन्दिनीयौ ( द्वैताद्वैतवादिनौ वा ) उभौ अपि तम् अन्तर्यामिनः पृथक् प्रतिपादयतः।

अस्य अधिकरणस्य विंशं सूत्रं स्पष्टतया ब्रह्मजीवयोः पार्थक्यं प्रकटयति। येन निर्विवादम् एतत् सिध्यति यत् ब्रह्मजीवयोर्भेदः सूत्रकाराभिमतः किन्तु शंकरः स्वसिद्धान्तानुसारम् एतदेव प्रतिपादयति यत् एतत्सर्व भेदप्रतिपादकव्याख्यानम् अविद्याजन्यम्। तथाहि—'अविद्याप्रत्युपस्थापितकार्यकारणोपाधिनिमित्तः अयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः। तथा च श्रुतिः—यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इत्यविद्याविषये सर्वव्यवहारं दर्शयति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इति विद्याविषये सर्वव्यवहारं वारयति[4]।

( १।२।२१–२३ ) एतत्प्रकरणम् इदं निर्दिशति यत् मुण्डकोपनिषदि 'यत्तदद्रेश्यमग्राह्यम्[5]'···अस्मिन् मंत्रे यत्प्रतिपादितं तद् ब्रह्म। तत् प्रधानं जीवो वा न भवितुमर्हति। यतो हि तस्मिन् मंत्रे प्रतिपादिताः गुणाः प्रधाने जीवे वा न उपलभ्यन्ते अतः तयोः सर्वथा तद्भिन्नत्वम्।

---

१. ब्र० सू० १।२।१२ रा० भा० पृ० १५३

२ छा० ४।१५।१ ३. बृ० उ० ३।७।३

४. ब्र० सू० १।२।२० शां० भा० ४८२

५. मु० उ० १।१।५–६

अत्रापि द्वाविंशं सूत्रं स्पष्टतया ब्रह्मजीवयोः भेदं प्रदर्शयत् मुण्डकोपनिषदः 'पश्यत्स्विहैव निहितं[1] गुहायाम्...' एतन्मन्त्रमनुलक्षयति, तदेव च मुण्डकोपनिषदः 'समाने[2] वृक्षे ...' इति मंत्रे अपि प्रतिपादितम्।

(१।२।२४-३२) अस्मिन्नधिकरणे एतदुक्तं वर्तते यत् छान्दोग्योपनिषदः 'को नु आत्मा किं ब्रह्म इति, आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो[3] ब्रूहि' अत्र यस्य वैश्वानरात्मनो वर्णनं स ब्रह्म अस्ति।

## प्रथमाध्यायस्य तृतीयः पादः

(पादपरिचयः) आद्यपादद्वये सर्वान्तर्यामिणः परब्रह्मपरमात्मनः सर्वव्यापकत्वं समुपपादितम्, इदानीं तस्यैव सर्वाधारत्वं, न तु सूत्रात्मनः (हिरण्यगर्भस्य), प्रधानस्य, जीवस्य वेति उपपादयितुं तृतीयपादस्य प्रारम्भः।

(प्रतिपाद्यसंकेतः) अस्मिन् पादे—

(१) शंकरमते ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिवाक्यानां समन्वयः।
(२) रामानुजमते स्पष्टलिंगकश्रुतिवाक्यानां विचारः।
(३) निम्बार्कमते पुनः स्पष्टास्पष्टजीवादिलिंगकवाक्यानां ब्रह्मणि समन्वयः।
(४) मध्वमते उभयप्रसिद्धानां शब्दानां विष्णौ समन्वयः।
(५) वल्लभमते च जीवजडरूपार्थकृतसंदिग्धश्रुतीनां साक्षात् परम्परया वा आधाररूपे ब्रह्मणि समन्वयः।

सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

(१।३।१-७) एतत्प्रकरणम् एतत् प्रमाणयति यत् मुण्डकोपनिषदः 'यस्मिन्[4] द्यौः पृथिवी चान्तरिक्षम्......तम् एव एकं जानथ आत्मानम्...' इति मंत्रे प्रयुक्तः आत्मशब्दो ब्रह्मार्थकः। यतो हि तत्रत्येन आत्मशब्देन परमात्मनो ग्रहणेनैव समुचितः अर्थः उपपद्यते नान्यथेति। एवं च अत्र आत्मशब्देन स्मृतिप्रसिद्धस्य प्रधानस्य श्रुतिप्रसिद्धस्य प्राणस्य जीवस्य वा बोधो न भवितुमर्हति। अत्र रामानुजमते तृतीयं चतुर्थं चैकं सूत्रम्।

---

१. तत्रैव ३।१।७ २. तत्रैव ३।१।२

३. छा० ५।११।१ ६ ४. मुं० उ० २।२ ५

अस्मिन्नधिकरणे 'मुक्तोपसृप्यव्यपदेशात्'[1], 'भेदव्यपदेशात्'[2] तथा 'भूमा सम्प्रसादादध्युपदेशात्'[3] एतत्सूत्रत्रयं विशेषेण ब्रह्मजीवयोर्भेदं प्रदर्शयति ।

( १।३।८-९ ) एतत्प्रकरणम् एतन्निर्दिशति यत् छान्दोग्योपनिषदः 'भूमा त्वेव विजिज्ञासितव्यः···'[4] इत्यादिमंत्रे प्रयुक्तो 'भूमा' शब्दो ब्रह्मबोधकः न तु प्राणस्य, जीवात्मनः प्रकृतेर्वा बोधकः । यतो हि स श्रुतिषु सम्प्रसादादधिकः प्रतिपादितो वर्तते ।

अत्र सम्प्रसादशब्दस्य सुषुप्तिरूपे अर्थे शंकर-निम्बार्क-वल्लभाना- मैकमत्यम् । तथाहि—'सम्प्रसादः इति [5]सुषुप्तस्थानमुच्यते' इति शंकरः । 'सम्यक् प्रसीदत्यस्मिन्निति सम्प्रसादः [6]सुषुप्तस्थानम्' इति निम्बार्कः । 'सम्प्रसादः [7]सुषुप्तिः तस्मादधि आधिक्येनोपदेशात् भूमा भगवानेव' इति वल्लभः । रामानुजाचार्येण मध्वस्य चात्र वैमत्यम् ! तत्र रामानुजाचार्येण 'अथ य एष सम्प्रसादः अस्मात् शरीरात् समुत्थाय······'[8] इत्यादिश्रुति- वाक्यमाधृत्य तस्य प्रत्यगात्मवाचकत्वं स्वीकुर्वता 'सम्प्रसादः प्रत्यगात्मा स च न भूमगुणविशिष्टः अपि तु परमात्मा'[9] इति प्रतिपादितम् । मध्वाचार्यस्तु सम्प्रसादशब्दस्य पूर्णसुखरूपत्वं स्वीकृत्य 'सम्प्रसादात् पूर्णसुखरूपत्वात् अध्युपदेशात् सर्वेषामुपर्युपदेशाच्च विष्णुरेव[10]भूमा' इति प्रतिपादितवान् किन्त्विह चकाराभावान्मध्वाभिहितः अर्थः न उपयुक्तः प्रतिभाति ।

( १।३।१०-१२ ) अस्मिन् प्रकरणे इदं विवेचितं वर्तते यत् 'स होवाच एतद् वै तदक्षरम्'[11]···अस्मिन् श्रुतिवाक्ये प्रतिपादितेन अक्षर- शब्देन ब्रह्मणो बोधः ।

( १।३।१३ ) अत्र एतदुक्तं यत् प्रश्नोपनिषदः 'यः पुनरेतं त्रिमात्रेण'[12] ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत···' स एतस्माद् जीवघनात्

---

१. ब्र० सू० १।३।२ २. ब्र० सू० १।३।५
३. ब्र० सू० १।३।८ ४ छा० ७।२३।२४
५. ब्र० सू० १।३।८ शां० भा० पृ० ५६५
६. ब्र० सू० १।३।८ नि० भा० पृ० १९८
७. ब्र० सू० १।३।८ अणुभाष्ये पृ० ९० ( कलकत्ता सं० )
८. छा० उ० ८।३।४
९. ब्र० सू० १।३।७ रा० भा० पृ० १६९
१०. ब्र० सू० १।३।८ म० भा० पृ० २४ ( कलकत्ता सं० )
११. बृ० उ० ३।८।८ १२. प्र० उ० ५।५

परात्परं पुरिशयं पुरुषमीक्षते…' इति वाक्ये ओंकारेण यस्य परपुरुषस्य ध्यानमुक्तमस्ति स परं ब्रह्म न तु अपरं ब्रह्म। यतो हि वाक्यशेषे, ('स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते)'…इत्यादिना स दर्शनस्य (ईक्षतेः) विषयः प्रतिपादितः इति शंकरः[1]। रामानुजनिम्बार्कानुसारेण च अत्र ईक्षतेः कर्म (ध्यानविषयः) ब्रह्म निर्दिश्यते न तु हिरण्यगर्भो ब्रह्मा। यतो हि अग्रे तस्यैव पुरुषस्य सम्बन्धे श्रुतेः 'यत्तच्छान्तमजरममृतमभयं[2] परं चेति' वाक्येन 'तद्ब्रह्म' एतदुपदिष्टं वर्तते; तथाहि—'एतस्माज्जीवघनात् परात्परमिति च परात्मन एव व्यपदेशः; न [3]चतुर्मुखस्य'…तथा—'पुरिशयं पुरुषमीक्षते इतीक्षतेः कर्म ब्रह्माण्डान्तर्गतो ब्रह्मलोकस्थब्रह्मा न भवति किन्तु स एव प्रकृतासाधारणाप्राकृतब्रह्म[4]लोकेशः…'। एवं रामानुजनिम्बार्काभ्यामत्र ब्रह्मचतुर्मुखयोरेकतरत्वं संदिह्य ब्रह्म एव ध्येयमुक्तम्। इत्थं च तयोः कथनम् एतदर्थं स्वाभाविकं यत् ताभ्यां परम् अपरम् चेति द्विप्रकारकं ब्रह्म न स्वीकृतम्। वल्लभेन सूत्रं तु शंकरानुसारमेव स्वीकृतं किन्तु तेन परमात्मनः ब्रह्मणश्च एकतरस्य ध्यानविषये 'परपुरुषः परमात्मा ध्यानविषय आहोस्वित् विराट् पुरुषो ब्रह्मा'? एवं संदिह्य 'स अभिध्यानविषयः परपुरुषः[5] परमात्मैव' एवमुक्तम्। मध्वाचार्येणापि सूत्रं तु शंकरानुसारमेव स्वीकृतं किन्तु व्याख्यानं तस्येत्थं विष्णुविषयकम्—'तदैक्षतेतीक्षतिकर्मव्यपदेशात् स एव विष्णुरत्रोच्यते। नान्योऽतोऽस्ति[6] द्रष्टा'। तच्च अणुभाष्यप्रकाशकारानभिमतम्[7]।

(१।३।१४–२१) अत्रायं प्रश्नः यत् छान्दोग्योपनिषदः 'अथ यदिदमस्मिन्[8] ब्रह्मपुरे दहरं पुण्डरीकम्…' अस्यां श्रुतौ अल्पहृदयकमले यः अयम् अल्पाकाश उक्तः स किं भूताकाशः आहोस्वित् विज्ञानात्मा अथ च परमात्मा इति। अयं च संशयः अग्रे अनेकैः विशेषणैः इत्थं निर्णीतः यत्

१. ब्र० सू० १।३।१३ शां० भा० पृ० ५८८
२. प्र० उ० ५।७
३. ब्र० सू० १।३।१२ रा० भा० पृ० १७४
४. ब्र० सू० १।३।१३ निं० भा० पृ० २०१
५. ब्र० सू० १।३।१३ अणुभाष्ये पृ० ३९० (चौ० सं०)
६. ब्र० सू० १।३।१३ म० भा० पृ० ३६
७. ब्र० सू० १।३।१३ अणुभाष्य प्रकाश-टीकायाः ३९१ पृष्ठे द्रष्टव्यम्
८. छा० उ० ८।१।१

स दहराकाशः परब्रह्म एव—'परमेश्वर एवात्र दहराकाशो भवितुमर्हति न भूताकाशो न जीवो'[1] वा'। किन्तु अग्रे 'अथ य एष सम्प्रसादः अस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते एष आत्मा होवाच' इति वाक्यशेषेण जीवात्मनः अपि बोधो जायते। अतः अस्य समाधानम् 'इतरपरामर्शात्[2] स इति चेन्नासम्भवात्' 'उत्तराच्चेदाविर्भूतस्वरूपस्तु'[3] एवं 'अन्यार्थश्च[4] परामर्शः' एषु सूत्रेषु कृतम्। एतत् पुष्ट्यर्थं चैव सूत्रकारेण पुनराशङ्क्य 'अल्पश्रुतेरिति चेत्तदुक्तम्'[5] इत्यत्र समाहितम्। एवम् 'अनुकृतेस्तस्य'[6] इति सूत्रे प्रकारान्तरेण तदेवोक्त्वा 'अपि च[7] स्मर्यते' इति सूत्रे 'सर्वस्य चाहं[8] हृदि सन्निविष्टः' 'हृदि सर्वस्य[9] विष्ठितम्' तथा 'ईश्वरः[10] सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादिप्रमाणैः दहरशब्देन परब्रह्मण एव बोधः कारितः न तु जीवात्मनः। शंकराचार्यस्य 'उत्तराच्चेदाविर्भूतस्वरूपस्तु'[11]'अस्य सूत्रस्यैतत् तात्पर्यं यत् उक्तमंत्रे ('अथ य एष सम्प्रसादः....' इत्यत्र) निजशुद्धस्वरूपं प्राप्तस्य जीवात्मनः कृते तथाभूतानि विशेषणानि प्रयुक्तानीति तदाधारेण दहरशब्दो जीवात्मवाचकः स्वीकर्तुं न शक्यते—'यत्राविर्भूतस्वरूपो जीवो विवक्ष्यते....' परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, इति यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्टे न जैवेन रूपेण। यत्परं ज्योतिरुपसम्पत्तव्यम् श्रुतं तद्ब्रह्म, तच्च अपहतपाप्मत्वादिधर्मकम्। तदेव च जीवस्य पारमार्थिकं स्वरूपम् 'तत्त्वमसि' इत्यादिशास्त्रेभ्यः'[12]।

अन्येषामाचार्याणां तु एतत् तात्पर्यं यदत्र स्वकीये विशुद्धस्वरूपे निस्सन्देहं जीवात्मन एव निर्देशः एतदर्थमेव श्रुतिगतानि सर्वाणि विशेषणानि चरितार्थानि किन्तु जीवो ब्रह्म न भवितुं शक्नोति इति दहरो न जीवबोधकः।

---

१. ब्र० सू० १।३।१४ शां० भा० पृं० ५९८

२. ब्र० सू० १।३।१८ ३. ब्र० सू० १।३।१९

४. ब्र० सू० १।३।१९ ५. ब्र० सू० १।३।२१

६. ब्र० सू० १।३।२२ ७. ब्र० सू० १।३।२३

८. गीता १५।१५ ९. गीता १३।१७

१०. गीता १८।६१ ११. ब्र० सू० १।३।१९

१२. ब्र० सू० १।३।१९ शां. भा० पृ० ५२३–२४

निम्बार्कस्य कथनमस्ति यत् 'पूर्वोक्तगुणयुक्तो नित्याविर्भूतस्वरूपः परमात्मा दहरः आविर्भूतस्वरूपो जीवस्तु[1] न'।

मध्वेनाप्युक्तम्—'तत्र हि परमेश्वरप्रसादाविर्भूतस्वरूपः अयमुच्यते यत्प्रसादात् स मुक्तो भवति स भगवान्[2] पूर्वोक्तः (दहरः)।

शंकरमतिरिच्य द्वितीयस्यैव अर्थस्य अधिकोपयुक्तता। वल्लभेनेत्थं स्पष्टीकृता 'तु शब्देन नायमर्थो दूष्यते किन्तु किंचिदन्यदस्तीति न नकारप्रयोगः'[3]।

शंकरेण द्वाविंशत्रयोविंशसूत्रयोः स्वतन्त्रमधिकरणं स्वीकृतम्। मध्वेनापि एतदेवानुसृतम्, अत्र एतत्प्रतिपादितं वर्तते यत्—'न तत्र सूर्यो भाति न चन्द्रतारकम्'[4] ...अत्र यस्य वर्णनं वर्तते स न कश्चिद् भौतिकप्रकाशः अपि तु स्वयं परब्रह्म सः किन्तु रामानुजनिम्बार्कवल्लभैरेतत्पूर्वाधिकरणस्यैवांशं स्वीकृत्य दहरस्य परमात्मत्वे एका अन्या युक्तिः प्रदर्शिता। अणुभाष्यस्य प्रकाशटीकाकारेणापि एतदेव स्वीकृतम् 'तेनेदमधिकरणं पूर्वाधिकरणोपोद्घाततया[5] तस्यैव शेषः'। तेषामेतत्तात्पर्यं यत् एकोनविंशे (उत्तराच्चेदाविर्भूतस्वरूपस्तु, इत्यस्मिन्) सूत्रे अनुकर्ता जीवः, दहरश्च अनुकार्यं ब्रह्म तस्य दहराकाशस्य ब्रह्मणः अनुकारादयमपहतपाप्मादिगुणको विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः। तथाहि प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारः श्रूयते—

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति॥

अतः अनुकर्ता प्रजापतिवाक्यनिर्दिष्टः अनुकार्यं ब्रह्म दहराकाशः[6]। निम्बार्केण एतदेव इत्थं प्रतिपादितम्—'तस्य नित्याविर्भूतस्वरूपस्य 'तमेव भान्तमनुभाति सर्वम्' इत्यनुकृतेश्चानुकर्त्ता जीवो नित्याविर्भूतस्वरूपो दहरो न भवितुमर्हति'[7]।

---

१. ब्र० सू० १।३।१९ निं० भा० पृ० २०६
२. तत्रैव म० भा० पृ० २८
३. तत्रैव अणुभाष्यम् पृ० ४१० (चौ० सं०)
४. मुं० उ० २।१।१०
५. अणुभाष्यप्रकाशः पृ० ४१६
६. ब्र० सू० १।३।२१ रा० भा० पृ० १८०
७. ब्र० सू० १।३।२२ निं० भा० पृ० २०७

वल्लभाचार्यः अपि एतदेव सम्मनुते—'सर्वः अपि पदार्थः तमेवानुकरोति सूर्यं रश्मय' इव, छाया पुरुषमिव, तस्माद् वाक्ये भगवदनुकारित्ववचनान्न नानार्थकल्पनम्'[1]।

अत्र इत्थं प्रतिपादितं वर्तते यद् 'अंगुष्ठमात्रपुरुषो मध्य आत्मनि तिष्ठति'[2]। इत्यत्र, तथा 'अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः[3]...। इत्यत्र च वर्णितः अंगुष्ठमात्रपुरुषः जीवात्मा न प्रत्युत ब्रह्म अस्ति। यतो हि भूतस्य भव्यस्य च नियन्ता परमेश्वरादन्यः कश्चिदपि न भवितुमर्हति। स च परमात्मा एतदर्थमंगुष्ठमात्रः प्रतिपादितः यत् मनुष्याणां हृदयमंगुष्ठप्रमाणं वर्तते तत्रैव च तस्य स्थितिः। भक्तश्च तत्रैव तस्य ध्यानं करोति। एवंभूतस्य ध्यानस्य चाधिकारी मनुष्य एव न कश्चिदन्यः प्राणी।

(१।३।२६-३३) अत्र ब्रह्मविद्याया अधिकारी निर्णीतः। तत्र मनुष्य एव ब्रह्मविद्याया अधिकारी देवता अपि वेति प्रश्नस्योत्तरे एतदधिकरणं देवतानामपि तदधिकारित्वं निश्चिनोति।

(१।३।३४-३८) एतदधिकरणं शूद्रान् अपि ब्रह्मविद्याधिकारिणः प्रतिपादयति।

(१।३।३९) अत्र एतत्प्रतिपादितं वर्तते यत् कठोपनिषदः 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्[4]...'। एतस्मिन्मंत्रे यस्य प्राणस्य निर्देशः स ब्रह्म एव।

(१।३।४०) एतत्सूत्रमेतत्प्रतिपादयति यत् छान्दोग्योपनिषदः 'एष सम्प्रसादः अस्मात् शरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति मंत्रे यस्य ज्योतिषो वर्णनं तद् ब्रह्मैव।

(१।३।४१) एतस्यैतत्तात्पर्यं यत् छान्दोग्योपनिषदः, 'आकाशो वै नाम नामरूपयो[5] र्निर्वहिता'...इत्यादिमन्त्रे प्रतिपादितः नामरूपयोर्निर्वहिता आकाश; न भौतिकः आकाशो न जीवः अपि तु परब्रह्मैव।

एतदग्रे द्वाचत्वारिंशत्तमत्रयश्चत्वारिंशत्तमसूत्रे शंकरवल्लभानुसारं पृथगधिकरणं निर्मापयती एतत्प्रतिपादयतः यत् बृहदारण्यकोपनिषदः 'कतम आत्मेति यः अयं विज्ञानमयः[6] प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' अस्यां

---

१. ब्र० सू० १।३।२१ अणुभा० पृ० ४१५
२. क० उ० २।१।१२
३. तत्रैव २ १।१३
४. क० उ० २।६।२
५. छा० उ० ८।१४।१
६. बृ० उ० ४।३।७

श्रुतौ यस्य विज्ञानमयस्य उल्लेखः स जीवात्मनो न प्रत्युत परमात्मनो द्योतकः।

रामानुजनिम्बार्कौ अन्तिमसूत्रत्रयस्य एकमधिकरणं स्वीकृत्य तत्सम्बन्धं छान्दोग्योपनिषदः 'आकाशो वै नाम नामरूपयोः····'एतया श्रुत्या मन्येते तत्र चेत्थं समीक्षमाणौ यत् छान्दोग्योपनिषदः 'आकाशो वै नाम···' इति श्रुतौ आकाशपदेन परब्रह्मणो निर्देशः मुक्तावस्थापन्नस्य जीवात्मनो वेत्यन्ते एतन्निश्चिनुतः यत् मुक्तावस्थापन्नो जीव एव आकाशः (परब्रह्म) न; यतो हि जीवात्मनः परमात्मनश्च भिन्नता स्पष्टतया श्रुतिषु प्रतिपादिता वर्तते।

मध्वाचार्यः अन्तिमसूत्रत्रयं पृथक् पृथगधिकरणत्रयं मनुते। एतस्य-मते तत्र एकचत्वारिंशत्तमं सूत्रं छान्दोग्योपनिषदः 'आकाशो वै नाम···' इति श्रुतेः आकाशं निर्दिशति। द्विचत्वारिंशत्तमं च सूत्रं बृहदारण्यकोपनिषदः 'सुषुप्तौ तावत् अयं पुरुषः प्राज्ञेनात्मना' सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति श्रुतेः प्राज्ञम् तथा द्विचत्वारिंशत्तमं सूत्रं बृहदारण्यकोपनिषदः 'सर्वस्य वशी सर्वस्येशानः[2] सर्वस्याधिपतिः' इति श्रुतेः सर्वस्याधिपतिं निर्दिशति। एवं च "सर्वस्याधिपतिः सर्वस्येशानः स वा एष नेति नेतीत्यादिशब्देभ्यो नित्यमहिमा[3] विष्णुरेव" इत्थमुपसंहरन् सः एतन्निश्चिनुते यत् एतत्सर्वं परब्रह्मैव॥

---

## प्रथमाध्यायस्य चतुर्थः पादः

(पादपरिचयः) आद्येषु त्रिषु पादेषु जगतः जन्मादिकारणं ब्रह्मेति निरूपणपूर्वकं श्रुतिवाक्यैस्तत्प्रमाणितम्। श्रुतिषु च यथास्थलं प्रतीयमानः संदेहः विचारपूर्वकं निवारितः। आकाशः, आनन्दमयः, ज्योतिः, प्राणः इत्यादयो ये शब्दाः ब्रह्मपरका न प्रतिभान्ति स्म अपि तु जीवात्मनः जडप्रकृतेर्वा बोधकाः प्रतीयन्ते स्म तेषां सर्वेषां ब्रह्मवाचकत्वं समुपपादितम्। यथाप्रसंगमन्यदपि निर्णीतम्। किन्तु यत्र कुत्र श्रुतिषु सांख्यसिद्धान्तानुसारिणः पदार्थाः अपि समुपलभ्यन्ते। ये श्रुत्यर्थं न सम्यगवगच्छन्ति

---

१. बृ० उ० ४।३।२१ २. तत्रैव ४।४।२२

३. ब्र० सू० १।३।४३ म० भा० पृ० ४६

ते तानपि वेदमूलकान् प्रतिपादयन्ति। अतः तेषां वेदमूलकतानिरासार्थं चतुर्थपादस्य आरम्भः।

आद्यद्वितीयतृतीयपादयोः छान्दोग्यप्रभृत्युपनिषत्सु उक्तानाम् उपासनाविषयकवाक्यानां ब्रह्मणि समन्वयः प्रदर्शितः। अस्मिंश्च पादे कठप्रभृत्युपनिषदां येषु वाक्येषु सांख्यमतपोषकाः शब्दाः प्रतिभासन्ते ते सर्वे प्रकृति-प्रधानाव्यक्तादयः ब्रह्मवाचका इति विचारेण सर्ववाक्यानां ब्रह्मणि समन्वयः प्रदर्शयिष्यते।

( प्रतिपाद्यसंकेतः ) अस्मिन् पादे—

( १ ) शंकरमते अव्यक्तादिसंदिग्धपदमात्राणामेव समन्वयः।
( २ ) रामानुजमते स्पष्टतरजीवादिलिंगकवाक्यविचारः।
( ३ ) निम्बार्कमते सांख्याभिमताब्रह्मात्मकप्रधानादिप्रतिपादकवाक्यानां ब्रह्मणि समन्वयः।
( ४ ) मध्वमते अन्यत्रैव प्रसिद्धानां शब्दानां विष्णौ समन्वयः।
( ५ ) वल्लभमते जीवजडसमुदायात्मकार्थनिरूपकतया मतान्तरश्रौतताभ्रमजनकानां प्रकीर्णकवाक्यानां विचारः।

सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

( १।४।१–७ ) एतत्प्रकरणमेतत्प्रतिपादयति यत् 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः'[1]...। इत्यत्र कठोपनिषदो वाक्ये अव्यक्तशब्दः सांख्याभिमतप्रधानवाचको न अपि तु स्थूलशरीरस्य कारणत्वात् सूक्ष्मशरीरस्य वाचकः। सूक्ष्मं हि अव्यक्तशब्दवाच्यम्—'सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते सूक्ष्मस्य अव्यक्तशब्दार्हत्वात्'[2]। तथा—'नाव्यक्तशब्देनाब्रह्मात्मकं प्रधानमिहाभिधीयते...शरीराख्यरूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः'[3]। मध्वाचार्येण पंचमषष्ठसूत्रयोरन्तरे 'प्रकरणात्' इत्येकमन्यत्सूत्रं स्वीकृतम् तथा अष्टमं सूत्रमपि अस्मिन्नेव अधिकरणे संयोज्य 'अव्यक्तेन' विष्णोर्निर्देशः कृतः। तेन च चतुर्थसूत्रस्य ( ज्ञेयत्वावचनाच्च ) इत्यस्य अर्थः सर्वथा भिन्नः प्रतिपादितः। मध्वातिरिक्तानामन्याचार्याणां मते अत्र एतत्तात्पर्यम् यत् अव्यक्तपदेन प्रधानस्य बोधो न भवितुमर्हति। यद्येवमभविष्यत् स ( अव्यक्तः ) ज्ञानस्य विषयः ( ज्ञेयः ) अवक्ष्यत। यतो हि सांख्यमते प्रधानज्ञानेनैव मोक्षो लभ्यते किन्तु एतत् पूर्वं न प्रतिपादितम्। अतः अव्यक्तेन कस्यचित् अन्यस्यैव बोधे तात्पर्यम्।

---

१. क० उ० १।३।११　　२. शां० भा० पृ० ७८७
३. शां० भा० पृ० १९३

तत्र मध्वमते[1] अव्यक्तेन विष्णोर्निर्देशः। यतो हि विष्णुमतिरिच्य श्रुतिः नान्यत् किमपि ज्ञेयमभिधत्ते। तत्रायं हेतुः यत् यन्मूलं तदेव ज्ञेयम्, यश्च विकारः स तु प्रत्यक्ष एवेति न ज्ञेयः।

वल्लभाचार्यमते पूर्वोक्तश्रुतौ अव्यक्तशब्देन भगवत्कृपाया ग्रहणम्। यतो हि सा भगवत्स्वरूपा ब्रह्मवत्सूक्ष्मा वा वर्तते। तथाहि—'बुद्धेरात्मा विज्ञानम्' तद् ब्रह्मविषयकं महद् भवति। ततः परमव्यक्तम्, न प्रकटम् भगवत्कृपा इव, सा तु भगवदधीना'। तथा—'सूक्ष्मं तद् ब्रह्मैव धर्मधर्मिणोरभेदात्। अव्यक्तशब्देन हि सूक्ष्ममुच्यते। तदेव हि सर्वप्रकारेण न व्यज्यते। अर्हत्वात् तदेव अर्हम् योग्यम्। उभयत्राप्ययं हेतुः। तस्माद् धर्मधर्मिणोरभेदात् भगवानेव सूक्ष्ममिति तत्कृपैवाव्यक्तवाच्या[2]।

(१।४।८-१०) एतत्प्रकरणमेतन्निर्दिशति यत् 'अजामेकां लोहित[3]शुक्लकृष्णाम्'—इत्यस्मिन् श्वेताश्वतरमन्त्रे प्रतिपादिता लोहितशुक्लकृष्णरूपा अजा सांख्याभिमता प्रकृतिः प्रधानं वा न, प्रत्युत सा 'ज्योतिरुपक्रमा तेजोऽबन्नरूपा प्रकृतिः या च परमेश्वरात् उत्पन्ना चतुर्विधभूतसमूहस्य जननी च अस्ति। यतो हि छान्दोगाः (सामवेदिनः) तेजोऽबन्नानां[4] परमेश्वरादुत्पत्तिमुक्त्वा यदग्ने रोहितं रूपं तत्तेजसः, यच्च शुक्लं तत् जलस्य, यच्च कृष्णं तदन्नस्य इत्थं तेषामेव लोहितादिरूपं कथयन्ति। अत्र तेषामेव तेजोऽबन्नानां प्रत्यभिज्ञा भवति, अत्र अजामन्त्रः प्रधाननामिकायाः कस्याश्चित् स्वतन्त्रप्रकृतेर्न बोधकः एतत् ब्रह्मवादिनामेतत्कथनेनैव निश्चीयते यत्—'किं कारणं ब्रह्म'[5] सृष्टौ ब्रह्मणः किं सहायकम्, इत्युपक्रम्य 'ते ध्यानयोगानुगता[6] अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इतिकथनेन समस्तजगतः उत्पादयित्री परमेश्वरशक्तिः ब्रह्मणः सहायिका अवगम्यते। वाक्यशेषे अपि 'मायां तु प्रकृतिं विद्यात्' इत्थं तस्या एव शक्तेः प्रतीतिरिति अजामन्त्रेण न काचित् अपि प्रधानाभिधाना स्वतन्त्रप्रकृतिः प्रतिपाद्यते प्रत्युत सैव दैवशक्तिः यत्र नामरूपं च अव्याकृतं या च नामरूपयोः पूर्वावस्था सैवास्मिन् मन्त्रे प्रतिपादिता वर्तते। तेजोऽबन्नरूपस्त्रिरूपश्च तद्विकारः इति सापि त्रिरूपा उक्ता। एवं तस्या अजात्वप्रतिपादनं तथैव काल्पनिकं

---

१. म० भा० पृ० ४७ (कलकत्ता) २. अणुभाष्यम् पृ० ४८०-८१
३. श्वे० उ० १।९।४ ४. छा० उ० ६।२।३,४
५. श्वे० उ० १।१ ६. तत्रैव १।३

यथा अधेनुत्वे अपि वाचो धेनुत्वप्रतिपादनम्,[1] द्युलोकादीनां च अनग्नीनाम् अग्नित्वम्।[2] यथा वा सूर्यस्य मधु[3] प्रतिपादनम्।

रामानुजेन निम्बार्केण च नवमसूत्रस्य 'ज्योतिरुपक्रमा' अस्य शब्दस्य ज्योतिः ब्रह्मलक्षणम् उपक्रमः कारणं यस्या इति व्युत्पत्त्या 'ब्रह्म-कारणिका' इति तथा दशमसूत्रस्य कल्पनाशब्दस्य 'कल्पना' क्लृप्तिः सृष्टिः इति व्युत्पत्त्या कल्पनोपदेशात् इत्यस्य 'जगत्सृष्ट्युपदेशात्' इति च अर्थः कृतः। तथाहि रामानुजः–'सूर्याचन्द्रमसौ धाता यथापूर्व-मकल्पयत्—' इति कल्पनं सृष्टिः अत्रापि 'अस्मान्मायी सृजते विश्व-मेतत्' इति जगत्-सृष्टिरुपदिश्यते···[4] न विरोधः'। वल्लभाचार्येण इदं सूत्रं 'ज्योतिरुपक्रमात्तु' इत्थं स्वीकृतम् तथापि अजाशब्दस्य व्याख्यायाम् शंकर एव अनुसृतः। तन्मते अजाशब्देन ज्योतिरेवोच्यते। अग्निसूर्य-सोमविद्युद्रूपा ब्रह्मणो हंसोक्तचरणरूपा। भगवत्कार्यांशरूपत्वात्। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति श्रुतेश्च प्रथमोत्पन्ना देवता अजाशब्देन उच्यते। तत्र हेतुः उपक्रमात् अत्रैवोपक्रमे 'तदेवाग्निस्तदादित्यस्तद्वा-युस्तदु चन्द्रमाः'"[5] इति।

मध्वाचार्येणापि सूत्रं वल्लभवदेव स्वीकृतम् तथा अधिकरणस्य अय-मर्थः कृतः यत् यज्ञसूचकाः ज्योतिष्टोमादिशब्दा अपि विष्णोरेव सूचकाः। एतन्मते प्रथमे अधिकरणे अव्यक्तेन विष्णोरेव निर्देशः इति तदनुसारम् अस्मिन्नधिकरणे अपि तथा स्वीकृतिः स्वाभाविकी।

(१।४।११-१३) अस्मिन्नधिकरणे पंचानामपि भाष्यकाराणामैक-मत्यं यत् बृहदारण्यकोपनिषदः 'यस्मिन् पंच पंचजनाः[6] आकाशश्च प्रतिष्ठितः' अस्यां श्रुतौ सांख्याभिमतानाम् 'मूलप्रकृतिरविकृतिः···'[7] इत्यादीनां पंचविंशतितत्त्वानां न निर्देशः अपि तु पञ्चानां प्राणानां निर्देशो वर्तते।

(१।४।१४-१५) उक्ताधिकरणत्रितये जगतः सृष्टौ सांख्याभिमत-प्रधानस्य कारणता निराकृता, अस्मिंश्चाधिकरणे एतन्निश्चीयते यत्

---

१. वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः (बृ० उ० ५।८)

२. असौ वा लोकः अग्निः (बृ० उ० ६।२।९)

३. असौ वा आदित्यो देवमधु (छा० ३।१।१)

४. रा० भा० पृ० १९९ ५. अणु भा० पृ० ४९४ (चौ०)

६. बृ० उ० ४।४।१७ ७. सां० का० ३

ब्रह्मणो जगत्कारणतायां न क्वापि विप्रतिपत्तिः। रामानुजनिम्बार्कौ अपि अस्याधिकरणस्येदमेव तात्पर्यं स्वीकुरुतः किन्तु ताभ्यामेतदधिकरणं विगताधिकरणविवेचितसांख्योक्तप्रधानकारणवादस्यैव खंडनमिति स्वीकृतम्। सांख्यस्य अयं सिद्धान्तः यत् ब्रह्मणो जगज्जन्मादिकारणत्वं नोपपद्यते यतो हि कुत्रचित्तु जगतः कारणं 'सत्' प्रतिपादितं वर्तते—तथाहि 'सदेव सोम्येदमग्र[1] आसीत्' कुत्रचिच्च असतः सदुत्पत्तिरुक्ता—'असद्वा[2] इदमग्र आसीत् ततो वै सदजायत। एवमेव प्रतिवेदान्तवाक्यं भिन्नत्वेन सृष्टिविषयप्रतिपादनम्। तथाहि—एतस्मादात्मन आकाशः[3] सम्भूतः' इत्याकाशादिका सृष्टिः आम्नायते। क्वचित् तेजआदिका 'तत्तेजः[4] असृजत', क्वचित् प्राणादिका, 'स प्राणमसृजत[5] प्राणात् श्रद्धाम्' क्वचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते—'स इमान् लोकानसृजत'[6] एवमनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेः न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या, स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्यः। अन्यप्रमाणसिद्धस्य प्रधानस्यैव कारणतेति वेदान्तवाक्यतात्पर्यमिति मन्तव्यमिति भावः। अत्र वेदान्तस्य इदमुत्तरं यत् कार्यविषये एवंभूतायां विप्रतिपत्तौ समुपलभ्यमानायामपि कारणविषये न कुत्रापि विप्रतिपत्तिरुपलभ्यते। यथाभूतो हि एकस्मिन् वेदान्ते (एकस्यामुपनिषदि) सर्वज्ञः, सर्वेश्वरः सर्वात्मा, एकः अद्वितीयः कारणत्वेन निर्दिष्टः तथैव वेदान्तान्तरेषु अपि निर्दिश्यते इत्यादि'स्पष्टीकृतं च एतत्सर्वं शांकरभाष्ये 'सत्यं ज्ञानमनन्तं[7] ब्रह्म' इत्यारभ्य प्रतिवेदान्तमविगीतार्थत्वात्' इत्यन्तेन चतुर्दशसूत्रे तथा अवशिष्टम् पंचदशसूत्रे च। तथैव च रामानुजेनाप्यनुसृत्य पूर्वोक्तयोरुभयोः सूत्रयोः श्रीभाष्ये समर्थितम्—'अतः स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यते इति चतुर्दशसूत्रे आशंक्य 'अतो ब्रह्मैककारणं जगदिति स्थितम्'[8] इत्यन्तेन पंचदशसूत्रे। तथैव च निम्बार्केणापि—'समाकर्षात्' इति पंचदशसूत्रे 'अचेतनस्य प्रधानस्य अन्तः प्रविश्य प्रशासितृत्वाद्यसम्भवात् तदन्तरात्मभूतमव्याकृतं ब्रह्मेत्युच्यते। जगत्कारणप्रतिपादकेषु वाक्येषु लक्षण-

---

१. छां० उ० ६।२।१, २ २. तै० उ० २।७
३. तै० उ० २।१ ४. छा० उ० ६।२।३
५. प्र० उ० ६।४ ६. ऐ० उ० ४।१।२
७. तै० उ० २।१ तथा शां० भा० पृ० ८५२–६१
८. श्री० भा० पृ० २०२–३

सूत्रादिना निर्णीतं ब्रह्मैव ग्राह्यं न प्रधानशंकागन्धः' अपीतिभावः इत्यादिना उक्तम्। वल्लभेन च सांख्यमतं पूर्वमेव निराकृतमवगत्य एतदधिकरणं सामान्यतया समन्वयवादरूपेण गृहीतम्। मध्वाचार्येण चतुर्दशं पंचदशं चोभयं सूत्रं शंकररामानुजानुकूलमेव व्याख्यातं किन्तु पंचदशं सूत्रं पृथगधिकरणं स्वीकृत्य अयमर्थः कृतो यत् यद्यपि सर्वे शब्दाः अन्ते परमात्म(विष्णु)वाचकाः तथापि लोकवेदानुसारं ते अन्यानपि अर्थान् सूचयन्ति, तथाहि—'परमात्मवाचिनः शब्दाः अन्यत्र समाकृष्य व्यवह्रियन्ते—

परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि।
व्यवह्रियन्ते सततं लोकवेदानुसारतः॥[2]

( १।४।१६-१८ ) अस्मिन् प्रकरणे शंकरवल्लभाभ्याम् एतत्प्रमाणितं यत् कौषीतकिब्राह्मणे 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्यः'[3] इति श्रुतौ वेदितव्यरूपेण य उपदिष्टः स न जीवः नापि च मुख्यः प्राणः अपि तु परमात्मास्ति तथाहि—'परमेश्वर एवायमेतेषां पुरुषाणां[4] कर्ता'......इत्यादि। अयमेव भावः वल्लभेनापि स्वभाष्ये[5] विस्तरेणाभिद्योतितः। रामानुजनिम्बार्कौ च अधिकरणस्य सामान्यार्थं स्वीकुर्वन्तौ अपि उद्धरणवाक्ये 'पुरुष'शब्दस्य सत्त्वात् एतद् अधिकरणं सांख्यमतनिराकरणेन विशेषतया सम्बध्नीतः तथाहि—'अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः......पुरुषो वा अभिधीयते। अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते'[6]... तथा तस्मादस्मिन् वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणो वेदितव्यतया अभिधानान्न तन्त्रसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयते इति सिद्धम्'[7] इति रामानुजः। तथा, 'यो वै बालाके' इति वाक्ये धर्माधर्मकर्मफलभोक्ता तन्त्रोक्तपुरुषो वेदितव्यः इति न वक्तुं शक्यम्, परमात्मैवात्र वेदितव्यत्वेन निर्दिष्टः, तन्त्रोक्तपुरुषप्रमाणाभावात्'[8] इति निम्बार्कः।

---

१. निं० भा० पृ० २३२

२. म० भा० पृ० ५० ( पद्मपुराणवचनम् )

३. कौ० ब्रा० ४।१९ ४. शा० भा० पृ० ८६६

५. अणुभाष्ये १२९-३० पृष्ठयोः द्रष्टव्यम् ( कलकत्ता-संस्करणे )

६-७. रा० भा० पृ० २०५-६ ८. नि० भा० पृ० २३३

( १।४।१९-२२ ) एतत्प्रकरणमेतन्निर्दिशति यत् बृहदारण्यकोपनिषदः 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति'[1]......' इति मन्त्रे यस्य आत्मनो निर्देशः स विज्ञानात्मा ( जीवः ) न प्रत्युत परमात्मा अस्ति, तथाहि शंकरः—'परमात्मोपदेश एवायम्। कस्मात् वाक्यान्वयात्। वाक्यं हीदं पौर्वापर्येण अवेक्ष्यमाणं परमात्मानं प्रतिअन्वितावयवं[2] लक्ष्यते'। तथा च वल्लभः—इदं वाक्यं भगवत्येव अन्वेति। नात्र जीव-प्राधान्यगन्धः[3] अपि'...... । तथा च निम्बार्कः—'आत्मा वा अरे द्रष्टव्यः इत्यादिना परमात्मा[4] द्रष्टव्यत्वेन ग्राह्यः' रामानुजश्च अस्मिन्नपि अधिकरणे सांख्याभिमतपुरुषस्यैव निराकरणं मनुते-'किमस्मिन् वाक्ये द्रष्टव्यतयो-पदिश्यमानस्तन्त्रसिद्धः[5] पुरुष एव अथवा सर्वज्ञः सत्यसंकल्पः सर्वेश्वरः' ? सर्वेश्वर एव अस्मिन् वाक्ये प्रतीयते......इत्यादि।

एतदधिकरणम् अतिशयेन महत्त्वपूर्णम्। यतो हि अत्र अयं संदेहः यत् यदि उक्तश्रुतौ आत्मनस्तु कामाय सर्वं प्रियं भवति इत्यत्र आत्मन्-शब्दो जीवस्य वाचकः तदा तस्यामेव श्रुतौ 'आत्मनस्तु विज्ञानेन सर्वं विज्ञातं भवति' इत्यत्र आत्मन् शब्दः कथं ब्रह्मणो बोधकः संजातः। अस्मिन् विषये आश्मरथ्यस्य औडुलोमेः काशकृत्स्नस्य चैतेषां त्रयाणां त्रयो विचाराः प्रदत्तास्तेषु चान्तिमस्यैव सिद्धान्तपक्षः। द्वाविंशं सूत्रं काशकृत्स्नस्य मतमभिव्यनक्ति। अस्य च विभिन्ना अर्थाः कृताः। शंकरस्य तत्रायमभिप्रायो यत् परमात्मा एव मुक्तेः पूर्वं जीवात्मनः स्थितौ तिष्ठति अर्थात् 'अस्यैव परमात्मनः अनेनापि विज्ञानात्मभावेन अवस्था-नात् उपपन्नमिदमभेदेनोपक्रमणमितिकाशकृत्स्न आचार्यो मन्यते। तथा च ब्राह्मणम्—'अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि'[6] इत्येवजातीयकं परस्यैवात्मनो जीवभावेन अवस्थानं[7] दर्शयति। एत-स्यैतत्तात्पर्यं यत् ब्रह्मजीवयोस्तादात्म्यम् अस्ति।

किन्तु रामानुजनिम्बार्काभ्याम् 'अवस्थितेः' इत्यस्य अन्य एवार्थः स्वी-कृतः। तयोर्विचारेण 'अवस्थितेः' इत्यस्य 'जीवात्मनि अवस्थानात्' अयमर्थः। इत्थं जीवशब्दे ब्रह्मणः अर्थः अन्तर्निहितो वर्तते तथा च सर्वेषां जीवानां ब्रह्मणः शरीरत्वात् सर्वे जीवात्मवाचकाः शब्दाः ब्रह्म-

---

१. बृ० उ० २।४।५ २. शां० भा० पृ० ८४१
३. अणुभाष्ये पृ० ५२२-२३ ४. नि० भा० पृ० २३६
५. रा० भा० पृ० २०७ ६. छा० ६।३।२
७. शा० भा० पृ० ८८८

वाचकाः । 'य आत्मनि तिष्ठन् आत्मनः अन्तरः यम् आत्मा न वेद । यस्यात्मा शरीरम्'......'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'[1] ।

'जीवात्मनि स्वनियम्ये' 'अन्तः प्रविष्टः शास्ता जनानाम्' इत्यादौ प्रसिद्धस्य परमात्मनो नियन्तृत्वेन अवस्थिते हेतोर्नियम्यपदेनोपक्रमादौ नियन्तृपरिग्रहः[2] ।

इत्थं च तौ द्वावपि अन्तर्यामिणमनुलक्ष्य जीवब्रह्मणोर्व्यक्तिगतविभिन्नतां स्पष्टीकृतवन्तौ ।

वल्लभेन च 'अवस्थितेः' इत्यस्य 'अवस्था' अर्थः स्वीकृतः तथा जीवस्तेन भगवतः केवलम् अवस्थाविशेषः प्रतिपादितः । अतः ये शब्दाः जीववाचकाः तेभ्यः सर्वेभ्यः ब्रह्मणो बोधो जायते, 'तस्माज्जीवोपक्रमो भगवत एव अवस्थाविशेषो जीव इत्यस्य लिंगम्'[3] ।

एवंभूतायां परिस्थित्याम् एतन्निश्चेतुं सर्वथा दुष्करं यत् ब्रह्मजीवयोः अन्तरं प्रतिपादयता सूत्रकारेण केन मुख्यलक्ष्येण अयम् अवस्थितिशब्दः प्रयुक्तः । स्यात् , एतच्छब्दप्रयोगे तस्य किमपि न विशेषतात्पर्यं भवेत् ।

( १।४।२३–२७ ) इदमधिकरणम् एतत् प्रदर्शयति यत् ईश्वरो जगतः न केवलं निमित्तकारणमपि तु उपादानकारणमप्यस्ति इति ।

अत्रापि रामानुजेन सेश्वरसांख्यस्य निराकरणमेव स्वीकृतम् । यस्यानुसारम् ईश्वरः केवलं निमित्तकारणम् प्रधानं च स्वातन्त्र्येण उपादानकारणम् । वल्लभेन शंकरस्यैव अनुसरणं कृतम् । षड्विंशे सूत्रे 'परिणामात्' एव शब्दः शंकराभिमतविवर्तपरः अभिमतः किन्तु रामानुजेन 'परिणामात्' एतत् पृथक् सूत्रं स्वीकृत्य एतत्प्रमाणितं यत् एक एव परमात्मा आत्मानं जगद्रूपे परिणतं करोति अतः पृथिवी, जलम् , अग्निः, अन्तरिक्षम् एतत्सर्वम् अस्यैव रूपम्—'ब्रह्म......जगच्छरीरतया आत्मानं परिणमयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः । तथैव बृहदारण्यके[4] कृत्स्नस्य जगतो ब्रह्मशरीरत्वं ब्रह्मणस्तदात्मत्वं चाम्नायते—पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्......यस्य आपः शरीरम्......यस्य अग्निः शरीरम् । सुबालोपनिषदि[5] च पृथिव्यादीनां तत्त्वानां परमात्मशरीरत्वमभिधाय वाजसनेयके अनुक्तानामपि

---

१. रा० भा० पृ० २१०  
२. नि० भा० पृ० २३७  
३. अ० भा० पृ० ५२७  
४. १९३ बृ० उ० ३।७।३  
५. १९४ सु० उ० ७

तत्त्वानां शरीरत्वं ब्रह्मण आत्मत्वं च श्रूयते—यस्य बुद्धिः शरीरम्, यस्य अहंकारः शरीरम्, यस्य चित्तं शरीरम्। एवं ब्रह्मणो नामरूपविभागार्ह-स्थूलचिदचिद्वस्तुशरीरतया बहुभवनसंकल्पपूर्वको जगदाकारेण परिणामः[1] श्रूयते'।

अस्य पादस्य अन्तिमसूत्रस्य 'एतेन सर्वे व्याख्याता 'व्याख्याताः' इत्यस्य व्याख्या शंकरेण वल्लभेन चेत्थं कृता—'एतेन प्रधानकारणवाद-प्रतिषेधन्यायकलापेन सर्वे अण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः'[2]। तथा—'एतेन ब्रह्मवादस्थापनपूर्वकसांख्यमतनिराकरणेन सर्वे पातञ्जलादिवादाः व्याख्याता'[3]।

किन्तु रामानुजनिम्बार्काभ्यामेतत्सूत्रमित्थं व्याख्यातम्—'एतेन, पाद-चतुष्टयोक्तन्यायकलापेन, सर्ववेदान्तेषु जगत्कारणप्रतिपादनपराः सर्वे वाक्यविशेषाः चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मप्रतिपादनपरा व्याख्याता'[4]। तथा—'एतेन अधिकरणसमुदायेन सर्वे वेदान्ता ब्रह्मपरत्वेन व्याख्याताः व्याख्याताः'। यस्यैतत्तात्पर्यं तत्सर्वे वेदान्ताः केवलं ब्रह्म[5] एव निर्दिशन्तीति।

एवं व्याख्यातस्य अस्य सूत्रस्य उभयप्रकारायां व्याख्यायाम् इदमवधेयं वर्तते यत् (१) शंकरेण चतुर्दशसूत्रतः सप्तविंशसूत्रं यावत् चतुर्षु अधिकरणेषु सांख्यसिद्धान्तस्य क्वापि नामोल्लेखः अपि न कृतः।

( २ ) रामानुजेन च येन केनापि रूपेण प्रत्येकमधिकरणं सांख्यसिद्धान्त-निराकरणेनैव सम्बद्धम्।

इत्थं द्वयोरुपसंहारेण एतत्स्पष्टं यत् शंकरेण पादारम्भे या एवं प्रतिज्ञा कृता आसीत् यत् 'श्रुतिवाक्यानां यान् कतिपयशब्दान् वाक्यानि च प्रधानकारणवादिनः सांख्यसिद्धान्तपरकत्वेन आकलयन्ति तेषां निराकरणपूर्वकं वेदान्तसिद्धान्तपरकताप्रदर्शनमेवास्य पादस्योद्देश्यम्'[6] सा न परिपालिता यतो हि प्रायः पादार्धं यावत् तेन कृतस्य सांख्यसिद्धान्तनिराकरणस्य क्वापि संकेतः अपि नोपलभ्यते, रामानुजनिम्बार्काभ्यां च शंकरमनुसरद्भ्यामपि समानरूपेण सम्पूर्णपादे सांख्यसिद्धान्त एव निराकृतः।

---

१. १९५ रा० भा० पृ० २१४–१५

२. शां० भा० पृ० ९१९ ३. अणु भा० पृ० ५४२

४. रा० भा० पृ० २१६ ५. निं० भा० पृ० २४१

६. यदुक्तं प्रधानस्याशब्दत्वं तदसिद्धम् । कासुचिच्छाखासु······अतस्तेषामन्यपरत्वं दर्शयितुं परः संदर्भः प्रवर्तते ( शां० भा० पृ० ७७५ )

मध्वाचार्यस्य च व्याख्या अन्येषां, चतुर्णाम् अपि आचार्याणाम् व्याख्यातः सर्वथा भिन्ना। तेन सम्पूर्णपादे प्रायः एतदेव प्रदर्शयितुं प्रयसितं यत् सर्वे शब्दा विष्णुवाचकाः, अनयैव च दृष्ट्या तेन सर्वाणि सूत्राणि व्याख्यातानि। पञ्चदशसूत्रे तेन स्पष्टमेतत्प्रतिपादितं यत् मुख्यरूपेण सर्वे शब्दा विष्णुवाचकाः किन्तु व्यावहारिकपरिस्थित्यां ते जगतः अन्यवस्तूनामपि द्योतकाः। इत्थं यदि एकं वस्तु विष्णुवाचक-शब्दैर्निर्देष्टुं शक्यते—यतो हि सर्वेषामपि वस्तूनामेकमात्राधारः विष्णु-रेव, तदा 'जीवमुख्यप्राणलिंगात्'—इति सूत्रानुसारेण जीवः प्राणश्चापि विष्णुवाचकशब्दैरेव निर्देश्यौ भवितुं शक्येते। एतदाधारेणैव तेन सप्त-दशसूत्रतः अग्रे सर्वेषां सूत्राणां व्याख्या कृता।

इत्थं मध्वानुसारेण एष समस्तः पादः एतत्तात्पर्यमपि पिपर्ति यत् अज-अव्यक्त-प्रकृत्यादिशब्दाः विष्णुबोधकाः इति तद्व्याख्या यद्यपि स्वातन्त्र्येण प्रातिस्विकी, अंशतश्च काल्पनिकी तथापि सर्वथा सा प्रथमाध्यायशीर्षकं समन्वयमाधृत्य कृतेति सामञ्जस्यपरिपूर्णा।

---

## उपसंहारः

प्रथमाध्यायस्य आद्यपादत्रये छान्दोग्योपनिषदः प्रायः सर्वेषां सन्देहा-स्पदमुख्यश्रुतिवाक्यानां संग्रहः। प्रसंगतः केनचित् विशेषकारणेनैव अन्योपनिषदां वाक्यानि समुद्धृतानि।

प्रथमाध्याये ब्रह्मनिरूपणं वर्तते किन्तु 'जन्माद्यस्य यतः' इत्यारभ्य 'श्रुतत्वाच्च' इति सूत्रं यावत् ब्रह्मणः परिभाषायाः तस्य जगत्कारणत्वस्य च निश्चयानन्तरम् अग्रे अध्यायस्य शेषसूत्रेषु श्रुतिवाक्यैरेतदेव जिज्ञा-सितं यत् सन्देहास्पदश्रुतिवाक्यानां विशेषशब्दाः ब्रह्मणो वाचकाः सन्ति अन्यस्य वा। एतत् किन्तु निश्चितं महत्त्वपूर्णं च वर्तते यत् वेदान्तसूत्रैः सांख्यसिद्धान्तस्य पूर्णरूपेण विरोधः कृतः। प्रथमाध्याय-प्रथमपादस्य 'ईक्षतेर्नाशब्दम्' इत्यारभ्य 'श्रुतत्वाच्च' इति सूत्रं यावत् ईक्षत्यधिकरणेन-पूर्वमेवेत्थं घोषितं यत् जगतः कारणं सांख्याभिमतं प्रधानं नास्ति। ततः प्रथमाध्यायस्य चतुर्थपादे सांख्यसिद्धान्तानुसारि-णीनां व्याख्यानां पुनरपि विरोधः कृतः। अतः एतत्स्वीकर्तुं सम्भवतः न असंगतं यत् समस्ते प्रथमाध्याये सूत्रकारः सांख्यसिद्धान्तस्याक्षेपेभ्यः वेदान्तम् अभिरक्षितुं सतर्कः अवर्तत। अन्येषां प्राचीनरूढिवादिसिद्धान्ति-

नां वेदं प्रति याः अपि धारणाः स्युः सांख्यं तु केवलम् एवं भूतं मतं यस्य अनुयायिनः एतत्प्रमाणयितुं सर्वदा अचेष्टन्त यत् तेषामेव सिद्धान्ताः श्रुतिवाक्येषु अभिव्यक्ता वर्तन्ते । इत्थं सांख्यानुयायिनामेषा धारणा वर्तते यत् वेदान्तसिद्धान्तः—यश्च श्रुतिवाक्यसाहाय्येन चेतनब्रह्मणः सत्ताम्, जगतः तस्यैव एकमात्रकारणसत्तां च स्वीकरोति-समुचितो न वर्तते । यतो हि तैः सर्वैः श्रुतिवाक्यैः प्रकृतेः, तदुत्पन्नमहदाद्यन्यतमतत्त्वस्य, पुरुषस्य (सांख्यानुसारं जीवस्य) वा बोधो जायते । फलतः एवंभूतानर्गलव्याख्यानेभ्यः उपनिषदां रक्षणमेव वेदान्तस्य कृते अत्यन्तमावश्यकमासीत् यदर्थं सूत्रकारेण पूर्णः प्रयासः ब्रह्मसूत्रस्य प्रथमाध्यायस्थैः तैः सन्देहास्पदश्रुतिवाक्यैः कृतः येषां व्याख्याः केनापि कारणेन सन्देहास्पदं भवितुं शक्नुवन्ति स्म । कानिचित् परिगणितानि तु वाक्यानि[1] वस्तुतः रहस्यपूर्णानि येषां स्वमत्यनुसारमनेके अर्थाः कर्त्तुं शक्यन्ते । एवंभूतान्यपि वाक्यानि वर्तन्ते येषां विषये नैतत् स्पष्टीकर्त्तुं शक्यते यत् तेषां[2] व्याख्या किमर्थम् अपेक्षिता अवागम्यत । किन्त्वस्मिन् विषये अस्माभिः सूत्रकारस्य आलोचनायाः दुःसाहसं कर्त्तुमेतदर्थं न पार्यते यत् अद्यावधि प्राच्यः पाश्चात्यो वा न कश्चिदपि एवंभूतः विद्वान् अभवत् नापि चाग्रे सम्भविष्यति यः सूत्राणां रचनाकालीनधार्मिकपरिस्थितिभिः, दार्शनिकपद्धतिभिः मीमांसारहस्यैश्चेत्थं परिपूर्णतया परिचितः स्यात् यः युक्तिप्रामाण्यप्राबल्येन दृढतया एतन्निर्णेतुं शक्नुयात यत् कतमद् वैदिकवाक्यं विशेषेण व्याख्यार्हं कतमच्च नेति ।

---

## द्वितीयाध्यायस्य प्रथमः पादः

पादपरिचयः—प्रथमाध्याये एतत् प्रमाणितं यत् श्रुतयः ऐकमत्येन जगतः निमित्तोपादानोभयकारणमेकमात्रं ब्रह्म समुद्घोषयन्ति । तच्च ज्ञानस्वरूपम् । एतदतिरिच्य एतदपि प्रमाणितं यत् न किमपि एवं

---

१. यथा—ब्र० सू० १।३।८ इत्यत्र 'एष सम्प्रसादः……इत्यादि (छा० ८।३।४) छान्दोग्यश्रुतेः व्याख्यानम् ।

२. यथा—ब्र० सू० १।३।२७ इत्यत्र ब्रह्मनिरूपणावसरे 'अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति (बृ० ३।९।१) इत्यस्य व्याख्यानम् ।

भूतं वाक्यं वर्तते यत् वेदान्तविरुद्धं मतं स्थापयितुं पारयेत्। सांख्यं तु अंशमात्रेणापि तथाकर्तुमसमर्थम्।

इदानीं स्वपक्षे स्मृति-तर्कविरोधपरिहारम्, प्रधानादिकारणवादानाम् भ्रान्तिमूलकताम्, उपनिषत्सु च उक्तसृष्ट्यादिप्रक्रियाया अविरोधादिविषयान् प्रतिपादयन् श्रुतीनां श्रुतिभिः स्मृतिभिश्च अविरोधं प्रदर्शयितुं द्वितीयाध्यायस्य प्रारम्भः। अस्य आद्यपादद्वये श्रुतिनिरपेक्षतर्कसाहाय्येन वेदान्तविरुद्धं प्रत्येकाक्षेपं निराकुर्वता सूत्रकारेण एतत्प्रदर्शितं यत् वेदान्तातिरिक्तः कश्चिदपि एवंभूतः सिद्धान्तो न वर्तते यो निर्दोषास्पदतया स्थापयितुं शक्येत।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

( १ ) शंकरमते सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयस्य विरोधपरिहारः।
( २ ) रामानुजमते सांख्यादिस्मृतिभिर्बाधस्य परिहारः।
( ३ ) निम्बार्कमते परैः स्वसिद्धान्ते उद्भावितानां दोषाणां निराकृतिः।
( ४ ) मध्वमते च युक्तीनामविरोधः।
( ५ ) वल्लभमते च ब्रह्मविषयकसांख्यपक्षनिराकरणपूर्वकं नानाविधानां श्रुतिविप्रतिषेधानां युक्त्या परिहारः।

## सविश्लेषणप्रत्यधिकरणभाष्यपञ्चकसमीक्षणम्—

( २।१–२ ) अस्याध्यायस्य प्रथममधिकरणम् इमम् आक्षेपं निराकरोति यत् प्रधानं यदि जगतः कारणं न स्वीक्रियेत तदा कपिलस्मृतिः निरर्थिका स्यात्। अयमाक्षेपः सूत्रकारेण इत्थं निराकृतः यत् यत्र स्मृतिद्वयविरोधः स्यात् तत्र श्रुत्यनुगामिनी स्मृतिरेव प्रामाणिकी मन्तव्या। सांख्यसिद्धान्तप्रतिपादिका कपिलस्मृतिः प्रधानं जगतः कारणं स्वीकरोति। मनुस्मृत्यादयश्च स्मृतयः श्रुतिप्रतिपादितं ब्रह्मैव जगतः कारणमिति मन्यन्ते। एवंभूते व्यतिकरे, सम्प्राप्यमाणे उक्तविरोधे, वेदानुगामिनीत्वेन मन्वादिस्मृतीनाम् एव आधिक्येनप्रामाण्यम्।

अत्र अधिकरणसामान्यार्थे सर्वेषामाचार्याणाम् ऐकमत्यम् किन्तु द्वितीयसूत्रस्य 'इतरेषां चानुपलब्धेः' इत्यस्य व्याख्या मतभेदेन कृता वर्तते।

शंकरवल्लभानुसारेण तस्य अयमर्थः यत् सांख्ये येन रूपेण महदादितत्त्वानां स्वीकृतिस्तेन रूपेण तेषां वर्णनं श्रुति-स्मृतिषु लोके वा न

कुत्रापि उपलभ्यते। अतः सांख्यस्मृतेः अप्रामाणिकत्वे न कश्चिद् संदेहः। शंकरेणायमेव भावः इत्थं प्रकटीकृतः—'प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि न तानि वेदे लोके [1]वोपलभ्यन्ते'। तथा च वल्लभः—'प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे [2]चानुपलब्धेः'।

रामानुजनिम्बार्कयोरेतत्कथनं यत् प्रधानस्य सिद्धान्तः सांख्येतर-मन्वादिस्मृतिषु नोपलभ्यते अतः सांख्यस्मृतिः न प्रमाणत्वेन ग्रहणीया प्रतिभाति। तथाहि रामानुजः—'इतरेषाम् मन्वादीनाम्...श्रुतिप्रसिद्धानां कपिलदृष्टप्रकारेण तत्त्वानुपलब्धेः श्रुतिविरुद्धा कपिलोपलब्धिः भ्रान्ति-मूलेति न तया यथोक्तो वेदान्तार्थः चालयितुं शक्यः[3]। तथा च निम्बार्कः—'इतरेषां मन्वादीनां वेदस्य प्रधानपरत्वानुपलब्धेश्च वेदविरुद्ध-[4]स्मृतेरप्रामाण्यम्'।

रामानुजनिम्बार्कयोर्व्याख्यानं शब्दान्तरेण प्रथमसूत्रव्याख्यानस्य आंशिकपुनरुक्तिमात्रम्।

मध्वाचार्येण चास्य अयमर्थः स्वीकृतः यत् अन्यासु स्मृतिषु येषां फलादिकानां वर्णनं कृतं वर्तते तेषां साक्षादनुभवाभावात् न तासां प्रामा-णिकत्वम्। तथाहि—'इतरेषां तासु स्मृतिपूक्तानां फलादीनां प्रत्यक्षतः अनुपलब्धेरप्रामाण्यं [5]तासाम्'।

( २।१।३ ) योगेन[6] अपि प्रधानमेव जगतः स्वतन्त्रं कारणं स्वी-कृतम्। लोकवेदाप्रसिद्धं महदादि च तत्कार्यम्। अतः सांख्यस्मृतिनिरा-करणेन पूर्वोक्तरीत्या श्रुतिविरुद्धकल्पनाकारिणी योगस्मृतिरपि निराकृता।

---

१. शां० भा० पृ० ९३८  २. अ० भा० पृ० ५४९ ( चौ० )

३. रा० भा० पृ० २१९  ४. नि० भा० पृ० ५५

५. म० भा० पृ० ५५

६. ( i ) सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ( पा० यो० सू० १।४५ ) ( ii ) विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ( तत्रैव २।१९ )

७. सतीष्वप्यन्यबहुस्मृतिषु सांख्ययोगस्मृतिषु सांख्ययोगस्मृत्योरेवं निराकरणे अयं हेतुः यत् पुरुषार्थसाधनरूपेण तयोः ख्यातिरस्ति। शिष्टैश्चपरिगृहीते ते स्मृती सांख्ययोगाभिपन्नम्' इत्यादि श्रौतलिंगेन पुष्टे वर्तते। योगनिरपेक्षसांख्यज्ञानेन योग-मार्गेण च न मोक्षप्राप्तिः इति इह तन्निराकरणम्। तथापि यस्मिन्नंशे सांख्ययोग-स्मृत्योः श्रुतिभिर्न विरोधः तस्मिन्नंशे तत्प्रामाण्यमभीष्टम्।

( २।१।४-११ ) अस्मिन् अधिकरणे एष आक्षेपो निराकृतः यत् चेतनं शुद्धं च ब्रह्म जडस्य जगतः कारणं न भवितुमर्हति। शंकरेण स्वकीये भाष्ये इत्थमुदाहृतं यत् चेतनशरीरात् जडानां नखलोमादीनामुत्पत्तिः जडेभ्यो गोमयादिभ्यश्च वृश्चिकादीनामुत्पत्तिरिति चेतनस्योपादानं चेतनमेव जडस्य च जडमेवेत्येष नियमो न सार्वत्रिकः। मध्वमतिरिच्य अन्यैः सर्वैः आचार्यैः अधिकरणस्य इदमेव सर्वसाधारणं तात्पर्यं स्वीकृतम्। किन्तु सप्तमं सूत्रम् 'असदिति चेन्न प्रतिषेधमात्रत्वात्' एतद् भिन्नतया व्याख्यातम्। तत्र शंकरस्यायमाशयः 'चेतनं, शुद्धं, शब्दादिहीनं च ब्रह्म तद्विपरीतस्य अचेतनस्य अशुद्धस्य शब्दादिमतश्च कार्यस्य कारणम्। एवं स्वीकृते उत्पत्तेः प्राक् कार्यमसत् स्यात् इति दोषस्तु वक्तुं न शक्यते, यथैव हि इदानीमपि इदं कार्यं कारणात्मना सत्, एवम् उत्पत्तेः प्रागपि इति गम्यमानत्वात् यथैव हि इदानीमपि ( उत्पत्त्यन्तरमपि ) कार्यं कारणात्मना सद् वर्तते तथैव रीत्या उत्पत्तेः प्रागपि इति तात्पर्यम्। अतः शब्दादि यत्कार्यं कारणात्मना हीनं उत्पत्तेः प्राक्, इदानीं वा वक्तुं न शक्यते। इत्थं च कार्यं सर्वदा कारणे वर्तते। स्वतन्त्ररूपेण कारणरूपेण वा तदस्तु इति उत्पत्तेः पूर्वमपि जगदादिकार्यं कारणस्वरूपे स्वकीये कारणे वर्तते—'कारणात्मना तु सत्वं कार्यस्य प्रागुत्पत्तेर'विशिष्टम्'[1]।

रामानुजनिम्बार्कौ चैतत्सूत्रमित्थं व्याचक्षाते यत् कारणे कार्यसत्तायाः कदापि प्रतिषेधः कर्तुं न शक्यते। यतो हि एतत्पूर्वं 'दृश्यते तु' इत्यस्मिन् सूत्रे इत्थमेव केवलं निर्दिष्टं यत् कार्यकारणयोः समानप्रकृतित्वं न सार्वत्रिकम्। न चैतत् यत् कारणं कार्यापेक्षया सर्वथा भिन्नं पृथक् च तिष्ठतीति—'यदि कार्यभूताज्जगतः कारणभूतं ब्रह्म विलक्षणं तर्हि कार्यकारणयोर्द्रव्यान्तरत्वेन कारणे परस्मिन् ब्रह्मणि कार्यं जगत् न विद्यते इत्यसत एव जगदुत्पत्तिः प्रसज्यते इति चेत्'''द्रव्यैक्यमस्त्येव'[2]।

तथा नतूपादानादुपादेयस्य विलक्षणत्वे उत्पत्तेः पूर्वं तदसद्भवितुमर्हति इति नैष दोषः, पूर्वसूत्रे प्रकृतिविकारयोः सर्वथा सादृश्यनियमस्य प्रतिषेधमात्रत्वात्[3]।

---

१. शां० भा० पृ० १७०     २. रा० भा० पृ० २२१
३. नि० भा० पृ० २५०

वल्लभस्यैतत्कथनम् यत यदि एतदेव मन्येत यत् श्रुतौ असत एव कारणत्वमुक्तं तदा अस्माभिरेतदुच्यते यत् एवं नास्ति यतो हि तत्र एतदेव केवलं तात्पर्यं यत् असत् कदापि सतः कारणं न भवितुमर्हति— 'श्रुतौ कारणत्वेन असदुक्तमिति चेन्न प्रतिषेधार्थत्वमेव वचनम् 'कथमसतः सज्जायेतेति''[1]।

एतदिहावधारणीयं यत् सम्पूर्णमेतदधिकरणं पूर्णतया परिणामवादसिद्धान्ताधारे स्थितं वर्तते। विवर्तवादस्य अत्र नैकेन नामापि समुल्लिखितम्। एतदपि द्रष्टव्यं यत् कार्यकारणसमानतां स्वीकर्तृणः सांख्यस्य, प्रपंचात्मकसंसारकारणभूतसत्त्वरजस्तमोविशिष्टप्रधानस्य च निराकरणमेव अस्याधिकरणस्य लक्ष्यम्।

( २।१।१२ ) एतस्य एतत्तात्पर्यं यत् इत्थं प्रधानकारणवादे[2] निराकृते प्रधानमल्लनिवर्हणन्यायेन अण्वादिकारणवादस्य नैयायिकानां माध्वानाम् असत्कार्यवादस्य ( आरम्भवादस्य ) च निराकरणे एषा एव युक्तिः बोध्या यतो हि शिष्टैस्ते वादाः न स्वीकृताः।

मध्वाचार्येण चतुर्थसूत्रतः द्वादशसूत्रं यावत् अन्य एव अर्थः कृतः। तन्मते चतुर्थं सूत्रं स्वतन्त्रमधिकरणम्। तस्यायमर्थः यत् श्रुतिः तदनुसारिणी स्मृतिश्च अनादिः सर्वथा निर्दोषा चेति तत्प्रामाण्यस्य प्रमा-

---

१. अणुभाष्ये पृ० ५६४ ( चौ० )

२. स्वाभिमतार्थकथनं वादः। स द्विविधः सत्कार्यवादः असत्कार्यवादश्चेति। सत्कार्यवादः अपि द्विविधः परिणामवादः विवर्तवादश्चेति। सांख्यरामानुजानुयायिनां परिणामवादः। तन्मते कारणमेव कार्यरूपे परिणमति अतएव कार्यकारणे अभिन्ने सत्ये च। यथा दुग्धं दधिरूपे परिणमति इति दधि कार्यान्तरं दुग्धाच्चाभिन्नम्। ब्रह्मवादिनां वेदान्तिनाम् विवर्तवादः। तन्मते कारणमेव कार्यरूपे भासते अतः ब्रह्मवादिनां वेदान्तिनाम विवर्तवादः। तन्मते कारणमेव कार्यरूपे भासते। अतः कारणमेव सत्यम् कार्यं चासत्यम् यथा शुक्तौ भासमानं रजतम् रज्जौ वा भासमानः सर्पः। अनन्तरं च अधिष्ठानभूतायाः शुक्तेः रज्ज्वाः वा ज्ञाने पूर्वज्ञातं रजतम् सर्पो वा निवर्तते। तथैव ब्रह्मज्ञाने जगदादिभेदप्रपंचनिवृत्तिः। नैयायिकानां माध्वानां च असत्कार्यवादः। अयमेव चारम्भवादः उच्यते। एतन्मते पूर्वम् असद् एव घटादिः कार्यम् दंडचक्रादिसामग्रीयुक्तमृदादिकारणेभ्यो भिन्नमुत्पद्यते अतः कार्यकारणे भिन्ने। एवमेवयोगाचारबौद्धानां क्षणिकविज्ञानवादः, माध्यमिकबौद्धानां च शून्यवादः आर्हतानां स्याद्वादश्चेत्यादयो ज्ञेयाः।

णान्तरापेक्षया नितरां भिन्नत्वात् तत्प्रामाण्ये न कथमपि सन्देहः कर्त्तुं युज्यते—

ऋग्यजुःसामाथर्वाख्या मूलरामायणं तथा ।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ॥
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतः प्रामाण्यमेतेषां नात्र किंचिद् विचार्यते[1] ।

पञ्चमषष्ठ्योरन्यदधिकरणम् । एतद् एनमाक्षेपं समाधत्ते यत् श्रुति-प्रतिपादितं युक्तिसंगतं न वर्तते । यतो हि 'मृद् अब्रवीत्' इति वाक्ये पृथ्वी ब्रुवती प्रतिपादिता यच्च सर्वथा असम्भवम् । एतत्समाधाने तस्यै-तत्कथनं यदत्र मृदभिमानिन्यां चेतनदेवतायां तात्पर्यम् । तत्र चैका विशेषा शक्तिः या च महात्मसु एव समुपलभ्यते । तथाहि—'मृदाद्यभि-मानिदेवतैव तत्र व्यपदिश्यते । तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनु-गतिश्च सर्वत्र । अतस्तासां सर्वमुक्तं युज्यते । तासां सामर्थ्यं महद्भिर्भ-विष्यत्पुराणे इत्थमुक्तम्—

'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।
अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ॥
ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः[2] ॥

सप्तमसूत्रतः द्वादशसूत्रपर्यन्तं पृथगधिकरणम् । तच्चेदं प्रमाणयति यत् 'असदेवेदमग्र आसीत्, असतः सदजायत' अत्र असतः सतः कारण-स्वीकृतिर्न विरोधात्मिका । यतो हि एतत्कथनस्य केवलमेतदेव तात्पर्यं यत् असत् ( सत्तारहितम् ) न कारणं भवितुमर्हति किं बहुना, प्रलय-समये अपि संसारस्य तत्कारणस्य च असत्त्वं युक्तिविरुद्धम् । यतो हि सत्त्वपक्षे दृष्टान्तानां सत्त्वे अपि असत्वपक्षे तदभावात् । एतदतिरिच्य नान्या काचिद् युक्ति र्यस्या आश्रयः सम्भवेत् । तथात्वे हि मोक्षादयः अपि तत्सर्वम्, यदद्यावधि सत्यत्वेन स्वीक्रियमाणताम् समावहति, परि-त्याज्यं स्यात् । एवमेव युक्तिसंगतदृष्टान्तानामुपलब्ध्या अनुपलब्ध्या च श्रुतिविरुद्धा अन्ये सिद्धान्ता अपि निराकर्त्तुं शक्यन्ते ।

( २।१।१३ ) अस्य सूत्रस्य व्याख्या सर्वैरेव आचार्यैः स्वमतानुसारम् विशेषरीत्या कृता । तत्र शंकरस्यायमभिप्रायः यत् परब्रह्मणः जगतः कार-णत्वस्वीकारे यद्येवमुच्येत यत् तथात्वे सति भोक्तृभोग्य-विभागस्य अभावः प्रसज्येत तथाहि—भोक्ता चेतनः शारीरः, भोग्याः शब्दादयो

१. म० भा० पृ० ५५ (भ० पुराणम्) । २. तत्रैव पृ० ५६ (भ० पुराणम्) ।

विषया इति, यथा भोक्ता देवदत्तः, भोज्य ओदन इति तत्र यदि भोक्ता भोग्यभावमापद्येत भोग्यं वा भोक्तृभावम्—परमकारणस्य ब्रह्मणः अनन्यत्वात्—तदा तयोरितरेतरभावापत्तौ प्रसिद्धस्य विभागस्य बाधनं स्यात्, तच्चायुक्तम् अस्याक्षेपस्य निराकृतिरेवं कर्तुं शक्यते यत् स विभागः लोकवदुपपद्येत तथाहि समुद्राद् उदकात्मनः अनन्यत्वे अपि तद्विकाराणां फेन-वीचीतरंगादीनामितरेतरभावापत्तिर्न भवति न च तेषामितरेतरभावानापत्तावपि समुद्रात्मनः अन्यत्वं भवति। एवमिहापि समुद्रतरंगन्यायेन मृद्घटन्यायेन वा न च भोक्तृभोग्ययोरितरेतरभावापत्तिः न च परस्माद् ब्रह्मणः अन्यत्वं भविष्यति"[1] इति।

वल्लभेन शंकरस्यैव अविकलमनुकरणं कृतम् किन्तु तेन मृद्घटादीनां समुद्रतरंगादीनां च उदाहरणस्थले सुवर्णकंकणादीनामुदाहरणं दत्तम्। 'ब्रह्मणो निर्विशेषस्य कारणत्वात् भोक्तुर्भोग्यत्वम् भोग्यस्य च भोक्तृत्वम् आपद्येत अतो न विभाग इति चेत् स्याल्लोकवत् तथा लोके कटककुण्डलादीनां सुवर्णकारणत्वेन सुवर्णानन्यत्वे अपि न कटकस्य कुण्डलत्वमेवं न भोग्यस्य भोक्तृत्वम्"[2]।

रामानुजस्य चैतत्सूत्रव्याख्यानमेतदभिप्रायम्—यदि स्थूलसूक्ष्मचिदचिद्वस्तुशरीरपरमात्मा एव जगत्कारणं मन्येत तदा जीवब्रह्मणोः स्वाभाविकविभागः कर्तुं न शक्येत। परमात्मा अपि च शरीरधारी संजायेत, इत्थं च सः अपि सुखदुःखादिभोक्ता रूपरसादिविषयास्वादकश्च सम्पद्येत; अस्याक्षेपस्येत्थं तेन निराकृतिर्विहिता—लोके जीवब्रह्मणोः स्वभावविभागो दृश्यते—जीवः सुखदुःखादिभोक्ता, न तथा भूतं ब्रह्म। एतदतिरिच्य जीवो नैतेनैव सुखदुःखादिभोक्ता यत्स शरीरधारी प्रत्युत पुण्यपापादिहेतुभिः स तथा कर्त्तुं विवशः संजायते। अपहतपाप्मा परमात्मा तु स्थूलसूक्ष्मरूपसमस्तजगतः कारणमपि सम्बन्धगन्धरहित इति तस्मिन् जीववत् पापपुण्यादिभोक्तृत्वं न संगच्छते। लोके अपीदं दृश्यते—राजा शरीरधारी, तच्छासनानुवर्तिनी प्रजा अपि शरीरधारिणी किन्तु यथा राज्ञो निग्रहानुग्रहयोर्दुःखसुखं प्रजा एव भुंक्ते न राजा तथा एव कर्मवशात् जीव एव सुखदुःखादि अनुभवति न ब्रह्म। तथाहि—

'स्थूलसूक्ष्म……भोक्तृत्वप्रसंगः'[3]।

---

१. शां० भा० पृ० ९९४-९८ २. अणुभाष्ये पृ० ५७१ (चौ०)

३. रा० भा० पृ० २२६

निम्बार्केणापि प्रायः शंकरवदेव व्याख्या कृता—'ब्रह्म यदि जगतः कारणं तदा जीवरूपे ब्रह्मापि सुखदुखादि अनुभवेत्। अस्यां परिस्थित्यां ब्रह्मणो नियन्तृत्वं जीवस्य च भोक्तृत्वं न सम्भवेत्। अस्याक्षेपस्य समाधानम् इत्थं तेन कृतम्—ब्रह्मजीवयोरेवमेकत्वे अपि तथैव तयोरन्तरं सम्भवति यथा समुद्रतरंगयोः सूर्यप्रकाशयोर्वा भिन्नत्वे सत्यपि तयोरभिन्नत्वम्। तथाहि—'ब्रह्मणो जगदुपादानत्वे जीवरूपेण ब्रह्मण एव सुखदुःखभोक्तृत्वापत्तेः वेदप्रसिद्धो भोक्तृनियन्तृविभागो न स्यात् इति चेत् अविभागे अपि (विभागव्यवस्था उपपद्यते दृष्टान्तसद्भावात्) समुद्रतरंगयोरिव सूर्यतत्प्रभयोरिव तयोर्विभागः स्यात'[1]।

मध्वाचार्यानुसारम् सूत्रस्येत्थं व्याख्या–यदि मुक्तावस्थायां भोक्ता (जीवः) ब्रह्मसारूप्यमापद्यते, यतो हि जीवब्रह्मणो र्न कश्चिद् भेदः, तदा मुक्तावस्थायाः पूर्वमपि तथैव जीवब्रह्मणोरैक्यं स्वीकरणीयं भवेत्। तच्च असंगतम्–यतो हि भिन्नवस्तूनामेकत्वं न कदापि सम्भवति। अयमाक्षेप इत्थं तेन परिहृतः 'मुक्तो जीवात्मा परब्रह्मणा एकतां प्राप्यापि तथैव स्वकीयभिन्नतां पृथक् स्थापयति यथा कश्चित् जलौघः अन्येन जलौघेन संगतः प्रत्यक्षतया नूनम् एकः प्रतीयेत किन्तु वस्तुतः स भिन्न एव तिष्ठति। न स नितरां स एव सम्पद्यते प्रत्युत तस्य स्वकीया अपि सत्ता अवशिनष्टि अन्यथा न तत्र जलवृद्धिः सम्भवेत् प्रत्युत तावन्मात्रमेव जलं स्यात्। न किन्तु तथा अवलोक्यते 'कर्माणि विज्ञानमयश्चात्मा परे अव्यये सर्व एकीभवन्ति' इति मुक्तजीवस्य परप्राप्तिरुच्यते। अतस्तयोरविभागः। अतः पूर्वमपि स एव। न हि अन्यस्यान्यत्वं युज्यते इति चेन्न। स्याल्लोकवत्। यथा लोके उदक उदकान्तरस्यैकीभावव्यवहारे अपि अन्तर्भेदः अस्त्येव एवं स्यादन्यत्रापि।

तथा च श्रुतिः—

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवतीति'।

स्कान्दे च—

> उदकं तूदकेसिक्तं मिश्रमेव यथा भवेत्।
> न चैतदेव भवति यतो वृद्धिः प्रदृश्यते॥
> एवमेव हि जीवोऽपि तादात्म्यं परमात्मतः।
> प्राप्नोति नासौ भवति स्वातन्त्र्यादि विशेषणात्[2]॥

---

१. नि० भा० पृ० १५४   २. म. भा. पृ. ५८

पूर्वोक्तसर्वभाष्याणां विवेचनेन स्पष्टतया एतद् ज्ञायते यत् तेषां भिन्नार्थस्वीकृतेः कारणम् एकं एव शब्दः सच "भोक्त्रापत्तेः" इति। शंकरवल्लभौ च तस्य भोक्तृभोग्ययोरितरेतरभावरूपम् अर्थं गृहीतः। रामानुजनिम्बार्कौ च ब्रह्मणो भोक्तृभावं मन्येते, मध्वाचार्यश्च भोक्तुः ब्रह्मभावमाकलयति। अस्यामवस्थायां स्पष्टमेतद् यत् शंकरवल्लभयोरर्थः स्वाभाविको न प्रतिभाति। यदि सूत्रकारस्य एतत्तात्पर्यमभविष्यत् तदा सूत्रम् 'इतरेतरभावापत्तेः' 'भोक्तृभोग्यापत्तेः' एवं वा अरचयिष्यत् 'किंच, भोक्तृभोग्ययोर्भेदाभेदप्रश्नः अप्रासंगिक इव' प्रतीयते यतो हि अत्र कार्यकारणयोः सम्बन्धस्य प्रसंगः। अतः परम् 'तदन्यत्वमारम्भणशब्दादिभ्यः 'अस्य सूत्रस्यापि अयमेव विषयः। ब्रह्मणा सह भौतिकजगतः सम्बन्धविवेचनं चेतः पूर्वं तृतीयाधिकरणे एत्र चतुर्थसूत्रमारम्य एकादशसूत्रं यावत् समापितम् इतीदानीं सूत्रकारः प्रकृत्या तदनन्तरं कार्यकारणरूपे जीवब्रह्मणोः सम्बन्धविवेचने व्यापृतो भवेत्। स्थूलजगतः कार्यकारणसम्बन्धविवेचनानन्तरं सूक्ष्मजीवस्य कार्यकारणविवेचनस्यैव समुचितत्वात्।

एतदतिरिच्य समुद्रफेनवीचीबुद्बुदानीनाम् उदाहरणमपि भोक्तृभोग्याभ्यां ब्रह्मजीवाभ्यां च सह न युक्तिसंगतं प्रतिभाति। भोक्तृभोग्ययोः सम्बन्धः वीचीतरंगादीनां कटककुण्डलादीनां वा सम्बन्धतुलनामारोढुं न पारयति। अद्वैतवादी शंकरः भोक्तृभोग्ययोर्मध्ये द्वैतं स्थापयितुं पृथगेव अधिकरणं स्वीकुर्यात् एतदपि न क्षोदक्षमम् 'एतद् अभिदधान एव शंकरः अग्रिमव्याख्यां प्रारभते यद् अयं विभागो न वास्तविकः प्रत्युत व्यावहारिकः यतो हि कार्यकारणयोरनन्यत्वमिति—'अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारः अभिहितः। नत्वयं विभागः परमार्थतः अस्ति यस्मात् तयोः कार्यकारणयोरनन्यत्वमवगम्यते'[1]।

मध्वाचार्येण च स्वकीयद्वैतसिद्धान्तस्य, ब्रह्मजीवयोः भेदस्य संस्थापनदृष्ट्या सूत्रं व्याख्यातम् किन्तु तस्य 'भोक्त्रापत्तेः' अस्य शब्दस्य परिग्रहणप्रकारो न सन्तोषावहः। तेन कृतश्च मुक्तावस्थापन्नजीवनिर्देशः इदमधिकरणं फलाध्यायार्थमधिकोपयुक्तं विधत्ते। मध्वाचार्यः स्वयमेतज्ज्ञानाति इति अविरोधाध्यायस्य वर्तमानपादे तस्य उपयुक्ततां प्रदर्शयितुं चेष्टते अन्ते च प्रतिपादयति—'न ते विष्णोर्जायमानो

1. शा० भा० पृ० १००० ( अच्युत ग्रन्थमाला संस्करण )

न जायते इत्यादि च फलत्वे अपि युक्ति विरोधे अन्तर्भावाच्च उक्तम्'।[1]

रामानुजेन च यथा 'भोक्त्रापत्तेः' एतस्य शब्दस्य अर्थः प्रदर्शितः सः नितरां स्वाभाविकः। तेनोपस्थापितः पूर्वपक्षश्च सुतरां प्रसंगानुकूलः। स्वविचारपुष्ट्यर्थं तेन द्रमिडभाष्यकारः अपि उद्धृतः तथा स्वकथनस्य उपसंहारात्पूर्वमेव एतत्प्रदर्शयितुं चेष्टा कृता यत् शंकरस्य अर्थप्रदर्शन-प्रकारः न तर्कसंगतः।

निम्बार्कस्य व्याख्याविषये अपि एतदेव वक्तुं शक्यते तेन हि तस्मिन् भेदाभेदसिद्धान्तं स्पष्टीकर्त्तुम् चेष्टितम्।

( २।१।१४–२० ) मध्वमतातिरिच्य अन्यैः सर्वैः अपि आचार्यैः कार्य-कारणयोः अभेदवाद एव वेदान्तसिद्धान्तः स्वीकृतः यश्च वैशेषिकसि-द्धान्तविरुद्धः। यतो हि स एतत् प्रतिपादयति यत् कारणाद् उत्पन्नं कार्यं सर्वथा भिन्नम्। तथापि अयमभेदवादः भिन्नभिन्नव्याख्यातृभिः स्वस्वसिद्धान्तानुसारं प्रदर्शितः।

शंकरस्य अयं विचारः यत् कार्यकारणयोरभेदस्य एतत्तात्पर्यं यत् कारणमेव केवलं सत्यं वस्तु, कार्यं तु अवस्तु–भ्रान्तिमात्रम् अर्थात् किंचिदेवं भूतं वस्तु यत् कारणे अध्यारोपितं मन्यते। अतः ब्रह्मैव केवलं सत्यम् जडचेतनोभयात्मकं च जगत् तद्विवर्तः।

रामानुजस्य अयं विचारः यत् कार्यं कारणस्य परिवर्तन ( परिणाम ) मात्रम् इति सूक्ष्मशरीरावस्थापन्नं चिदचिद्रूपं ब्रह्म एव कारणम्, तदेव च आत्मानं कार्यरूपेण परिणतं कृत्वा स्थूलचिदचिद्रूपे परिलक्षितं संजायते।

निम्बार्कमते अनन्यत्वस्यतात्पर्यम् 'अनत्यन्तभिन्नत्वं' वर्तते—'वाचार-म्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यम्'एतदात्म्यमिदं सर्वम् तत्सत्यम्, तत्त्वमसि. सर्वं खल्विदं ब्रह्म, इत्यादिश्रुतेः। इत्थं चास्मिन् सूत्रे चेतनजीवस्य अचेतनस्य च जगतः ब्रह्मात्मकत्वम् ( ब्रह्माभिन्नत्वम् ) स्पष्टतया प्रतिपा-दितम् 'एतस्मात् पूर्वं त्रयोदशे सूत्रे जीवब्रह्मणो भेदः अपि व्यवस्थापितः तथा तत्पूर्वसूत्रेषु अचेतनजगतः अपि भेदः व्यवस्थापितः। इत्थं समस्तपर्यालोचनया एतन्निश्चितं संजातं यत् चेतनाचेतनसमस्तजगतः ब्रह्मणा सह भेदाभेदसम्बन्धः।

वल्लभाचार्यः मायां सर्वथा अनिर्दिशन् अपि कार्यकारणयोरभेदमा-कलयति।

---

१. म० भा० पृ० ५८

'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यस्मिन् सूत्रे यस्य आरम्भण-शब्दस्य समुल्लेखो वर्तते स छान्दोग्योपनिषदः 'वाचारम्भणं[1] विकारः...' इत्यादिश्रुतिं निर्दिशति। अस्या 'वाचारम्भणम्' इत्यंशस्यावबोधे एव सर्वं निर्विभर्ति। केन वाचारम्भणमित्येतत् कथमवगतमित्येतदेव सर्वाचार्याणां व्याख्याया आधार इति भावः।

शंकरस्य तत्र अयमभिप्रायः-कार्यम्, मृत्तिकानिर्मितघटशरावादि केवलमुच्चारणार्थं तत्तन्नाममात्रम् तच्च असत्यम् मृत्तिकेत्येव तु सत्यम् यस्मात् तदुद्गमः—'वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते—विकारो घटः[2] शराव उदञ्चनं चेति न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति। नामधेयमात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यम्'। इत्थं तेन मिथ्यात्वसिद्धान्तः संस्थापितः इति तन्मते सर्वं कार्यम् असत्यम् ( भ्रान्तिमूलकम् ) केवलं कारणरूपं ब्रह्म एव सत्यम्।

रामानुजः अस्य इत्थमर्थं करोति यत व्यावहारिकदशायां जलाद्यानयनसमर्थतया शरीराच्छादनादिसमर्थतया च घटपटादिरूपेषु परिणतं मृत्सूत्रादिकं उच्चारणार्थमेव केवलं तत्तन्नामाकारादि धारयति तत्र सर्वत्र मृत्सूत्राद्येव सत्यम्' मृत्सूत्राद्येव नूतननामानि धारयतीति सारांशः।

पूर्वोक्तमृद्घटोदाहरणम परिणामवादस्य सर्वथा अनुकूलम्। नानेन कथमपि विवर्तवादः संघटते। वल्लभाचार्येण च कार्यानित्यत्वस्वीकारिणां सिद्धान्तः निजतर्कैः समुचितं निराकृतः यतो हि न स श्रुतिसम्भवः नापि च सूत्राक्षरसन्निधापितः। शंकरव्याख्यायाः आलोचनं रामानुजेनापि कृतम्। 'पटवच्च' तथा 'यथा च प्राणादिः' इति सूत्रयोरुदाहरणद्वयम्—कार्यं कार्योदभिन्नम्, सूत्रैरेव पटः निर्मीयते, प्राणापानादिप्रसारणाकुंचनादिभिन्नभिन्ननामरूपकार्यनिर्वाहकमपि प्राणेभ्यः अभिन्नम्—परिणामवादस्यैव समर्थकम् इति न काभिरपि कल्पनाभिः विवर्तवादपोषकम्।

मध्वाचार्येण तु अस्याधिकरणस्य अन्य एव अर्थः कृतः। तस्यैतत् कथनम् अस्ति यत् अस्मिन् अधिकरणे एतद्विषयकः प्रश्नः उपस्थितो भवति यत् साधारणकर्तृ व्यक्तिवत् ब्रह्म अपि अस्य जगतः सृष्ट्यर्थं किमपि उपकरणम् ( साधनम् ) अपेक्षते न वा ? यस्योत्तरमित्थमत्र प्रदत्तं वर्तते यत् तत् साधनान्तरसाहाय्यमन्तरेणैव इदं विश्वं रचयति। एतदर्थं तेन ऋग्वेदीया ऋक् युक्तिश्च प्रमाणत्वेन समुद्धृते। तथाहि—'ब्रह्मणः स्वरूपसामर्थ्यादेव तस्य सृष्टिः, 'किंस्विदासीदधिष्ठानमारम्भणं

---

1. छा० उ० ६।१।१    2. शा० भा० पृ० १००२

कतमत्स्वित्कथासीत्''[1] इति श्रुतिः युक्तिश्च—

परतन्त्रो ह्यपेक्षेत स्वतंत्रः किमपेक्षते।
साधनानां साधनत्वं यतः किं तस्य[2] साधनैः॥ इत्यादि

इत्थमेतत्प्रदर्शितं यत् परमेश्वरः स्वातंत्र्येण सर्वं कर्तुं समर्थः। अनयैव दृष्ट्या तेन अधिकरणस्य अवशिष्टसूत्राणामपि व्याख्या कृता। किन्तु स्पष्टमेतद् यत् अस्मिन् स्थले एषा व्याख्या सर्वथा अप्रासंगिकी।

(२।१।२१-२३) अस्मिन्नधिकरणे प्रकारान्तरेण चेतनकारणवादे कृतस्य अस्याक्षेपस्य निराकरणं यत् 'तत्त्वमसि' इति श्रुतौ जीव एव ब्रह्म उक्तः अथवा 'अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिना ब्रह्म एव जीव उक्तः। अतः ब्रह्मणः स्रष्टृत्वस्वीकारे जीवस्यैव स्रष्टृत्वम्। जीवश्च जरामरणाद्यनेकसांसारिककष्टानि अनुभवति। यदि तेषां सर्वेषां हेतुर्जीव एव स्वयमस्ति तदा स निजाहितकर्तृत्वेन दोषीति निर्विवादम्' को हि एवं भूतो विचारशीलो यः स्वयं प्रवेशार्थं कारागारं निर्मिमीत' निर्मलः सन्नपि मलिनमात्मनो देहं वा बुध्येत। अतः यदि ब्रह्म स्वयं जीवो भूत्वा जन्ममरणादिदुःखानि अनुभवति, तदा तस्मिन् निजहिताकरणादिदोषप्रसंगात् न तस्य जगतः कारणत्वं युज्यते।

एष आक्षेप इत्थं निराकृतो यत् ब्रह्म जीवापेक्षया भिन्नम्, सर्वज्ञं सर्वशक्तिमच्च। तदेव च जगतः स्रष्टृ, ब्रह्मजीवयोर्यः भेदः 'आत्मा[3] वा अरे द्रष्टव्यः'—'सः अन्वेष्टव्यः' 'विजिज्ञासितव्यः', 'सता सोम्य तदा सम्पन्नो[4] भवति', शारीर आत्मा प्राज्ञेनात्मना अन्वारूढः''[5] इत्यादि श्रुतिषु प्रतिपादितः स घटाकाश-महाकाशवत् सम्भवति। किन्तु 'तत्त्वमसि' इति ज्ञाने संजाते अभेदज्ञानानन्तरं जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वं विगतं संजायते। मिथ्याज्ञानजन्यभेदव्यवहारो हि सम्यग्ज्ञानोदयानन्तरं बाध्यते। एवंभूतावस्थायां निजाहितकर्तृत्वादिदोषाः ब्रह्मणि न सम्भवन्ति। एतदधिकरणम्, विशेषतया च 'अधिकं तु भेदनिर्देशात्' एतत् सूत्रम् स्पष्टतया ब्रह्मजीवयोर्भेदं प्रतिपादयंति। किन्तु एवंभूतस्थलेषु शंकरेण सर्वत्र एव इत्थं कल्पितं यत् अयं भेदः काल्पनिकः। सूत्राक्षरैस्तु अयं भावो न कथमपि व्यज्यते।

---

१. म० भा० पृ० ५९ उद्धृता ऋ. १०।८१।२ ऋक्

२. तत्रैव पृ० ५९

३. बृ० उ० २।४।५

४. छां० ६।८।१

५. बृ० ४।३।३५

रामानुज-निम्बार्क-वल्लभैस्तु सूत्राक्षराणि एव अनुसृतानि । तत्र एकविंशम् 'इतरव्यपदेशाद्धिता'करणादिदोषप्रसक्तिः' एतदाक्षेपसूत्रम् 'द्वाविंशे' त्रयोविंशे च 'तन्निराकृतिः ।

अथ इह अयं सन्देहः यत् ब्रह्मण एकत्वे ब्रह्मजीवयोर्भेदः तत्कार्य-स्वरूपवैचित्र्यं च कथं संगच्छेत । अस्योत्तरे 'अश्मादिवच्च तदनुपपत्तिः' इति त्रयोविंशसूत्रे शंकरस्य एतत्तात्पर्यं यत् अखण्डैकरूपे ब्रह्मणि ब्रह्म-जीवयोर्भेदः तत्कार्यवैचित्र्यं च तथैव उपपद्यते यथा तस्या एव पृथिव्याः निःसृतेषु अश्मसु वज्रवैडूर्यादिभेदः, यथा वा तस्यामेव उप्तेषु बीजेषु पत्रपुष्पफलगन्धरसादीनां भेदः अथ च एकस्मादेव अन्नात् उत्पन्नेषु रुधिरकेशलोमनखादिषु विविधं वैचित्र्यमुपलभ्यमानमुपपद्यते । शंकरेण अयमेव भाव इत्थं प्रतिपादितः, 'यथा च लोके'···परिकल्पितदोषानु-पपत्तिः'[4] ।

रामानुजस्य चेदं व्याख्यानं यत् यथा अचेतनं जगत्-अश्मा अपि यस्यैकः प्रकारः—परमात्मा च एकी भवितुं नार्हतः तथैव चेतनो जीवः (चित्) ब्रह्म च एकीभवितुं नार्हतः—'अश्मकाष्ठलोष्ठ···ब्रह्मरूपैक्यं यथा नोपपद्यते तथैव चेतनस्यापि अनन्तदुःखभोगार्हस्य खद्योत-कल्पस्य···असंख्येयकल्याणगुणाकरब्रह्मभावानुपपत्तिः'[5] ।

निम्बार्कस्य चेदं तात्पर्यं यत् यद्यपि ब्रह्मजीवयोरभेदस्तथापि एकस्याः भूमेः उत्पन्नानां वज्रवैडूर्यादीनां व्यक्तिगतभेदवद् तयोरपि व्यक्तिगतभेदः—'भूविकारवज्रवैडूर्यादिवद् ब्रह्माभिन्नः अपि क्षेत्रज्ञः स्वस्वरूपतः भिन्न एव अतः परोक्तस्य अनुपपत्तिः'[6] ।

शंकरवल्लभयोरर्थः प्रायः समानः ।

अत्र एतन्निर्णेतुं दुःशकं यत् कतमः अर्थः एतेषामन्यापेक्षया अधिकं स्वाभाविकः तथापि 'अधिकं तु भेदनिर्देशात्' एतद् अधिकरणार्थम् आधिक्येन निःसन्दिग्धतया प्रतिपादयतीति निर्विवादम् ।

(२।१।२४-२५) मध्वाचार्यमतिरिच्य इह सर्वेषाम् अन्याचार्याणां मते एतत् निश्चितम् यत् परमात्मा बाह्यसाधनमनपेक्ष्य स्वेच्छामात्रेणैव,

1. ब्र० सू० २।१।२१
२, अधिकं तु भेदनिर्देशात् (ब्र० सू० २।१।२२)
३. अश्मादिवच्चतदनुपपत्तिः (ब्र० सू० २।१।२३)
४. शां० भा० पृ० १०६२-६३ ५. रा० भा० पृ० २४२
६. नि० भा० पृ० ३०१

विश्वं स्रष्टुं समर्थः। यथा च देवताः कर्त्तुं शक्नुवन्ति अथ च यथा दुग्धं जलं वा बाह्यसाधनमनपेक्ष्य दधिहिमरूपेण परिणमति।

मध्वाचार्यमतेन अस्मिन्नधिकरणे एतत्प्रदर्शितं यत् जीवो न स्वतन्त्रः प्रत्युत परमात्मप्रेरणयैव सर्वं कर्त्तुं समर्थः—'य आत्मानमन्तरो यमयति तथा- नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा 'प्रभुः'[1]।

(२।१।२६-२६) एतत्प्रकरणम् एतत्प्रदर्शयति यत् ब्रह्म विश्वस्य रचनां कर्त्तुं शक्नोति तत् तस्य उपादानकारणात् सत् अपि ततः पृथक् अखण्डस्वरूपं च स्थातुं शक्नोति श्रुतिवाक्येषु हि एतद् उपलभ्यते।

(२।१।३०-३१) अधिकरणमेतत् इत्थं प्रतिपादयति यत् ब्रह्म बाह्यसाधनमनपेक्ष्यैव स्वकीयाश्चर्यपूर्णमायाशक्तिभिरेव विश्वसृष्टिं कर्त्तुं समर्थम्।

रामानुजनिम्बार्कौ अपि शंकरव्याख्यया सहमतौ। शंकरमते च अयं विशेषः यत् स इदं जगत् प्रातिभासिकं प्रतिपादयति, रामानुजमते च सृष्टेस्तात्पर्यम् एतत् यत्, यज्जगत् सूक्ष्मरूपेण अदृश्यरूपेण च परमात्मनि अन्तर्निहितं तिष्ठति तस्यैव इदं दृश्यं रूपम्।

वल्लभाचार्यस्य एतन्मतं यत् परमात्मा अचिन्त्यशक्तिशाली सर्वैश्वर्य-सम्पन्नः इति स सर्वं कर्त्तुं समर्थः तस्य विषये अपाणिपादो जवनो ग्रहीता'[2]—इत्यादयः सर्वे विरोधाः संगताः–'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया[3] च'।

(४।१।३२-३३) एतत्प्रकरणे एतत्प्रतिपादितं वर्तते यत् सृष्टिर-चनायां परमात्मनः किमपि विशेषोद्देश्यं नास्ति। स चैतत् केवलं क्रीडार्थं करोति। तस्य च एष स्वभावः स्वभावविषये च न अयं प्रश्नः उपस्थितः संजायते यत् कुत एतस्य एवंभूतः स्वभाव इति।

(२।१।३४-३६) इदमधिकरणम् एतत्प्रकटीकरोति यत् सृष्टौ यदिदं वैषम्यं दृश्यते–कश्चित् सुखी कश्चिद्दुःखी, एको मनुष्यः अन्यः पशुः इत्यादि, एतेन परमात्मा दोषीति वक्तुं न शक्यते यतो हि स प्रतिजीवा-त्मपुण्यपापानुकूलमेव योनिं दत्वा सुखदुःखादि अनुभवितुम् तदनुकूलाः परिस्थितीः उपस्थापयति—'एष ह्येव साधु कर्म कारयति तं यम् एभ्यो लोकेभ्यः उन्निनीषते एष एव उ असाधु कर्म कारयति तं यम् [4]अधो निनीषते'। तथा—'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन'[5]।

---

१. म० भा० पृ० ६२ २. श्वे० ३।१९ ३. तत्रैव ६।८

४. मा० ३।८ ५. बृ० उ० ३।२।१३

इत्थं पुण्यपापानुसारं संसारसृष्टिः बीजांकुरन्यायेन अनाद्यनन्तकालीना इति 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतिषु प्रतिपादितम्'

(२।१।३७) एतत्सूत्रमिदं प्रतिपादयत् पादं समापयति यत् तस्मिन् परमात्मनि सर्वे गुणाः सम्भवन्ति–स सर्वज्ञः, सर्वरक्षक, सर्वशक्तिसम्पन्न इति संसाररचनायां सर्वथा समर्थः। वल्लभरामानुजनिम्बार्काः सर्वे एतेन सहमता – 'सर्वज्ञं, सर्वशक्तिमहामायं च ब्रह्म इति तस्मादनतिशंकनीयमिदमौपनिषदं 'दर्शनम्' ।

'प्रधानपरमाण्वादीनां कारणत्वे यद्धर्मवैकल्यमुक्तं वक्ष्यमाणं च तस्य सर्वस्य धर्मजातस्य कारणत्वोपपादिनो ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति स्थितम्'[2] ।

'ये ये धर्माः कारणे प्रसिद्धास्तेषां सर्वेषां कारणधर्माणां ब्रह्मण्येवोपपत्तेश्चाविरोधसिद्धिः'[3] ।

मध्वाचार्येण एकविंशसूत्रतः षड्विंशसूत्रं यावत् एकमधिकरणं स्वीकृत्य जीवस्य जगत्स्वतन्त्रकर्तृत्वं निराकृतम्। तस्येदं तात्पर्यं यत् यदि जीवः जगतः स्वतन्त्रः कर्ता मन्येत तदा सर्वदा स पुण्यानि कुर्यात् न पापानि। किन्तु वस्तुत इत्थं न दृश्यते अतः जीवः स्वतन्त्रः कर्ता स्वीकर्त्तुं न शक्यते। परमात्मा च विशिष्टशक्तिसम्पन्न इति तद्विषये इत्थ प्रतिपादयितुं न शक्यते तस्मिन् एवंभूतानां दोषाणां न सम्भवः।

जीवो यद्यपि परमेश्वरवत् एव चेतनः तथापि संसारस्य स्रष्टा भवितुं न शक्नोति यतो हि सः अचेतनजगद्वदेव पराधीनः परमेश्वराधीनः इत्यादि ।

सप्तविंशसूत्रतः एकत्रिंशत्तमसूत्रं यावत् पृथगेकस्मिन्नधिकरणे मध्वानुसारेण एतत्प्रतिपादित वर्तते यत् पूर्वोक्ता दोषा ईश्वरे न आरोपयितुं शक्यन्ते यतो हि स स्वतन्त्रः कर्ता तस्य च कर्तृत्वं श्रुतिसम्मतम्' सचालौकिकशक्तिसम्पन्नः इत्येतदपि सन्देग्धुं न शक्यते यत् साधनान्तरमन्तरेणापि कथं स सृष्टिरचनां कर्त्तुं समर्थः इत्थं तस्य साधनान्तररहितकर्तृत्वं हि श्रुतिषु प्रतिपादितं वर्तते। शेषं च सर्वं शंकरवदेव मध्वेनापि स्वीकृतम्।

---

१. शां० भा० पृ० ११११     २. रा० भा० पृ० २४७

३. नि० भा० पृ० ३०९ ( शंकरेणात्र परमात्मनः सर्वशक्तिमान् महामायी इत्यादिविशेषणानि प्रदत्तानि, तत्र सर्वशक्तिमत्त्वमहामायित्वादीनां गुणत्वात् तस्यैकान्तनिर्गुणवादो नादरणीय इति स्पष्टम् )

## द्वितीयाध्यायस्य द्वितीयः पादः

पादपरिचयः—प्रथमाध्याये 'ईक्षतेर्नाशब्दम्', 'कामाच्च नानुमानापेक्षा, तथा 'एतेन सर्वे व्याख्याता व्याख्याताः' इत्यादिसूत्रैः सांख्याद्यभिमतजगत्कारणत्ववादस्य खण्डनानन्तरं द्वितीयाध्यायस्य प्रथमपादे ब्रह्मजगत्कारणत्ववादसम्बन्धे उत्थापितानामापत्तीनां स्मृतियुक्तिबलेन खण्डनं श्रुतिसम्मतब्रह्मजगत्कारणत्ववादस्य स्थापनं च कृतम्। अस्मिन् पादे स्थूणानिखननन्यायेन तस्मिन्नेवविषये शिष्यमति दृढतरां कर्त्तु सृष्टिविषयकवेदान्तभिन्नान्यदार्शनिकसिद्धान्ताः श्रुतिनिरपेक्षयुक्तिबलेन निराकरिष्यन्ते।

अस्याध्यायस्य अयं पादः तर्कपादः कथ्यते। अयं च अन्यपादापेक्षया विषयव्याख्योभयदृष्ट्या भिन्नः। एतत्पादीयसूत्राणि एतत्प्रकटयन्ति यत् तेषां रचना वैदिकसिद्धान्तासम्मतबौद्धादिमतखण्डनार्थं कृता वर्तते एतैः एतत् प्रतिभाति यत् एतेषां रचनायां सूत्रकारस्य अयमाशयः यत् केवलेन तर्कबलेन विपक्षिसिद्धान्तानां खण्डनं क्रियेत। एतद्दृष्ट्या किन्तु भाष्याणामनुशीलनेन वयमेतन्निष्कर्षमुपगच्छामः यत् शंकराचार्य एव इत्थं कर्तुं सफलः समजायत।

प्रतिपाद्य संकेतः—अस्मिन् पादे—

( १ ) शंकरमते सांख्यादिमतानां दुष्टत्वप्रदर्शनेन वेदान्तसमन्वयस्य विरोधपरिहारः।

( २ ) रामानुजमते प्रतिपक्षतर्काणां वेदान्तवाक्यानुसारिभिः सत्तर्कैर्निराकरणम्।

( ३ ) निम्बार्कमते परोक्तयुक्तीनामाभासत्वप्रदर्शनरूपपरपक्षखण्डनम्।

( ४ ) मध्वमते वेदान्तविरुद्धसेश्वरसांख्यादिमतानां निराकरणम्।

( ५ ) वल्लभमते श्रुतिविरुद्धस्मृतिनिराकरणेन तद्विरोधस्य अकिंचित्करत्वम्।

### सविश्लेषणप्रत्यधिकरणभाष्यपञ्चकसमीक्षणम्—

( २।२।१–१० ) अस्मिन् अधिकरणे मध्वमतिरिच्य अन्येषां चतुर्णामप्याचार्याणां मतेन जगतः कारणत्वे सांख्यस्य विरोधः कृतो वर्तते येन एतत्प्रमाणितं यत् चेतनसाहाय्यमन्तरेण जडप्रधानस्य सृष्टौ किं, कस्मिन्नपि कार्ये प्रवृत्ति र्भवितुं न शक्नोति। द्वितीयस्य सूत्रस्य शंकरनिम्बार्कयोर्मतेन एतत्तात्पर्यं यत् प्रधानस्य कारणत्वम् एतदर्थं सर्वथा अनुपपन्नं

यत् तत् अचेतनम् इति चेतनसाहाय्यमन्तरेण तस्य स्वतःप्रवृत्तिः कस्मिन्नपि कार्ये सर्वथा सम्भवरहिता। रामानुजस्य एतत्कथनं यत् अचेतनकारणं तदैव क्रियाशीलं लक्ष्यते यदा तत् चेतनेन प्रेरितं स्यात् दार्विष्टकेत्यादि केवलं स्वयं रथप्रासादादिनिर्माणे न समर्थं किन्तु चेतनप्रेरितं सत् तथा कर्तुमलम् इति सर्वैरवगम्यते। चतुर्थसूत्रस्यापि व्याख्या शंकररामानुजवल्लभैः भिन्नभिन्ना कृता किन्तु स भेदः अकिंचित्करः। अस्य अधिकरणस्य अन्ते रामानुजेन इत्थं स्वविचाराः अभिव्यक्ताः यत् निर्विशेषब्रह्मसिद्धान्तः सांख्यसिद्धान्तादप्यधिकानुपयुक्त. यतो हि सांख्यम् जननमरणव्यवस्थार्थं पुरुषबहुत्वं स्वीकरोति—

जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्च॥[1]

निर्विशेषब्रह्मवादी (मायावादी) तदपि न स्वीकरोति 'येऽपि कूटस्थनित्यनिर्विशेषस्वप्रकाशचिन्मात्रं ब्रह्म अविद्यासाक्षित्वेन अपारमार्थिकबन्धमोक्षभागिति वदन्ति तेषामप्युक्तनीत्या अविद्यासाक्षित्वाध्यासाद्यसंभवादसामंजस्यमेव। इयांस्तु विशेषः, सांख्या जननमरणप्रतिनियमादिव्यवस्थासिद्ध्यर्थं पुरुषबहुत्वमिच्छन्ति ते तु तदपि नेच्छन्तीति सुतरामसामजस्यम्'।[2]

मध्वाचार्येण प्रथमतश्चतुर्थसूत्रं यावदेकमधिकरणं स्वीकृत्य निरीश्वरसांख्यस्य तथा पञ्चमं सूत्रं पृथगधिकरणं स्वीकृत्य सेश्वरसांख्यस्य च खण्डनं कृतम्। तथैव षष्ठे सूत्रे चार्वाकाणाम् मतम्, सप्तमाष्टमयोः प्रकृतिसहायकं पुरुषकर्तृत्वंच निराकृतम्।

तदनन्तरम् एकादशं सूत्रं स्वतंत्रमधिकरणम् यत्र ब्रह्मजगत्कारणवादविरोधे कृतानां वैशेषिकाक्षेपाणां स्पष्टं निराकरणम्। द्वादशतः सप्तदशसूत्रं यावत् पृथगधिकरणम् यत्र वैशेषिकमतखण्डनम्। अस्मिन् मते परमाणुभिः संसाररचना जायते येषु च अदृष्टवशात् क्रियाशीलता उत्पद्यते। शंकरातिरिक्तैरन्यभाष्यकारैः एकादशसूत्रतः सप्तदशसूत्रं यावत् एकमेव अधिकरणं स्वीकृत्य तत्र वैशेषिकमतखण्डनं स्वीकृतम्।

तृतीयचतुर्थाधिकरणयोः बौद्धानां विभिन्नदार्शनिकसिद्धान्ता निराकृताः। तत्र अष्टादशसूत्रतः सप्तविंशसूत्रं यावत् स्वीकृते तृतीयाधिकरणे सर्वास्तिवादिनाम् (बाह्यार्थवादिनाम्) वैभाषिकाणां सौत्रान्तिकानाञ्च

---

१. सां० का० १८  २. रा० भा० पृ० २५३

मतमेकं मत्वा तन्निराकरणम् । एतेषामेतन्मतं यत् बाह्यपदार्थाः आभ्यन्तरपदार्थाश्च एतदुभयं सत्यम् । अष्टाविंशसूत्रतो द्वात्रिंशत्तमसूत्रं यावत् स्वीकृते चतुर्थे अधिकरणे विज्ञानवादि ( योगाचार ) मतस्य खण्डनम् एतेषामेतन्मतं यत् निरालम्बनविज्ञानमात्रस्यैव सत्ता वर्तते बाह्यपदार्थास्तु स्वाप्नवस्तुवन्मिथ्या । अस्याधिकरणस्य अन्तिमं सूत्रं रामानुजेन पृथगधिकरणं स्वीकृत्य तत्र माध्यमिकानाम् (शून्यवादिनाम्) मतं खण्डितम् । एतेषामेतन्मत यत् प्रत्येकं वस्तु शून्यम् किन्तु दीपशिखावत् संस्कारवशात् क्षणिकविज्ञानधारा एव बाह्यपदार्थरूपे प्रतीयते—अर्थात् यथा दीपकशिखा प्रतिक्षणं नश्यति तथापि तस्याः नैरन्तर्यस्य सततधारा इव वर्तमानत्वात् तत्प्रतीतिः, तथैव बाह्यपदार्था अपि प्रतिक्षणं नश्यन्ति तेषां विज्ञानधारामात्रं च प्रतीयते । यथा तैलसमाप्तौ दीपशिखा निर्वाति तथैव संस्कारविनाशानन्तरं विज्ञानधारा अपि शाम्यति, इत्थं तन्मान्यतानुसारम् अभावस्य शून्यताया वा प्राप्तिरेव अपवर्गः ।

शंकरवल्लभानुसारम् अष्टादशसूत्रतः सप्तविंशसूत्रं यावत् सर्वास्तिवादिनाम् ( बाह्यार्थवादिनाम् ) बौद्धानां मतस्य खण्डनं कृतं वर्तते तथा अष्टाविंशसूत्रतः द्वात्रिंशत्तमसूत्रं यावत् योगाचार ( विज्ञानवादि ) बौद्धानां मतस्य खण्डनम् । अन्तिमसूत्रे सर्वसामान्येनबौद्धमतनिराकृतिः ।

रामानुजनिम्बार्कौ च सर्वथा शंकरेण सहमतौ किन्तु तौ अन्तिमसूत्रे शून्यवादस्य खण्डनं स्वीकुर्वाते एतावान् विशेषः ।

मध्वाचार्येण च अष्टादशसूत्रतः पंचविंशसूत्रं यावत् सर्वास्तिवादिनाम्, षड्विंशसूत्रतः एकोनत्रिंशत्तमसूत्रं यावत् शून्यवादिनाम्, तथा त्रिंशत्तमसूत्रतः द्वात्रिंशत्तमसूत्रं यावत् विज्ञानवादिनां खण्डनं स्वीकृतम् किन्तु सूत्ररचना एतावद् रहस्यपूर्णा विचित्रा च वर्तते यद् एतत् निश्चेतुं नितान्तं कठिनं यत् केषु सूत्रेषु कतमो बौद्धसिद्धान्तविशेषो निराकृतः ।

त्रयस्त्रिंशत्तमसूत्रतः षट्त्रिंशत्तमसूत्रं यावत् जैनसिद्धान्तस्य खण्डनं तथा सप्तत्रिंशत्तमसूत्रतः एकचत्वारिंशत्तमसूत्रं यावत् पृथगेकमधिकरणम् यत्र पाशुपतमतं निराकृतं वर्तते । एतत्सिद्धान्तावलम्बिनामेतत्कथनं यत् ईश्वरः विश्वस्य निमित्तकारणमस्ति नतूपादानकारणम् ।

अस्य पादस्य अन्तिमम् अधिकरणम्–द्विचत्वारिंशत्तमसूत्रतः पंचचत्वारिंशत्तमसूत्रं यावत्–पञ्चरात्र[1] ( भागवत ) सम्प्रदायं निर्दिशति ।

---

1. एवमेकं सांख्ययोगं वेदारण्यकमेव च । परस्पराङ्गान्येतानि पंचरात्रं तु कथ्यते । सांख्यं च योगं च सांख्ययोगम् । वेदाश्चारण्यकानि च वेदारण्यकम्,

शंकरवल्लभयोरनुसारं पादस्य शेषभागे अन्यमतवत् एतस्यापि खण्डनं कृतम् किन्तु रामानुजानुसारं द्विचत्वारिंशत्तम-त्रिचत्वारिंशत्तमसूत्रयोः पांचरात्रसम्प्रदाये आक्षेपाः कृताः सन्ति। अन्तिमयोः-चतुश्चत्वारिंश-

---

परस्पराङ्गान्येतानि एकतत्वप्रतिपादनपरतया एकीभूतानि एकं पञ्चरात्रं कथ्यते ( रा० भा० ब्र० सू० २।२।४२ पृ० २६९ )

विशेषः—आधुनिकवैष्णवागमानामुत्पत्तिस्तद्विकाश्च तस्माद् भक्तिप्रधानान्नारायणीयधर्मादभवतां यो महाभारते पांचरात्र-सात्वत-भागवतान्यतमनाम्नोक्तो वर्तते। त्रीण्यप्येतानि नामानि पर्यायवाचिनीति 'विज्ञानादिभावे वा तदप्रतिषेधः' ( २।२।४१ ) 'विप्रतिषेधाच्च' ( २।२।४२ ) इत्यनयोः ब्रह्मसूत्रयोः श्रीभाष्ये स्पष्टम्। आगमेषु च पांचरात्रशब्दस्यैव प्राधान्यम् इति प्रसिद्धा अष्टोत्तरशतसंख्यागमाः पांचरात्रागमा उच्यन्ते।

पञ्चरात्रतन्त्रीयविभिन्नग्रन्थेषु एतन्नाम नैकधाव्याख्यातम्—

( १ ) महाभारतस्य शान्तिपर्वणि नारायणेन स्वमुखात् स्वयमुक्तोऽतः चतुर्वेद-साङ्ख्य-योगसमावेशः अयं पञ्चरात्रशब्दो महोपनिषन्नाम्ना प्रसिद्धः-

इदं महोपनिषदं चतुर्वेदसमन्वितम्।
साङ्ख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम्॥

[ म० भा० शा० अ० ३२९।१२ ]

( २ ) नारदपञ्चरात्रानुसारेण रात्रशब्दो ज्ञानार्थकः—

रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्। [ नारदपञ्चरात्रम् १।४४ ]

अतः परमतत्त्व-मुक्ति-भुक्ति-योग-संसारनामकविषयपञ्चकनिरूपणेन अस्य एतन्नाम प्रसिद्धम्। अहिर्बुध्न्यसंहितायां नारदपञ्चरात्रनिर्दिष्टम् उपरिष्टाद् उक्तमेव मतं स्वीकृतम्।

( ३ ) पद्मतन्त्रानुसारेण पञ्चरात्रनाम्नो रहस्यम् अस्य शास्त्रस्य उत्कृष्टतां महनीयतां च आश्रयति। यत्तन्त्रसमक्षं पञ्चेतराणि महान्त्यपि शास्त्राणि रात्रीयन्ते तदिदं शास्त्रं पञ्चरात्रम्—

पञ्चेतराणि शास्त्राणि रात्रीयन्ते महान्त्यपि।
तत्सन्निधौ समाख्याऽसौ तेन लोके प्रवर्तते॥ [ पाद्मतन्त्रम् १ ]

( ४ ) विष्णुसंहितानुसारेण पञ्चमहाभूतानि, शब्दादयस्तद्गुणा वा पञ्चरात्रयः। अच्छाध्ययनेन च तद्विनाशः, अज्ञानान्धकारविनाशकं तच्छास्त्रमेव पञ्चरात्रम्। तथाहि—

रात्रयो गोचराः पञ्च शब्दादिविषयात्मिकाः।
महाभूतात्मिका वापि पञ्चरात्रमिदं ततः॥

त्तम–पंचचत्वारिंशत्तमसूत्रयोश्च तदाक्षेपनिराकरणपूर्वकं सूत्रकारसम्मत-भागवतसम्प्रदायस्य स्थापना कृता दृश्यते¹।

निम्बार्कस्तु शंकररामानुजयोः नान्यतरेणापि सहमतः इत्यस्मिन्नधिकरणे शक्तिसिद्धान्तस्य निराकरणं स्वीकृतवान्। इदमेतस्य तात्पर्यं यत् शक्तिरेव केवलं चेतना सैव च एकाकिनी विश्वरचने समर्था।

मध्वाचार्येण अपि निम्बार्कस्य पद्धतिरनुसृता।

उक्ताधिकरणे स्व-स्व-सिद्धान्तानुसारं कृतेषु अर्थेषु एतत्तु निर्विवादं यत् शक्तिसिद्धान्तस्य श्रुत्यसम्मतत्वात् अस्मिन्नधिकरणे तत्स्वीकृतिः न कथमपि सूत्रकारसम्मता आकलयितुमुपपद्यते। शंकररामानुजवल्लभेषु कतमस्य अर्थः सम्यगुपपद्यते एतन्निश्चेतुं दुष्करम्; विशेषेण च एतद् दृष्ट्या यत् एतदधिकरणम् भागवतमतं निराकरोति संस्थापयति वा। चतुश्चत्वारिंशत्तमसूत्रस्यार्थः शंकरेण रामानुजेन च स्वसिद्धान्तानुसारं भिन्नभिन्नः कृतः किन्तु कतरो गृह्येत इत्यत्र न किमपि द्रढीयः प्रमाणम्। तथापि मूलमहाभारतस्य ब्रह्मसूत्राणां च कर्त्ता बादरायणापरनामा कृष्णद्वैपायनो व्यास एव इति मन्यमानानां मते रामानुजस्यैवार्थः अधिकोपयुक्तः। यतो हि उभयत्रापि पांचरात्र (भागवत) सिद्धान्तः समर्थितो वर्तते।

ये तु महाभारते योगसांख्यादिसिद्धान्तानां प्रशंसनेन ब्रह्मसूत्रेषु च तेषां खण्डनेन महाभारतस्य ब्रह्मसूत्राणां च कर्त्ता भिन्न इति प्रमाणयन्ति तन्न, वर्तमानमहाभारतं हि मूलमहाभारतस्य समुपबृंहितं रूपम्।

---

अवाप्य तु परं तेजो यत्रैताः पञ्च रात्रयः।
नश्यन्ति पञ्चरात्रं तत् सर्वाज्ञानविनाशनम्॥

[ परमसंहिता० १।३९–४० ]

भागवतधर्मः कथं पांचरात्रनाम लेभे एतत् वक्तुं दुःशकम्। पद्मसंहितायाम् (१।१।७) अस्य शब्दस्येत्थं व्याख्या कृता वर्तते—यः सिद्धान्तः शैव–योग–सांख्यबौद्धार्हतैतच्छास्त्रपंचकं रात्रिमयं विधत्ते अर्थात् तदसत्यमिति प्रमाणीकृत्य अन्धकारे प्रक्षिपति स पांचरात्रः कथ्यते। स्यादेतत्, व्यूहसिद्धान्तानुसारं वासुदेव संकर्षण-प्रद्युम्नानिरुद्धब्रह्मणामेतत्तत्त्वपंचकाधारेणैवास्य पांचरात्रेति नाम प्रचलितम्। फलतः एतद्विषये नाद्यावधि किमपि निश्चितरूपेण वक्तुं शक्यते।

१. 'शारीरके च सांख्योक्ततत्त्वानामब्रह्मात्मकतामात्रं निराकृतत्, न स्वरूपम् इति जिनसुगताभिहिततत्त्ववत् सर्वं न बहिष्कार्यम्' [ रामानुजभाष्यम् २।१.४२ पृ० २६८–६९ ]

मूलभारतं च ऐतिहासिकग्रन्थ आसीत् न त्वौपदेशिकः, सम्भवतः, व्यासेन अस्य 'जय' इति नाम कृतमासीत् एतदस्य अष्टादशपर्वणः 'जयनामेतिहासोऽयम्' इति वाक्येन, प्रत्येकपर्वारम्भे—

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

इत्यत्र समायातेन 'जय' शब्देन च प्रमाणीक्रियते ।

अस्य विकासस्य त्रयो विशिष्टाः कालाः परिलक्ष्यन्ते—

मन्वादि भारतं केचित् अस्तिकादि तथा परे ।
तथा परिचराद्यन्ये विप्राः सम्यगधीयते ॥

एतेषु त्रिषु कदाचित् मूलग्रन्थः परिचरोपाख्यानात् प्रारभ्यते[1] ।

एतस्य सर्वस्य अयमभिप्रायः यत् मूलावस्थायां महाभारतम् इतिहासः, पुराणम् आख्यानं वा मन्यते स्म । कालक्रमानुसारेण अन्यैर्विद्वद्भिरपि तत्र विभिन्ना विषयाः प्रक्षिप्ताः इत्यत्र स आचारविषयकोपदेशानाम्, विभिन्नदार्शनिकाद्यनेकविषयाणां च प्रक्षिप्तत्वेन समुपबृंहितो विश्वकोषः सम्पन्नः ।

एतदीयविषयाणां प्रक्षिप्तत्वेनानेकजनकर्तृत्वे अन्वयुत्यानुवादरूपेण वृत्रकथा प्रमाणत्वेनोपन्यस्यते । या च विभिन्नपर्वसु विभिन्नरूपेणोपलभ्यते,[2] ।

---

## द्वितीयाध्यायस्य तृतीयः पादः

पादपरिचयः—वेदान्तशास्त्रे ब्रह्मणो यल्लक्षणमुक्तम् तत्र स्मृतितर्क-युक्तिभिः प्रतीयमानो विरोधः सनिर्णयमस्याध्यायस्य प्रथमे पादे समाहितः । द्वितीयस्मिन् पादे च ततः, स्वसिद्धान्तसिद्ध्यर्थमनीश्वरवादिनास्तिकसिद्धान्तानाम्, ईश्वरवादिनामपि च तदुपादानकारणममन्यमानानां सिद्धान्तानां सयुक्तिकनिराकरणं कृतम् ततः भागवतमते अस्य ग्रन्थस्य सिद्धान्तेन सह प्रतीयमानं विरोधं समाधाय तत्पादस्य पूर्तिः कृता । इदानीं पूर्वप्रतिज्ञानुसारं परब्रह्मणः समस्तप्रपञ्चस्य

---

१. संस्कृतसाहित्यस्य इतिहासः ( हंसराजः ) पृ० ३६

२. द्रष्टव्यम् उद्योग० १०।२७–३१, शां २७९।१३–२१, वन० १०१।१५ इत्यादि ।

अभिन्ननिमित्तोपादानकारणस्वीकृतौ प्रतीयमानं श्रुतिवाक्यविरोधं समाधातुं तृतीयपादस्यारम्भः।

अस्याद्येषु पञ्चदशसूत्रेषु अस्य प्रश्नस्य उत्तरं विवेचितम् यत् आकाशादितत्त्वानि, येभ्यश्च प्रपञ्चात्मकसंसारस्य रचना स्वीक्रियते, ब्रह्मवत् नित्यानि सन्ति अथवा तान्यपि ब्रह्मणः उत्पद्य नियतसमये तत्रैव विलीयन्ते।

पादस्य शेषभागे जीवात्मनो निरूपणं कृतं वर्तते।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

(१) शंकरमते पूर्वभागेन पंचमहाभूतश्रुतीनामुत्तरभागेन च जीवश्रुतीनां परस्परविरोधपरिहारः।

(२) रामानुजमते आकाशादेः कार्यत्वनिरूपणम्।

(३) निम्बार्कमते ब्रह्मकार्यवियदाद्युत्पत्तौ जीवविषये च श्रुतीनामविरोधप्रदर्शनम्।

(४) मध्वमते चापि वियदाद्युत्पत्तौ जीवविषये च केवलश्रुत्यविरोधप्रदर्शनम्।

(५) स्थूलशरीरनिष्पादकभूतोत्पत्तिक्रमादिकविचारपूर्वकं सर्वं ब्रह्मेतिवादे जडानाम्, जीवानां च ब्रह्मत्वाद् जडजीवसम्बन्धिविरुद्धांशनिराकरणम्।

## सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

(२।३।१–७) इदमधिकरणमेतत्सूचयति यद् आकाशो न ब्रह्मवत् नित्यः अपि तु स ब्रह्मण उत्पद्यते।

(२।३।८) आकाशवद् वायुरपि ब्रह्मण उत्पद्यते इत्यस्य प्रकरणस्य अर्थः।

(२।३।९) केवलं ब्रह्मैव नित्यमिति प्रतिपादयत्यस्मिन्नधिकरणे एतन्निर्णीतं यत् यस्य परब्रह्मपरमात्मनः श्रुतिषु स्थले स्थले 'सत्' नाम्ना वर्णनमुपलभ्यते यच्च अस्य जडचेतनात्मकजगतः परमं कारणं स्वीकृतम् तद् अतिरिच्य अस्मिन् जगति न किमपि अन्यद् एवं भूतं तत्वं यदुत्पत्तिशीलं न भवेत्।

रामानुजेन एतेषां नवानामपि सूत्राणाम् एकम् अधिकरणं स्वीकृतम् अन्ये सर्वे आचार्याः शंकरेण सहमताः।

एतदग्रे दशमैकादशद्वादशसूत्राणाम् एकैकसूत्रैकैकाधिकरणत्रये क्रमशः एतत्प्रदर्शितं यत् वायोस्तेजसः, तेजसः अपाम्, अद्भ्यश्च पृथिव्याः उत्पत्ति र्जाता।

त्रयोदशं सूत्रमेतत्प्रतिपादयति यत् द्वादशसूत्रं यावत् आकाशादितत्त्वानां या उत्पत्तिः प्रतिपादिता तत्र यद्यपि ब्रह्मणः आकाशस्य, साक्षादुत्पत्तिं प्रतिपाद्य अग्रे क्रमशः वायोः, तेजसः अपाम् पृथिव्याश्च उत्पत्तिरुक्ता वर्तते तथापि मुख्यरूपेण सर्वेषां रचयिता स एव परब्रह्मपरमात्मा अस्ति नान्य इति बोद्धव्यम्।

चतुर्दशं सूत्रमेतत्प्रतिपादयति यत् आकाशादितत्त्वानां विलयनं तेषामुत्पत्तिक्रमेण जायते—यस्य यस्मादुत्पत्तिस्तस्य तत्रैव प्रलये विलयनम्, इत्येवं रीत्या अन्ते पुनरप्येकमात्रं ब्रह्म अवशिष्टं संजायते।

पंचदशसूत्रे एतत्प्रतिपादितं वर्तते यत् प्राणाः, मनः सर्वेन्द्रियाणि च भौतिकानीति तेषां सर्वेषामेतेषु भूतेषु एव अन्तर्भूतत्वात् ते पृथगुत्पत्तिक्रम न अपेक्षन्ते। फलस्वरूपम् —

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥

इति मुण्डकोपनिषदि यत् प्राणादीनाम् आकाशादेः प्राक् श्रवणम् तेन इत्थं नाकलनीयं यत् आत्मनः आकाशात् पूर्वं प्राणानामुत्पत्तिकथनात् 'एतस्मादात्मनः आकाशः सम्भूतः' इति श्रुत्या विरोधः। यतो हि 'अन्नमय हि सौम्य मनः आपोमयः प्राणः, तेजोमयी वाक्' अत्र प्राणादीनां भौतिकत्वं श्रूयते। अतस्तेषां तत्रैवान्तर्भूतत्वात् न तेषां पृथगुत्पत्तिक्रमापेक्षा वर्तते। उक्तमुण्डकोपनिषदि 'आकाशाद् वायुः वायोरग्निः इत्यादिवत् तेषां क्रमो नोक्तः, आत्मनः केवलं तेषां सर्वेषामुत्पत्तिरेव उक्ता अतो भूतसृष्टिवाक्यैः न कथमपि तद्विरोधः। प्राणादीनां हि यस्मिन् यस्मिन् तत्वे अन्तर्भावः तेन तेनैव सह तेषामुत्पत्तिर्विनाशश्च जायते। इत्थं शंकरानुसारं दशमसूत्रतः पंचदशसूत्रं यावत् अधिकरणषट्कम्। वल्लभेनापि एतदेव स्वीकृतम्।

रामानुजाचार्येण दशमसूत्रतः पंचदशसूत्रं यावत् एकमेवाधिकरणं स्वीकृतम् द्वादशे सूत्रे च 'पृथिवी' एतावत् पृथक् सूत्रम् 'अधिकाररूपशब्दान्तरेभ्यः एतावच्च पृथक् सूत्रं मत्वा उत्तरोत्तरतत्वानामुत्पत्तिं पूर्वपूर्वतत्त्वेभ्यः अभ्युपगत्य पूर्वपक्षं स्थापयन् 'तदभिध्यानादेव तु

तल्लिंगात्सः' इत्यस्मिन् सूत्रे सिद्धान्तपक्षरूपेण सर्वेषामुत्पत्तिः ब्रह्मणः स्वीकृता। तथा हि—

'श्रूयते च सर्वशरीरकत्वेन सर्वात्मकत्वं परस्य ब्रह्मणः अन्तर्यामि-ब्राह्मणे, 'यः पृथिव्यां तिष्ठन्, यः अप्सु तिष्ठन्' इत्यादि। सुबालोपनिषदि च यस्य पृथिवी शरीरम······यस्य बुद्धिः शरीरम्''[1] इत्यादि।

निम्बार्केणापि रामानुजवत् दशमसूत्रतः त्रयोदशसूत्रं यावत् एकमेवाधिकरणमभ्युपगच्छता तत्र दशमतः द्वादशं यावत् पूर्वपक्षत्वेन त्रयोदशं च सूत्रं सिद्धान्तपक्षत्वेन स्वीकृतम् 'चतुर्दशं पंचदशं च सूत्रद्वयं किन्तु तेन पृथगधिकरणं स्वीकृत्य शंकरवत् व्याख्यातम्'

मध्वाचार्येण दशमसूत्रतः चतुर्दशसूत्रं यावत् अधिकरणपंचकं स्वीकृतम् किन्तु दशमे द्वादश-द्वादश सूत्राणां तेनेत्थं व्याख्या कृता यत् आकाशादिभूतानामुत्पत्तिर्विष्णोः संजायते तथा त्रयोदशसूत्रे एतत् प्रतिपादितं यत् सृष्टेः प्रलयः अपि विष्णुना एव क्रियते न तु रुद्रादिना। '

सृष्ट्यादिकं समस्तं तु विष्णोरेवपदात् भवेत्' ।[2]

× × ×

अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् ।[3]
व्युत्क्रमाद् विलयश्चैव तस्मिन्नेव परात्मनि ॥

× × ×

कर्त्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च ।
यः क्रमाद् व्युत्क्रमाच्चैव स हरिः पर उच्यते'[4] ॥

एतन्मते पंचदशषोडशसूत्रयोरेकमेव अधिकरणं तत्र पंचदशे पूर्वपक्षः। षोडशे च सिद्धान्तपक्षो निरूपितः।

षोडशतः अग्रे अवशिष्टे सम्पूर्णपादे जीवनिरूपणं वर्तते। एष भागः अत्यन्तमहत्त्वपूर्णः। यतो हि पंचाप्याचार्याः एतन्निर्विवादम् स्वीकुर्वन्ति यत् जीवः अजन्मा नित्यश्चास्ते—'अजो नित्यः [5]शाश्वतोऽयं पुराणः'। तद्विषये प्रतिपादितं च जननमरणादि वस्तुतः जीवात्मनः शरीरविषयकम्—'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते',[6] 'स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन् म्रियमाणः···'[7]। षोडश-

---

१. रामानुजभाष्यम् पृ० २७२ २. मध्वभाष्ये स्कन्दपुराणवचनम् पृ० ८१
३. तत्रैव चतुर्वेदशिखावचनम् पृ० ८१
४. तत्रैव भाल्लवेयश्रुतिवचनम् पृ० ८२ ५. कठ० १।२।१८
६. छा० ६।११।३ ७. बृ० उ० ४।३।८

सूत्रस्य इदमेव तात्पर्यम्, शंकर-निम्बार्क-वल्लभैश्चापि एतदेव अक्षरशः प्रतिपादितम्।

रामानुजानुसारम् एतत् सूत्रम् सप्तदशम् पूर्वाधिकरणस्यैव—यत्र च तेजोऽबन्नादीनां ब्रह्मसरूपता प्रमाणिता वर्तते—अंशमात्रं च तेन, अत्र 'भाक्त' इत्यत्र 'अभाक्त' एवं विच्छिद्य अन्य एव अर्थः कृतः। तस्येदं तात्पर्यं यत् यदि तेजोऽबन्नादयः सर्वे शब्दाः ब्रह्मवाचकाः तदा भिन्नभिन्नशब्देभ्यः प्रतीयमानो व्यपदेशः कथं संगच्छेत, अस्य प्रश्नस्यात्र समाधानं यत् तत्तच्छब्दैस्तत्तद्वस्तुव्यपदेशः अभाक्तः (मुख्यः) ब्रह्मव्यपदेशः (ब्रह्मवाचकता) च भाक्तः (अमुख्यः, गौण इति यावत्), स्वीकृतो भवेत्—'अथ च चराचरव्यपाश्रयः तद्व्यपदेशः—तद्वाचिशब्दः, चराचरवाचिशब्दो ब्रह्मणि अभाक्तः मुख्य एव, 'अनेन जीवेनात्मना प्रविश्य नामरूपे व्याकरवाणि' इत्यादिना सर्वशब्दानां वाचकभावस्य तथावगतत्वात्। अथवा तेजःप्रभृतिभिः शब्दैस्तत्तद्वस्तुमात्रवाचितया (व्युत्पन्नैः) ब्रह्मणो व्यपदेशो भाक्तः कृतः[2]स्यात्। किन्तु एवं विच्छेदे सूत्रार्थः सातिशयगूढः सम्पद्यते इति समुचितो न प्रतिभाति।

एवमेव मध्वाचार्यस्याप्यर्थो न सन्तोषावहः। यतो हि तेनैतत् पूर्वसूत्रैरेव सम्बद्धीकृत्य अत्रापि पूर्ववदेव उत्पत्तिक्रमनिर्देशमभ्युपगत्य इत्थमर्थः कृतः—'मनसश्च विज्ञानमिति व्यपदेशश्चराचरेष्वालोचनाद् विज्ञानं भवतीति भागापेक्षया स्यात्, न विज्ञानत्वापेक्षया। स्कान्दे च—

> परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा।
> विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात्॥
> विज्ञानतत्त्वात्तु मनो मनस्तत्त्वात्तु खादिकम्।
> एवं बाह्या परा सृष्टिरन्तस्तद्व्यक्त्यपेक्षया॥
> विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः[3]॥

अर्थात् मनसो विज्ञानोत्पत्तेर्नेदं तात्पर्यं यत् विज्ञानं मनस उत्पद्यते अपि तु अस्य अयमेव भावो यत् चराचरविषयकचिन्तनाद् ज्ञानमुत्पद्यते।

इत्थं च अयमर्थः केवलम् आरोपित एवार्थः न तु शब्दानां वास्तविकः अर्थः इति तदरुचौ हेतुः।

---

१. छा० ६।३।२ 		२. श्रीभाष्यम् पृ० २७४

३. मध्वभाष्ये स्कन्दपुराणवचनम् पृ० ८२

(२।३।१७) अस्य सूत्रस्य इदं तात्पर्यं यत् जीवात्मा आकाशादिवत् नोत्पद्यते यतो हि उत्पत्तिप्रकरणे तदुत्पत्तिर्न श्रूयते। किं च, 'न जीवो [1]म्रियते' 'न जायते म्रियते वा विपश्चित्[2]', अजो नित्यः शाश्वतोऽयं [3]पुराणः, 'तत् सृष्ट्वा तदेवानुप्राविशत्[4]', 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि[5]', 'तत्त्वमसि[6]', 'अहं [7]ब्रह्मास्मि', 'अयमात्मा ब्रह्म [8]सर्वात्मभूः', इत्येवमाद्याः नित्यत्ववादिन्यः श्रुतयो जीवस्योत्पत्तिं प्रतिबध्नन्ति।

यदि चेत्थं प्रतिपाद्यते यत्—

'यथा सुदीप्तात्पावकाद् विस्फुलिंगाः सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापयन्ति[9]॥१६॥

इत्यादिश्रुतयो जीवात्मनः उत्पत्तिं प्रलयं च प्रतिपादयन्ति, जीवो हि ब्रह्मणो विभक्त इति विकारः' तदा एतस्य एतत्समाधानं यत् वस्तुगत्या स न तस्माद् विभक्तः। 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा'[10] इत्यादिश्रुतिभिर्हि एतत्स्पष्टीकृतं यत् यथा आकाशस्य विभागो घटादिसम्बन्धेन भासते तथैव बुद्ध्याद्युपाधिसम्बन्धेन अयं जीवः प्रविभक्तः प्रतीयते, 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः'[11] इत्यादिशास्त्रम् 'अविकृतम् एकम् अपि ब्रह्म एव अनेकबुद्ध्यादिमयम्' एतत्प्रदर्शयति। अत्र शंकरनिम्बार्काभ्याम् न आत्मा अश्रुतेः इति पदच्छेदः स्वीकृतः; रामानुजमध्ववल्लभैश्च न आत्मा श्रुतेः इत्थम्, किन्तु सूत्रार्थः उभयत्र समानः।

मध्वाचार्यमतिरिच्य अन्येषां चतुर्णामाचार्याणां जीवात्मनः अनुत्पत्तौ ऐकमत्यम्, मध्वमते अस्य अयमर्थः-आत्मा (परमात्मा) न नश्यति नापि चान्यस्मिन् लीयते 'परमात्मापि न विलीयते',[12] अस्यां दशायाम् सुतराम् एतत्स्पष्टं यत् एतत्पूर्वसूत्रस्य रामानुजेन कृतः अर्थः नितराम् अस्वाभाविकः जीवात्मनः उत्पत्तेः अस्वीकृतिर्हि सतर्कमेतत्समर्थयति

---

१. छा० ६।११।३    २. क० २।१८
३. तत्रैव १।२।१८    ४. तै० उ० २।६।१
५. छा० ६।३।२    ६. छा० ६।८।७
७. बृ० १।४।१०    ८. बृ० उ० २।५।१९
९. मुं० २।१।१    १०. श्वे० ६।११
११. बृ० ४।४।५    १२. म० भा० पृ० ८३

यत् जीवात्मनो विषये यत् जननमरणादि प्रतिपादितं तत वस्तुगत्या भौतिकशरीरस्य कृते वर्तते।

अष्टादशसूत्रस्य 'ज्ञोऽत एव' इत्यस्य शंकरेण अयमर्थः कृतः—'ज्ञः चैतन्यः अयमात्मा अत एव यस्मादेव नोत्पद्यते परमेव ब्रह्म अविकृतम् उपाधिसम्पर्काज्जीवभावेन अवतिष्ठते। परस्य हि ब्रह्मणः चैतन्यस्वरूपत्वमाम्नातम्—'विज्ञानमानन्दं ब्रह्म'[1] 'सत्यं ज्ञानमनन्तं[2] ब्रह्म' इत्येवंरूपासु श्रुतिषु, अथ यो वेदेदं जिघ्राणीति स[3] आत्मा 'इति च सर्वैः कर्णद्वारैः इदं वेद, इदं वेद' इति विज्ञानेनानुसन्धानात् तद्रूपत्वसिद्धिः। इति नित्व चैतन्यस्वरूप एवात्मेति निश्चिनुमः'[4] एतेनैतत्सिध्यति यत् शंकरमते ज्ञानम्, विज्ञानमेव आत्मा (ब्रह्म)। रामानुजनिम्बार्कयोस्तात्पर्यम् एतद् यत् ज्ञशब्दस्य अर्थः ज्ञानस्वरूपत्वे सति ज्ञानाश्रयः अस्ति। निम्बार्केण शंकरवत् एतत् पृथगधिकरणं स्वीकृतम् किन्तु रामानुजेन एतदग्रिमेण सम्बद्धम्' रामानुजनिम्बार्कवत् वल्लभेन अपि एतत् स्वीक्रियते यत् ज्ञानं चैतन्यं च जीवात्मनो गुणः तथा पूर्वपक्षरूपेण सूत्रस्य अयमर्थो मन्यते यत् जीवो ज्ञानस्वरूप इति स्वयं ब्रह्म। ब्रह्मजीवयोर्भेदो मायौपाधिकः किन्तु जीवो वस्तुगत्या ब्रह्मणः अंशः एवं ब्रह्मणा तथैव सम्बद्धो यथा अग्नेर्निःसृतः स्फुलिंगः अग्निना सम्बद्धो वर्तते। एतत् सिद्धान्तं खण्डयता च तेन (वल्लभेन) विशिष्टमेव विवरणं प्रदत्तम्—'तस्मात्तदंशस्य तद्व्यपदेशवाक्यमात्रं स्वीकृत्य शिष्टपरिग्रहार्थं माध्यमिकस्यैवापरावतारो नितरां सद्भिरुपेक्ष्यः'[5]। यद्यप्यन्ते तेन जीवात्मा ज्ञः (ज्ञाता) अभ्युपगत इति स्थूलरूपेण न कश्चिदपि भेदस्तथापि एवं स्वीकृतौ सुदूराकृष्टः अयमर्थः सम्पद्यते इत्यत्र न सन्देहलेशः।

मध्वाचार्येण चास्य सर्वथा अन्य एव एवम् अर्थः स्वीकृतः यत् जीवात्मनः उत्पत्तिः परमात्मनो जायते। एतदग्रे तेन एकं नवीनं सूत्रम् 'युक्तेश्च' एतत्—यच्च न अन्यस्मिन् कस्मिन्नपि भाष्ये उपलभ्यते—पठित्वा तस्य अयमर्थः स्वीकृतः यत् अन्यथा यद्यपि जीवात्मा नित्यः, अजन्मा च वर्तते तथापि औपाधिकरूपेण तस्य शरीरादिधारणं सर्वथोचितं युक्तिसंगतं च प्रतीयते। मध्वाचार्यस्य अयमर्थः स्वस्मिन्नंशे समुचितः अपि क्लिष्टकल्पनाकलितत्वात् न सन्तोषजनकतामावहति।

---

1. बृ० 3।9।28 2. तै० 2।1।1
3. छा० 8।12।4 4. शां० भा० पृ० 142०–22 (भ० प्र० सं०)
5. अणुभाष्यम् 2।3।18 पृ० 171 (कलकत्ता संस्करणम्)

शंकर-रामानुज-निम्बार्केषु अन्तिमयोः सिद्धान्तो मान्यः। यतो हि जानातीति ज्ञः इति विग्रहेण उत्पन्नस्य कर्तृकप्रत्ययान्तज्ञशब्दस्य 'ज्ञाता' अर्थः न तु ज्ञानम्। किंच यदि सूत्रकारस्य तात्पर्यं शंकरवत् 'ज्ञ' इत्यस्य ज्ञानार्थे, इत्थं तस्य ब्रह्मणा सह ऐक्ये च अभविष्यत् तदा निःसन्देहं सूत्रकारः तत्सूत्रम् 'ज्ञानमत एव' एवम् अरचयिष्यत्।

एवमेव आर्थिकविभिन्नता एतदग्रिमाधिकरणे एकोनविंशसूत्रतः द्वात्रिंशत्तमसूत्रं यावद् वर्तते। जीवात्मनो ज्ञानस्य तन्नित्यतायाश्च समीक्षणे प्रकृत्या अयं प्रश्नः समुत्पद्यते—किं जीवात्मा विभुः, मध्यमपरिणामः, अणुपरिमाणो वा ? यतो हि 'सर्वव्यापी सर्वभूतान्तरात्मा'[1] 'स वा एष महानज[2] आत्मा', [3]'आकाशवत्सर्वगतश्च नित्यः' इत्यादिश्रुतयः तस्य विभुत्वं प्रतिपादयन्ति'। तथा 'एषोऽणुरात्मा चेतसा[4] वेदितव्यः इत्यादिश्रुतयः तस्याणुत्वं प्रकटयन्ति। अस्यां परिस्थित्यां कतरत् मन्येत इति। यावत्सूत्राक्षरार्थानां सम्बन्धः तावत् सर्वेषां भाष्यकाराणामैकमत्यम्। किन्तु अधिकरणीयसर्वसूत्रार्थेषु सामान्यरूपेण दृष्टिप्रक्षिप्त्या अवगम्यते यत् स्थूलरूपेण सर्वेषां मान्यता विभिन्नाः। एकोनविंशसूत्रतः अष्टाविंशसूत्रं यावत् सर्वाणि सूत्राणि जीवात्मनः अणुत्वं निश्चिन्वन्ति। एवं शंकरातिरिक्ताः अन्ये सर्वभाष्यकाराः सिद्धान्तपक्षमाकलयन्ति। किन्तु शंकरः इमं पूर्वपक्षं मत्वा एकोनत्रिंशत्तमतः द्वात्रिंशत्तमसूत्रं यावत् निराकृतवान्। कतरश्चानयोरुचितः इति निर्णयात्पूर्वं सूत्रार्थेषु किंचिद्दृष्टिपातः आवश्यकः—

एकोनविंशसूत्रतः अष्टाविंशसूत्रं यावद् व्याख्यातानां सूत्राणामर्थेषु सर्वेषाम् आचार्याणाम् ऐकमत्यम्। अन्तरं केवलमेतावद् वर्तते यत् रामानुजनिम्बार्कौ 'व्यतिरेको गन्धवत् तथा च दर्शयति' एतावदेकं सूत्रं स्वीकुरुतः, शंकरवल्लभयोर्मते चैतत्सूत्रद्वयम्'। मुख्यमतभेदस्तु 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' अस्य सूत्रस्यार्थे वर्तते, यस्यायमक्षरार्थः—

'किन्तु स चासौ गुणः तद्गुणः तस्य; ते च ते गुणाः तद्गुणाः तेषाम्; तस्य गुणाः तद्गुणाः तेषाम् वा सारत्वात् (सारभूतत्वात्) प्राज्ञवत् तस्मिन् तत्र वा व्यवहारः। शंकरमते अस्मिन् सूत्रे सिद्धान्तपक्षस्य प्रतिपादनम्। तेन च अत्र जीवात्मनः अणुत्वं निराकृतम्[5]।

---

१. श्वे० ६।११ २. बृ० उ० ४।४।२२
३. तै० २।१।१ ४. मु० ३।१।९
५. द्रष्टव्यम् ब्र० सू० २।३।२९ शा० भा०

रामानुजाचार्येण चेदं सूत्रमित्थं व्याख्यातम्—जीवः यद्यपि ज्ञाता तथापि स ज्ञानमेतदर्थमुच्यते यत् ज्ञानम् प्राज्ञस्य अर्थात् जीवस्य सारभूतो गुणः। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विपश्चितः प्राज्ञस्य ज्ञान-शब्देन व्यपदेशः। सह ब्रह्मणा विपश्चिता, यः सर्वज्ञः' इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुणः इति विज्ञायते'।[1]

अत्रैतत्स्मर्तव्यं यदस्मिन्नधिकरणे रामानुजेन 'ज्ञोऽत एव एतत्सूत्रमपि अनुसम्बद्ध मन्यते। तस्य चेदं कथनं यत् आत्मा यदि स्वभावतः ज्ञाता विभुश्च भवेत् तदा प्रत्येकस्थले तस्य वर्तमानतया प्रत्येकवस्तुनस्तस्य ज्ञातृत्वं स्वीकर्तव्यं स्यात्' अस्य आक्षेपस्येत्थं निराकरणं यत् जीवात्मा न विभुरपि तु सः अणुपरिमाणः विभुत्वे च तस्य सर्वदा विषयप्रत्यक्षत्वं स्यादथ च समस्तविषयाणां तन्मयत्वात् तस्य ज्ञानस्य कश्चिद् विषय एव न अवशिष्यादिति सर्वदा तस्य विषयाप्रत्यक्षत्वं सम्पद्येत।

निम्बार्कः अपि रामानुजवदेव जीवाणुत्वपक्षपाती किन्तु अनेन अन्तिम-चतुःसूत्र्याः व्याख्या अन्यथा कृता दृश्यते। जीवो यद्यपि वस्तुतः अणु-स्तथापि यदा कदा तस्मिन् विभुत्वेन व्यपदेशः। यतो हि ज्ञानं यच्च विभु अस्ति, तस्य सारभूतो गुणः—जीवे गुणिनि, यदा कदा एत-दर्थं विभुत्वव्यपदेशः ( व्यवहारः ) यत् तस्य यो गुणो ज्ञानं तद्विभु वर्तते।

तस्य चायं ज्ञानरूपो गुणः सर्वदा, सर्वपरिस्थितिषु च तस्मिन्नेव तिष्ठति, गुणगुणिनामयुतसिद्धत्वात्। आम्, एतदवश्यं यत् कदाचिद् ज्ञानरूपी स गुणः उद्भूतो भवति कदाचिच्च अनुद्भूतः। अन्यथा यदि जीवः प्रकृत्या विभुर्मन्यते तदा तस्य बन्धमोक्षौ असम्भवौ स्याताम् अथ च सर्वदा स्याताम्। स्वगुणस्य ज्ञानस्य विभुत्वेन यदा कदा जीव-स्यापि विभुत्वात् तस्मिन् विभौ परमात्मनि च इदमेव अन्तरं यद् ब्रह्म प्रकृत्या गुणैश्चापीत्थमुभयप्रकारेण विभुः, जीवश्च अणुर्भवन्नपि केवलं स्वगुणैर्विभुरेतावानुभयोः विशेषः। तथाहि—'बृहन्तो गुणा यस्मिन्निति ब्रह्मेति प्राज्ञवदात्मा विभुगुणत्वात् 'नित्यं विभुम्—' इति व्यपदिष्टः, दृष्टान्ते बृहदेव प्राज्ञो गुणैरपि बृहद् भवति, दार्ष्टान्ते तु जीवः अणुपरि-माणको गुणेन विभुरिति विशेषः'[2]।

---

१. द्रष्टव्यम् ब्र० सू० श्रीभाष्यम् २।३।२९ पृ० २७८

२. नि० भा० पृ० २६६

वल्लभमतेन अन्तिमानां चतुर्णां सूत्राणामर्थः अपरथापि भिन्नः-जीवो यद्यपि अणुः तथापि 'तत्त्वमसि' इत्यादिवाक्यैः तस्मिन् ब्रह्मव्यपदेशः। ब्रह्मगुणा हि जीवस्य सारभूतगुणाः यैश्च स जडजगतो भिद्यते इति च तत्सारांशः।

मध्वाचार्येण तु एकोनविंशसूत्रतः षड्विंशसूत्रं यावद् एकमेव अधिकरणं स्वीकृत्य जीवात्मनः [1]अणुत्वं स्थापितम्। सप्तविंशं सूत्रं च तेन पृथक् अधिकरणं स्वीकृत्य तत्र जीवात्मन [2]एकरूपतानेकरूपताप्रतिपादकश्रुतिषु सामंजस्यं स्थापयितुं चेष्टितम्। तदनन्तरम् अष्टाविंशैकोनत्रिंशसूत्रयोरेकमधिकरणमभ्युपगत्य तत्र ब्रह्मजीवैक्यप्रतिपादकतत्त्वमसीत्यादिश्रुतीनां द्वा सुपर्णा प्रभृतिब्रह्मजीवपार्थक्यप्रतिपादकश्रुतीनां च सामंजस्यं स्थापयितुं प्रयसितम्।

अष्टाविंशसूत्रे एष सिद्धान्तपक्षः प्रतिपादितः यत् जीवो ब्रह्मणो [3]भिन्नः यतो हि श्रुतिवाक्येषु तथैव प्रदर्शितं वर्तते। एतदिह स्मर्तव्यं यत् अस्मिन्नेव सूत्रे अन्यैराचार्यैः स्वव्याख्यासु गुणगुणिनोः, ज्ञानजीवयोः, अन्तरं समर्थितम्। तदनन्तरम् एकोनत्रिंशत्तमे सूत्रे एतत् प्रतिपादितं यत् ब्रह्मजीवयोरभेदप्रतिपादनस्य केवलमेतत्त कारणं यत् ब्रह्मणो गुणाः ज्ञानानन्दादयः जीवात्मनः सारभूताः गुणाः स्वभावो[4] वा वर्त्तते।

---

१. अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति।
यथा व्याप्य शरीराणि हरिचन्दनविप्लुषः॥
(म० भा० ब्र० पु० वचनम्) पृ० ८५

२. अचिन्त्ययैष शक्त्यैव एकोऽवयववर्जितः।
आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा॥
(तत्रैव प० पु० वचनम् पृ० ८६)

३. भिन्नोऽचिन्त्यः परमो जीवसंघात् पूर्णः परो जीवसंघो ह्यपूर्णः।
यतो ह्ययं नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिकाङ्क्षेत्॥
(म० भा० पृ० ८६)

४. ज्ञानानन्दादिब्रह्मगुणाः एवास्य यतः सारः, स्वरूपम् अतः अभेदव्यपदेशः।

यथा सर्वगुणात्मकत्वात् सर्वात्मकत्वं ब्रह्मण उच्यते 'सर्वं खल्विदं ब्रह्म' इति।

भविष्यत्पुराणे च—

भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः॥
(म० भाष्ये ८७ पृष्ठे भविष्यत्पुराणवचनम्)

एतेषामर्थानां, विशेषतया एकोनत्रिंशत्तमसूत्रार्थस्य तुलनात्मक-समीक्षणे एष निष्कर्षः समायाति यत् प्रातिस्विकरूपेण एतेषु न कतमोऽप्यर्थः सन्तोषावहः इति कश्चिदपि निष्पक्षपातः समालोचकः स्पष्टतया एतदधिगच्छेत् यत् शंकररामानुजयोरर्थः सर्वेष्वल्पतमत्वेन सन्तोष-जनकः। यतो हि शंकरस्य अर्थः नितरां क्लिष्टकल्पनाकलितः। स चेत्थम् 'तद्गुणसारत्वात्तु—' इति सूत्रस्य तदितिसर्वनामशब्दः अकस्माद् बुद्धिवाचकः प्रतिपादितः किन्तु एतस्मात् पूर्वेषु सूत्रेषु अस्य न कश्चित्प्रसंगः इति तथात्वं वैचित्र्यमिवावहति। किंच, शंकरस्य अय-मभिप्रायः यत् यथा प्राज्ञे ( परमात्मनि ) अणुत्वविशिष्टबुद्ध्युपाधिकम् अणुत्वम् तथैव जीवचैतन्यस्य बुद्धौ प्रतिविम्बतया जीवे अणुत्वविशिष्ट-बुद्ध्युपाधिकम् अणुत्वं वर्तते। किन्तु शंकरमते ब्रह्मजीवयोरेकत्वात् कथमुभयोर्दृष्टान्तदार्ष्टान्तिकभाव इति न अवगम्यते। इत्थं बुद्धि (मनः) जीवयोः सम्बन्धविषयः अधिकरणस्य साधारणतात्पर्यात् सर्वथा बहिर्भूतः प्रतीयते।

रामानुजेन प्रतिपादितः पूर्वोक्तसूत्रस्यार्थः निस्सन्देहं सरलः प्रतिभाति किन्तु स जीवस्य ज्ञान-ज्ञातृप्रश्नं, प्रस्तुत्य तं समाधत्ते इति स्पष्टतया अप्रासंगिकः; अस्य विवेचनं हि अष्टादशसूत्रे कृतपूर्वम्। तन्मते किन्तु 'प्राज्ञवत्' इत्यस्य अर्थः अत्यन्तोपयुक्तः—तस्येदं कथनं यत् यथा प्राज्ञः ( परमात्मा ) आनन्द उच्यते यतो हि आनन्दः तस्य सारभूतो गुणः तथैव जीवात्मा विज्ञानमुच्यते यतश्च विज्ञानं तस्य सारभूतो गुणः 'तद्गुणसारत्वात्—विज्ञानगुणसारत्वात् आत्मनो विज्ञानमिति व्यपदेशः। विज्ञानमेवास्य सारभूतो गुणः, यथा प्राज्ञस्यानन्दः सारभूतो गुणः इति प्राज्ञः आनन्दशब्देन व्यपदिश्यते''[1]। नापि चास्मिन् संदेहो वर्तते यत् एषु नवसु सूत्रेषु जीवात्मनः अणुत्वं स्थापयतो रामानुजस्य पदान्वय-प्रकारः शंकरापेक्षया अधिकस्वाभाविकः। तथापि यथा यथा अर्थाः सर्वैराचार्यैः प्रदर्शिताः तेषां सर्वेषामवलोकनेन निम्बार्कवल्लभयोरर्थः सर्वाधिक्येन सन्तोषजनकः स्वल्पकल्पनश्च वर्तते। जीवात्मनि अणुत्वे स्थिरीभूते प्रकृत्या अयं प्रश्नः उदेति यत् यदि जीवः अणुस्तदा कुतस्त-स्मिन् कथं च प्रायः विभुत्वव्यपदेशः निम्बार्केण एतद् इत्थं समाहितं यत् तस्य गुणो विभुरिति स विभुरुच्यते एतच्च एतस्मात् पूर्वयोः 'व्यतिरेको गन्धवत्'[2] 'गुणाद्वा आलोकवत्'[3] इतिसूत्रयोः अर्थपर्या-

---

१. रा० भा० २७८ २. ब्र० सू० २।३।२६

३. तत्रैव २।३।२५

लोचनया स्पष्टं संजायते। तच्चेत्थं यथा लघुरपि दीपः कक्षमात्रं प्रकाशयति, लघुनः अपि कुसुमस्य गन्धः सुदूरगामी भवति तथैव अणोरपि जीवात्मनो ज्ञानस्य व्यापकत्वेम स विभुरुच्यते। इममेव प्रश्नं प्रस्तुत्य वल्लभः समाहितवान् किन्तु तस्य समाधानप्रकारः अतिशयेन सामान्यः—जीवो यद्यपि अणुस्तथापि ब्रह्मणो गुणानां जीवात्मनः सारभूतगुणत्वात् स ब्रह्मोच्यते। 'ननु तत्त्वमस्यादिवाक्यैः परमेव ब्रह्म जीव इति कथमणुत्वमिति इमां शंकां निराकरोति तु शब्दः। तस्य ब्रह्मणो गुणाः प्रज्ञाद्रष्टृत्वादयः त एवात्र जीवे साराः इति जडवैलक्षण्यकारिणः इत्यमात्ये राजपदप्रयोगवत् जीवे 'भगवद्व्यपदेशः'।

अस्य विशेषसूत्रस्य मध्वाभिमतः अप्यर्थः अत्युत्तमः। एकस्यैव अधिकरणस्य अनेकाधिकरणेषु विभाग एव तु तस्य नात्यन्तसन्तोषावहः।

अस्याधिकरणस्य अन्तिमसूत्राधारेण यत्र जीवात्मनः ज्ञानवत्त्वं प्रतिपादितं वर्तते, एतावान्निर्बाधरूपेण वक्तुं शक्यते यत् जीवात्मसम्बद्धा याः याः विशेषताः वर्णिताः तासु इमम् एकतमम् महत्त्वपूर्णात्यावश्यकगुणं ज्ञानमवलम्ब्य शंकरसिद्धान्तस्य पुष्टिः न कथमपि सूत्रैः कर्त्तुं शक्यते। यद्यपि निष्पक्षपातं निश्चितरूपेण एतद् वक्तुं न शक्यते तथापि सम्भवत्येतद् यद् बादरायणस्य तात्पर्यं 'जीवात्मा अणुः' इति स्यात् किन्तु ज्ञानं तस्य गुणः स ज्ञानस्वरूपश्चेति सर्वेषां वैष्णवाचार्याणां सिद्धान्तः।

( २।३।३३–४० ) एषु अष्टसु सूत्रेषु एतद् विवेचितं वर्तते यत् जीवः कर्त्ता अस्ति न वा। शंकरमतिरिच्य अन्यैः सर्वाचार्यैः एषामष्टानां सूत्राणामेकमेव अधिकरणं स्वीकृतम्। यद्यपि यस्य कस्यचित्सूत्रस्य अर्थे यत्र तत्र तेषां यत्किंचिन्मतभेदस्तथापि कर्तृत्वं जीवस्य स्वाभाविको गुण इति सर्वैः।

सिद्धीकृतम्। फलस्वरूपम् 'उपलब्धिवदनियमः'[1] अस्य सूत्रस्यार्थः रामानुजेन इत्थं कृतः, जीवं कर्त्तारम् अमत्वा यदि प्रकृतिरेव कर्त्री मन्येत तदा प्रकृतेः सर्वपुरुषसाधारणत्वेन कर्मफलानां भोगे समानरूपता सम्पद्येत न कश्चिदपि वा कर्मफलं प्राप्नुयात्, यथा च द्वात्रिंशत्तमे सूत्रे जीवात्मनः विभुत्वस्वीकारे विषयानुभवविषये प्रतिपादितं वर्तते—'आत्मनः अकर्तृत्वे दोष उच्यते। यथा आत्मनः विभुत्वे नित्योपलब्ध्यनुपलब्धिप्रसंग इत्यादिनोपलब्धेरनियमः उक्तः तद्वद् आत्मनः

---

१. अणुभाष्यम् पृ० ७२१ (चौ०)

२. ब्र० सू० २।३।२७

अकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरुषसाधारणत्वात् सर्वाणि कर्माणि सर्वेषां भोगाय स्युः, नैव वा[1] कस्यचित्' ।

निम्बार्केणेत्थमेतद् व्याख्यातम्—'फलोपलब्धिक्रियायां[2], नियमो नास्ति', किन्तु अयमर्थः विशेषेण अस्पष्ट इति कष्टकल्पितः प्रतीयते। सूत्रस्थ–'वत्'–शब्दे अपि न किमपि ध्यानं प्रादीयत ।

वल्लभेन मध्वाचार्येण चेत्थं तस्य व्याख्या कृता—जीवात्मा कर्मणां शुभाशुभफलानि जानाति तथापि स शुभफलप्रापककर्माण्येवा-नुष्ठास्यति एष कश्चिन्नियमो नास्ति, जीवो हि न सर्वशक्तिमान् इति बाह्यवस्तुभिः आकृष्टः अपि कदाचिद् अशुभकर्मसु कदाचिच्च शुभकर्मसु प्रवर्तते । अतः निश्चीयते यत् जीवात्मा कर्मानुष्ठाने न स्वतन्त्रः अन्यथा स्वयं स्वस्मै अशुभकर्माणि अननुष्ठाय शुभकर्माण्येव अनुतिष्ठेत् । किन्तु अशुभकर्माण्यपि अनुतिष्ठति अतः जीवस्य कर्तृत्वं बाध्यते बुद्धेश्च कर्तृत्वं सिध्यति । जीवात्मा कर्ता अस्ति किन्तु सः कर्मणां शुभाशुभफलानि जानानः अपि शुभान्येव कर्माणि अनुष्ठास्यतीत्यस्य तथैव न कश्चि-न्नियमो यथा इन्द्रियैः सः कदाचित् शुभवस्तूनि प्रत्यक्षीकरोति कदा-चिच्च अशुभानि; फलतः कदाचिद् आनन्दमनुभवति कदाचिच्च तद्वि-परीतम्—'यथा चक्षुषा इष्टमनिष्टं चोपलभते एवमिन्द्रियैः कर्म कुर्वन् इष्टमनिष्टं वा[3] प्राप्नोति' । तथा—'यथा ज्ञाने इदं ज्ञास्यामि' इत्यनियमः प्रतीयते एवं कर्मण्यपि जीवस्य; य आत्मानमन्तरोपयमयतीतिश्रुतेः[4]' । अयमेवार्थः शंकरेणापि कृतो यः सातिशयं स्वाभाविकः समुचितश्च प्रतीयते ।

किन्तु चत्वारिंशत्तमस्य 'यथा च तक्षोभयथा' इति सूत्रस्यार्थे महत्त्वपूर्णमन्तरं दृश्यते । साधारणतया अस्य सूत्रस्य अयमेवार्थः यत् यथा तक्षा कदाचित् स्ववास्यादिसाहाय्येन कर्म करोति कदाचिच्च न, तथैव जीवात्मा अपि—यद्यपि स्वकीयनैसर्गिककर्तृत्वगुणयुक्तः–कदाचित्तु क्रियाशीलः प्रतीयते कदाचिन्न । 'वागादिकरणसम्पन्नः, अपि आत्मा यदा इच्छति तदा करोति यदा तु नेच्छति तदा न करोति । यथा तक्षा वास्यादिकरणसन्निधाने अपि इच्छानुगुण्येन करोति न करोति' च[5]' ।

---

१. रा० भा० पृ० २८९ २. नि० भा० पृ० ३६८
३. म० भा० पृ० ७४२ (चौ०) ४. म० भा० पृ० ८९
५. रा० भा० पृ० १८१

'आत्मेच्छया यथा तक्षा तथा करोति न करोति इत्युभयथा व्यवस्था' सिध्यति।

मध्वाचार्येण इत्थमेतद् व्याख्यातम्—'स्वातन्त्र्यं प्रतीयते अत आह 'यथा च तक्ष्णः कारयितृनियन्तृत्वं कर्तृत्वं च विद्यते एवं जीवस्यापि'[2], अर्थात् तथा तक्षा स्वस्मै स्वयं कार्यं करोति यश्च तेन कारयति तस्मै अपि करोति तथैव जीवः स्वतन्त्रः अपि कर्त्ता एवं च परमात्माधीनः अपि कर्ता अस्ति। इत्थमेतद् व्याख्यानं प्रकृत्या एतत्प्रश्नं समाधत्ते यत् जीवात्मा कुतः कदाचित् कर्त्ता, कदाचिच्च नास्ति इति। तच्च पूर्वसूत्रप्रसंगानुसारं नितरामनुकूलम्।

शंकराचार्येण एतत्सूत्रं पृथगधिकरणत्वेन स्वीकृत्य अत्र एष प्रश्नः समाहितः यत् एतस्मात् पूर्वं यज्जीवात्मनः कर्तृत्वं साधितं तत् तस्मिन् स्वाभाविकम् अथवा चक्षुरादिकरणरूपोपाधिसन्निधानेन सत्यं न प्रत्युत अध्यस्तम्। अन्ते च अयमेव तस्य निष्कर्षः यत् तन्न सत्यम् अपितु अध्यस्तमेव। किन्तु सूत्रस्य अयमर्थः कदापि न भवितुमर्हति नापि च स तक्षोदाहरणेन कथमपि सिध्यति। यतो हि यदि—'यथा तु तक्षा लोके······सुखीभवति'[3] एतदुदाहरणं ऋजुतया गृह्येत तदा तद् जीवात्मनि कर्तृत्वं स्थापयति यच्च कदाचित् स्पष्टतया परिलक्ष्यते कदाचिच्च न। किन्तु नैतत् स्पष्टीभवति यत् एषा एवंभूता युक्तिः यया जीवात्मनः कर्तृत्वम् असत्यं कल्पितं च अवगम्येत। शंकरः अपि एतदनुभवति अतः स एतावत् संयोक्तुमत्यावश्यकमवगच्छति—"तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः·········स्वात्मना त्वकर्तैवेति[4]"।

किन्त्वत्र अयं सन्देहः यत् तक्षा स्वयं शरीरेणापि कार्यं करोति वास्यादिसाधनैरपि इति शरीरं वास्यादिकञ्चोभयं तत्र कर्तृ, किञ्च, शरीरसाहाय्यमन्तरेण वास्यादि न किमपि कार्यं कर्तुं समर्थम् अतः एतदुदाहरणम् सत्यपि पूर्वोक्तसर्वव्याख्याने—न कथमपि शंकराभिलषिताभिप्रायसमर्थकम्। पूर्वाधिकरणसूत्राणां-येषु च जीवात्मनः कर्तृत्वं खण्डितं वर्तते—शंकरेण स्वयं खण्डनं कृत्वा जीवात्मनः कर्तृत्वं स्थापितम्, इदानीं च—'अयमात्मा स्वात्मना त्वकर्तैव' इति प्रतिपादयति। अतः सूत्रस्येयं व्याख्या समीचीना बोधगम्या च न प्रतिभाति

---

१. नि० भा० पृ० ३६८ २. म० भा० पृ० ८९

३. शा० भा० पृ० १४८९-९० ४. ब्र० सू० २।३।४० शा० भा०

अतः परम् 'परात्तु तच्छ्रुतेः'[1] एतत्सूत्रावलोकनेन शंकरस्य अर्थः अथाप्यधिकक्लिष्टकल्पितः प्रतीयते, 'जीवस्य न स्वतः कर्तृत्वादिसिद्धिः, तु=किन्तु, तत् = कर्तृत्वादिकम् ; परात् परस्मात् ईश्वरात् कर्माध्यक्षात्, सिध्यति श्रुतेः—'एष ह्येव साधु कर्म कारयति तं यमधो निनीषते';[2] 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति' इति चैवंजातीयकासु श्रुतिषु तथैव प्रतिपादनात्। इति हि तत्पदव्याख्यानम्। अत्र अयं प्रश्नः उपस्थितो भवति यत् कर्मानुष्ठाने जीवः सर्वथा स्वतन्त्रः अथवा यस्य कस्यचिदधीनः। तत्र सर्वेषामाचार्याणामेतस्मिन् ऐकमत्यं यत् जीवात्मना एषा शक्तिः परमात्मतः प्राप्यते। जीवात्मकृतकर्माणि च परमात्मा अपेक्षते येन तदनुकूलमेव फलं भोक्तुं स जीवात्मने जन्म दद्यात्।

एतदिहावधातव्यं यत् 'शक्तिविपर्ययात्' एतस्य सूत्रस्य व्याख्या अपि भिन्नभिन्ना कृता दृश्यते। शंकरेण अस्य अयमर्थः मन्यते—'यदि पुनः (विज्ञानं यज्ञं तनुते इत्यनुसृत्य) विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात् ततः शक्तिविपर्ययः स्यात्—करणशक्तिबुद्धिर्हीयेत कर्तृशक्तिश्चापद्येत। सत्यां च बुद्धेः कर्तृशक्तौ तस्या एवाहं प्रत्ययः······कर्तृत्वाभ्युपगमात्'[3]। रामानुजनिम्बार्कौ चेत्थं प्रतिपादयतः—बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि तस्या एव स्यात् इत्यात्मनो भोक्तृत्वशक्तिर्हीयेत। भोक्तृत्वं च बुद्धेरेव सम्पद्यते इत्यात्मसद्भावे प्रमाणाभावश्च स्मात्—'पुरुषोऽस्ति भोक्तृभावात्'[4]। 'बुद्धेः कर्तृत्वे करणशक्तिर्हीयेत कर्तृशक्तिः स्यात्। इत्थं कर्तृत्वभोक्तृत्वयोर्बुद्धावुदपद्यमानयोर्बन्धमोक्षावपि तस्या एव स्याताम्, न पुरुषस्येति सांख्याभिमतमपि पुरुषभोक्तृत्वं[5] विरुध्येत'।

मध्वबल्लभौ चेत्थं स्वीकुरुतः यत् जीवात्मनः कर्तृत्वं त्ववश्यं वर्तते किन्तु स इष्टानिष्टकर्मानुष्ठाने न स्वाधीनः। यतो हि तस्मिन् तथाभूता शक्तिर्न वर्तते यथा परमात्मनि अस्ति। इत्थं च जीवात्म-परमात्मनोः कर्तृत्वे इदमेवान्तरं यत् परमात्मनि इष्टानिष्टसम्पादनशक्तिर्वर्तते जीवात्मनि तु नेति।

यद्यपि एवंभूतायां परिस्थित्यामत्र एतन्निर्णेतुं दुःशकं यद् एतेषु अर्थेषु कतमः अधिकोपयुक्तः तथापि समुच्चित्य अवलोकनेन वयमे-

---

१. ब्र० सू० २।३।४१ २. कौ० उ० ३।८

३. शा० भा० पृ० १४८। ४. रा० भा० पृ० १८१

५. नि० भा० पृ० ३६८

तन्निष्कर्षमधिगच्छामः यत् सूत्रकारानुसारं जीवः स्वाभाविकतया कर्ता अस्ति किन्तु सः अवश्यं परमात्माधीनः तथा शंकराचार्येण जीवकर्तृत्वाधिकरणे यः अस्य साधारणः अर्थः कृतः यत् जीवस्य कर्तृत्वमौपाधिकं स स्वाभाविकः सन्तोषजनकश्च न प्रतीयते।

( २।३।४१-४२ ) अत्र एतदेव साधितं यत् जीवात्मनः कर्तृत्वं परमात्माधीनम् , परमात्मा च जीवात्मकृतकर्म अपेक्षते । सर्वैराचार्यैरयमेवार्थः स्वीकृतः।

( २।३।४३-५३ ) अत्यन्तमहत्त्वपूर्णमेतदधिकरणम् , यतो हि अस्मिन् जीवात्मपरमात्मनोः सम्बन्धस्य मार्मिकविवेचनं कृतं वर्तते—ब्रह्मजीवयोः कः सम्बन्धः ? उभयमेकमित्युभयोरंशांशिभावः ? पृथक् पृथग्वा तद्द्वयमिति ? ब्रह्मजीवयोरेतद्विषयकः अयं प्रश्नः प्रकृत्या एतदर्थमुद्गच्छति यत् उभयोः ऐक्यस्य, पार्थक्यस्य च बोधिकाः श्रुतयः समुपलभ्यन्ते । 'अंशो नानाव्यपदेशात्'—इत्यादिसूत्रस्य शाब्दिकानुवादे स्पष्टमेतत् संजायते यत् जीवः ईश्वरस्य कल्पितः अंशः। य आत्मानमन्तरो यमयति—इत्यादिश्रुतयः ब्रह्मजीवयोर्भेदं प्रतिपादयन्ति तथा 'ब्रह्मदाशाः ब्रह्मदासा ब्रह्मेमे कितवाः' इत्यथर्ववेदीयब्रह्मसूक्तपाठे दासत्वं कितवत्वं धीवरत्वं च स्थापयन्त्यस्तत्राभेदं प्रतिपादयन्ति अतो भेदाभेदोभयव्यपदेशोपलब्ध्या एतत् सिध्यति यत् जीवः ईश्वरस्य कल्पितः अंशः। एतदेव शंकरेणेत्थं प्रतिपादितम्—'दाशा य एते कैवर्ताः प्रसिद्धाः ये चामी दासाः······ अतो भेदाभेदावगमाभ्यामंशत्वावगमः'[1]। इत्थमत्र सूत्रकारः स्पष्टतया एतत्प्रतिपादयति यत् जीवः अवश्यं ब्रह्मणः अंशो मन्तव्यः यतो हि भेदाभेदोभयप्रतिपादकश्रुतयः समुत्पलभ्यन्ते इत्येतदंशत्वमेवं स्वीकरणीयं यथा पूर्वोक्तभेदाभेदोभयत्वं सिध्येत।

अंशांशिभावविवेचनात्पूर्वमेतत्कथनमिह समुचितं प्रतिभाति यदस्मिन् विषये शंकरविचारो न अधिकोपयुक्तः। यत्रापि हि भेदाभेदोभयप्रतिपादकश्रुतयो लभ्यन्ते तत्र सर्वत्रैव शंकरः अभेदप्रतिपादकश्रुतीरेव समुचिता उक्त्वा भेदप्रतिपादकश्रुतीर्व्यावहारिकीः प्रतिपादयमानः संदिग्धग्रन्थिं छिनत्ति। इत्थं समस्तमेव द्वैतम् अविद्या, अद्वैतमेवैकमात्रं च सत्यम् इति तदभिप्रायः। अत एवास्मिन् सूत्रे शंकरः अंशशब्दार्थम् अंश इवेति करोति यदर्थं न किमपि युक्तिसंगतं प्रमाणम्—'जीवः ईश्वरस्यांशो भवितुमर्हति यथाग्नेर्विस्फुलिंगः, अंश इवांशो, न हि निरवयवस्य मुख्यः अंशः सम्भवति'[2]। परन्तु 'यदि परमात्मा निरवयवः तदा कथं न

१. शा० भा० पृ० १५११ २. तत्रैव पृ० १५१०-११

स एव जीवः इत्यस्योत्तरे स स्वयमभिधत्ते भिन्नरूपेणव्यवहारात् कथं पुनर्निरवयवत्वात् स एव न भवति ? नानात्वव्यपदेशात् इत्थमुभयतः शङ्कर-पाशारज्जुः।

निम्बार्कमतेन, यस्य च सिद्धान्तो भेदाभेदनाम्ना प्रसिद्ध, सूत्रार्थः अतिसमुचितः प्रतिभाति। तन्मते उभयं सत्यम्। शंकरेणापि सूत्रस्यान्ते एतत्स्वीकृतम् 'अतो भेदाभेदावगमाभ्यामंशत्वावगमः"[1]। अंशस्य च तात्पर्यमिह न कस्यचिदेकस्य भिन्नीकृतवस्तुनः प्रत्युत शक्त्या वर्तते। ब्रह्मणि विभिन्नाः शक्तयो याः चिदचिज्जच्छक्तिरूपे अभिव्यक्ताः सन्ति। यत्किंचित्परिवर्तनेन रामानुजेनापि अयमेवार्थः स्वीकृतः। फलतः भेदाभेदोभयप्रतिपादकश्रुतिवाक्यानि समुचितानीति अभ्युपगन्तव्यम्। एतत्स्वीकर्त्तुं चैतदावश्यकं यत् जीवो ब्रह्मणः अंशः अभ्युपगम्येत अर्थात् स ब्रह्मणः अंशः, स च तदधीनः, व्यक्तिगतरूपेण स्वभावतः तद्भिन्नश्चेति। मध्वाचार्येण अंश इत्यस्यार्थः तद्भिन्नत्वे सति तच्छेषत्वम् इत्यभ्युपगतः। तस्य इदं तात्पर्यं यत् भेदवाचकश्रुतयः निजेन अभिधेयार्थेन वास्तविकमर्थं प्रतिपादयन्ति अभेदवाचकश्रुतयश्च ततो न्यूनत्वे सति किंचित्तत्सदृशत्वम् एवं सादृश्यलक्षणया 'ततः किञ्चिन्न्यूनं किन्तु तत्सदृशम्' एतदर्थं सूचयन्ति। एषा च भेदाभेदोभयार्थसन्निविष्टिः तेन अंश शब्दस्य व्याख्यायां प्रकटीकृता।

वल्लभाचार्यस्याप्यर्थः प्रायः रामानुजनिम्बार्कयोरिव वर्तते। एतदुक्तुं नावश्यकं यद् रामानुजनिम्बार्कयोरर्थः नितरां स्वाभाविकः; शंकरस्य च तदपेक्षया क्लिष्टकल्पितः बलात्समावेशित इव च प्रतीयते। सूत्रकारो हि यदि शंकरस्य विचारपद्धतिमभिप्रैष्यत् तदा जीवं ब्रह्मणः अंश कदापि नाकथयिष्यत् नापि चास्य महत्वपूर्णं 'जीव' इति शब्दस्याध्याहार भारं पाठकेभ्यः समार्पयिष्यत्।

अस्याधिकरणस्य आगामिशेषसूत्रार्थपरीक्षणेनापि अयमेव निष्कर्षः पुष्टीक्रियते। 'जीवो हि ब्रह्मणः अंश' इति श्रुतिभिः स्मृतिभिश्च प्रमाणीक्रियते। एतत्प्रतिपादनानन्तरं सूत्रकारेण अस्य प्रश्नस्य समाधानं प्रस्तुतं यत् जीवो यदि ब्रह्मणः अंशस्तदा लोके यथा शरीरस्य हस्तपादाद्यन्यतमांगस्य दुःखित्वे शरीरी देवदत्तादिः दुःखमनुभवति तथैव जीवस्यापि ब्रह्मणः अंशत्वे तदंशि ब्रह्मापि सुखदुःखाद्यनुभवेत्। षट्चत्वारिंशत्तमसूत्रस्य 'प्रकाशादिवन्नैवं परः' इत्यस्य अयमर्थः—'यथा जीवः अविद्यावशात् देहा-

---

१. तत्रैव पृ० १५१२

द्यात्मभावमिव गतः तत्कृतेन दुःखेन 'दुःखी अहम्' इति मन्यते नैवं परः—ईश्वरो नैवम्' प्रकाशादिवत्। यथा सौरश्चान्द्रमसो वा प्रकाशो नभो व्याप्य वर्तमानो वक्रकाष्ठाद्युपाधिकृतवक्रभावमिवापन्नोऽपि न वस्तुतो वक्रभावमापद्यते तद्वत् ईश्वरः अपि जीवगतेन दुःखेन न परमार्थतः प्रभाव्यते' इति च तत्सूत्रपदार्थः। अत्र शंकरस्य इदं तात्पर्यं यत् यथा सूर्यचन्द्रदीपादिप्रकाशः स्वप्रकाशितपदार्थस्वरूपानुकूलं स्वरूपं धारयन्नपि न वस्तुगत्या तद्रूपादिभिः ऋजुवक्रादिभिः प्रभाव्यते तथैव ईश्वरः अपि जीवानुभूतसुखदुःखादिभिः न प्रभाव्यते। किन्तु शंकरसिद्धान्ते जीवेश्वरयोर्नितान्तमेकत्वे अस्य प्रश्नस्यैव शशशृंगायितया तत्समाधानमपि निराधारमेव।

निम्बार्कस्यार्थः अत्यन्तस्वाभाविकः। तस्येदं कथनं यत् 'यथा सूर्यचन्द्रादिप्रकाशः स्वप्रकाशितमलमूत्राद्यपवित्रवस्तुस्पर्शेन दूषितो न भवति तथैव परमात्मा अपि जीवकृतकर्मद्वारा दूषितो न भवति 'जीवस्य परमपुरुषांशत्वे अंशी सुखदुःखं नानुभवति। यथा प्रकाशादिः स्वांशगतगुणदोषवर्जितो भवति''[1]।

रामानुजस्य व्याख्या इत्थम् 'प्रकाशादिवज्जीवः परमात्मनः अंशः। यथा अग्न्यादित्यादेः भास्वतो भारूपः प्रकाशः, अंशो भवति, गवादीनां गोत्वादिविशिष्टानां वस्तूनां गोत्वादीनि विशेषणान्यंशाः। यथा वा देहिनो देवमनुष्यादिदेहः अंशः तद्वत्। एकवस्त्वेकदेशत्वं ह्यंशत्वम्। विशिष्टस्य एकस्य वस्तुनः विशेषणमंश एव। तथा च विवेचकाः विशिष्टवस्तुनि विशेषणांशः अयम् विशेष्यांशः अयम् इति व्यपदिशन्ति। विशेषण विशेष्ययोः अंशांशित्वे अपि स्वभाववैलक्षण्यं दृश्यते। एवं जीवपरयोर्विशेषणविशेष्ययोः अंशांशित्वं स्वभावभेदश्च उपपद्यते···यथाभूतो जीवः न तथाभूतः परः। यथैव हि प्रभायाः प्रभावानन्यथाभूतः तथा प्रभास्थानीयात् स्वांशात् जीवात् अंशी परः अपि 'अर्थान्तरभूतः इत्यर्थः'[2]।

इत्थमेतदवश्यं मन्तव्यं यद् रामानुजनिम्बार्कयोरंशः कथं चिदधिकः स्वाभाविकः।

अष्टाचत्वारिंशत्तमे सूत्रे 'अनुज्ञापरिहारौ'—इत्यत्र एष आक्षेपः कृतो वर्तते यत् यदि सर्वे जीवाः समानरूपेण ब्रह्मण एव अंशास्तदा भिन्नभिन्नजीवानां विषये या हेयोपादेयता उक्ता सा कथं संगता स्यात् उदाहरणार्थम्—'ऋतौ भार्यामुपेयात्' इत्यनुज्ञा; 'गुर्वंगनां नोपगच्छेत्' इति

---

१. नि० भा० पृ० ३६८ २. रा० भा० पृ० २८४

परिहारः एवं लोके अपि 'मित्रमुपसेवितव्यम्' इत्यनुज्ञा, शत्रुः परिहर्तव्यः इति परिहारः। एतस्यायं परिहारः यत् तौ अनुज्ञापरिहारौ—हेयोपादेयते-देहेन सह तादात्म्यसंबन्धेन संगते भवतः। अर्थात् यथा अग्नेः एकत्वे अपि श्रोत्रियगृहस्याग्निः ग्राह्यः स्मशानस्य च परित्याज्यो वर्तते सूर्यप्रकाशस्य वा यथा एकत्वे अपि तीर्थादिपवित्रस्थानानां प्रकाशो ग्राह्यः मलमूत्रादिगतश्च अग्राह्यः। अथ च गोमूत्रादि शुद्धम् इतरपशुमूत्रादिचाशुद्धम् मन्यते तथैव सर्वेषां जीवानामेकत्वे अपि हेयोपादेयते संगच्छेते।

एकोनपंचाशत्तमे सूत्रे एष आक्षेपः प्रस्तुतः कृतो वर्तते यत् यदि जीवः ब्रह्मणः अंश आत्मा चैकः तदा एकेन जीवेन कृतस्य कर्मणः फलोपभोगः इतरेणापि अनुभूयेत। अस्याः समाधानं शंकरेण इत्थं कृतम् यत् यद्यपि आत्मा एकः तथापि अन्यकृतकर्मफलोपभोगः इतरस्य तदानीमेव स्यात् यदा अनुपहितात्मा भोक्ता मन्येत किन्तु नैवम्; उपाधिपरिच्छिन्नो हि आत्मा जीवः। अयमुपाधिरेव च जीवात्मपरमात्मनोः पार्थक्यं स्थापयति। अयमुपहितात्मा जीव एव कर्त्ता भोक्ता च वर्तते।
अतः आत्मनः एकत्वे अपि उपाधिपरिच्छिन्नानाम् आत्मनां सर्वशरीरैः सह पार्थक्येन सम्बन्धात् एकेन कृतस्य कर्मणः फलं नान्यः कश्चिद् भोक्तुं शक्नोति।

रामानुजेन सूत्रमेतदित्थं व्याख्यातम्—ब्रह्मणः अंशत्वेन यद्यपि सर्वे जीवाः समानगुणयुक्तास्तथापि एकेन कृतस्य कर्मणः फलोपभोगः नान्येन कर्त्तुं शक्यते। यतो हि यद्यपि सर्वे जीवात्मानः विभोः परमात्मनः अंशास्तथापि स्वरूपतः अणुत्वेन न तत्र विभुत्वम् (सर्वगतत्वम्) इति ते प्रतिशरीरं भिन्नाः।

निम्बार्केणापि सर्वथा रामानुजेनेवार्थः कृतः।

पंचाशत्तमस्य 'आभास एव च' इति सूत्रस्य अयं शाब्दिकः अर्थः—जीवो ब्रह्मण आभासमात्रमेव। शंकरेणास्य अयमर्थः कृतो यत् जीवो ब्रह्मणः प्रतिबिम्बमात्रम्। स न तु साक्षात् ब्रह्मसमानः, नापि च तद्भिन्नसत्ताकः। अतः कारणात् यद्यपि ते सर्वे ब्रह्मणः अभिन्नाः तथापि यथा एकस्यैव सूर्यस्य जलादौ भिन्नभिन्नप्रतिबिम्बेषु एकस्मिन् प्रतिबिम्बे कम्पमाने न प्रतिबिम्बान्तरं कम्पते एवं नैकस्मिन् जीवे कर्मफलसम्बन्धिनि जीवान्तरस्य [1]तत्सम्बन्धः।

---

१. शा० भा० पृ० १५२८-२९

वल्लभेनापि इत्थमेव सूत्रस्य व्याख्यानं कृतम्। तस्येदं कथनम् यत् जीवो ब्रह्मणः प्रतिबिम्बमात्रम् न तु सर्वथा ब्रह्मस्वरूपः। तत्र प्रतिबिम्बस्य न मिथ्यात्वे अपि तु जलचन्द्रवद् एकस्यानेकत्वे दृष्टान्तः। यतो हि तत्सिद्धान्तानुसारं यः आनन्दस्वरूपो गुणः ब्रह्मणि अभिव्यक्त-रूपेण तिष्ठति, स एव जीवे अन्तर्हितो भवति। वल्लभेनात्र पाठकानां-ध्यानं सूत्रस्य 'आभास' इति शब्दमभिलक्ष्यीकृत्य एतत्प्रकटीकृतं यत् अस्य शब्दस्यार्थः शंकरानुसारी आभासः सर्वथा मिथ्या न वर्तते। अपि तु तस्यायमर्थः यत् अन्यत् (तथाभूतमेव वस्त्वन्तरम्) यत् सर्वथा न तदेव स्यात् अपि तु तथाभूतमिव प्रतिभासेत।

रामानुजनिम्बार्कमते आभास इत्यस्य हेत्वाभास इत्यर्थः। रामानुजेन सूत्रमेतत् विशेषरूपेण शंकरसिद्धान्तविरुद्धं स्वीकृतम्। तस्येदं कथनं यत् ये ब्रह्मजीवयोः अविद्यापरिकल्पितौपाधिकभेदं स्वीकृत्य सर्वोपाध्यु-पहितजीवमेकं स्वीकुर्वन्ति तन्मते न कथमपि कर्मसांकर्यं वारयितुं शक्यम्—'अविद्यापरिकल्पितोपाधिभेदे अपि सर्वोपाधिभिरुपहितस्वरूप-स्यैकत्वाभ्युपगमात् भोगव्यतिकरस्तदवस्थ' एव'[1]।

निम्बार्कः सूत्रम् 'आभासा एव च' एवं पठित्वा सर्वसाधारणतया सांख्यादिविरुद्धं मनुते यतो हि ते जीवानामनेकत्वं स्वीकृत्यापि तेषां विभुत्वं स्वीकुर्वन्ति। तस्येदं कथनं यत् कर्मफलसांकर्यविषयकः तेषां सिद्धान्तः आभासामात्रम् अपसिद्धान्त एवेतिभावः। 'परेषां कपिलादीनां व्यतिकरप्रसंगात् सर्वगतात्मवादाश्चाभासा एव"[2]।

(२।३।५१-५३) अस्मिन् अन्तिमाधिकरणे अवशिष्टसूत्रत्रये शंकर-निम्बार्कवल्लभैः एतत्स्पष्टीकृतं यत् 'जीवानामनेकत्वे अपि तेषां सर्व-व्यापकत्वम् 'इत्येषः अपसिद्धान्तः। रामानुजस्यायमभिप्रायो यत्—ये ब्रह्मजीवयोः केवलमौपाधिकभेदं स्वीकृत्य 'जीवो ब्रह्मैव नापरः' एतत् स्वीकुर्वन्ति तेषां कथनमयुक्तम्। किन्तु सूत्राणामर्थे न कश्चिदपि महत्त्व-पूर्णो भेदः।

मध्वाचार्येण षट्चत्वारिंशत्तमसूत्रतः पंचपंचाशत्तमसूत्रं यावत् सूत्र-दशकस्य सर्वथा भिन्न एवार्थः कृतः। तन्मते जीवा द्विविधाः (१) भिन्नांशाः (२) अभिन्नांशाश्च। तत्र ये ब्रह्मणः अंशाः सन्तः अपि ब्रह्मतः सर्वथा भिन्नास्ते भिन्नांशजीवाः। ब्रह्मणः अंशाः सन्तः अपि न तात्त्विकरूपेण ब्रह्मणो भिन्नाः (ब्रह्मस्वरूपांशाः) ते च अभिन्नांश-

---

१. रा० भा० पृ० १८६ २. नि० भा० पृ० ३६८

जीवाः। एतेषु प्रथमे साधारणजीवात्मानः, स्वल्पशक्तयः, ब्रह्मणा च सह तेषामत्यल्पम् एव सादृश्यम्। अन्ये च तस्य मत्स्यकच्छपाद्यवतार-स्वरूपाः ये च शक्त्या स्वभावेन च न लेशमात्रमपि ब्रह्मणो न्यूनाः। षट्चत्वारिंशत्तमं सूत्रमेतत्प्रतिपादयति यत् मत्स्यकच्छपाद्यवतारः परमात्मा जीवश्च एतद्द्वयं न तथैव एकम् यथा प्रलयकालीनाग्निप्रकाशः खद्योतप्रकाशश्च। प्रकाशरूपेणोभयोरग्न्यंशत्वे अपि नोभयोरेकत्वम्।

अष्टचत्वारिंशत्तमे सूत्रे साधारणजीवावतारिजीवयोरन्तरस्य अन्य एव हेतुः प्रदर्शितो वर्तते। साधारणजीवाः कर्मानुष्ठाने सर्वथा परमात्माधीनाः, यतो हि तेषां संबन्धः शरीरेण वर्तते। किन्त्वेतद् अवतारधारिजीवैः सह न वर्तते। न चापि साधारणजीवानां सांकर्यम् अपरिमित-शक्तिशालिभिर्जीवैः सह कथमपि सम्भवति। साधारणजीवाः हि सीमितशक्तयो निम्नकोटिकाः, न चैवमितरे। साधारणजीवाः परमात्मनः प्रतिबिम्बमात्रम् इति ते प्रतिबिम्बांशका उच्यन्ते, परमात्मना च सह एतेषामत्यल्पं साम्यम्। इतरे च जीवाः परिपूर्णाभिव्यक्तयः प्रादुर्भावा वा कथ्यन्ते, अत एव च तेषां परमात्मना सह पूर्णं साम्यम् इति द्विविध-जीवानां न कथमपि सांकर्यं सम्भवति।

एकपंचाशत्तमसूत्रतो मध्वाचार्येण नवीनमधिकरणं प्रारब्धं स्वीकृत्य अन्यैश्च सर्वैः इव अयमेवाक्षेपः प्रस्तुतः यत् यदि सर्वे जीवाः समानरूपेण परमात्मनः प्रतिबिम्बांशा भिन्नांशा वा तदा तैः सह ब्रह्मणः भेदः कथमाकलयितुं शक्यते। ततः अयमाक्षेप इत्थं समाहितो यत् अदृष्ट-विभिन्नता एवास्य भेदस्य नियामिका। इच्छाद्वेषसुखदुःखादिवैचित्र्य-मपि अदृष्टभिन्नतावशादेव वर्तते। जीवानामयं भेदो देशनिमित्तकः—अर्थात् ये स्वर्गस्थास्ते देवाः, ये च मृत्युलोकस्थास्ते मनुष्या इति तु वक्तुमशक्यम् स्वर्गमृत्युलोकप्राप्तिरपि अदृष्टवशादेव भवतीति देश-निमित्तको भेदः अदृष्टे एव अन्तर्भूतः।

प्रथमसूत्रमतिरिच्य अस्य अधिकरणस्य अन्येषां सूत्राणां विभि-न्नार्थविचारणे मध्वाचार्यस्य अर्थः सर्वथा अप्रासंगिकः साम्प्रदायिकश्च प्रतीयते। अन्याचार्याणामर्थदृष्टिपातेनैतन्निश्चीयते यत् एकतमापेक्षया कतमः समीचीनः। यतो हि सर्वे स्वाभाविकाः क्लिष्टकल्पिता वा प्रतीयन्ते। एवमेव आभासशब्दस्य उभौ अप्यर्थौ समानरूपेण युक्तियुक्तौ प्रतिभातः किन्त्वधिकरणस्य आदिमं सूत्रम् 'अंशो नानाव्यपदेशात्—'एतत्सर्वेषां निर्णायकम्। अस्य सूत्रस्य अंश इत्येष शब्दः एतद् घोषयति यत् शंकर-सिद्धान्तो न लेशमात्रेणापि सूत्रकारसम्मतः, नापि चैतत्स्वीकृतेः कश्चि-

दृष्याधारो यत् शंकराभिमतमेव सूत्रकारतात्पर्यं स्यात्। जीवो ब्रह्मणः अंशो भवितुमर्हति यतो हि ब्रह्मजीवयोः भेदाभेदप्रतिपादनं स एव कर्त्तुं शक्नोति य एवं मनुते यत् जीवस्यापि तथैव सत्यत्वं यथा ब्रह्मणः, तथापि न तयोर्नितान्तभिन्नत्वम्। इत्थं शंकरमध्वयोः सिद्धान्तः, यावदेतदधिकरणं सम्बध्नाति, सर्वथा अप्रासंगिकः।

---

## द्वितीयाध्यायस्य चतुर्थः पादः

पादपरिचयः—द्वितीयाध्यायस्य तृतीये पादे आकाशादिभूतसृष्टिविषयकश्रुतीनां पारस्परिकविरोधः परिहृतः जीवस्य स्वरूपं च निर्धारितम्। इदानीं प्राणानामिन्द्रियाणां च उत्पत्तिसंख्यास्वरूपादिनिरूपकश्रुतीनां पारस्परिकविरोधपरिहारार्थं चतुर्थपादस्यारम्भः। यतो ह्येतेषां जीवात्मना सह तावदत्यावश्यकसम्बन्धो यावत्सः अस्मिन् संसारे तिष्ठति।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

( १ ) शंकरमते लिंगशरीरश्रुतीनां विरोधपरिहारः।
( २ ) रामानुजमते इन्द्रियादेः कार्यत्वनिरूपणम्।
( ३ ) निम्बार्कमते जीवकरणश्रुतीनामविरोधप्रदर्शनम्।
( ४ ) मध्वमते युक्तिसहितश्रुतिविरोधपरिहारः।
( ५ ) जीवस्थूलशरीरमध्यवर्तिनां लिंगशरीरघटकान्तर्बहिरिन्द्रियाणां प्राणानां च विचारः।

## सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्

( २।४।१–४ ) प्रथमचतुःसूत्र्या आदिमाधिकरणे वल्लभमतिरिच्य अन्यैः सर्वैः भाष्यकारैः—कतिपयसूत्रव्याख्याने सत्यपि मतभेदे—एतन्निर्धारितं यत् ब्रह्मणः आकाशादिभूतोत्पत्तिरिव प्राणानामप्युत्पत्तिर्जायते। इत्थं शंकरानुसारेण अधिकरणस्यैतस्य एतत्तात्पर्यं यत् 'एतस्मादात्मनः आकाशः सम्भूतः' इत्यादिश्रुतिषु यथा आकाशाद्युत्पत्तिरुक्ता तथैव प्राणेन्द्रियादयः अपि ब्रह्मण उत्पद्यन्ते। यतो हि उत्पत्तिप्रतिपादकश्रुतयः साधारणरूपेण सर्वेषामुत्पत्तिं प्रतिपादयन्ति। अतः कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि अन्तःकरणं चैत्येतत्सर्वं तथैव ब्रह्मणः समुत्पद्यते यथा चाकाशादिभूतग्रामः।

प्राणोत्पत्तिप्रतिपादकश्रुतिः 'एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च,' गौणी इत्येतद्वक्तुं न शक्यते यतो हि इत्थं स्वीकारे 'एकस्मिन् विज्ञाते सर्वं विज्ञातं भवति' इति प्रतिज्ञाभंगः संजायते। एतदतिरिच्य 'जायते' इत्येष शब्दः प्राण-मनः-सर्वेन्द्रियादीनां कृते सर्वसाधारणः इति एकत्र तस्य मुख्यत्वे अन्यत्रापि तस्य मुख्यत्वस्वीकृतिरुचिता। किं बहुना, येषु श्रुतिवाक्येषु स्पष्टतया प्राणानामुत्पत्तिर्न उक्ता यथा—'तत्तेजः[1] असृजत्' इत्यादि तत्रापि इदमेवाभिप्रेतम्। यतो हि 'अन्नमयं हि सोम्य मनः,' 'आपोमयः प्राणः,' तेजोमयी वाक्'[2] इत्यत्र वाक्-प्राण-मनसाम् उत्पत्तिः तेजोऽबन्नानाम् उत्पत्तेः पश्चात् उक्ता वर्तते। तेजोऽबन्नानाम उत्पत्तिश्च ब्रह्मण एव इति प्राणादीनाम् अपि ब्रह्मण उत्पत्तिर्निर्विवादा। यदा हि मनः अन्नमयम्, प्राणः जलमयः, वाणी च तेजोमयी तथा तेजोऽबन्नेतिभूतत्रयोत्पत्तिः ब्रह्मण एव तदा मनः प्राण-वाचां ब्रह्मजन्यत्वमगत्या सिद्धम्। किंच, 'येन अश्रुतं श्रुतं भवति'[3] एतदुपक्रम्य, 'ऐतदात्म्यमिदं सर्वम् इत्यमुपसंहारः कृतः एतेनापि प्राणानां ब्रह्मजन्यत्वं सिद्ध्यति।

पूर्वोक्तचतुः सूत्र्या अर्थः निम्बार्केणापि एवमेव स्वीकृतः।

रामानुजेन द्वितीयं तृतीयं च एकमेव सूत्रं स्वीकृत्य एतदुक्तं यत् 'प्राणा वाव[4] ऋषयः' अत्र यः प्राणशब्दः स न प्राणवाचकः अपि तु परमात्मबोधकः बहुवचननिर्देशश्चगौणः। सृष्टेः पूर्वं हि परमात्मनः स्थितिः श्रुतिवाक्येषूपलभ्यते, स च परमात्मा एक इति बहुवचननिर्देशः असम्भवः।

चतुर्थसूत्रस्याप्यर्थः रामानुजेन अन्यथा कृतः। तस्येदं तात्पर्यं यत् सृष्टेः पूर्वं परमात्मन एव स्थितिः श्रुतिवाक्येषूपलभ्यते। नामरूपात्मिकायाः एतत्सृष्टेः पूर्वम् आकाशादीनामुत्पत्तिरभूदिति तत्पूर्वं कस्यापि नामरूपात्मकवस्तुनः अभावात् वागिन्द्रियप्राणादीनां किमपि कार्यमेव नासीत् अतः तेषां स्थितिरेव न आसीत् इति प्राणशब्दः परमात्म-वाचकः। 'इतश्चप्राणशब्दः'...न सन्तीत्यर्थः.'[5]

---

1. छा० ६।२।३
2. तत्रैव ६।५।४
3. छा० ६।१।३ इत्यारभ्य ६।१६।२ इति यावत्
4. श० ब्रा० षष्ठकाण्डे प्रथमाध्याये प्रथम ब्राह्मणे प्रथमा कण्डिका
5. रा० भा० पृ० २८७

इत्थमेतदवलोक्यते यत् शंकरेण गौण्यसम्भवात्'' इति सूत्रे षष्ठी-तत्पुरुषः स्वीकृतः, रामानुजेन च गौणी असम्भवात् एवं पदच्छेदो विहि-तस्तेनगौणी इति प्रथमान्तः। अत एवाग्रे 'तत्' इति सर्वनाम्नः अर्थः अपि भिन्नरूपेण कृतो वर्तते।

यद्यपि सूत्राणां पदपद्धतिः इयती गूढा यदेतन्निर्णेतुं सर्वथा दुष्करम् यत् कतमः अर्थः समुचितः इति तथापि एतन्निश्चीयते यत् रामानु-जस्यार्थः क्लिष्टकल्पितः सूत्रेषु समारोपित इव च प्रतिभाति शंकरपक्षस्य मान्यतायाः इदमेव प्रमाणं यन्निम्बार्कः अपि एतस्यार्थेन सर्वथा सहमतः।

मध्वाचार्येणात्र अधिकरणत्रयं मत्वा द्वितीयतृतीयसूत्रयोर्मध्ये 'प्रति-ज्ञानुपरोधाच्च' एतदन्यदेकं सूत्रं स्वीकृतम्। तस्यायमर्थः यत् ये भविष्यत्पुराणस्य—

> नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः।
> तेषां भूतैरुपचयः सृष्टिकाले विधीयते[2]।
> परेण साम्ये सम्प्राप्ते कस्य स्यान्मुख्यनित्यता।

इति वाक्यमाधृत्य मनसः अनादित्वं स्वीकुर्वन्ति तेषां कथनमनु-चितम्' यतो हि स प्राणमसृजत[3], 'एतस्माज्जायते प्राणः मनः सर्वेन्द्रि-याणि च', इत्यत्र सर्वेन्द्रियेभ्यः प्राक् मनसः उत्पत्तिः प्रतिपादिता अतः मनसः अनादित्वं वक्तुं न शक्यते।

चतुर्थं सूत्रं विशेषरूपेण वागिन्द्रियाणि निर्दिश्य एतत्साधयति यत् वागिन्द्रियमनादि वक्तुं न शक्यते यतो हि तन्नाम मनसः अनन्तरं समायातम् किंच, मन उत्पद्यते अतः वागप्यवश्यमुत्पत्तिशालिनी मन्तव्या अत एव ऐतरेयारण्यके—

> 'तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्'[4]

इति प्रतिपादितम्। वल्लभाचार्यस्य मतम् एतेभ्यः सर्वेभ्यो भिन्नम्। तेन इत्थं स्वीकृतं यत् 'तथा प्राणाः'[1] इत्यत्र तथा शब्दः न वियदादीन् प्रत्युत जीवात्मानं सूचयति। अतः 'तथा प्राणाः' इत्यस्य अयमर्थः यत् यथा जीवः तथा प्राणः अर्थात् प्राणःअपि जीववत् अनादिः। इत्थं वल्लभ-मतेन प्राणेषु जीवात्मनः सर्वे गुणाः वर्त्तन्ते केवलं चैतन्यांशः प्राणेषु

---

१. ब्र० सू० २।४।१     २. म० भा० पृ० ९५
३. प्र० उ० ६।४     ४. ऐ० आ० ३।१।१

तिरोहितो जीवात्मनि च आविर्भूतो वर्तते तथा 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणानुत्क्रामन्तं सर्वे प्राणाः अनूत्क्रामन्ति'[1] इत्यत्र यत् जीवात्मना सह प्राणस्योत्क्रमणमुक्तम् न तद्गौणत्वेन अपि तु मुख्यत्वेनैव गृह्यते यतो हि तस्मिन् एव प्रकरणे एषा श्रुति वर्तते इति जीवस्य विषये तस्या मुख्यत्वं प्राणानां विषये च तस्या गौणत्वं स्वीकर्तुं न शक्यते। प्राणानां स्थितिः सृष्टेः पूर्वमुक्ता वर्तते 'असद्वा इदमग्र आसीत्। तदाहुः किं तदसदासीदिति, ऋषयो वाव तेऽग्रेऽसदासीत्, तदाहुः के ते ऋषयः इति, प्राणा वा ऋषयः'[2]। यस्यार्थः रामानुजाचार्येण 'परमात्मा' कृतः इति प्राणः अपि जीवात्मेव अजः अनयोर्द्वयोः ब्रह्मणः उद्गतिर्भवति न चोत्पत्तिः।

एतदिह विशेषेण अवधातव्यमस्ति यत्तेभ्य एव सूत्रेभ्यो द्विविधो निष्कर्षः प्राप्यते-एकतः, प्रणानामुत्पत्तिर्भवति; द्वितीयतः प्राणः अजः इति। तथापि एतदिहावश्यं स्वीकर्त्तव्यं यद् वल्लभस्यार्थः अधिकः स्वाभाविकः एवम् 'तथा प्राणा' इति प्रथमसूत्रे तथाशब्दस्य यः अर्थः अनेन गृहीतः सः अन्याचार्यापेक्षया अधिकसंगतः। तथा स्वीकारे हि तथाशब्दः स्वपूर्वव्याख्यातनिकटतमसूत्राणां विषयं निर्दिशति अन्याचार्यव्याख्याततथाशब्दश्च वियदादिबोधकः सन् सुदूरव्याख्याततृतीयपादप्रथमार्धविषयबोधकः संजायते। अतः सन्निहितासन्निहितयोर्मध्ये सान्निहितस्यैव ग्रहणम्' इतिनियमेन सन्निहितग्रहणस्यैव न्याय्यत्वात् अन्याचार्यमते प्राणोत्पत्तिस्वीकृतौ अपि वल्लभानुसारं 'तथा' शब्दार्थस्याधिकोपयुक्ततया सहसा सः अस्वीकर्त्तुमशक्यः।

(२।४।५-६) द्वितीयस्मिन् अधिकरणे अस्मिन् एतत्प्रदर्शितं वर्तते यत् एतेषां प्राणानां संख्या एकादश अस्ति—पंच ज्ञानेन्द्रियाणि, पंच कर्मेन्द्रियाणि एकं च अन्तः करणम् 'दश इमे पुरुषे प्राणाः[3] आत्मैकादशः'। आत्मशब्देन च अन्तःकरणं परिगृह्यते, करणाधिकारात्[4]।

'सप्तगतेर्विशेषितत्वाच्च' इति पंचमसूत्रे गतिशब्दस्य द्वौ अर्थौ स्वीकृतौ स्तः (१) उत्क्रान्तिः, ऊर्ध्वगमनम् (२) बोधः, अवगम्यमानत्वम्। शंकरनिम्बार्कवल्लभैश्च ऐकमत्येन एतदुक्तं यत् 'हस्तो वै ग्रहः' इत्यादिश्रुतिषु सप्तभ्यः अधिकानि हस्तपादादीन्द्रियाणि श्रूयन्ते इति इन्द्रियाणां सप्तैव संख्यायाः निश्चयो न समुचितः। किन्तु रामानुजेन

१. बृ० उ० ४।४।२ २. श० ब्रा० ६।१।१।१
३. बृ० ३।९।४ ४. शा० भा० पृ० १५६१

अयमर्थः कृतः—'न सप्तैव इन्द्रियाणि अपितु एकादश। हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात्, कार्यभेदाच्च"[1]।

मध्वाचार्यस्य चार्थः नितरां काल्पनिकः। तेनेत्थं स्वीकृतं यत् गतेः अर्थात् ज्ञानापेक्षया प्राणाः, इन्द्रियाणि, सप्त—चक्षुषी, श्रुती, नासिका-छिद्रद्वयम् एका च वाक्, अनेन गतेरर्थः ज्ञानं स्वीकृतः, गम्धातो र्हि चत्वारः अर्थाः, ज्ञानम्, गमनम्, मोक्षः, प्राप्तिः, ज्ञानं च तेष्वेकतमम्। किंच, हस्तेत्यादिकर्मसूचकम् इति तेषां संकलनं न ज्ञानेन्द्रियेषु वर्तते। अयं चार्थः तेन 'हस्तादयस्तु स्थितेऽतोनैवम्' इति सूत्रस्थस्य 'स्थिते' इतिशब्दस्य 'कर्मणि विषये' एतदर्थं मत्वा कल्पितः। गति-स्थित-शब्दयोः ज्ञानकर्मार्थस्वीकृतिरत्र विचित्रैव प्रतिभाति। यद्यपि तेन 'हस्तादीनां कर्मविषयत्वान्न सहपाठः' एतदुक्त्वा स्वाभिमतार्थे प्रमाण-रूपेण वायुपुराणस्य अयं श्लोकः समुद्धृतः—

> 'संसारस्थितिहेतुत्वात् स्थितं कर्मविदो विदुः।
> तस्मादुद्गतिहेतुत्वाद् ज्ञानं गतिरिहोच्यते'[2]॥

तथापि एतत्सर्वमतिक्लिष्टकल्पितं प्रतीयते।

प्राणा उत्पद्यन्ते तेषां च संख्या सप्त इति कथनानन्तरं सप्तमसूत्रे 'अणवश्च' इत्यत्र सूत्रकारेण एतत्प्रतिपादितं यत् ते अणवः, सूक्ष्मेन्द्रिय-ग्राह्याः परिच्छिन्नाश्च सन्ति। यदि ते स्थूलाः स्युस्तदा मृत्युसमये कर्णादिभ्यो निस्सरन्तो विलान्निःसरन्तः सर्पादय इव दृश्येरन्। विभवश्च चेत् तदा एकेनैव इन्द्रियेण अन्यविषयस्यापि ज्ञानं सम्भवेत्। अतः तेषामणुत्वं परिच्छिन्नत्वं चैव समुचितम्। अस्य सूत्रस्यार्थे सर्वे आचार्याः सहमताः।

एतावत्पर्यन्तं यावन्तः प्राणानां गुणा उक्तास्तेषां सर्वेषामतिदेशः अष्टमसूत्रद्वारा मुख्यप्राणेषु कृतो वर्तते। शंकरनिम्बार्काभ्यां सप्तमाष्टम-सूत्रयोः पृथक्पृथगधिकरणद्वयं स्वीकृतम्। रामानुजेन किन्तु, विशेष-कारणमन्तरेणैव, एतयोर्द्वयोरेकमेवाधिकरणं स्वीकृतम्। मध्वाचार्येण सप्तमसूत्रस्य एकमधिकरणं स्वीकृत्य अष्टमसूत्रं नवमेन सम्बद्धम्। समुचितमप्येतत् प्रतीयते यतो हि एतयोर्द्वयोः सम्बन्धः मुख्यप्राणेन वायुना, वर्तते।

(२।४।९-१२) एतदधिकरणं मुख्यप्राणस्वरूपं निरूपयति। स च न तत्त्वम् नापिचेन्द्रियव्यापारः यतो हि उभाभ्यां पृथक् तद्वर्णनमुप-

---

१. रा० भा० पृ० २८८ २. म० भा० पृ० ९७

लभ्यते—'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च'[1]। यदि प्राणो वायुः स्यात् तदा वायौ सति तस्मात् पृथक् तदुल्लेखो न भवेत्। इन्द्रियव्यापारादपि तस्य पृथगुल्लेखो लभ्यते—एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च। 'खं वायुः'—अत्रापि इन्द्रियेभ्यः वायोश्च पृथक् प्राणस्योपदेशः प्राप्यते। अतः प्राणस्य पृथक् सत्ता वर्तते अपि च चक्षुरादिवत् जीवात्मनः सहायकः स च जीवात्मेव न स्वतन्त्रः। तस्मिंश्चाचेतनतादि प्रतिपादितं वर्तते।

अत्रायं सन्देहो व्यर्थः यत् यदि चक्षुरादिवत् प्राणः जीवात्मनः सहायकस्तदा स एकं पृथगिन्द्रियम् एको विशेषव्यापारो वा अभ्युपगम्येत। यतोहि अन्यज्ञानेन्द्रियवत् न स नियतं ज्ञानेन्द्रियम्। अस्य सन्देहस्य रामानुजेन अत्यन्तमेव उपयुक्तं समाधानमित्थं कृतम् यत् श्रुतिः प्राणस्य विशेषव्यापारं प्रतिपादयति—'यस्मिन् उत्क्रान्ते इदं शरीरं पापिष्ठतरमिव ( निष्क्रियम् ) दृश्यते स एव श्रेष्ठः'[2] एतदेव बृहदारण्यके 'न वै शक्ष्यामस्त्वदृते'[3] इति श्रुतौ अपि प्रतिपादितं वर्तते।

रामानुजीयोक्तव्याख्याया यत्किंचिद्भिन्नतामतिरिच्य शंकरनिम्बार्कवल्लभैरपि एतदधिकरणमित्थमेव व्याख्यातम्। मध्वाचार्यस्य च व्याख्या सर्वतः भिन्ना। नवमैकादशयोस्तु सूत्रयोर्नितरामन्या। नवमसूत्रे तेन इत्थं प्रतिपादितं यत् प्राणशब्दो यद्यपि मुख्यप्राण-वायुतत्त्व[4]-चेष्टानां बोधकः तथापि 'स प्राणमसृजत'[5] एतत् श्रुतिवाक्यं निश्चितरूपेण केवलं मुख्यप्राणमेवनिर्दिशति न तु वायुतत्त्वम् नापि च चेष्टाः; यतो हि अन्याभ्यां द्वाभ्यां पृथक् तदुत्पत्तिः प्रतिपादिता वर्तते—'भूतानि चेष्टा मंत्राश्च[6] मुख्यप्राणादिदं जगत्'......'स प्राणमसृजत खं वायुर्ज्योतिरापस्तपो मन्त्राः कर्म चेति।

यथाचोक्तचरं मध्वाचार्येण अष्टमनवमसूत्रयोरेकं स्वतन्त्रमधिकरणं तथा दशमैकादशयोः पृथगधिकरणं मत्वा एतत्प्रतिपादितं यत् मुख्यप्राणः अपि चक्षुरादिवत् आत्मवशवर्ती वर्तते, किंतु अन्यप्राणवत् चक्षुरादि-

---

१. छा० ३।१८।४ २. तत्रैव ५।१।७

३. बृ० उ० ६।१।१३

४. चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते।
प्राणशब्दस्त्रिषु तेषु मुख्ये मुख्यः प्रकीर्तितः॥ ( म० भा० पृ० ९७ )

५. प्र० उ० ६।४

६. म० भा० पृ० ९८ ( वा० पु० वचनम् )

चक्षुर्वा न ज्ञानस्य करणमेतावदेव अन्तरम्। मुख्यप्राणानां स्वतन्त्रताप्रतिपादकश्रुतेरेतदेवतात्पर्यम्—'चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव, सर्वं ह्येतत्परमेव तिष्ठते प्राणश्च प्राणिनश्च स ह्येक एवैतावन्वयत्युन्नयति वशीकरोति इति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशगतत्वेनैव शासनात्।

'सर्वकर्तापि सन् प्राणः परमाधारतः स्थितः।
कथमेवान्यथा स स्यात् यतो नैवेश्वरद्वयम्' ॥[1]

द्वादशं सूत्रमपि स्वतंत्रमधिकरणम्। अर्थश्च सर्वथा तथैव यथा अन्यैराचार्यैरभिमतः। त्रयोदशं सूत्रमपि स्वतन्त्रमधिकरणं सत् एतत्प्रतिपादयति यन्मुख्यः प्राणः अपि अणुः परिच्छिन्नश्चेति।

एतदिहावश्यमवधातव्यं यत् मध्वाचार्यमतिरिच्य अन्येषां सर्वाचार्याणामधिकरणविभागः सर्वथा स्वतन्त्रः। अष्टमसूत्रतः त्रयोदशसूत्रं यावत्, यत्र च मुख्यप्राणविवेचनं वर्तते, एकेनैवाधिकरणेन भवितव्यम् आहोस्वित् मुख्यप्राणस्य विशेषताचतुष्टयप्रतिपादकेन पृथक्पृथगधिकरणचतुष्टयेन भवितव्यम् यथा च मध्वाचार्येण स्वीकृतम्।

(२।४।१४-१६) सर्वेषां भाष्यकाराणां मते एतद् एकमेव अधिकरणम्। शंकरस्य च व्याख्या तत्रेत्थम्—'ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादिकरणजातं स्वकार्येषु प्रवर्तते';[2] तथा-ह्यामनन्ति—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' वायुः प्राणो भूत्वा नासिके प्राविशत्। आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्[3] इत्यादिस्थलेषु श्रुतिवाक्यानि एतदेव प्रतिपादयन्ति यत् एवं स्वीकरणेनापि नात्र अयं सन्देहः कर्तुं शक्यते यद् अधिष्ठात्रीभि र्देवताभिरेव फलं भोक्तव्यं स्यात् न तु जीवात्मना। यतो हि सत्यामपि देवताधिष्ठातृदेवतायां प्राणानां कार्यकरणसंघातस्वामिना जीवेनैव प्राणसम्बन्धं श्रुतयः प्रतिपादयन्ति—'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा[4] गन्धाय घ्राणम्'। शरीरे हि भोक्तृरूपेण जीवो नित्यः। तत्रैव पुण्यपापावलेपः सुखदुःखोपभोगश्च सम्भवति। देवानां च शरीरेण सह नित्यसम्बन्धो न सम्भवति। ते हि परमैश्वर्यपदमधिष्ठातारः इत्यस्मिन् हीनशरीरे तेषां भोक्तृत्वप्राप्तिः न समुचिता।

---

१. म० भा० पृ० ९८ २. शा० भा० ( ब्र० सू० २।४।१४
३. ऐ० उ० २।४ ४. छा० ८।१२।४

यथा च श्रुतिवाक्यम्—

पुण्यमेवामुं गच्छति न ह वै देवान् पापं 'गच्छति ।

निम्बार्केण शंकरस्य अनुसरणं कृतम् । किन्तु षोडशे सूत्रे अयं भेदः यत् तेन 'तस्य' इत्यनेन जीवो गृहीतः । निम्बार्केण च 'तस्य उक्तलक्षणस्य (जीवेनेन्द्रियाणां स्वस्वामिभावसम्बन्धस्य) जीवेनैव नित्यत्वादित्यर्थः कृतः ।

रामानुजेन यद्यपि सूत्राणां स एवाक्षरार्थः स्वीकृतः किन्तु तेषु तेन अन्य एव विषयो निर्दिष्टः । तेन चतुर्दश–पंचदशसूत्रयोरेकमेव सूत्रं मत्वा इत्थं व्याख्या कृता—प्राणवता जीवेन सह ज्योतिरादीनाम् अग्न्यादिदेवतानां प्राणविषयमधिष्ठानम्, तदामननात् तस्य परमात्मनः आमननात् संकल्पादेव (इच्छयैव) भवति न तु स्वातंत्र्येण । स एव हि सर्वेषां नियन्ता 'यः अग्नौ तिष्ठन् अग्नेरन्तरो यमग्नि र्न वेद यस्याग्निः शरीरम् । यः अग्निमन्तरो यमयति स त अन्तर्याम्यमृतः' । किन्त्वयमर्थः सर्वथा कल्पितः प्रतीयमानो न स्वाभाविक आभाति ।

मध्वाचार्येण अन्य एवार्थः स्वीकृतः । तस्येदं तात्पर्यं यत् प्राणो यद्यपि जीवाधीनस्तथापि अग्न्यादीनां नियमनं ब्रह्मणा संजायते, ब्रह्मैव हि प्राणान् तद्व्यापारार्थं प्रेरयति । ब्रह्म एव हि जीवेन सह एतत् सर्वं कारयति अतः प्राणानां जीवस्य करणत्वेन कश्चिद् विरोधः । एतदेतेनान्यथापि सिध्यति यत् प्राणानां जीवात्मना सह नित्यः सम्बन्धः । इत्थं मध्वाचार्यस्य अभिप्रायो रामानुजस्य समानतामात्रहति ।

अस्य प्रकरणस्य वल्लभभाष्यं न विशेषेण स्पष्टं तथापि उपसंहारे तेनैतद् व्यक्तीकृतं यत् अग्न्यादीनां प्राणैः सह नित्यसम्बन्धो वर्तते । प्राणानां साहाय्येनैव च वर्णानां यथोचितमुच्चारणादिकं संजायते । अतः स्वामिभृत्यन्यायेन जीवस्य मुख्यामात्यरूपेण प्राणाधिकत्वात् स एव कर्मफलं भुंक्ते । करणत्वांशे एव हि देवतानां प्राणाधिष्ठातृत्वम् । भोक्तृत्वरूपेण तु जीवात्मन एवाधिष्ठातृत्वम् ।

(२।४।१७–१९) एतदधिकरणस्य व्याख्यानं सर्वैरेवाचार्यैः समानरूपेणैव कृतम् । अत्र एतत् प्रतिपादितं वर्तते यत् यद्यपि प्राणशब्देन इन्द्रियाणां व्यवहारस्तथापि प्राणेभ्यः इन्द्रियाणि पृथगिति प्राणानामिन्द्रियत्वमौपचारिकम् । तेषां कार्यं भिन्नभिन्नम् । इन्द्रियाणि आलोचकानि

---

१. बृ० १।५।२

प्राणश्च देहेन्द्रियाणां नेता। श्रुतिष्वपि च प्राणाः इन्द्रियाणि च एतदुभयं नाम पार्थक्येन श्रूयते—

'एतस्माज्जायते प्राणाः मनः सर्वेन्द्रियाणि' च'[1]।

रामानुजेन अष्टादशमेकोनविंशंचैकमेव सूत्रं स्वीकृतम्। निम्बार्केण च तदेवानुसृतम्

( २।४।२०–२२ ) अन्तिमाधिकरणस्य अस्यापि व्याख्या सर्वैराचार्यैः समानरूपेणैवं कृता यत् नामरूपव्याकृतिः परमात्मना कृता न तु जीवेन। यतोहि 'तासां त्रिवृतं त्रिवृतमेकैकं करवाणि'[2] अस्यां श्रुतौ परमेश्वर एव नामरूपयोः व्याकर्ता–पृथक्कर्ता उक्तो वर्तते। महीधरादि-सम्पन्नस्य अस्य संसारस्य व्याकृतिः नाल्पमेधसा जीवेन कर्तुं शक्यते। पृथिव्यादिषु तत्वेषु अन्यतत्वानां वर्तमानत्वे अपि तत्तदंशानामाधिक्येन पृथिव्यादयो भिन्नभिन्ननामभिरुच्चार्यन्ते।

मध्वाचार्येण विंशं सूत्रं स्वतन्त्रमधिकरणं शेषं सूत्रद्वयं चैकमधिकरणं स्वीकृतम्। इत्यस्मिन्नन्तिमाधिकरणे एतद् विवेचितं वर्तते यत् सृष्टिः परमात्मकर्तृका जीवकर्तृका वा। एवमस्य पादस्य केषुचित् पूर्वाधि-करणेषु यत्किंचित्पूर्वपादेष्वपि च सृष्टेराधारभूततत्वानां विवेचनं कृतम्। इत्थं जगदुत्पत्तिविषयकविरोधं पूर्वसन्दर्भे निरस्योत्पादकसम्बन्धी श्रुतिविरोध इदानीं निरस्तः।

## उपसंहारः

द्वितीयाध्यायस्य प्रथमपादे सूत्रकारेण श्रुतिप्रतिपादितब्रह्मजगत्का-रणत्वसिद्धान्ते सम्भाविताः सर्वा आपत्तीः निरस्य ब्रह्मणो निमित्तोपा-दानोभयकारणत्वं प्रदर्शयता तस्य जीवाद् भिन्नत्वं श्रेष्ठत्वं च स्थापितम्। सृष्टिप्रलयौ च अनादिकालतः समागच्छन्तौ स्तः। एकस्याःसृष्टेः प्रारम्भे पूर्वसृष्टिजीवसमूहः पुनः प्रकाशितो भूत्वा प्रलयपूर्वकालिकस्वकृतकर्मानुसारं पुनः कर्मसु प्रवृत्तः ईश्वरनियन्तृत्वाधीनः स्वकृतकर्मफलसमूहमनुभवति एतदपिश्रुतिप्रमाणद्वारा प्रतिपादितम्। इत्थं जीवस्य तत्कृतकर्मणां च अनादित्वं प्रतिपाद्य अस्य जगतः अनादिसत्तायाः सत्कार्यवादस्य च सिद्धिः कृता, येन एतदपि स्पष्टं संजातं यत् सूत्रकारस्य, परमेश्वरो न केवलो निर्गुणो निराकारो निर्विशेषश्चापि तु सर्वज्ञतादिधर्मसम्पन्नः अपि अभिमतो वर्तते।

---

१. मु० २।१।३ २. छा० ६।३।२

द्वितीयपादे सांख्योक्तकारणवादम्, वैशेषिकोक्तपरमाणुकारणवादम्, बौद्धमतावलम्बिनाम् क्षणिकवादम्, विज्ञानवादम्, सर्वशून्यवादम्, जैनमतावलम्बिनां च जीवानां देहपरिणामवादम्, समस्तवस्तूनां युगपदस्तित्वनास्तित्वादिवादम्, पाशुपताभिमतम् ईश्वरस्य केवलनिमित्तकारणवादम्, जगतश्च केवलशक्तिकारणत्ववादम् एतत्सर्वं भगवता सूत्रकारेण नानाविधाभिर्युक्तिभिः निरस्य तेषामश्रौतत्वम् अप्रामाणिकत्वं च स्थापितम्।

तृतीयपादे तेन श्रुतिप्रमाणैः आकाशादिमहाभूतसमूहस्य ब्रह्मणः उत्पत्तिमवधार्य जीवस्य अनादित्वं ब्रह्मणा सह तत्सम्बधं च श्रुतीनां युक्तीनां च आधारेण व्यवस्थापयता जीवस्य स्वरूपतः ब्रह्मांशमात्रत्वं, न स ब्रह्मणा सदृशोविभुः (व्यापकः) अपि तु अणुस्वभाव इति प्रतिपादितम्।

चतुर्थपादे इन्द्रियाणामेकादशत्वं संस्थाप्य बुद्धेः इन्द्रियादीनां च ब्रह्मकारणत्वं श्रुतिप्रमाणैः स्थिरीकुर्वता मुख्यप्राणस्वरूपनिर्णयो विहितः। एवमन्ते, छान्दोग्योपनिषदि निर्दिष्टस्य त्रिवृत्करणनाम्नां भावतः उपदिष्टपञ्चीकरणद्वारा प्रकाशितस्य व्यष्टिदेहादेः ब्रह्मणः उत्पत्तिः प्रमाणिता। इत्थमस्मिन्नध्याये जगत्सम्बन्धिनां सर्वज्ञातव्यविषयाणां निर्देशो विहितः।

---

## तृतीयाध्यायस्य प्रथमः पादः

पादपरिचयः—प्रथमद्वितीयाध्याययोः ब्रह्मणो जगत्कारणत्वस्य जीवजगत्स्वरूपस्य ब्रह्मणा सह तत्सम्बन्धस्य च वर्णनेन सह विभिन्नाचार्यमतानुसारं ब्रह्मणो द्वैताद्वैतत्वसगुणत्वनिर्गुणत्वनिर्देशो विहितः। इदानीं ब्रह्मावाप्तेः उपायं प्रदर्शयितुं तृतीयाध्यायप्रारम्भः।

परमात्मनः प्राप्तेः साधनेषु वैराग्यं सर्वावश्यकं साधनम्। सांसारिकानित्यभोगेषु यावद् वैराग्यं नोत्पद्यते तावत् न कस्यचिदपि हृदये परमात्मप्राप्तेः शुभेच्छा जागर्ति। अतः वैराग्यमुत्पादयितुं मुहुर्मुहुः जन्ममृत्युगर्भादिदुःखानि प्रदर्शयितुं प्रथमपादारम्भः।

प्रलयानन्तरं सृष्टिकाले परब्रह्मपरमात्मनो यथा इदं जगदुत्पद्यते तस्य वर्णनं गतप्रथमाध्यायद्वये कृतम्। अधुना च वर्तमाने जगति जीवात्मनः शरीराणां यथा परिवर्तनं भवति तद्विषये श्रुतिवाक्यै र्यथोक्तं तत्सर्वमिह तृतीयाध्यायस्य प्रथमपादे वर्णयिष्यते।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

( १ ) शंकरमते जीवस्य परलोकगमनागमनविचारपूर्वकवैराग्यादिनिरूपणरूपसाधननिर्देशः।

( २ ) रामानुजमते जाग्रदाद्यवस्थावस्थितस्य जीवस्य दोषादिनिरूपणम्।

( ३ ) निम्बार्कमते संसारस्य दोषनिरूपणेन ततो विरक्तिप्रदर्शनम्।

( ४ ) मध्वमते वैराग्यार्थं गत्यादिनिरूपणम्।

( ५ ) वल्लभमते च उपनिषदां निर्विचिकित्सशाब्दज्ञानेन ब्रह्मप्रमितिजनकताबोधकताप्रकारकथनपूर्वकाधिकारियोग्यदेहनिरूपणम्।

## सविश्लेषणप्रत्यधिकरणभाष्यपञ्चकसमीक्षणम्

( ३।१।१–७ ) सर्वप्रथमस्य अस्य अधिकरणस्य अयं विचारविषयः यत् यदा अयं जीवः शरीरं परित्यज्य शरीरान्तरं प्रविशति तदा किमेकाकी एव गच्छति आहोस्वित् शरीरस्य बीजभूतानि सूक्ष्मतत्वान्यपि तेन सह गच्छन्ति। एष संदेह एवंरूपेण उपसंहृतः यत् जीवः एकस्मात् शरीरात् द्वितीयस्मिन् शरीरे सूक्ष्मतत्वैः सहैव प्रयाति यतोहि एषु सूक्ष्मतत्वेषु प्राणानां निवासः, ते च ( प्राणाः ) आत्मना सह सर्वदा सम्बद्धा इति तेन सहैव एतेषामुत्क्रान्तिः।

उक्ताधिकरणस्य उक्ते अर्थे सामान्यतः सर्वे आचार्याः सहमताः तथापि यत्र-तत्र यत्किंचित् मतभेदः। स च नातिमहत्वपूर्णः। उदाहरणार्थं षष्ठे सूत्रे शंकररामानुजनिम्बार्कैः अयं प्रश्न उपस्थापितः यत् कथमित्थं ज्ञातुं शक्यते यत् जीवात्मा सूक्ष्मभूतरूपजलपरिवृतो भूत्वा एव देहादुत्क्राम्यति। यतो हि—'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां 'जुह्वति' अत्र श्रद्धाशब्देन'[1] जलस्यैव केवलं निर्देशो न तु जीवात्मनः एतदग्रे शंकरेणेत्थं समाहितं यदत्र इष्टकारिणां प्रतीते-र्नायं दोषः। तथा हि— 'अथापि स्यात् प्रश्नप्रतिवचनाभ्यां नामापः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन्, न तु तत्संपरिष्वक्ता जीवा रंहेयुः, अश्रुतत्वात्। न ह्यत्रापामिव जीवानां श्रावयिता कश्चिच्छब्दः अस्ति। तस्माद्रंहति संपरिष्वक्त इत्युक्तमिति चेत्, नैष दोषः; कुतः ? इष्टादिकारिणां प्रतीतेः 'अथ य इमे

---

१. छा० ५।४।२

२. श्रद्धाशब्दश्चाप्सूपपद्यते वैदिकप्रयोगदर्शनात् 'श्रद्धा वा आपः' ( शा० श्रा० ब्र० सू० ३।१।५ )

ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति"[1]। अयमेव च भावो रामानुजनिम्बार्काभ्यामपि अनुसृतः।

किन्तु वल्लभमते अयं प्रश्नः यत् किं 'सर्वे जीवाः सम्परिष्वक्ता गच्छन्त्याहोस्वित् ज्ञानोपयोगिनः? तत्र पंचाहुतिप्रकारे नाधिकारिणः श्रुताः। वेदे हि श्रुतानुसारिकल्पना अतो विशेषस्याश्रुतत्वात् सर्वेषामेव पंचाहुतिप्रकार इति चेत्, न। इष्टादिकारिणां [2]प्रतीतेः'। केवलम् इष्टाधिकारिण एव इत्थं यान्ति नान्ये इति भावः'।

मध्वाचार्येण प्रतिसूत्रं पृथगधिकरणं स्वीकृतम्। चतुर्थसूत्रे 'भाक्तत्वात्' इत्यस्य 'भागतः' इत्यर्थं च कृत्वा तस्येदं तात्पर्यं प्रदत्तं यत् वागित्याद्येवांशिकरूपेण स्वस्वदेवताग्न्यादिस्वरूपं प्राप्नोति; शेषांशश्च जीवात्मना सह उत्क्रान्तो भवति—

'पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु।
अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्॥
पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति च'[3]।

तथा—

मृतिकाले जहत्येनं प्राणा भूतानि पंच च।
भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः[4]॥

सप्तमसूत्रे अपि मध्वाचार्येण भाक्तशब्दस्य भागतः अयमर्थः स्वीकृतः तथा 'अपाम सोमममृता अभूम' अस्य विरोधपरिहारः 'भागतः तदमृतत्वम् अर्थात् आत्मविद् एव तदमृतत्वं प्राप्नोति' एवं कृतः। तस्येदं तात्पर्यं यत् वास्तविकम् अमृतत्वम् केवलम् आत्मविदेव प्राप्नोति। इष्टादिकारिणश्च नांशतः अपि आत्मविदः इति न ते अमरत्वं प्राप्नुवन्ति।

(३।१।८-११) अस्मिन्नधिकरणे एतत्प्रदर्शितं यत् ये जीवाः स्वकृतसत्कर्माणि भोक्तुं चन्द्रलोकं प्राप्नुवन्ति ते तत्कर्मफलानि तत्रानुभूय, यावतः अंशस्य भोगस्तत्र न सम्भवति अपित्विहैव लोके सम्भवति, तावन्तमंशं भोक्तुं पुनरिमं लोकमावर्तन्ते। तत्कर्मानुसारमेव च ते अस्मिन् लोके योनिं प्राप्नुवन्ति।

---

१. शा० भा० ब्र० सू० ३।१।६ पृ० १६३९

२. अ० भा० ब्र० सू० ३।१।६

३. म० भा० ब्र० पु० वचनम् पृ० १०५

४. तत्रैव ब्र० पु० वचनम् (पृ० १०५) ५. ऋ० ८।४८।३

अस्याधिकरणस्य अनेन अर्थेन सर्वे आचार्याः सहमताः। मध्वाचार्य एव तु केवलम् अष्टमसूत्रं 'कृतात्यये अनुशयवान् दृष्टस्मृतिभ्याम्' तथा 'यथेतमनेवं च' एवं द्विधा विभज्य अनयोः अधिकरणद्वयम् अवशिष्टानां च तृतीयमधिकरणं स्वीकृतवान्।

( ३।१।१२-२१ ) तृतीयस्मिन्नस्मिन्नधिकरणे एतद्विवेचितं यत् येषां सत्कर्माणि नैतावत्पर्याप्तानि यत् ते चन्द्रलोकं गन्तुं शक्नुयुस्ते क्व गच्छन्ति तथा चैतत्प्रदर्शितं यत् ज्ञानिनः इष्टादिकारिण एव च केवलं स्वसत्कर्माणि भोक्तुं चन्द्रलोकं गच्छन्ति नान्ये इति। ते तु संयमनं ( यमालयं ) प्रविश्य निजदुष्कृतानुसारं यमयातनाः अनुभूय पुनरिमं लोकमावर्तन्ते।

शंकररामानुजौ प्रस्तुताधिकरणस्य प्रकृतार्थेन सहमतौ। अस्मिँश्च केवलमुभयोर्मतभेदो यत् रामानुजो द्वादशसूत्रतः षोडशसूत्रपर्यन्तं पूर्वपक्षं स्वीकृत्य शेषांशं सिद्धान्तपक्षं मनुते। शंकरस्तु केवलं द्वादशमेव सूत्रं पूर्वपक्षं स्वीकृत्य त्रयोदशत एव सिद्धान्तपक्षारम्भमाकलयति। निम्बार्कश्चाक्षरशो रामानुजमन्वसरत्।

वल्लभेन च द्वादशसूत्रतः षोडशसूत्रं यावदेकमधिकरणं स्वीकृत्य त्रयोदशं सूत्रं शंकरेणेव व्याख्यातम्। मध्वाचार्येण च द्वादशसूत्रतः चतुर्दशसूत्रं यावदेकमधिकरणं स्वीकृत्य एतत्प्रदर्शितं यत् दुष्कर्मकारिणामपि आरोहावरोहौ भवतः। अन्तरं केवलमेतदेव यत् ते नरकमार्गेण गच्छन्ति। पंचदशं सूत्रं च तेन पृथगधिकरणमभ्युपगत्य तदर्थे रौरवादिनरकसप्तकसंख्यैव प्रदत्ता।

षोडशं सूत्रं पृथगधिकणरम्। तत्रेदं प्रतिपादितं वर्तते यत् नरकेषु अपि परमात्माज्ञयैव सर्वाणि कार्याणि भवन्ति। सप्तदशं सूत्रं पृथगधिकरणम्, तत्रेदमुक्तं वर्तते यत् गमनागमनयोः ( आरोहावरोहयोः ) न जीवः स्वतन्त्रः अपि तु स ज्ञानकर्मानुकूलमेव क्रमशः देवयानपितृयाणाभ्यामारोहावारोहौ कुरुते। अवशिष्टं च सूत्रचतुष्टयम्—अष्टादशतः एकविंशसूत्रपर्यन्तम्-एकमधिकरणम्। तत्र चैतत्प्रतिपादितं वर्तते यत् नरके केवलं दुःखमेव न किंचिदपि सुखम्—"नान्धे[1] तमसि मग्नानां सुखलेशोऽपि कश्चन"। एकविंशसूत्रस्य[2] व्याख्या मध्वाचार्येण अन्यभाष्यकारापेक्षया नितरां भिन्ना कृता। तस्येदं तात्पर्यं यत् महातमोनाम नरकस्य तृतीयनामश्रवणेनैव जनो मूर्छितः संजायते—

---

१. म० भा० पृ० ११०

२. तृतीयशब्दावरोधः संशोकजस्य ( ब्र० सू० ३।१।२१ )

महातमसिधाप्रोक्तमूर्ध्वं मध्यं तथान्तरम् ।
श्रवणेनैवमूर्च्छादिरधरस्य यतो[1] भवेत् ॥

अन्यैराचार्यैः अस्य एतदभिप्रायकः अर्थः कृतः यत् 'आण्डजं जीवजमुद्भिज्जम्'[2] इत्यत्र पठितेन उद्भिज्जरूपेण तृतीयशब्देन स्वेदजशरीरग्रहणम् । यतोहि स्वेदजम् उद्भिज्जं चैतद्‌द्वयम् अपि भूमिम् उदकं चोद्‌भिद्य उत्पद्यते इत्युभयं समानम् ।

मध्वाचार्येण 'अस्मिन्नधिकरणे 'स्मरणाच्च' एतदपि एकमतिरिक्तं सूत्रं स्वीकृतम् तेनैव चाधिकरणं समापितम् ।

एतदग्रिममधिकरणं द्वाविंशं सूत्रमेतत्प्रतिपादयति यत् जीवात्मनः सूक्ष्मशरीरं यदा चन्द्रलोकात् आकाश[3]वाय्वादि भूत्वा उत्तरति तदा तस्य आकाशादिना सह तादात्म्यं न भवति प्रत्युत तत् तत्साम्यं प्राप्नोति । शंकरवल्लभाभ्यामियं साभाव्यापत्तिः रामानुजमध्वनिम्बार्कैश्चेयमेव तत्स्वाभाव्यापत्तिरुक्ता । अर्थश्च द्वयोरेक एव ।

एतदग्रिमाधिकरणं त्रयोविंशं सूत्रमेतत्प्रतिपादयति यत् जीव एतदवरोहसमये स्वल्पकालमेव आकाशादिना सह साभाव्यापत्तौ तिष्ठति ।

अन्तिममधिकरणं चतुर्विंशसूत्रतः सप्तविंशसूत्रं यावत् एतत्प्रतिपादयति यत् जीवात्मानो यदा अन्ते व्रीहियवादीन् प्रविशन्ति तदा ते तैः सह सुखदुःखादिभागिनो न भवन्ति प्रत्युत यथा तेषां वायुधूमादिभावः तेषां संश्लेषमात्रमेव तथैव व्रीहियवादिभावः अपि स्थावरजात्या सह तेषां संश्लेषमात्रमेव । मध्वाचार्येणैतेषु अधिकरणत्रयं स्वीकृतं, चतुर्विंशपंचविंशयोरेकं षड्‌विंशसप्तविंशयोश्च पृथक् पृथक् अधिकरणद्वयम् । अर्थे च किन्तु न कश्चिन्महत्वपूर्णः भेदः ।

---

## तृतीयाध्यायस्य द्वितीयः पादः

पादपरिचय—तृतीयाध्यायस्य प्रथमपादे जीवस्य जन्ममरणरूपा संसारगतिः तदनन्तरं तज्जन्मान्तरप्राप्तिश्च प्रतिपादिता । यस्य एतद्रहस्यं यज्जीवात्मनो मनसि सांसारिकपदार्थान् निजशरीरं प्रति च अनासक्तिः नैरन्तर्येण वैराग्यभावना च उत्पद्येत । इदानीं द्वितीयस्मिन् पादे वर्तमान-

---

१. म० भा० पृ० १११ ( कृ० पु० वचनम् )

२. छा० ६।३।१

३. अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति······प्रवर्षति ( छा० ५।१०।५ )

शरीरस्य विभिन्नावस्थानां विचारानन्तरं जन्ममरणरूपसंसारबन्धनान्मोक्षार्थं परमेश्वरस्य ध्यानरूपोपायो वक्तव्यः इति सूत्रकारो जीवात्मनः स्वप्नसुषुप्त्यवस्थे वर्णयति।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

( १ ) शंकरमते पूर्वभागेन त्वंपदस्य उत्तरभागेन च तत्पदार्थस्य शोधनरूपसाधननिर्देशः।

( २ ) रामानुजमते पुरुषोत्तमस्य सर्वदा हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपोभयलिंगत्वप्रतिपादनम्।

( ३ ) निम्बार्कमते विवेकवैराग्यदाढ्योय स्वप्नावस्थाविचारः।

( ४ ) मध्वमते संसारतः शरीरतश्च वैराग्यावाप्तये परमात्मनो भक्तिनिरूपणम्।

( ५ ) वल्लभमते जीवस्य मुक्तियोग्यतानिरूपणम्।

## सांवल्लेषण प्रत्यधिकरणभाष्यपंचकसमीक्षणम्

( ३।२।१-६ ) एतस्मिन् प्रथमाधिकरणे जीवात्मनः स्वप्नावस्थावर्णिता, एतच्चाधिकरणं तुलनात्मकविवेचनदृष्ट्या अत्यन्तमहत्वपूर्णम्। यतोहि अस्य विभिन्नस्थलेषु उक्तभाष्यकारैः अर्थविभिन्नताप्रतिपादनपूर्वकं यथास्थलं निजविचारवैमत्यम् उपस्थापितम्। अतः प्रत्येकसूत्रार्थस्य सविस्तरं समीक्षणं नितरां न्यायसंगतम्।

शंकरानुसारम् प्रथमसूत्रत्रये अयं प्रश्नः समुपस्थापितः यत् जीवात्मनः स्वप्नसृष्टिः जाग्रदवस्थासृष्टिरिव सत्या आहोस्वित् मायामयी। आद्यसूत्रद्वये पूर्वपक्षः स्थापितः—स्वप्नसृष्टिः सत्या, श्रुति हिं एवं प्रतिपादयति। केचिच्चैवं प्रतिपादयन्ति यत्स्वप्नावस्थायां दृश्यमानानां वस्तूनां निर्माता आत्मा अस्ति।

तृतीयं सूत्रं सिद्धान्तपक्षं प्रस्तौति—स्वाप्नं जगत् शुक्तिरूप्यवत् मायामात्रम। यतोहि पारमार्थिकवस्तुविषयाणां देशकालनिमित्ताबाधानां स्वप्ने न सम्भवः।

मायाशब्दो हि अस्मात् सूत्रात् पूर्वत्र परत्र वा अन्यत्र कुत्रापि न प्रयुक्तः इति तदर्थमतिरिच्य सूत्रार्थे न किमप्यन्यत् विरोधास्पदम्। किन्तु तदग्रे एतत्काठिन्यमुपतिष्ठते यत् व्याख्यातपूर्वसूत्रेण सह कथं तत्सङ्गतिः स्यात्।

चतुर्थसूत्रस्य अयमक्षरार्थः यत् स्वप्ने जायमानं स्त्रीदर्शनादि सत्यम्। यतो हि तत्सर्वं शुभाशुभफलसूचकम् एतत् श्रुतिः प्रतिपादयति, स्वप्नावस्थाया ज्ञातारः अपि स्वप्नदर्शनं शुभाशुभसूचकं प्रतिपादयन्ति।

स्वप्नसत्यतां प्रमाणयितुम् एष उपयुक्तस्तर्को भवितुं शक्नोति किन्तु शंकरः एतदत्यन्तासंतोषजनकरीत्या व्याख्यातपूर्वसूत्रेण सम्बध्नाति। व्याख्यातपूर्वसूत्रे तेन इत्थं प्रतिपादितं यत् स्वाप्नं जगत् मायामात्रम्। किन्तु इदानीं प्रतिपादयति यत् स्वाप्नं जगत् सत्यम्, न तु मायामात्रमसत्यम्। तत्र दृष्टानि हि वस्तूनि भाविशुभाशुभफलसूचकानि—

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति'।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥'

तथा—पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति[2]।

अस्यायं निष्कर्षो यत्स्वप्ने यत् किंचित् सत्यत्वमस्ति। पूर्वापरसंगत्यर्थं शंकरेण इत्थमेतत् स्पष्टीकृतम्—स्वप्नसूचितं वस्तु सत्यं भवेन्नाम किन्तु स्त्रीदर्शनादिसूचकस्वप्नः असत्यः यतो हि तस्य बाधः संजायते—'भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम्; सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यम्—बाध्यमानत्वादित्यभिप्रायः'[3]। एतेन स्वप्नस्य मायामात्रत्वं, प्रातिभासिकमात्रत्वं सिद्धम्। 'इत्थं स्वाप्नजगतः प्रातिभासिकता अक्षुण्णा तिष्ठति। सूत्रव्याख्यायामेतत्स्फुटीकरणावश्यकतैव तदसंतोषजनकतां प्रमाणयति। अग्रिमयोः द्वयोः सूत्रयोः अर्थावलोकनेन एषा असंगतिः अपरथा अपि स्पष्टा संजायते। अयं तयोरर्थः—परमात्मनो निरन्तरध्यानेन जीवात्मनि अन्तर्निहिताः परमात्मसमानगुणाः प्रकटीभवन्ति यतो हि परमात्मनो ज्ञाताज्ञातत्वे जीवात्मनो बन्धमोक्षौ। अथच, जीवैश्वर्यशक्तितिरोभावः अपि देहादौ तस्यात्मत्वाभिमानरूपाविद्यया संजायते।

शंकरेण अनयोः सूत्रयोः व्याख्या अस्मिन् प्रश्ने प्रारब्धा यत् जीवात्मा परमात्मन एव अंशः इति तस्मिन् ईश्वरस्य ज्ञानैश्वर्यादिगुणैरपि अवश्यमेवांशिकरूपेण तथैव भवितव्यम् यथा चाग्नौ तदंशे स्फुलिंगे च दाहकताशक्तिः प्रकाशश्चोभयं समानरूपेण वर्तते। अतः कथमेवं न मन्येत यत् स्वप्नसृष्टिं जीवः स्वयं करोति।

---

१. छा० उ० ५।२।९ २. ऐ० आ० ३।२।४।१७
३. शां० भा० पृ० ७७१८

एतदिह न स्पष्टीभवति यत् यदा अतः पूर्ववर्तिसूत्रत्रयं स्वाप्नजगतः असत्यतया सम्बद्धं तदा अस्मिन् सूत्रे पूर्वोक्तः प्रश्न एव कथमुदपद्यत। इत्थं शंकरार्थानुगमे स्पष्टमेतत् संजायते यदस्मिन्नधिकरणे विभिन्नभाव-द्वयस्य प्रदर्शनं वर्तते ययोश्च परस्परं न कश्चित् साक्षात्सम्बन्धः।

रामानुजानुसारम् आद्यसूत्रत्रये उपस्थापितः अयं प्रश्नः यत् स्वप्नसृष्टिः जीवकृता आहोस्वित् परमात्मकृता। प्रथमसूत्रद्वये पूर्वपक्षस्य स्थापना वर्तते यत् स्वप्नजगतः स्रष्टा जीवात्मा अस्ति। तृतीयं च सूत्रं सिद्धान्तपक्षं स्थापयति। तस्य व्याख्या शंकरापेक्षया नितरां भिन्ना—स्वाप्नं जगत् नितरां मायामात्रम्, परमपुरुषचितमिति भावः। मायाशब्दस्य व्याख्यातेन आश्चर्यपूर्ण देवशक्तिः कृता 'मायाशब्दो ह्याश्चर्यवाची, जनकस्य कुले जाता देवमायेव निर्मिता'—

एवं विधाश्चर्यरूपा सृष्टिः सत्यसंकल्पस्य परमपुरुषस्यैवोपपद्यते न जीवस्य।[1]

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः'[2]

इत्थं तेनैतत्प्रमाणितं यत् स्वाप्नं जगत् परमपुरुषकृतम्। यतो हि एवं भूताश्चर्यरूपसृष्टिः स्वेच्छानुकूलं क्षणमात्रेण परमात्मैव निर्मातुं शक्नोति न तु जीवः। अस्य स्वाप्नजगतः निर्माता न जीव इत्यस्य अन्यदप्ये-तत्कारणम् यत् जीवात्मनि अन्तर्निहितायामपि तत्सम्पूर्णशक्त्यां संसार-दशायां स्थितेः कारणात् न सा अभिव्यज्यते। स्वभावतः अत्र अयं प्रश्नः उपतिष्ठते यत् यदि जीवात्मनि सा शक्तिरस्ति तदा कुतो न अभिव्यक्ता संजायते। अस्य चैतदुत्तरं यत् परमपुरुषाकांक्षया सा अन्तर्निहितैव तिष्ठति। तदिच्छयैव हि जीवात्मनो बन्धमोक्षौ—'परमपुरुषसंकल्पात् अस्य जीवस्य स्वाभाविकं रूपं तिरोहितम्। अनादिकर्मपरम्परया कृताप-राधस्य ह्यस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति। ततः संकल्पादेव हि अस्य जीवस्य बन्ध मोक्षौ श्रुतौ'।[3]

इत्थम् अत्र एतद् द्रष्टव्यं यद् रामानुजीयव्याख्यानुसारम् अधिकरणस्या-न्तिमसूत्रत्रयस्यार्थेन सह प्रथमसूत्रत्रयार्थस्य सम्बन्धः स्वाभाविकतया संजायते किन्तु तृतीयसूत्रस्य 'मायामात्रम्' इत्यस्यार्थः न्यायसंगतः

१. रा० भा० पृ० २०४ २. कठ० ५।८

३. रा० भा० पृ० २०५

सन्नपि किंचिद्विलक्षणः प्रतीयते। एतत्स्पष्टं यत् शंकराचार्येण अस्य यादृशः अर्थः प्रतिपादितः स रामानुजापेक्षया अधिकसंगतः स्वाभाविकश्च वर्तते। प्रमाणं चास्य एतदपि अस्ति यत् वैष्णवभाष्यकारवल्लभाचार्येणाप्यस्य अयमेवार्थः स्वीकृतः। अतः अत्र एतदवधानीयमावश्यकं यत् स्वप्नसृष्टेः सत्यताविषये मायामात्रताविषये च उक्तयोरुभयोराचार्ययोः भिन्नभिन्नं मतद्वयम्। तत्र शंकरानुसारं स्वप्नसृष्टेः मायामात्रता। इदं दृश्यमानं जगच्च, येन जीवो जाग्रदवस्थायां सम्बद्धस्तिष्ठति, तदपि प्रातिभासिकम्, अन्तरं केवलमेतावदेव यत् पंचतत्त्वादिनिर्मितस्यैतज्जाग्रज्जगतः स्पष्टतया स्थितिस्तावत्क्षणपर्यन्तं प्रतिभाति यावत् जीवात्मनः 'सर्वं खल्विदं ब्रह्म' एषा भावना न जायते। स्वप्नजगतश्च स्थितिः स्वापावस्थापर्यन्तमेव तिष्ठति। जाग्रदवस्थायां तु प्रतिदिनं तस्या बाधो जायते।

रामानुजानुसारं च आकाशादिपंचतत्त्वरचितं जगत् स्वप्नजगच्चैतद्द्वयं समानतया सत्यम्, न तु प्रातिभासिकम्। यतो ह्युभयमपि परमपुरुषविरचितम्।

एतस्मिन् मतद्वये शंकरस्य मतम् आदर्शवादि रामानुजस्य च यथार्थवादीति वक्तुं शक्यते।

निम्बार्केण सूत्रक्रमे शंकरः अनुसृतः किन्तु सूत्रार्थे अक्षरशो रामानुजः। वल्लभाचार्येणापि शंकरानुसारं प्रथमसूत्रद्वयं पूर्वपक्षं स्वीकृत्य तृतीये सिद्धान्तपक्षः स्थापितः किन्तु अन्ते एतत् सिद्धं कृतं यत् आकाशादि परमात्मरचितमिति सत्यम् किन्तु स्वाप्नं जगत् जीवनिर्मितमित्यसत्यम् प्रातिभासिकञ्च, यतो हि तत्सत्यतायां न किंचित्प्रमाणम्—

"यथैतदात्म्यमिदं सर्वं तत्सत्यमिति, आत्मानं स्वयमकुरुत तत्सत्यमित्याचक्षते 'कथमसतः सज्जायेते'त्यादिश्रुतिसहस्रेभ्यः अस्य सत्यत्वं प्रतीयते नैवं स्वप्नप्रपंचस्य श्रुतिराह'।"[1]

पञ्चमसूत्रस्यार्थः तेन रामानुजवत् स्वीकृतः तथा पराभिध्यानात् अस्यार्थः शंकरवत् 'परस्य ईश्वरस्य आभिमुख्येन ध्यानात्' एवमस्वीकृत्य 'परस्य भगवतः अभितः ध्यानं स्वस्य एतस्य च सर्वतो भोगेच्छा तस्मात् ईश्वरेच्छया एवं स्वीकृतः।

१. अ० भा० पृ० ८७८ (चौ०)

मध्वाचार्येण सूत्रचतुष्टयमेव प्रथमाधिकरणं स्वीकृत्य अयमर्थः स्वीकृतः यत् स्वप्नजगतः स्थितिः सत्या सा च परमात्मरचिता किन्तु तदुत्पत्तिः परमात्मनः संकल्पमात्रेणैव जायते तथा यस्मिन् एतस्मिन् जगति वयं जाग्रदवस्थायां निवसामः तद्वत् तस्य स्वप्नजगतो निर्माणस्य न किमपि बाह्यम् उपादानं कारणम् 'मायामात्रम्' इत्यस्य अर्थं तेन 'स्वेच्छामात्रेण प्रदर्शयति' इति कृत्वा अग्रे अपि इत्थमेव प्रदर्शितम् यत् स्वप्नजगतो रचना तस्येच्छामात्रेणैव संजायते। स्वप्नो हि भाविशुभाशुभसूचक इति सत्यः।

पंचमसूत्रं द्वितीयमधिकरणम्। अत एतदुक्तं यत् स्वाप्नं जगत् परमात्मनः इच्छानुसारं नश्वरम् अर्थात् स एव परमात्मा तत्स्वाप्नं जगद् सृजति यथेच्छं च तद् विनाशयति—

स्वप्नादि बुद्धिकर्ता च तिरस्कर्ता स एव तु।
तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ[1]॥

षष्ठं सूत्रं पृथगधिकरणम्। तस्यायमर्थः यत् जाग्रद् दशायां यज्जगदवलोक्यते तस्य स्वयं जाग्रदवस्थायाः, स्वप्नसुषुप्त्योश्च सृष्टिः तस्मादेव परमात्मनः संजायते। 'देहयोगेन वासौ जाग्रदपि तत एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट् स एको बहुधा भवती'ति।

अत्र इत्थमवधातव्यं यत् तृतीयस्मिन् सूत्रे स्वरूपशब्दः स्वप्नजगतो बोधकः यतो हि इदमेव मायामात्रमुक्तम् ; तथा पंचमे सूत्रे समागतस्य पराभिध्यानशब्दस्य अर्थः रामानुजेन यथा 'परमात्मेच्छया' इत्थं कृतः तस्योपयुक्तत्वस्य पुष्टिः 'तदभिध्यानादेव तु तल्लिंगात्सः' इति सूत्रेण भवति यतो हि तत्रापि 'अभिध्यान' शब्दस्य अयमेव अर्थो गृहीतः। अतः कारणात् तृतीय-चतुर्थ-पंचमसूत्राणामेष तात्पर्यार्थो भवितुं शक्नोति यत् स्वप्नसृष्टेर्नितरां मायामात्रत्वम् अर्थात् यद् वस्तु अस्माभिः सामान्यरूपेण यथा अवलोक्यते तस्माद्रूपात्तत् सर्वथा बहिर्भूतम्। यतो हि आत्यन्तिकतया देशकालवस्तुसापेक्षेण यस्य यथा स्वरूपेण भवितव्यं तस्य तथा अभिव्यक्तिः स्वाप्ने जागर्ति न जायते। किंच, स्वप्नावस्थायाः सृष्टिः भाविशुभाशुभसूचिका, सा हि परमात्मेच्छया अधिकांशतः सत्यतामन्तर्निधत्ते।

इत्थं प्रथमाधिकरणे स्वप्नावस्थां निरूप्य द्वितीयाधिकरणे सूत्रकारः सुषुप्तावस्थां निरूपयति—

---

1. म० भा० पृ० ११५

( ३।२।७-८ ) अस्मिन् द्वितीयस्मिन् अधिकरणे सर्वभाष्यकारमतेन एतद्विवेचितं वर्तते यत् जीवः स्वप्नरहितसुषुप्तावस्थायां नाडीद्वारा गमनं कृत्वा पुरीतद्वेष्टितहृदयस्थितब्रह्मणि तिष्ठति ।

( ३।२।९ ) तृतीयस्मिन्नधिकरणे नवमसूत्रे एतन्निर्दिष्टं वर्तते यत् यो जीवः शेते स एव जागर्ति अत एव अपरिसमाप्तं कर्म त्यक्त्वा सुप्तो जीवः प्रबुद्धः सन् पुनस्तदारभते; स एव घटो यो मया ह्यो दृष्टः अद्य स्पृश्यते इति च प्रत्यभिजानीते । तथा अस्वीकारे तु एतत्सर्वं न स्यात् ।

मध्वाचार्येण तु सूत्रस्य अयमर्थः कृतो यत् स एव परमात्मा इमाः सर्वाः अवस्थाः समस्तजीवेभ्यः सृजति नापि च कस्मैचिदेकस्मै—

प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु ।
परमः पुरुषो विष्णुः ततोऽन्यो नास्ति कश्चन ॥[1]

'एष स्वप्नान् दर्शयति एष प्रबोधयति एष एव परमात्मानन्द' इति च श्रुतिः ।[2]

( ३।२।१० ) चतुर्थमधिकरणं दशमं सूत्रं मूर्च्छावस्थां वर्णयति । अत्रैतत्प्रतिपादितं वर्तते यत् एतस्या अन्तर्भावः जाग्रत्-स्वप्न-सुषुप्तिषु आसु तिसृषु अवस्थासु न कतमस्यामपि वर्तते—स्वप्नजागरितावस्थयोः मूर्च्छावस्थात्वं न संभवति तदानीं ( मूर्च्छायाम् ) विशेषज्ञानाभावात् । मरणमपि न मूर्च्छा वक्तुं शक्यते मूर्च्छायां प्राणोष्णतयो वर्तमानत्वात् । सुषुप्तिरपि न, मूर्च्छायां यदा कदा मुखाकृतेर्भयावहत्वात् । इत्थं च मूर्च्छावस्थायां हृत्पुण्डरीकावच्छिन्नब्रह्मणि देहाद्यभिमानविशिष्टजीवस्य अर्धलयो भवतीत्युक्तावस्थात्रितयविलक्षणत्वात् मूर्च्छावस्था मृत्युसुषुप्तावस्थयोर्मध्यवर्तिनी पृथगेकावस्था ।

एतस्मादग्रिमम् एकादशतः एकविंशसूत्रं यावदुभयलिङ्गमधिकरणम् इत्यस्य व्याख्या सर्वाचार्यैः भिन्नभिन्नरूपेण कृता वर्तते । अतः एतन्निश्चेतुं सर्वथा असम्भवम् यत् कतमः अर्थः अधिकस्वाभाविको युक्तियुक्तश्च वर्तते ।

शंकरानुसारमस्मिन्नधिकरणे एतद्विवेचितं वर्तते यत् सुषुप्त्यादिषु उपाधेः उपशमात् जीवो येन ब्रह्मणा सम्पन्नो भवति, श्रुतिप्रमाणानुसारं तस्य किं स्वरूपं वर्तते । अतः 'तत्त्वमसि' इत्यस्मिन् वाक्ये त्वम्पदार्थः ( जीवः ) सर्वाभिरवस्थाभिरलिप्तः इति विचारानन्तरं पादसमाप्तिपर्यन्तं

१-२. म० भा० ११५

तत्पदार्थं ( ब्रह्म ) निरूपणेच्छया सूत्रकारः आदौ तस्य निर्विशेष-स्वरूपं वर्णयति ।

अयमत्र संदेहो यत् ब्रह्म सविशेषं ( सगुणं ) निर्विशेषं ( निर्गुणं ) वा ? यतो हि श्रुतिषु तस्य उभयविधं प्रमाणमुपलभ्यते । तत्रैतस्माद-धिकरणारम्भो जायते यत् ब्रह्मसगुणनिर्गुणोभयात्मकं न वक्तुं शक्यते 'अशब्दमस्पर्शमरूपमव्ययम्—' इत्यादिषु हि तस्य निर्विशेषत्वं प्रतिपा-दितम्' स्थानतः अर्थात् उपाधिकारणेनापि ब्रह्मणः उभयस्वभावात्मकत्वं स्वीकर्त्तुं नोचितं यतो हि अग्निसम्बन्धमात्रेण उष्णीभूतजले अनुभू-यमाना उष्णता जलस्य स्वभावो न स्वीकर्त्तुं शक्यते । शैत्यमेव हि तत्स्वभावः इति 'अशब्दमस्पर्शम्'—इत्यादि ब्रह्मपरकवाक्येषु निर्विशेष-मेवैकरूपं ब्रह्मोपदिष्टम् ।

यदि चेत्थमुच्येत यद्भिन्नभिन्नश्रुतिवाक्येषु भिन्नभिन्नरूपेण सविशे-षनिर्विशेषोभयात्मकं ब्रह्म निर्दिष्टं तदा तन्नोचितम् प्रत्येकस्मिन् उपाधौ हि 'यश्चायमस्यां पृथिव्याम्—' इत्थं प्रत्येकश्रुतिवाक्यद्वारा जलादिरूप-सर्वोपाधिषु तस्याभेदश्रवणमुपलभ्यते ।

एकशाखाध्यायिनः—

'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥'[२]

इत्यादिश्रुतिवाक्याधारेण भेदं निन्दन्तः परमात्मनः अभेदमेव वर्णयन्ति ।

रूपादिरहितं ब्रह्म इति बुद्ध्वा निर्विशेषमेव ब्रह्म अवधारणीयम् न तु रूपादियुक्तं ( सविशेषम् ) । श्रुतिवाक्येषु हि निर्विशेषमेव ब्रह्म प्रधानरूपेण वर्णितं समुपलभ्यते । इत्थं च 'अस्थूलमनणु अह्रस्वमदीर्घम्',[३] अशब्दमस्पर्शमरूपमव्ययम्'[४] इत्यादि वाक्येषु निष्प्रपञ्चमेव ब्रह्मात्म-तत्त्वं प्रधानं नान्यत् । अतः एवंभूतेषु वाक्येषु यथाश्रुति निराकारब्रह्मण एव अवधारणं कर्त्तुं योग्यम् । यानि च साकारविषयकाण्यन्यानि वाक्यानि न तानि साकारब्रह्मप्रधानानि अपि तु उपासनाविधिप्रधानानीति यत्र न तेषु पारस्परिकविरोधस्तत्र यथाश्रुतिप्रतिपादितमेव मन्तव्यम् । सति तु विरोधे यत्र निराकारब्रह्मणः प्राधान्यं तेषां साकारब्रह्मप्रतिपादकवा-क्यापेक्षया बलवत्तरत्वम् । सविशेषविषयकश्रुतिवाक्यान्यपि न निरर्थकानि

१. क० १।१५ मुक्ति० २।७२ २. क० ४।११
३. बृ० ३।८।८ ४. क० १।१५

यतो हि यथा सौरश्चान्द्रो वा प्रकाशः ऋजुकुटिलादिवंशादिषूपाधिषु पतितः तदाकारतां धत्ते तथैव ब्रह्म अपि पृथिव्यादितत्तदुपाधिमवाप्य तत्तदाकारान् धारयति इत्युपासनाप्रकरणे पठिताः श्रुतयः तदेव सोपाधिकं ब्रह्म प्रदिपादयन्त्यो न निरर्थिकाः। अत एव भगवती श्रुतिः 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव'[1] इत्यादिवाक्यैः निर्विशेषचैतन्यमात्रमवबोधयति, स्मृतिवाक्येष्वपि तदेव प्रतिपादितं वर्तते। अथ चात्मा चैतन्यस्वरूपो निर्विशेष इति जीवस्योपमा जलप्रतिबिम्बेन दत्ता दृश्यते अर्थात् यथा सूर्याचन्द्रमसादीनामनेकरूपाणि कम्पनादिधर्माश्च जलाद्युपाधिकारणेन कल्प्यन्ते तथैव तस्य निर्विशेषात्मनः सविशेषत्वमुपाधिकल्पितम्—

यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्नः बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा।
एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[2] ॥

इदानीमयमत्र सन्देहः उत्पद्यते यत् जलसूर्याभ्यां सह आत्मनः तत्प्रतिबिम्बस्य जीवस्य च समानता नोपपद्यते। सूर्यः जलं चोभयं साकारम् इति सूर्यस्य जले प्रतिबिम्बनं युक्तं किन्तु आत्मा न साकारः, स हि सर्वगतः सर्वतश्च अभिन्न इति उपाधिष्वपि तस्य वर्तमानत्वात् न ते तस्मात् पृथग्भूताः। अतः अयं दृष्टान्तो न युक्तः। तस्य चेदं समाधानं यत् दृष्टान्त-दार्ष्टान्तिकयोः यं कंचिदंशमादायैव साम्यमुपपाद्यते। सर्वथा समानत्वे तु दृष्टान्तदार्ष्टान्तिकभाव एव विनश्येत्। अतः अत्रापि वृद्धिक्षयशालितामात्रमांशिकसमानता विवक्षिता—जलस्थितं सूर्यप्रतिबिम्बं हि जलवृद्धौ बर्द्धते जलक्षये च अपक्षीयते, तत्कम्पने कम्पते, द्विधा विभक्ते च जले द्विधा विभक्तं प्रतीयते। इत्थं सूर्यप्रतिबिम्बं जलधर्माननुसरति किन्तु सूर्यः परमार्थतो न तादृशः। एवं ब्रह्म परमार्थतः अविकृतम् एकरूपं च तथापि देहाद्युपाध्यन्तर्भावेन वृद्धिक्षयादिधर्मान् प्राप्नोति इति दृष्टान्तदार्ष्टान्तिकभावः सर्वथा समुपपन्नः। ब्रह्मण उपाधिप्रवेशः श्रुतिवाक्येष्वपि प्रतिपादितः—

'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् ॥'[3]

---

१. बृ० ४।५।१३ २. शा० भाष्ये उद्धृतम् ब्र० वि० बृ० वाक्यम्
३. बृ० २।५।१८

'अनेन जीवेनात्मना अनुप्रविश्य"[1] इत्यादि। इति पूर्वोक्तं सर्वं संगतम्'

डा० घाटे महोदयेनास्य अधिकरणस्य एकादशसूत्रे 'स्थानतः, पृथिव्याद्युपाधियोगात्' इति शंकरार्थे अयमाक्षेपः कृतो यत् शंकरकृतः अयमर्थः न सन्तोषजनकः किन्तु शंकरेण 'स्थानतः' अस्य शब्दस्य यः अप्यर्थः कृतः तदनुकूलं सविशेषनिर्विशेषोभयप्रतिपादकश्रुतिसामंजस्यमपि स्थापितमिति कथं न सः अर्थः सन्तोषजनक इत्यत्र हेतुविशेषाप्रदर्शनात् तदसन्तोषकारणं स एव जानातु।[2]

रामानुजेन एतदधिकरणं भिन्नयैव रीत्या व्याख्यातचरेण अधिकरणेन सम्बद्धम्। इत्थं तेनाधिकरणप्रारम्भो विहितः—जाग्रत्स्वप्नसुषुप्तिमुग्ध्यादिदशासु जीवस्य ये ये दोषा अद्यावधि प्रतिपादिताः ते तदन्तर्यामिपरब्रह्मण्यपि वर्तन्ते न वा? पृथिवीजीवादिस्थलेषु सर्वत्र वर्तमानमपि परब्रह्म प्रत्येकदोषनिर्लिप्तं यतो हि सर्वत्र श्रुतिषु तत् निर्गुणसगुणोभयलक्षणात्मकं प्रतिपादितं वर्तते—'अपहतपाप्मा विजरो विमृत्युर्विशोकः......

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद् धृतभूतसर्गः।

× × × × ×

तेजोबलैश्वर्यमहावबोधस्ववीर्यशक्त्यादिगुणैकराशिः[3]॥

यदि च इत्थमुच्येत यत् यथा वस्तुगत्या जीवो निर्दोषः किन्तु विभिन्नशरीरेषु तिष्ठन् तत् कर्मानुसारं सदोषः संजायते तथैव अन्तर्यामि-

---

१. छा० ६।३।२

२. वैदिकमुनिना श्रीहरिप्रसादेन स्थानशब्दस्य 'जीवात्मा' इत्यर्थः कृतः 'स्थानमिह जीवात्मा तत्र हि ब्रह्म अन्तर्यामिरूपेणावतिष्ठते, य आत्मनि तिष्ठन् आत्मनोऽन्तरः (बृ० ३।७।२०) अस्ति खलु जीवात्मनः शरीरमिव भगवतो ब्रह्मणो जीवात्मा स्थानम्। तस्य तत्रान्तर्यामिरूपेणावस्थानात्। यत्रेदमाम्नायते—यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद, यस्य विज्ञानं शरीरम् यो विज्ञानमन्तरो यमयति एष त आत्मा अन्तर्यामी अमृतः (बृ० ३।७।२२) किन्तु उपसंहारे तेनापि निर्विशेषं ब्रह्म संस्थापयितुं निर्विशेषसविशेषोभयात्मकश्रुतिषु सामंजस्यं प्रदर्शितम्।

स्वामी हरिप्रसाद वैदिक-मुनिवृत्ति पृ० ६२५-२६ (नि० सा० सं०)

३. रा० भा० (पृ० १०७)

परमात्मा अपि विभिन्नजीवरूपिशरीरेषु सदोषः सम्पद्यते तदा अस्य इदमुत्तरं यत् बृहदारण्यकोपनिषदि यत्र यत्र अन्तर्यामिप्रकरण-मायातं तत्र सर्वत्र स जीवात्मनो दोषैः मुक्तः प्रतिपादितो वर्तते । अतः अन्तर्यामिपरमात्मा जीवदोषयुक्तः प्रतिपादयितुं न शक्यते । केचित् शाखाध्यायिनः इदमामनन्ति यत् एकस्मिन्नेव शरीरे ब्रह्मजीवयोरुभयोः स्थितिः किन्तु विशेषमहत्त्वं जीवात्मन एव न परमात्मनः । परमात्मनो निर्दुष्टत्वे अन्यदेकम् इदमपि प्रमाणं यत् जीवस्येव तस्य न किमपि स्वकीयं शरीरम्, यच्च नाम-रूपयोः प्रकटीकरणार्थमत्यावश्यकम् "अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि इति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरण-मिति ब्रह्मणोऽपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तन्नामभाक्त्वं चास्तीति कर्मवश्यत्वमवर्जनीयमिति चेत् देवादिशरीरानुप्रवेशो तेन तेन रूपेण युक्तमप्यरूपवदेव तद्ब्रह्म रूपरहिततुल्यमेव ...... 'जीववच्छरीरित्वनिबन्धनं कर्मवश्यत्वमस्य' न विद्यते इत्यर्थ."[1] । एतदतिरिच्य यथा 'नेति नेति' इतिनिषेधकवाक्येषु सत्स्वपि 'सत्यं ज्ञानमनन्तं[2] ब्रह्म' इत्यादिवाक्यानां मिथ्यात्ववारणाय ब्रह्मणो निर्विशेषप्रकाशैकरूपत्वं स्वीक्रियते तथैव जगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादिदोष-त्वेत्यादिप्रतिपादकवाक्यानां मिथ्यात्ववारणाय एतत्स्वीकर्तुमावश्यकं यत् तस्य कल्याणगुणाकरत्वम् ( सगुणत्वम् ) निखिलाविद्यादिदोषशून्य-त्वम् ( निर्गुणत्वम् ) चैतदुभयं स्वीक्रियेत । किंच, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यानि ब्रह्म प्रकाशस्वरूपं प्रतिपादयन्ति किन्तु अन्य-श्रुतिवाक्यावगततदीयसत्यसंकल्पत्वादिगुणान् न वारयन्ति । स्मृतिष्वपि च परमात्मनः उभयस्वरूपत्वं प्रतिपादितम् । यतो हि नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणो न तत्प्रयुक्तदोषभाक्त्वम् अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत्परमात्मा तत्र तत्रावस्थितः अपि निर्दोष इति शास्त्रेषूपमा क्रियते—

'आकाशमेकं हि यथा घटादिषु पृथग् भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥
एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[3] ॥

१. रा० भा० पृ० १०८ २. तै० उ० २।१
३. रा० भा० पृ० ११०

यदि च अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते । अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते न परमार्थतः तत्रस्थाः । इह तु यः पृथिव्यां तिष्ठन्—योऽप्सु तिष्ठन्—य आत्मनि तिष्ठन् इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते । अतः अवश्यमेव तस्य तत्तद्दोषभाक्त्वम् । सूर्यादेस्तु तत्र तत्र स्थित्यभावादेवाम्बुदर्पणादिप्रयुक्तदोषाननुषंगः इति न दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वम् इति चेत् पृथिव्यादिस्थानान्तर्भावात् स्थानिनः परब्रह्मणः स्वरूपतः गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिगतदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते । घटकरकादिषु, वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमानः अप्याकाशः यथा वृद्धिह्रासादिदोषैर्न स्पृश्यते यथा वा जलाधारेषु विषमेषु दृश्यमानः अंशुमान् तद्गतवृद्धिह्रासादिदोषै र्न स्पृश्यते तथा अयं परमात्मा पृथिव्यादिषु नानाकारेषु चेतनाचेतनेषु च स्थितः तत्तद्गतवृद्धिह्रासादिदोषैः असंस्पृष्टः सर्वत्र वर्तमानः अपि एक एव अस्पृष्टदोषगन्धः कल्याणगुणाकर एवेति सर्वात्मना साधर्म्याभावे अपि विवक्षितांशसाधर्म्याद् दृष्टान्तोपादानस्य सिंहो माणवक इत्यादौ दर्शनात् पूर्वोक्तं सर्वमनवद्यम् ।

इदमत्रावधेयम्—रामानुजेन षोडशसूत्रस्य 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यं ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति नान्यत्सत्यसंकल्पत्वादिकं वाक्यान्तरावगतं निषेधति' इत्यर्थं कृत्वा तन्मात्रमित्यस्य प्रकाशस्वरूपतामात्रमित्यर्थो विहितः । शंकराचार्येण चास्य 'आह च श्रुतिः चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म, स यथा सैन्धवघनः अनन्तरः; अबाह्यः कृत्स्नः, प्रज्ञानघन 'एव' अर्थात् यथा सैन्धवघनस्य अन्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैव नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति । चैतन्यमेव तु निरन्तरमस्य स्वरूपम्' इत्यर्थो विहितः । इत्थं चोभयोरर्थयोः एतत्स्पष्टं यद् रामानुजस्य अर्थः सन्निधापिताध्याहारः, शंकरस्य च स्वाभाविकः ।

निम्बार्कश्च यद्यपि एतदधिकरणसूत्रार्थे साधारण्येन रामानुजमेव अनुसृतवान् तथापि पञ्चदशसूत्रस्थप्रकाशशब्दस्य 'वति' मतुपं मत्वा प्रकाशेन तुल्यं प्रकाशवत् इत्यर्थापेक्षया प्रकाशो वर्तते अस्मिन्नित्यर्थमभ्युपगत्य 'तमेव भान्तमनुभाति सर्वम्', 'आदित्यवर्णं तमसः परस्तात्', इत्यादिश्रुतीः सार्थयितुं तद्ब्रह्म तमोमयसृष्टिदोषास्पृष्टं सत् तत्तमोमय-

---

१. बृ० उ० ४ ५।१३

सृष्टिप्रकाशकम् एवमर्थं कृत्वा ब्रह्मणः उभयलिंगतां प्रतिपादयति। एवं षोडशसूत्रस्यापि सः 'यच्छ्रुतिवाक्यं यद्विशेषोपदेशज्ञापकम् तन्मात्रमेव सर्वं यदा तत्प्रतिपादयति तदैव तस्य सार्थक्यम्' एवमर्थं स्वीकरोति।

मध्वाचार्येण एतदधिकरणीयसूत्राणि—एकादशतः एकविंशसूत्रपर्यन्तानि पंचभिरधिकरणैर्विभक्तानि। एकादशसूत्रतस्त्रयोदशसूत्रं यावत्प्रथममधिकरणम्। तस्य च तत्रेदं तात्पर्यं यत् वस्तुतः सर्वेषु भूतेषु एकमेव ब्रह्म इति श्रुतिः तथापि तदैश्वर्यबोधनाय तस्यानेकरूपत्वं प्रतिपाद्यते इत्यभेदे अपि भेदः युज्यते—

एकरूपः परो विष्णुः सर्वत्रापि न संशयः।
ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते[1]॥

चतुर्दशसूत्रतः सप्तदशसूत्रं यावद् द्वितीयमधिकरणमेतत्सूचयति यत् यत्र ब्रह्मणः नीरूपत्वं प्रतिपादितं तत्र तस्य प्राकृतरूपहीनत्वं विवक्षितम्—

भौतिकानीह रूपाणि भूतेभ्योऽसौ परो मतः।
अरूपवानतः प्रोक्तः क तदव्यक्ततः परः॥[2]

यत्र च तस्य रूपवत्त्वं प्रतिपादितं तत्र तस्य विलक्षणं रूपमभिप्रेतम्—

आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम्।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं [3]नेतरेषाम्॥

अष्टादशसूत्रस्य अग्रिममधिकरणमेतदभिव्यनक्ति यत् जीवो यद्यपि ब्रह्मसदृशस्तथापि न सर्वथा तदभिन्नः। जीवो हि ब्रह्मणः प्रतिबिम्बम् इति सूर्यप्रतिबिम्बं यथा सर्वथा सूर्यभिन्नम्, सूर्याश्रितम्, सूर्यसदृशं च तथैव जीवः अपि सर्वथा ब्रह्मभिन्नो ब्रह्माश्रितः ब्रह्मसदृशश्च, तथाहि—

बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले।
एवमेवात्मका लोके परमात्मसदृशा मताः॥[4]

इत्थं च सूत्रस्थस्य अत एव शब्दस्य 'भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युप[5]मानोपाध्यधीनत्वादिना' इत्यर्थं स स्फुटीकृतवान्।

---

१. म० भा० उद्धृतं मत्स्यपुराणवचनम् ( पृ० ११६ )
२. मध्वभाष्ये मत्स्यपुराणवचनम् ( पृ० ११८ )
३. म० भाष्योद्धृत चतुर्वेदशिखायाम् ( पृ० ११४ )
४. म० भा० पृ० ११८
५. सूर्येण सहितं कम् जलम् इति सूर्यकम् सूर्यप्रतिबिम्बम्

ऊनविंशसूत्रमग्रिममधिकरणम् एतत्प्रतिपादयति यज्जीवस्य ब्रह्मणा सह एतत्सादृश्यम् भक्तिं विना वक्तुमशक्यम्—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्.'[1] तथा—

> सहत्वाद् बुद्धिभक्तिस्तु स्नेहपूर्वोऽभिधीयते ।
> तयैव व्यज्यते सम्यक् जीवरूपं सुखात्मकम् ॥[2]

विंशैकविंशसूत्रयोरग्रिममधिकरणमेतत्प्रतिपादयति यत्तस्य भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते । ब्रह्मादीनामुत्तमानां भक्तत्वे अन्तर्भावात् । एवं भक्तादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान् प्रति च सामंजस्यं भवति—

> साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
> ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुताः ॥

किंच—

> यथाभक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
> तथा मुक्तिविशेषोऽपि ज्ञानिनां लिंगभेदने ॥[3]

इत्थमस्य 'अरूपवत्' 'अम्बुवदग्रहणात्' इत्यादिशब्दार्थाभिव्यक्तिप्रकारः केवलतदीयकल्पनाकोटिमाटीकते । स्वाभिमतं द्वैतं प्रमाणयितुं तस्य ब्रह्मजीवयोः सूर्यतत्प्रतिबिम्बाभ्यामौपम्याभिव्यक्तिप्रकारः अपि न ततो न्यूनतामावहति ।

वल्लभानुसारेण सर्वाणि पूर्वोक्तानि सूत्राणि एकाधिकरणकानि । तत्र चायं विचारो यत् कश्चिज्जडजीवधर्माः भगवति बोध्यन्ते कश्चिन्निषिध्यन्ते अतः ते तत्र वर्तन्ते न वा । तत्र 'प्रकाशवच्चावैयर्थ्यात्' इति पंचदशं सूत्रमेतत्प्रतिपादयति यत् यथा सौरप्रकाशः व्यवहार्यः अव्यवहार्यश्च तथैव ब्रह्मापि लौकिकवाङ्मनसव्यवहारातीतत्वेन अव्यवहार्यम्, उपासनादिसाधनेन तत्सन्निधाने च व्यवहार्यमिति तस्योभयात्मकत्वमव्याहतम् । अयम्भावः—'अशब्दमस्पर्शमरूपमव्ययम्'[4] 'दिव्यो ह्यमूर्तः पुरुषः'[5] 'अस्थूलमनणु' इत्यादिवाक्यैस्तस्य जडजीवधर्माविषयत्वं प्रतिपाद्यते किंतु, 'विश्वतश्चक्षुरुतविश्वतो मुखो विश्वतो बाहुरुतविश्वतस्पात्[6],' 'सहस्रशीर्षापुरुषः[7] इत्यादिभिश्च तद्विरुद्धम् । अतः एषां पर-

---

१. म० भा० पृ० ११९
२. तत्रैवोद्धृतं पद्मपुराणवचनम् (पृ० ११९)
३. तत्रैव पृ० ११९
४. क० उ० ३।१५
५. मु० उ० २।१।२
६. मृ० उ० ३।८।८
७. ऋ० १०।८१।३
८. तत्रैव १०।९०।१

स्परविरुद्धश्रुतिवाक्यानां निर्विषयत्वं माभूदिति जगज्जन्मादिकारणं ब्रह्म प्रकाशतुल्यमभ्युपगम्यते। यथा हि सौरश्चान्द्रमसो वा प्रकाशः खलु सर्वं जगदभिव्याप्यावतिष्ठमानः अपि तत्तत्पदार्थसम्बन्धात् तत्तत्पदार्थाकारतामिव प्रतिपद्यते। तां प्रतिपद्यमानश्च व्यवहारसौकर्याय लौकिकैर्जनैस्तथा व्यपदिश्यते. एवमेव विश्वं जगदन्तर्बहिः सर्वतः अभिव्याप्य वर्तमानं जगज्जन्मादिकारण ब्रह्म अपि तत्तत्पदार्थसम्बन्धेन तत्तत्पदार्थाकारतामिव प्रतिपद्यते। तां प्रतिपद्यमानं च बोधसौकर्याय रूपवद्विषयैस्तत्तच्छ्रुतिवाक्यैस्तथा तथोपदिश्यते।

षोडश-सप्तदशाष्टादशसूत्राणि एतत्प्रतिपादयन्ति यत् श्रुतीनां ब्रह्मणः प्रज्ञानघनमात्रत्वप्रतिपादनम्, सूर्यप्रतिबिम्बसादृश्यप्रतिपादनं च जड-जीवधर्माणां भगवत्यौपचारिकत्वस्य तन्निषेधस्य च मुख्यत्वाभिव्यंजकम्। ऊनविंश-विंशैकविंशसूत्राणि एतत् सिद्धान्तयन्ति यत् ब्रह्म, जड-जीवादिगुणविशिष्टमपि तद्रहितम् इति श्रुतिस्मृतिप्रत्यक्षैः सर्वधर्माश्रयत्वेन तत्प्रतीतेर्न श्रुतिवाक्यानां पारस्परिकविरोधः।

( ३।२।२२-३० ) द्वाविशतः त्रिंशत्तमसूत्रं यावत् शंकरानुसारेण नवीनमधिकरणम्। तन्मते चास्य अयं प्रतिपाद्यविषयो यत् 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्पर'मस्ति'[1] इत्यत्र अयं सन्देहो यत् अस्य निषेधस्य कः विषयः इति। यतो हि अत्र 'इदम्' 'तत्' इति विशेषितं किंचित् प्रतिषेध्यमुपलभ्यते अतः किमयं 'नेति नेति' इति द्विः प्रतिपादितः शब्दः 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामर्त्यं च यच्च त्यच्च' इत्यत्र पूर्वस्मिन् प्रतिपादिते रूपे ( मर्त्यञ्च अमर्त्यं च, मूर्तं च अमूर्तं च ) रूपवच्चोभयमपि प्रतिषेधति आहोस्वित् एकतरम्। यद्यप्येकतरम्, तदापि किं ब्रह्म प्रतिषेधति रूपे ( रूपद्वयम् ) पारिशिनष्टि आहोस्वित् रूपे प्रतिषेधति ब्रह्म परिशिनष्टि। तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधति इत्यपि सम्भवति यतो हि द्विरत्र नेति शब्दप्रयोगः अतस्तयोरेकेन सप्रपंचं ब्रह्मणो रूपं प्रतिषिध्यते परेण रूपवद्ब्रह्मेति। एतस्यामाशंकायामुद्भूतायां द्वाविंशत्रयोविंशसूत्रद्वयी प्रतिपादयति यदिह श्रुतिः प्रकृतैतावत्वं प्रतिषेधति। ब्रह्म च प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभाववाङ्मनसातीतमविषयान्तःपातीति ब्रह्मणो रूपप्रपंचं प्रतिषेधति ब्रह्म च परिशिनष्टि इति। प्रकृतम्, यदेतावत् इयत्तापरिच्छिन्नं

---

१. बृ० उ० २।३।६

मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तन्न ब्रह्म अपि तु तदवशिष्टं ब्रह्म; तच्च 'न चक्षुषा गृह्यते नापि वाचा'इत्यादिश्रुतिभिरिन्द्रियाग्राह्यमित्यव्यक्तम्'[1] ।

चतुर्विंशं सूत्रमेतत्प्रतिपादयति यत् निरस्तसमस्तप्रपंचमव्यक्तमेनं परमात्मानं, संराधनेन अर्थात् भक्तिध्यानप्रणिधानाद्यनुष्ठानेन योगिनः पश्यन्ति । 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्'[2] । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं [3]ध्यायमानः' एवमाद्याः श्रुतयः, 'यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युंजानाः' इत्यादिस्मृतयश्च अत्र प्रमाणम् ।

पंचविंशसूत्रमेतत्प्रतिपादयति यत् यथा प्रकाशाकाशसवितृप्रभृतयः अङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु भिन्ना इवावभासन्ते स्वाभाविकीमविशेषात्मतां च न परिहरन्ते एवं स्वयं प्रकाशश्चिदात्मा अपि ध्यानादिकर्मणि उपाधौ भिद्यते वस्तुतस्तु तत्त्वमसीत्यादिवेदान्तवाक्येषु प्राज्ञजीवयोरसकृद्भेदप्रतिपादनात् ऐकात्म्यमेव ।

षड्विंशं सूत्रमेतन्निर्दिशति यत् अत एव ( भेदस्य औपाधिकत्वात् जीवो विद्यया भेदं विधूय ) अनन्तेन परेण प्राज्ञेन ( एकतां गच्छति ) तथा चाह श्रुतिः—

'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव[4] भवति' ।

× × × ×

'ब्रह्मैव सन् ब्रह्माप्येति'[5] ॥

---

१. यद्यपि सन् घटः इत्यादिप्रतीतौ घटादिप्रपंचसम्बद्धतया ब्रह्मणो भानमिति सर्वप्रपंचरहितं ब्रह्म अव्यक्तम् इत्येतत्कथनमसंगतं तथापि ब्रह्मणः सप्रपंचतया भानं न वास्तविकम् अपि तु अविद्यादिदोषप्रयुक्तमिति निष्प्रपंचब्रह्मणः स्वरूपम् अविद्यादिदोषतमस्कावरहितान्तःकरणेनैव ज्ञेयमिति तथा व्यक्तमपि ब्रह्म अविद्यादिदोषदुष्टपुरुषाणां कृते सर्वथा अव्यक्तमिति सूत्ररहस्यम् । अत एव अग्रिमे सूत्रे- 'अपि च संराधने प्रत्यक्षानुमानाभ्याम्'–संराधने ब्रह्मणो रूपं व्यक्तमित्युक्तम् । संराधनं तु भक्त्या ध्यानेन च परमात्मनि. चित्तप्रणिधानम् , स्थापनम् । भक्तिश्च माहात्म्यज्ञानपूर्वकस्नेहाख्यः अन्तःकरणवृत्तिविशेषः; ध्यानं च अवधानेन प्रत्ययावृत्तिः, अत एव 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इत्यादिश्रुतयः, 'योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' इत्यादिस्मृतयश्च स्पष्टमित्यमाचक्षते यत् शुद्धसत्त्वपुरुषैः निष्प्रपंचब्रह्मणो व्यक्तरूपमवबुध्यते ।

२. क० उ० ४।१ ३. मुं० उ० ३।१।८

४. मु० ३।२।९ ५. बृ० ४।४।६

एतस्य अधिकरणस्य अवशिष्टसूत्रचतुष्टये जीवप्राज्ञयोः भेदाभेदोभयप्रतिपादकवाक्यानां सामंजस्यप्रतिपादनं वर्तते, तथाहि—'ततस्तु तं पश्यते निष्कलं ध्यायमानः'[1] द्रष्टृद्रष्टव्यत्वेन, ध्यातृध्यातव्यत्वेन च, 'परात्परं पुरुषमुपैति दिव्यम्'[2] इति गन्तृगन्तव्यत्वेन; 'यः सर्वाणि भूतानि अन्तरो[3] यमयति' इति नियन्तृनियन्तव्यत्वेन च भेदप्रतिपादकेषु वाक्येषु सत्सु 'तत्त्वमसि'[4] 'अहं ब्रह्मास्मि'[5] 'एष त आत्मा[6] सर्वान्तरः', 'एष त आत्मा [7]अन्तर्याम्यमृतः' एवमभेदप्रतिपादकवाक्येषु च सत्सु चैवमुभयव्यपदेशे यद्यभेद एवैकान्ततो गृह्येत तदा भेदव्यपदेशो निरालम्बन एव स्यात् अतः कैश्चित् अत्र अहिकुण्डलवत् तत्त्वं प्रतिपाद्यते। अर्थात् यथा अहिकुण्डलयोः अहित्वेन रूपेण उभयोः अभेदत्वे अपि कुण्डलाकारः, वक्राकारः, दण्डाकारः इत्यादिव्यपदेशेन भेदः अभ्युपगम्यते तथा इहापि उभयोर्भेदाभेदौ संगच्छेते। अथ च यथा सावित्रस्य प्रकाशस्य तदाश्रयस्य सवितुश्च उभयोः तेजस्त्वाविशेषे अपि व्यापकत्वपरिच्छिन्नत्वाभ्यां भिन्ननामत्वेन एकत्र सूर्यत्वव्यपदेशः अन्यत्रप्रकाशत्वव्यपदेशः तथैव जीवप्राज्ञयोरपि परस्परं भेदाभेदौ न व्याहन्येते। सिद्धान्तस्तु 'प्रकाशवच्चावैशेष्यम्' इति सूत्रे प्रतिपादित एव अर्थात् भेदः काल्पनिकः अभेदश्च पारमार्थिकः। परमार्थतो बद्धस्य जीवस्य पार्थक्येन अभ्युपगमे तु पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वात् मोक्षप्रतिपादकश्रुतिवैयर्थ्यं प्रसज्येत। अत एव '[8]नान्योऽतोऽस्तिद्रष्टा', 'अथात[9] आदेशो नेतिनेति', 'तदेतद्ब्रह्म[10] अपूर्वम् अनपरम् अनन्तरम् अबाह्यम्', इत्यादिवाक्यैः ब्रह्मव्यतिरिक्तप्रपंचनिराकरणाद् ब्रह्ममात्रस्यैव परिशेषः सिद्धान्तः।

रामानुजस्तु द्वाविंशसूत्रतः षड्विंशसूत्रं यावत् सर्वाणि सूत्राणि 'नस्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' इत्यत्र प्रतिपादितोभयलिगतः सम्बध्नाति। अत्र, 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इति प्रकृत्य समस्तं स्थूलसूक्ष्मरूपं प्रपंचं ब्रह्मणो रूपत्वेन परामृश्य तस्य वैतस्य पुरुषस्य

१. मुं० ३।१।८
२. तत्रैव ३।२।८
३. बृ० उ० ३।७।१५
४. छा० ६।८।७
५. बृ० उ० १।४।१०
६. तत्रैव ३।४।१
७. तत्रैव ३।७।३
८. ब्र० सू० ३।२।२५
९. बृ० उ० ३।७।२३
१०. तत्रैव २।३।६
११. तत्रैव २।५।१९

रूपमित्यादिना आकारविशेषं चाभिधाय 'अथात आदेशो नेतिनेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इत्यादिना सर्वं प्रकृतं ब्रह्मणः प्रकारम् इति शब्देन परामृश्य तत्सर्वं प्रतिषिद्धमिति कथं ब्रह्मण उभयलिंगत्व-संगतिरिति प्रश्नः। उत्तरं च एतद् यत् 'नेतिनेति' इत्यस्य नैवम् नैवम् इत्येवमर्थः। तत्रत्येन च 'इति' शब्देन 'द्वे वाव ब्रह्मणो रूपे' इत्यादौ प्रतिपादितानां ब्रह्मणो विशेषणानां परामर्शः। अतो 'नेति नेति' इत्यस्य अयमर्थः यत् ब्रह्म उक्तप्रकारमात्रविशिष्टं न अस्ति। इत्थं च उक्तप्रकार-विशिष्टतया या ब्रह्मणः इयत्ता प्रकृता सा अत्र 'इति' शब्देन परामृश्य निषिध्यते। यतो हि निषेधानन्तरं 'न ह्येतस्मादिति नेत्यन्यत्परम-स्त्यथ नामधेयम्। सत्यस्य सत्यमिति प्राणा वै सत्यम् तेषामेष सत्यम्', इत्यादिभिः भूयः अपि तद्गुणजातं प्रतिपादितमित्यतश्चैवं वाक्यशेषोदि-तगुणजातयोगान्नेतिनेतीत्यादिना ब्रह्मणः सविशेषत्वं न प्रतिषिध्यते अपि तु पूर्वप्रकृतेयत्तामात्रमिति ब्रह्मण उभयलिंगत्वसंगतिः।

ब्रह्म हि श्रुतिमतिरिच्य प्रमाणान्तरागोचरमिति प्रमाणान्तरेण न व्यज्यते तथा हि—

'न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्'

'न चक्षुषा गृह्यते नापि वाचा'[1]

इति तत्सम्बन्धितया इयत्तापरिच्छिन्नमूर्त्तामूर्तलक्षणस्य तस्य रूपस्य निषेधासम्भवः। अतस्तस्य प्रकृतेयत्ता (एतावन्मात्रगुणविशिष्टं ब्रह्म एतत्) नेति नेतीत्यादिना निषिध्यते, किंच, संराधने सम्यक् प्रीणने भक्तिरूपापन्ने निदिध्यासने एव अस्य साक्षात्कारो न अन्यत्र इति श्रुतिस्मृ-तिभ्यामवगम्यते—

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन'[2]

× × ×

भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन॥

ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।[3]

'नेति नेति' इत्यस्य निषेधविषयो यः पूर्वम् उक्तः स एतेनापि प्रमाणीक्रियते यत् साक्षात्कृतपरब्रह्मस्वरूपैः संराधने कर्मणि (भक्तिरू-पापन्ने निदिध्यासने) प्रकाशादिवत् (ज्ञानानन्दादिस्वरूपवत्) मूर्तामू-र्त्तादिप्रपंचविशिष्टतायाः अपि ब्रह्मगुणत्वाविशेष्यं साक्षात् क्रियते। ब्रह्मस्व-

---

१. शा० भा० २१२ पृष्ठे उद्धृतम् मुं० उ० ३।१।७ श्रुतिवाक्यम्।
२. क० उ० १।२।२३ ३. गीता ११।५३-५४

रूपभूतप्रकाशानन्दादिश्च संराधनात्मके कर्मणि अभ्यासादुपलभ्यते। तद्वदेवाभ्यस्तसंराधनानां तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयते। इत्थमुक्तैर्हेतुभिर्ब्रह्मणः अनन्तकल्याणगुणगणविशिष्टत्वं सिध्यतीत्युभयलिंगं ब्रह्म उपपन्नमिति।

अवशिष्टा सूत्रचतुष्टयी–सप्तविंशसूत्रतः त्रिंशत्तमसूत्रं यावत्, विशेषेण चिदचितोः (ब्रह्मजगतोः) कः सम्बन्ध इति प्रस्तुत्य प्रतिपादयितुं नवीनमधिकरणं निर्मिमीते यतो हि 'ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतिवाक्यानि तयोरभेदं प्रतिपादयन्ति 'हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानु'प्रविश्य'–इत्यादि वाक्यानि च तद्भेदम्' अतः किमस्याचिद्वस्तुनः ब्रह्मरूपत्वम् अहिकुण्डलन्यायेन, उत प्रभाप्रभावतोरिव एकजातियोगेन, आहोस्वित् जीवस्येव विशेषणविशेष्यतया अंशांशिभावेन इति विचिकित्सायाम् अहि कुण्डलवत्' इत्युत्तरम्। 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदं सर्वम्' इति तादात्म्यव्यपदेशात्, हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनेत्यादिना भेदव्यपदेशाच्चोभयव्यपदेशोपलब्ध्या अहेः कुण्डलभाववत् ऋजुभाववच्च तस्यैव ब्रह्मणः संस्थानविशेषा एव अचिद्वस्तूनीति तत्त्वम्। किन्तु ब्रह्मस्वरूपस्यैवाचिद्रूपेण अवस्थानमिति स्वीकारे भेदप्रतिपादकश्रुतयः ब्रह्मणः अपरिणामित्ववादिन्यश्च श्रुतयो बाधिताः स्युरिति पूर्वपक्षे अरुचौ प्रकाशाश्रयवद्वेत्यादिना पक्षान्तरमुच्यते। इत्थं च यथा तेजस्त्वेन प्रभा तदाश्रययोर्भिन्नयोरपि तादात्म्यम् एवमचित्प्रपंचस्य ब्रह्मणः रूपत्वमिति भावः। सिद्धान्तस्तु अयम् यथा [3]"अंशो नानाव्यपदेशात्..."इत्यादिसूत्रे प्रतिपादितः अर्थात् जीववत् पृथक्स्थित्यनर्हविशेषणत्वेन अचिद्वस्तुनः ब्रह्मांशत्वम्। इत्थं च विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः ब्रह्मणो निर्दोषत्वं च रक्षितम्। एवं च यथा प्रकाश-जाति-गुण शरीराणां स्वाश्रयमणिव्यक्तिगुण्यात्मनः प्रति अपृथक्स्थितिलक्षणविशेषणतया तदंशत्वम् तथैवेहापि जीवस्य अचिद्वस्तुनश्च ब्रह्मप्रत्यंशत्वम्। अचिद्वस्तुनो गुणानां चिद्वस्तुनि निषेधाच्चापि एतदेव सिद्धं भवति यत् चिदचितोः अंशांशिभावः।

अयं भावः—स वा एष महानज आत्मा[4] अजरोऽमरः...नास्य जरया एतज्जीर्यति—

---

१. नृसिंहोत्तरतापनीयोपनिषत् ७    २. छा० ६।३।२

३. ब्र० सू० २·३।४३    ४. बृ० उ० ४।४।२५

इत्यादिभिः ब्रह्मणि अचिद्धर्माणां प्रतिषेधः इति विशेषणविशेष्यत्वेनैव अंशांशिभावः। अतिसूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म, स्थूलचिदचिद्वस्तुविशिष्टं च कार्यभूतं ब्रह्म इति कारणात् कार्यस्य अनन्यत्वम्। कारणभूतब्रह्मविज्ञानेन च कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम् ब्रह्मणो निर्दोषत्वञ्च सुरक्षितम् तन्निर्दोषत्वेन कल्याणगुणाकरत्वेन च उभयलिंगत्वमिति सर्वमनवद्यम्।

इदमत्रावधेयम् रामानुजेन पंचविंशसूत्रे 'कर्मण्यभ्यासात्' इत्यस्य यः अर्थः कृतः सः शंकरकृतार्थापेक्षया निर्विवादं वरीयान् किन्तु षड्विंशसूत्रे 'अनन्तेन' इत्यस्य अनन्तगुणगणेन अयमर्थो न स्वाभाविकः प्रतिभाति।

निम्बार्कश्च द्वाविंशसूत्रमारभ्य आत्रिंशत्तमसूत्रम् एतदधिकरणं स्वीकरोति तत्र द्वाविंशत्रयोविंशचतुर्विंशसूत्रेषु स प्रायः रामानुजेन सहमतः किन्तु पञ्चविंशषड्विंशसूत्रे तेन किंचिद्भेदेन व्याख्याते। तथाहि—सूर्याग्न्यादीनां यथा तदर्थिकृतसाधनाभ्यासात् (दर्पणकाष्ठद्वयघर्षणादिना) आविर्भावः तद्वत् ब्रह्मणः अपि अवैशेष्यम् उपयुक्तसाधनद्वारा तस्यापि प्रकाश इति भावः (भक्तिपूर्वकोपासनसाधनद्वारैव ब्रह्मसाक्षात्कारः इति तात्पर्यम्) तत्साक्षात्कारानन्तरञ्च उपासकः तेन ब्रह्मणा सह साम्यमुपैति। यथा च श्रुतिः—

> यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्।
> तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति[1]॥

इत्थं निम्बार्कः 'कर्मण्यभ्यासात्' एतत्पदम् रामानुजवत् 'अनन्तेन च' एतत्पदं शंकरवत् व्याख्यातवान्। अवशिष्टं च सूत्रचतुष्टयं तेन अन्यथैव व्याख्यातमिति तत् सर्वथा अप्रतीयमानाक्षरार्थम् तथाहि—नेति नेति इत्येतत् न मूर्तामूर्ते निषेधति अपि तु ब्रह्मणः सीमितगुणविशिष्टतामात्रम्। यतो हि मूर्तामूर्तादिकं विश्वं स्वकारणे ब्रह्मणि भिन्नाभिन्न सम्बन्धेन अहिकुण्डलवत् भेदाभेदव्यपदेशेन स्थातुमर्हति, अयं च भेदाभेदसम्बन्धः श्रुतिवाक्यैः प्रतिपादितः। स चेत्थम्—'यतो वा इमानि भूतानि[2] जायन्ते', 'यः पृथिव्यां[3] तिष्ठन्', इत्यादिभिर्भेदव्यपदेशः 'सर्वं खल्विदं[4] ब्रह्म', 'आत्मैवेदं सर्वम्',[5] इत्यादिभिश्च अभेदः' इति

---

१. मु० उ० ३।३ २. तै० उ० ३।१
३. बृ० उ० ३।७।३ ४. छा० उ० ३।१४।१
५. तत्रैव ७।२५।२

कुण्डलाकारे स्थिते सर्पे यथा तदंगस्य फणपुच्छाद्यवयवा न स्फुटीभवन्ति प्रसर्पतश्च तस्य स्फुटीभवन्ति तथैव ब्रह्मणः अपि जगतः प्रकाशः, प्रलये च तत्रैव विलयः। अचेतनजगतः ब्रह्मणा सह अयं भेदाभेदसम्बन्ध एव निम्बार्कसिद्धान्तः। शंकररामानुजाभ्यां च अयं पूर्वपक्षत्वेन गृहीतः।

इत्थमेव च अष्टाविंशसूत्रे चेतनजीवस्य ब्रह्मणा सह भेदाभेद-सम्बन्धरूपः सिद्धान्तो निर्धारितः। तथाहि—जीव-पुरुषोत्तमयोरपि प्रभाप्रभावतोरिवोभयव्यपदेशात् तथासम्बन्धः (भेदाभेदसम्बन्धः) ज्ञेयः। एकोनत्रिंशत्तमसूत्रस्य एतन्मते एतत्तात्पर्यं यत् अस्मिन् मते सम्भाव्यमाना कृत्स्नप्रसक्त्यादिदोषप्रसक्तिः तु 'श्रुतेस्तु शब्द' मूलत्वात्'[1] इत्यत्र 'सोऽकामयत बहुस्याम्'[2], 'स्वयमात्मानमकुरुत'[3] इत्यादिना दूरीकृता। यस्यैतत्तात्पर्यं यत् ब्रह्मणः स्वरूपं श्रुतिवाक्यैरेव अवगन्तुं शक्यते। न तु तर्कैर्नापि च युक्तिभिः। किंच, 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्'[4] तथा 'न लिप्यते लोकदुःखेन[5] बाह्यः' इत्यादि-श्रुतिभिः तस्य सर्वथा निष्कलंकत्वं प्रतिपाद्यते।

यद्यपि अयमर्थः सर्वथा हृद्यः तथापि अनेन दोषेण युक्तो यत् एव-मभ्युपगमे अष्टाविंशोनत्रिंशसूत्रयोर्निर्दिष्टो 'वा' शब्दः सर्वथा नैरर्थ्य-मावहति।

मध्वमते द्वाविंशसूत्रं स्वतंत्रमधिकरणमेतत्प्रतिपादयति यत् ब्रह्मणः केवलं सृष्टि–संहारकर्तृत्वमेव न अपि तु पालकत्वमपि—'नैतावदेव नापरोऽन्यदस्त्युभा स द्यावापृथिवी बिभर्त्तीति'। तथा चापि—

सृष्टिं च पालनं चैव संहारं नियमं तथा।
एक एव करोतीशः सर्वस्य जगतो[6] हरिः॥

'द्वाविंशतः षड्विंशसूत्रंयावन्निर्मितान्यधिकरणानि एतत्प्रतिपादयन्ति यत् स्वयमव्यक्तः परमात्मा श्रवणमननादिना साक्षात्क्रियते स च साक्षात्कारः अनन्तेन अपरिमितसामर्थ्येन अन्वितस्य तस्य प्रसादाद् भवति न जीवशक्त्या' 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च'[7] इति श्रुतेः'। सप्तविंशसूत्रतः त्रिंशत्तमसूत्रं यावत्

---

१. ब्र० सू० २।१।२७ २. तै० उ० २।६
३. तत्रैव २।७ ४. श्वे० ६।१९
५. क० २।२।११ ६. म० भा० पृ० १२० (ब्र० पु० वचनम्)
७. बृ० उ० २।४।५

सूत्राणामयं विशेषो यत् कथमेकमेव ब्रह्म आनन्द आनन्दी चोभयं भवितुं शक्नोति। सप्तविंशसूत्रमेतत्प्रतिपादयति यत् 'आनन्दं ब्राह्मणो विद्वान्',[1] 'अथैष एव परमानन्दः'[2] इत्युभयव्यपदेशात् उभयं तत्र तथा सम्भवति यथा अहिः कुण्डली कुण्डलं चैतदुभयं भवितुं शक्नोति यथा वा सूर्यः प्रकाशः प्रकाशाश्रयश्चेत्युभयं व्यपादिश्यते। यथा वा एक एव अनन्तः कालः 'पूर्वः' प्रथमः एवं रूपेण अवच्छेद्यः अवच्छेदकश्च एतदुभयं भवति—

आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत्।
कालवद्वा यथा कालः स्वावच्छेदेन तां[3] व्रजेत्॥

इत्थं ब्रह्मणो विशेषत्वं विशिष्टत्वं च एतदुभयम् 'एकमेवाद्वितीयम्', 'नेह नानास्ति किंचन' इत्यादिना प्रतिपाद्यते'[4]।

मध्वप्रतिपादितो द्वाविंशोनत्रिंशत्तमसूत्रयोरर्थस्तत्प्रसंगानुसारं सर्वथा अस्वाभाविकः। वल्लभश्च द्वाविंशतः त्रिंशत्तमसूत्रं यावत्सूत्राणि अधिकरण-चतुष्टयेन व्यभजत्।

तत्र द्वाविंशसूत्रं प्रथममधिकरणमेतत्प्रदर्शयति यत् 'नेति नेति' इत्यादिवाक्यं प्रकृते एतावतां परिदृश्यमानानां लौकिकपदार्थानामेव धर्मान् निषेधति न तु वेदोक्ता धर्मा निषेद्धुं शक्यन्ते इति अस्थूलादि-वाक्यै ब्रह्मणो जगतः वैलक्षण्यमेव प्रतिपाद्यते। त्रयोविंशचतुर्विंशसूत्रयो-र्द्वितीयमधिकरणमेतत्प्रत्याख्याति यत् निर्गुणब्रह्मप्रतिपादकवाक्यानि एव सत्यत्वाभिव्यंजकानि सगुणब्रह्मप्रतिपादकानि तु औपचारिकत्वेन ग्रहीतव्यानि। यच्च वस्तुगत्या ब्रह्मणः सगुणत्वनिर्गुणत्वयोरुभयोः संस्थापकम्। अतएव 'लौकिकालौकिकप्रत्यक्षविषयत्वादुभयवाक्यार्थ-रूपमपि ब्रह्म'।

पंचविंशषड्विंशसप्तविंशसूत्राणामग्रिममधिकरणमेनमेवपूर्वोक्तं विषयं स्थिरीकरोति। तत्र पूर्वपक्षिणः अयमभिप्रायः यत् यथा प्रकाशे (तेजसि) एक एव स्पर्शः उष्णता, यथा वा जले एक एव स्पर्शः शैत्यम्, औपाधि-कतया जले औष्ण्यस्य चन्द्रे शैत्यस्य च अनुभवे सत्यपि नहि तयो र्भिन्नस्पर्शत्वम्, तथैवरीत्या कर्मणि तपःप्रणिधानादौ भक्तेच्छानुरूप-मनन्तगुणसम्पन्नत्वेन अनेकशः अनुभूतस्यापि तस्य निर्विशेषत्वेनैव रूपेण तस्य सर्वत्र प्रसिद्धौ ब्रह्मणः अवैशेष्यमेव अङ्गीकर्तव्यम्।

---

१. तै० उ० २।४ २. बृ० ३।९।२२

३–४. म० भा० पृ० १२२ ५. अ० भा० बृ० ११९ (चौ०)

सिद्धान्तस्त्वयं यत् ब्रह्म तु उभयरूपम्, उभयरूपेण–निर्गुणत्वेन, अनन्तगुणत्वेन सर्वविरुद्धधर्मेण रूपेण व्यपदेशात्, अहिकुण्डलवत्; यथा सर्पः ऋजुः, अनेकाकारः कुण्डलश्च भवति ब्रह्मस्वरूपं सर्वप्रकारं भक्तेच्छया तथा स्फुरति इति। लोके अपि शरीरान्तः करणादीनि परस्परविरुद्धदयामारकत्वादीनि विषयभेदेन एकस्मिन् क्षणे प्रतीयन्ते इति सर्वधर्माणां भगवति सम्भवान्न कापि श्रुतिरुपचरितार्थेति सिद्धम्,

अष्टाविंशतस्त्रिंशत्तमसूत्रं यावत् प्रकाशस्य प्रकाशाश्रयस्य च सम्बन्धवत् ब्रह्मणः तद्धर्माणां च सम्बन्धविचारः। अयमत्र सन्देहः—धर्माः नाम के? ब्रह्मणो भिन्नास्तत्कार्यरूपा आहोस्विद् ब्रह्मैव? किं ते तत्र समवायसम्बन्धेन वर्तमाना आहोस्वित् चतुर्दशतः अष्टादशसूत्रं यावत् पंचसूत्र्यां प्रतिपादितं निर्धर्मकमेव ब्रह्म सत्यम्? तत्रायमभिसन्धिःवेदस्थापनार्थं हि वेदान्तानां प्रवृत्तिरित्यक्षरमात्रस्यापि यथा बाधो न भवेत् तथा वक्तव्यम। अतः केषांचिच्छ्रुतिवाक्यानामुपपादनार्थं यथा अस्माभिः ब्रह्मणः सगुणनिर्गुणोभयरूपत्वमभ्युपगम्यते तथैव एकमेवाद्वितीयम् इत्यादिवाक्यानामुपपादनार्थं ब्रह्मणो निर्धर्मकत्वमप्यभ्युपगन्तव्यम्। अत एव एतत् ब्रह्मणः सगुणनिर्गुणोभयरूपत्वं निर्धर्मकत्वं च उभयमपि सूत्रकारस्य सम्मतमिति वल्लभाभिप्रायः।

इत्थम् एकादशतः त्रिंशत्तमसूत्रं यावत् विभिन्नार्थपर्यालोचनया एकं तु एतदवगम्यते यत् न कुत्रापि मायायाः स्वरूपः अपि निर्देशः वर्तते शंकरेण हि बहुत्र इव शब्द प्रयुक्तः। द्वितीयं चैतत् यत् मौलिकतया विरुद्धस्य ब्रह्मणो धर्मस्य जीवेन जडजगता तत्सम्बन्धस्य च प्रतिपादकैः श्रुतिवाक्यैः सूत्रकारस्य सामंजस्योपपादनप्रयत्नः अप्रदर्शितकिंचिन्निर्णयावसानः, अर्थात् जीवो ब्रह्मणः परिणामो विवर्तो वा इत्यस्मिन् विषये किमपि निर्णीतं सिद्धांतम् अस्थापयित्वा एव बादरायणः विभिन्नैरुदाहरणैः विशेषेण च एकोनत्रिंशत्तमसूत्रप्रयुक्तवाशब्दनिर्दिष्टैः तत्सम्बन्धमेव प्रदर्शयति। अथ च स एवं स्वीकर्त्तुं प्रस्तुतो यत् ब्रह्मप्रतीतेः वेदेभ्य एव सम्भवात् नान्यथेति तत्र भेदाभेदयोर्निर्धर्मत्वानन्तधर्मत्वयोश्च सर्वथा सम्भवः। तथापि एतेषु सूत्रेषु कस्यचिन्निश्चितसिद्धान्तस्य प्राप्तुमिच्छया प्रवृत्तौ एतत्सूत्रविशेषसम्बद्धो भेदाभेदसम्बन्ध एव सम्भवति। यश्च जीवेन जगता च ब्रह्मणः सम्बन्धमुपपादयितुं ब्रह्मणो जीवं जगच्च भिन्नमभिन्नं च आकलयन्न किमपि तृतीयं सिद्धान्तं स्वीकरोति। तत्रैव चाहिकुण्डलयोः प्रकाशतदाश्रययोश्चोदाहरणं विशेषेण संघटते।

( ३।२।३१-३७ ) एकत्रिंशत्तमसूत्रतः सप्तत्रिंशत्तमसूत्रं यावदग्रिममधिकरणम् ब्रह्मवाचकैः सेतून्मानादिकतिपयपारिभाषिकशब्दैः प्रतीयमानब्रह्मपरिच्छिन्नतैरपि अवबोधे, औपचारिकतया ब्रह्मप्रतिपादनावसानैः, नात्र ब्रह्मातिरिक्तं किमप्यन्यत् तत्त्वमिति प्रतिपादयति ।

अन्तिमसूत्रचतुष्टयनिर्मितं पादस्यान्तिममधिकरणमष्टत्रिंशत्तमसूत्रतः एकचत्वारिंशत्तमसूत्रं यावत् एतन्निर्णयति यत् परमेश्वर एव सर्वजन्तूनां कर्मफलदाता । तत्साहाय्यरहितं केवलम् कर्म अदृष्टसहयुक्तं वा कर्म फलदाने असमर्थम् । धर्माधर्मयोरपि कारयितृत्वेन हि ईश्वर एव हेतुरुक्तः । तथाहि—'एष एव हि साधु कर्म कारयति तं यमेभ्यो लोकेभ्यः उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो 'निनीषते' ।

---

## तृतीयाध्यायस्य तृतीयः पादः

पादपरिचयः—द्वितीयस्मिन् पादे स्वप्नसुषुप्त्यवस्थावर्णनानन्तरं परमात्मस्वरूपनिरूपणपूर्वकं परमात्मन एव कर्मफलदातृत्वमुपपादितम् । तस्य च परमात्मनः ज्ञानस्य साधनम् उपासनम् तत्स्वरूपमिह तृतीयस्मिन् पादे निरूप्यते ।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

( १ ) शंकरमते सगुणविद्यासु गुणोपसंहारस्य निर्गुणे ब्रह्मणि अपुनरुक्तदोषसंहारस्य च निरूपणद्वारा साधनवर्णनम् ।
( २ ) रामानुजमते च परमात्मप्राप्तेः साधनभेदनिरूपणम् ।
( ३ ) निम्बार्कमते ब्रह्मोपासनासु गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदविचारः ।
( ४ ) मध्वमते च उपासना निरूपणम् ।
( ५ ) उपासनादेरन्तरंगसाधनत्वात् ब्रह्मगतधर्मविचारोपसंहारः ।

### सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

उपनिषदध्यायिनाम् एतद् विदितं यत् विभिन्नवेदोपनिषत्सु विभिन्नशाखोपनिषत्सु वा ब्रह्मज्ञानसाधनभूता अध्यात्मविद्याः प्रतिपादिताः । तासां च क्वचित् सत्यपि समाननामत्वेन निर्देशे आंशिकभेदः प्रतीयते । यथा छांदोग्योपनिषदि[2] समुपलभ्यमाना शांडिल्यविद्या संक्षेपरूपेण बृह-

---

१. कौ० उ० ३।८ २. छा० उ० ३।१४

दारण्यकोपषदि[1] शतपथब्राह्मणे[2] च समुपलभ्यते। सर्वमेतद्वाक्यत्रयं यत्किंचिद्धर्मविशिष्टस्य परमात्मनः उपासनमभिलक्ष्य उक्तम्। तेषु च केचिद्धर्माः मनोमयत्वभारूपत्वादयः त्रिष्वपि वाक्येषु उपलभ्यन्ते इतरे च प्राणशरीरत्व-सत्यसंकल्पत्वादयः छान्दोग्यशतपथब्राह्मणयोरुपलभ्यमाना अपि बृहदारण्यके नोपलभ्यन्ते यत्र च सर्ववशित्वम् उपलभ्यमानमपि छान्दोग्यशतपथयोर्नोपलभ्यते। तात्पर्यं चैतद् यत् क्वचित्केनचिद् धर्मेण युक्तस्य ब्रह्मणः उपासना प्रतिपादिता इतरत्र अन्येनापि धर्मेण युक्तस्य। उदाहरणार्थं मनोमयत्वभारूपत्वादिना छान्दोग्यादिषु समानत्वेनोपासितुं प्रतिपादितमपि ब्रह्मोपासनं बृहदारण्यके नोपलभ्यते। तत्र चोपलभ्यमानं सर्ववशित्वोपासनं छान्दोग्यशतपथब्राह्मणयोर्नोपलभ्यते। एवमेव 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति छान्दोग्ये[3] प्रतीकोपासनकथनपूर्वकं परब्रह्म लक्षितम् अन्यत्र च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिभिः तदभिलक्षितमपि अशब्दमस्पर्शमरूपमित्यादिभिरभिलक्षितम्। इत्थमिहायं सन्देहः यत् आसां सर्वाध्यात्मविद्यानामेकता न वा? अर्थात् सर्वाभिश्च ताभिः एकमात्रस्य तस्य परब्रह्मणः एवोपासनमुक्तम् अन्यस्य वेति। यतो हि एतासामध्यात्मविद्यानां चरमं लक्ष्यं ब्रह्मावाप्ति र्वर्तते। तच्च ब्रह्म एकम्, सत्यम्, शाश्वतम्, चेति तदवाप्तिसाधनेनाप्येकेनैव, समानतया सर्वत्र भवितव्यम् तदभावे च एकस्यैव सत्यत्वेन अन्येषामसत्यत्वापत्तिः। अयमेव प्रश्नः अस्मिन् सर्वस्मिन् पादे समाहितो यत् क्वचितु शब्दभेदेन, क्वचिन्नामभेदेन क्वचित्प्रकरणभेदेन प्रतीयमानभिन्नतानां दहरशांडिल्यप्राजापत्यादिब्रह्मविद्यानामेकता वर्तते। दार्शनिकविचारानुरोधेन अयं प्रश्नः प्रतीयमानाकिंचित्करत्वः अपि क्रियात्मकरीत्या वेदान्तसिद्धान्तानुयायिनां कृते अत्यन्तोपयोगी वर्तते। ब्रह्मविद्यानां भिन्नत्वे ब्रह्मावाप्तये वेदान्तानुयायिभिस्तावत्यो विद्या अभ्यसितव्याः स्युः' तासां सर्वासां चैकत्वे एकस्या एव अभ्यासः पर्याप्नुयात् इति ताः परस्परं विशिषन्ति न वेत्येष विचारः साधीयान्।

( ३।३।१-४ ) पूर्वोक्तः प्रश्नः प्रथमे अधिकरणे सामान्यरूपेण इत्थं समाहितो यद्विभिन्नविद्यासम्बन्धे प्रयुक्तैः उपासति, विद्यात् इत्यादिक्रियापदैर्निर्दिष्टानां विशेषविधीनामभिन्नत्वात् ब्रह्मोपासनानाम भिन्नत्वम्। एतच्चैव द्वितीयाधिकरणेन पंचमसूत्रेण इत्थं दृढीक्रियते—ब्रह्मोपासनं

---

1. बृ० उ० ५।६  2. श० ब्रा० १०।६।२
3. छा० १।४।१

सर्वशाखासाधारणम्, तथापि शाखाभेदेन तदुपासनं शांडिल्य-वैश्वानर-दहरादिनाम्ना प्रतिपादितम्। उपास्यं तु सर्वत्र एकमेव ब्रह्म इति शाखाभेदेन उक्ते तदीयविशेषोपासने शाखान्तरोपात्तान्योपासनागुणानामुपसंहारः (सन्निवेशः) कर्तव्यः।

इदमत्राकूतम्—शाण्डिल्यवैश्वानरप्रभृत्युपासनेषु सत्यपि प्रक्रमभेदे परब्रह्मणः परमेश्वरस्य उपास्यस्य भेदाभावान्न तदुपासनभेदो वक्तुं शक्यते। नहि निरूपणप्रकारमात्रभेदेन निरूपणीयवस्तु कदाचिद्भेदमापद्यते। प्रतिपाद्यमुपास्यं परं ब्रह्मवस्तु च सर्वत्र एकमेवेति न तदुपासनं कर्हिचिद् भिद्यते इति प्रक्रमभेदे सत्यपि सर्वत्र ब्रह्मोपासनेषु गुणोपसंहारो भवतीति युक्तम्।

एतत्तु ज्ञानमार्गीयाधिकारे; भक्तिमार्गीयाधिकारे तु तत्तदवतारादिरूपविशेषस्यैव प्राधान्येन सम्बन्धिप्राधान्यादुपसंहाराभावे अपि ज्ञानकोटौ श्रीरामतापनीयोपनिषत्सु अवतारान्तरत्वस्य श्रीमद्भागवतदशमस्कन्धीयाक्रूरस्तुतौ च 'नमस्ते रघुवर्याय रावणान्तकराय च' इत्यादिषु श्रीकृष्णे श्रीरघुवर्यत्वादेरुपसंहारो दृश्यते।

इत्थं च छान्दोग्योपनिषदः भिन्नभिन्नावतरणेषु[1] सविस्तरं प्रतिपादिता शाण्डिल्यविद्या एकैव। अथ च तत्रैव[2] एवं शतपथब्राह्मणे[3] च उपलभ्यमाना वैश्वानरविद्या चैकैव। तत्रापि 'वैश्वानरमुपासीत' एवं रूपेण हि तस्यैव एकस्य वैश्वानरोपासनस्य शास्त्रविधिना उभयत्रोपलम्भात् उभयोरपि विद्ययोरुपासनस्य ब्रह्मावाप्तिरूपैकफलकत्वेन चोभयोर्विद्ययोरप्येकत्वम्। अत एव सर्ववेदान्तेषु वेद्यैकत्वोपदेशात् वेदेनापि विद्यैकत्वं प्रदर्श्यते तथाहि—'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति'[4]।

तथा; 'एतमेव बह्वृचा महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगा'[5] इति च' सर्वे भाष्यकाराः सर्वसामान्यरूपेण एतन्मन्यन्ते यत् अस्य पादस्य अयमेव विषयः। वल्लभाचार्यः विशेषेण इमं विषयं भगवतः विभिन्नावतारैः सम्बध्य मत्स्यवामनादितत्तदवतार गुणान् भक्तस्य श्रद्धानुकूलं स्वाराध्यावतारविशेषे उपसंहर्तुं निर्दिशति।

---

१. छा० उ० ३।१४।१–४ २. तत्रैव ५।१२।२
३. श० ब्रा० १०।६।१–११ ४. क० उ० २।१५
५. ऐ० आ० ३।२।३।१२

मध्वाचार्यः अपि, सर्वेषु वेदेषु भगवतो ये ये गुणाः तैस्तैः सर्वैर्गुणैः स उपासितुं न शक्यते अतः सर्ववेदोक्तान् गुणान् उपसंहृत्यैव परमात्मा उपास्यः, इत्थं परमात्मनो विभिन्नगुणानाम् एकत्र उपसंहारमुक्त्वा एकस्यैव परमात्मनः उपास्यत्वं निर्धारयति।

उपास्य एकः परतः परो यो, वेदैश्च सर्वैः सह चेतिहासैः।
सपंचरात्रैः सपुराणैश्च देवः, सर्वैर्गुणैस्तत्र तत्र प्रतीतैः॥'[1]

विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि।
यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः[2]॥

किन्तु उपनिषदामिव संहितानामपि प्रामाण्यस्य महनीयत्वात् प्रथमसूत्रस्थवेदान्तशब्दस्य स वेदविनिर्णयम् इत्यर्थं करोति; तृतीयचतुर्थसूत्रमध्ये 'सलिलवच्च तन्नियमः' एतदेकमतिरिक्तं सूत्रं च पठति।

किन्तु शंकरसिद्धान्तमाश्रित्य नैतदवबोधपथमवतरति यत्कथमस्य प्रश्नस्य अवतारः अपि संगत इति। शंकरानुसारेण हि ब्रह्म सर्वथा भेदरहितम्, एकम्, सैन्धवघन इव अन्तर्बहिरेकानन्दस्वरूपं चेति तत्र लेशतः अपि बहुत्वच्छाया सम्भावनाया अभावात् तदुपासनभेदाभेदचिन्तावतार एव नावसरति क्व पुनस्तत्र तदीयभिन्नगुणोपसंहाराणां प्रसंगः?

शंकरः अप्येतत्सर्वमवगच्छतीति पादारम्भ एव सः,—'तत् कथमिमां भेदाभेदचिन्तामारभते इति चेदुच्यते। सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्तेत्यदोषः। अत्र हि कर्मवदुपासनानां भेदाभेदौ सम्भवतः कर्मवदेव च उपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते क्रममुक्तिफलानि च कानिचित् सम्यग्ज्ञानोत्पत्तिद्वारेण। तेष्वेषा चिन्ता सम्भवति–'किं प्रतिवेदान्तं विज्ञानभेद आहोस्वित् नेति'[3]।

नैतत्किमपि, किन्तु, किंचिदप्यसामंजस्यम् अन्यभाष्यकाराणाम्, यतो हि रामानुजनिम्बार्कानुसारेण परमेश्वरः अनन्तकल्याणगुणाकरः। वल्लभानुसारेण च परमात्मा सर्वालौकिकशक्तिसम्पन्न इति परस्परविरुद्धानपि रूपगुणान् धारयितुं क्षमः। इदानीं च सूत्रकारस्य उद्देश्यमभिलक्ष्य एतत् स्पष्टतया वक्तुं न शक्यते यत् सगुणब्रह्मसम्बद्धमेतन्न महत्तमम् एतज्जानानस्य अपि कथं तस्य एतद्व्याख्यानं पादावसानम्।

---

१. म० भा० १२६ पृष्ठे भाल्लवेयश्रुतिवचनम्

२. तत्रैव आग्नेयपुराणवचनम्

३. शां० भा० पृ० १८४८–५१ (अ० प्र० भा० सी०)

ब्रह्मोपासनव्याख्यानम् एतदवसानम् । तथापीशानीम् अन्यान्यपि यज्ञसम्बन्धीनि उपासनानि अवशिंषन्ति । उदाहरणार्थम्, उद्गीथ-विद्या—'स एष रसानां रसतमः परमः परार्ध्यः अष्टमः'[1] यदुद्गीथः तथा बृहदारण्यके, ते ह देवा ऊचुः हन्तासुरान्यज्ञ उद्गीथेनात्ययाम'[2] अत्र अयं संदेहः किमत्र विद्याभेदः स्याद् आहोस्वित् विद्यैकत्वम्? षष्ठ-सप्तमाष्टमसूत्राणां तृतीयेन अधिकरणेन इत्थं निर्दिष्टं यत् एतद् अवत-रणद्वयम् यद्यपि मुख्यप्राणान् प्रशंसति तथापि इह परस्परविषयभेदान् न विद्यैकत्वम् यतो हि छान्दोग्यविद्यायाः सम्पूर्णोद्गीथो न विषयः। तथाहि—'ओं इत्येतदक्षरमुद्गीथमुपासीत'[3] इत्यादिना प्रस्तुतस्य उद्गी-थावयवस्यौंकारस्य उपास्यत्वम् । बृहदारण्यके च, 'त्वं न उद्गाय'[4] इत्यत्र च सकलभक्तिविषय एव उद्गीथशब्दः[5] इति भेदः।

एतदग्रे कतिपयाधिकरणानामस्मत्प्रतिपाद्यविषयस्यानुपयोगित्वात् तान्यपहाय उपयोगीन्येव आदीयन्ते ।

सप्तविंशसूत्रतः एकत्रिंशत्तमसूत्रं यावत्सर्वाणि सूत्राणि अत्यन्तमहत्व-पूर्णानि । शंकरानुसारेण चात्राद्यसूत्रचतुष्टये अधिकरणद्वयी वर्तते । तत्र सप्तविंशाष्टाविंशसूत्रयोः प्रथमाधिकरणमेतन्निर्दिशति यत् कौषीतक्युप-निषदनुसारम् स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृत-दुष्कृते विधूनुते[6]। पुण्यपापयोर्विधूननं ब्रह्मलोकमार्गे न जायते अपि तु जीवात्मनः शरीरत्यागानन्तरं तत्क्षणमेवेति विरजानदीतरणानन्तरं तद्विधूननस्य कौषीतकीनिर्देशो न अक्षरशः प्रमाणम् ।

एकोनत्रिंशत्तमत्रिंशत्तमसूत्रयोश्च द्वितीयाधिकरणमेतत्सम्बद्धमेव इमं प्रश्नं विचार्य यत् पुण्यपापविमुक्तो जीवः किं निर्विशेषं देवयानेन गच्छति न वा अग्रे निर्णयति यत् सगुणज्ञानविशिष्ट एव जीवः देवयानेन गच्छति निर्गुणज्ञानविशिष्टश्च जीवो ब्रह्मणः साम्यमुपैति, 'पुण्यपापे विधूय निरंजनः साम्यमुपैति'[7] इति सः न केनापि मार्गेण क्वचिदपि गच्छतीति । आत्मैकत्वदर्शिनो हि समवाप्तकामस्य इहैव दग्धाशेष-

---

१. छा० उ० १।२।२ २. बृ० उ० १।३।१

३. छा० उ० १।१।१ ४. बृ० उ० १।३।२

५. उद्गीथस्य विशेषविवेचनं छांदोग्योपनिषदः प्रथमप्रपाठकषष्ठनवमखण्ड-योर्वर्तते । घटकुम्भशब्दयोरिव ओंकारोद्गीथशब्दयोर्न पर्यायत्वम् इति एतत्सूत्र-शांकरभाष्ये स्पष्टम् ।

६. कौ० १.४ ७. मुं० ३।१।३

क्लेशबीजस्य न हि किंचिदपेक्षितव्यमस्ति 'अतस्तद्गतिरनर्थिकेति तात्पर्यम्" इत्थं च गुणविद्यायां देवयानमार्गो निर्गुणविद्यायां च नेति निष्कर्षः ।

एकत्रिंशत्तमसूत्रस्य पृथगधिकरणमेतत्प्रतिपादयति यत् न केवलं तेषामेव देवयानगतिः ये विशेषेण तद्गतिगमनप्रतिपादकविद्याः समुपासते अपि तु सर्वे ब्रह्मविदः अब्रह्मविदश्च तन्मार्गमनुसरन्ति ।

सर्वसामान्यतात्पर्यसम्बन्धं यावत् रामानुजनिम्बार्कौ शंकरेण सह-मन्येते किन्तु अष्टाविंशसूत्रे 'उभयाविरोधात्' इत्येष शब्दः प्रत्येकेन स्वतन्त्ररीत्या व्याख्यातः । तत्र रामानुजानुसारमेवं सूत्रार्थः—उभया-विरोधात् श्रुतेः अर्थस्वभावस्य चाविरोधेन छन्दतः यथेष्टं ( पदाना-मन्वयो वर्णनीयः )

निम्बार्कश्च, विदुषः पुण्यं पापं क्रमात् सुहृद् दुर्हृद च छन्दतः प्राप्नो-त्येवमुभयाविरोधो भवति' एवमर्थं करोति । तस्यायमभिप्रायः यत् यः कश्चित् ब्रह्मोपासकसम्बन्धे शुभं संकल्पयति स तस्य पुण्यमवाप्नोति यश्चाशुभं स तस्य पापं प्राप्नोति—'यदा हि यः कश्चित् सुकृतिविदुषः शुभं संकल्पयति स हि तेनैव निमित्तेन विदुषः पुण्यमादत्ते । यस्तु कश्चित् दुष्कृतिः विदुषः अहितं संकल्पयति स हि तेनैव निमित्तेन विदुषः पापमादत्ते । तस्य प्रियाः ज्ञातयः सुकृतिमुपयन्त्यप्रियाः दुष्कृतिम्'.[1] एवमादिभिः श्रुतिवाक्यैः निश्चीयते यत् स्वकीयशुभाशुभ-संकल्पानुसारं सुहृद्दुर्हृदः तस्य पुण्यपापभागिनो भवन्ति इत्येतत्सम्बन्धे न कश्चिद् विरोधः ।

एकोनत्रिंशत्तमसूत्रार्थे विशेषेण मतभेदः । तस्यायमक्षरार्थः—देवयानगतिः उभयप्रकारेण सार्थिका अन्यथा विरोधो भवेत् तत्र अयं शंकराभिप्रायः यत् देवयानमार्गस्य अर्थवत्त्वम् उभयथा ( विभागेन ) भवितुमर्हति कुत्रचिद्गतिः अर्थवती क्वचित्र न । सगुणविद्यायां देवया-नमार्गो वर्तते निर्गुणविद्यायां च क्वचिन्नास्ति इत्यविशेषेण न सर्वत्रैव गतिः । तथात्वे हि 'पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति 'इत्यस्यां श्रुतौ देशान्तरप्रापणीगतिर्विरुध्येत गन्तव्यस्य च परमसाम्यस्य यो ह्यत्र निरंजनो निर्लिप्तः सः अगन्ता यच्च गन्तव्यम्, परमं साम्यम्, तच्च न देशान्तरप्राप्त्यायत्तम्, इत्थं च विभागेनैव गतेः सार्थक्यम् 'लोके चापि विभागेन गतिर्दृश्यते तद्यथा—कस्यचिद् ग्रामस्य प्राप्त्यर्थं

१. कौ० ११४

देशान्तरप्रापणः पन्था अपेक्ष्यते, नैरुज्यस्य प्राप्त्यर्थं च न एवमिहा-प्यवगन्तव्यम्'[1]।

किन्तु, रामानुजानुसारेण सप्तविंशसूत्रे प्रतिपादितविषयस्य प्रातिकूल्येन विरोधार्थम्अस्य सूत्रस्य अयमर्थः—सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः, शेषस्य च पश्चात् इत्युभयथा कर्मक्षये सत्येव देवयान-श्रुतिगतेरर्थवत्त्वम्। अन्यथा मुण्डकानुसारेण देहवियोगकाले एव सर्वकर्म-क्षये सूक्ष्मशरीरस्यापि विनाशः स्यात्' तथा च सति सूक्ष्मशरीरस्यापि विनाशे केवलस्य आत्मनः गमनं नोपपद्येत इत्युत्क्रान्तिसमये विदुषो निःशेषकर्मक्षयः नोपपन्नः। इत्थं च सप्तविंशसूत्रे स्वीकृता देहकाले एव कर्महानिः असंगता। त्रिंशत्तमसूत्रे अस्य उत्तरम् इत्थं वर्तते—'उपपन्न एव उत्क्रान्तिकाले सर्वकर्मक्षयः; 'परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते', 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः',' स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति इत्यादिषु देहसम्ब-न्धाख्यः अर्थः ह्युपलभ्यते। अतः क्षीणकर्मणः अपि……सूक्ष्मशरीरं स्थापयति[2]।

निम्बार्के इत्थं तत् ऊनत्रिंशत्तमं सूत्रं व्याचष्टे, 'सुकृतदुष्कृतयोर-विशेषतया निवृत्या गतेरर्थवत्त्वम्। पापस्यैव क्षयः पुण्यं च तमनुवर्तते इति स्वीकृते तु तत्फलभोगानन्तरवृत्तिः स्यादिति अनावृत्ति[3]श्रुति-विरोधो भवेत्',

इत्थमस्य मते ब्रह्मोपासकविषये यः देवयानगतेः उल्लेखः तस्य सार्थक्यं सुकृतदुष्कृतयोरुभयोः (उभयथा) अविशेषेण निवृत्तावेव अस्ति इति तत्तात्पर्यम्।

त्रिंशत्तमसूत्रमप्येतत्प्रतिपादयति–'ब्रह्मोपासकस्य शरीरवियोगकाले सर्वकर्मक्षये अपि पंथा (देवयानमार्गः) उपपन्नः' 'ब्रह्मभावापन्नो-भवतीति भावः'[4]।

इत्थं वयमवलोकयामो यत् 'उभयथा' इत्येतच्छब्दः ऊनत्रिंशत्तमसूत्रे केन केन प्रकारेण व्याख्यातो वर्तते—

(१) शंकरमते उभयथा, विभागेन अर्थात् सगुणोपासकानां गतिर्निर्गु-णोपासकानां च नेति विभागेन।

---

१. शा० ८।१२ २. रा० भा० पृ० ३३१

३. नि० भा० पृ० ४६० ४. तत्रैव पृ० ४६१

( २ ) रामानुजमते, सुकृतदुष्कृतयोरेकदेशस्य मृत्युकाले, शेषस्य च पश्चात् एवमुभयथा—
( ३ ) निम्बार्कमते च सुकृतदुष्कृतयोः उभयथा अविशेषेण निवृत्तौ।

इत्थं यद्यप्यर्थत्रयमपि समानतया स्वाभाविकं सूत्राक्षरसंगतञ्चास्ते तथापि न कश्चिदपि विपश्चिद् एनां धारणां संवरीतुं शक्नोति यत् शंकरस्य अर्थप्रतिपादनप्रकारः अविचारसहः—कथमेतत् सम्भवति यत् 'उभयथा' इत्येष शब्दः एकत्र देवयानगतेः सार्थकताम् अन्यत्र च निरर्थकतां प्रतिपादयति। नापि च सूत्रे कश्चिदपि शब्दः सगुणनिर्गुणब्रह्मभेदप्रतिपादकः। किन्तु एष विषयः चतुर्थोऽध्याये पुनरपि सविस्तरमालोचितो भविष्यतीति शंकरेण त्रिंशत्तमसूत्रीयभाष्यान्ते स्वत एव उक्तम् 'भूयश्चैवं विभागं चतुर्थोऽध्याये निपुणतरमुपपादयिष्यामः इति।

एकत्रिंशत्तमसूत्रे अपि एवमेव मतभेदः। शंकरमते अस्य अयमर्थः यत् 'सर्वासामेवाभ्युदय ( ब्रह्मलोक ) प्राप्तिफलानां सगुणानां विद्यानाम् अविशेषेण एषा देवयानाख्या गतिर्भवितुमर्हति'।

रामानुजमते एतद् द्वात्रिंशत्तमं सूत्रम् सर्वासामित्यस्य स्थाने सर्वेषामिति पाठश्चेति। सर्वेषां ब्रह्मविदाम् अनेनैव मार्गेण गमनमित्याह। एवं जातीयकाः श्रुतिस्मृतयोऽनेकाः[1] सन्ति, एवं सर्वविद्यासाधारणी इयं गतिः प्राग्नैव उपकोशलविद्यादौ अनूद्यते'।[2] इत्थं स न स्वल्पमपि सगुणनिर्गुणभेदं निर्दिशति।

निम्बार्कस्य चापि शंकरस्येव सूत्रक्रमः किन्तु 'सर्वासाम्' इत्यस्य स्थाने 'सर्वेषाम्' तदर्थश्चापि रामानुजस्येव वर्तते।

अस्मिन्नपि सूत्रे पूर्वोक्तवदेव वक्तव्यमस्ति यदिह सगुणनिर्गुणयोरन्यतरनिर्देशस्याधाराभावात् शंकरस्य तथा प्रदर्शनमकिंचित्करम्।

वल्लभः सप्तविंशतः एकत्रिंशत्तमसूत्रेषु भक्तज्ञानिनः निर्दिशन् ज्ञानिनः अपेक्षया भक्तस्य च वैशिष्ट्यं संस्थापयितुम् ऊनत्रिंशत्तमसूत्रस्य इत्थमर्थं करोति—'सत्यं ज्ञानमनन्तं ब्रह्म',[3] यो वेद निहितं गुहायाम् परमे व्योमन्[4] 'इत्यादिश्रुतिभिः उक्तरूपब्रह्मज्ञाने सत्येव मोक्षः इत्युच्यते। 'यमेवैष वृणुते तेन लभ्यः' इति श्रुत्या आत्मीयत्वेनांगीकारात्मकवरणस्य भक्तिमार्गीयत्वात् तस्मिन् सति भक्तिमार्गे प्रवेशात् भक्त्यैव मोक्ष इत्युच्यते। किं च, भक्त्या मामभिजानाति' इत्युक्त्वा 'ततो मां तत्वतो

१–२. रा० भा० पृ० ३३२
३–४. तै० उ० २।१

ज्ञात्वा विशते तदनन्तरम्' इति भगवतोक्तमिति भक्तिमार्गे अपि पुरुषोत्तमज्ञानेनैव मोक्ष उच्यते—

> तस्यान्यद् भक्तियुक्तस्य योगिनो वै मदात्मनः ।
> न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥'[1]

इति वचनेन भक्तिमार्गीयस्य ज्ञाननैरपेक्ष्यमप्युच्यते । तथा चैवं क्वचिद् ज्ञानं मुक्तिसाधनत्वेन उच्यते, क्वचिद्भक्तिः—क्वचिन्नोभयमपीत्येकतरसाधनानिश्चयान्मुक्तिसाधने मुमुक्षोः प्रवृत्त्यसंभव इति पूर्वपक्षे एतत्सूत्रमुत्तरम्—तत्र च गतेः ज्ञानस्य अर्थवत्त्वम् फलजनकत्वमुभयथा मर्यादापुष्टिभेदेनेत्यर्थः अस्य अयमाशयः—'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यः 'उन्निनीषति'इत्यादि श्रुतिभ्यो भगवान् सृष्टिपूर्वकाल एव एतस्मै जीवाय एतत्कर्म कारयित्वा एतत्फलं दास्ये इति विचारितवान् इति तथैव भवति तथोक्तरीत्या मुक्तिसाधनानुगमे हेतुरवश्यं वाच्यः । एवं सति कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते । ताभ्यां विहिताभ्यां मुक्ति मर्यादा । तद्रहितानामपि स्वरूपबलेन स्वप्रापणं पुष्टिरुच्यते, तथा च यं जीवं यस्मिन् मार्गे अंगीकृतवान् तं जीवं तत्र प्रवर्त्य तत्फलं ददातीति सर्वं समीचीनम् । अत एव पुष्टिमार्गे अंगीकृतस्य ज्ञानादिनैरपेक्ष्यं, मर्यादायाम् अंगीकृतस्य च युक्तमेवेति'[3] । इत्थं वल्लभः 'उभयथा' इत्यस्य मर्यादापुष्टिभेदेन इत्यर्थं गृह्णानः तदनुकूलं च सूत्रं व्याचक्षाणः सूत्रे कस्यचिदपि तन्निर्देशकशब्दस्याभावात् शंकरवदेवाक्षेपास्पदं भवितुं योग्यः ।

मध्वाचार्यः गतिरित्यस्य मोक्ष इत्यर्थं कृत्वा इत्थं सूत्रं व्याख्यातवान्—गतेः मोक्षस्य लक्ष्यत्वेन आवश्यकत्वम्' अन्यथा मुक्तः स्वेच्छानुसारं कदाचित्कर्म करोति कदाचिन्नैव करोति ।'

'नित्यज्ञानस्वरूपत्वाद् नित्यं ध्यायन्ति केशवम्'[4] इत्थमुभयथा तिष्ठेत् । अन्यसूत्राणि नास्मदालोच्यविषयोपयोगीनीति त्यज्यन्ते ।

अतः परमग्रे एकोनचत्वारिंशत्तमसूत्रभाष्ये पुनरपि शंकरेण 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः,

---

१. ब्र० सू० ३।३।२९ अ० भाष्यम् पृ० २७९ ( कलकत्ता सं० )

२. कौ० उ० ३।८

३. अ० भा० पृ० ११६६–६७ ( चौ० )

४. म० भा० १३२ पृ० ब्रह्माण्डपुराणवचनम्

सत्यकामः, सत्यसंकल्पः,[1] 'योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी', तथा 'स वा एष महानज आत्मा'[2] इत्यादि प्रतिपाद्य किं तत्र विद्यैकत्वं ( उपासनैकत्वम् ) परस्परगुणयोगश्च ( गुणोपसंहारश्च ) वर्तते नवेति संशये विद्यैकत्वमिति प्रतिपादितम्। अत्र च सूत्रं 'कामादीतरत्र तत्र चायतनादिभ्यः' यस्य अयमर्थः—आयतनादिभ्यः उभयत्र अविशिष्टेभ्यो हृदयायतनसेतुव्यपदेशादिभ्यः, हेतुभ्यः, कामादिः सत्यकामत्वादिगुणग्रामः इतरत्र बृहदारण्यके उपसंहर्तव्यः। यच्च सर्ववशित्वादिकं तदपि तत्र छान्दोग्ये उपसंहर्तव्यम्। शंकराचार्यः पूर्वं सूत्रमेवं व्याख्याय अन्ते प्रतिपादयति यत् सत्स्वपि एतेषु साधारणधर्मेषु द्वयोः अत्र अयं विशेषः,—सगुणा हि ब्रह्मविद्या छान्दोग्ये उपदिश्यते—'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्',[3] इत्यात्मवत् कामानामपि वेद्यत्वश्रवणात्। वाजसनेयके तु निर्गुणमेव परं ब्रह्म उपदिश्यमानं दृश्यते, 'अत ऊर्ध्वं विमोक्षाय[4] ब्रूहि', 'असंगो [5]ह्ययं पुरुषः'; इत्यादिप्रश्नप्रतिवचनसमन्वयात्। वशित्वादि तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते, तथा चोपरिष्टात् 'स एष नेति [6]नेत्यात्मा' इत्यादिना निर्गुणमेव ब्रह्म उपसंहरति। गुणवतस्तु ब्रह्मण एकत्वात् विभूतिप्रदर्शनाय अयं गुणोपसंहारः सूत्रितो नोपासनाय इति द्रष्टव्यम्', अत्रापि सूत्रे न कश्चिदेवंभूतो निर्देशो वर्तते येन एवंभूतः अर्थः गृह्येत।

रामानुजनिम्बार्कौ च यथासूत्राक्षरमेव अर्थं वर्णयतः।

पादस्य अन्तिमं सूत्रनवकम् ( ५८–६६ ) उपासनैक्यविषये कतिचित् सिद्धान्तान् निर्धारयतीति तदिह संक्षिप्त्या विविच्यते—अष्टपंचाशत्तमं सूत्रम् एतत्प्रतिपादयति यदुपास्यस्य ब्रह्मणः एकत्वे अपि वेद उपासीत, स क्रतुं कुर्वीत, इत्येवं शब्दभेदात्, शब्दभेदस्य च कर्मभेदहेतुत्वात् अधिकारिभेदेन दहरविद्याशांडिल्यविद्याद्युपासनानां भिन्नत्वम्।

एकोनषष्टितमसूत्रस्य अयमर्थः यत् वेद्यवस्तुनो ब्रह्मणः साक्षात्काररूपाभिन्नफलकत्वात् उपासनानां विकल्प एव युक्तो न समुच्चयः। एकया एवोपासनया उपास्यस्य ईश्वरस्य साक्षात्कारे अन्योपासनानां निरर्थकत्वात्। ब्रह्मसाक्षात्काराय स्वाधिकारानुरूपं काचिदप्येकैव विद्या

---

१. छा० उ० ८।१।५ २. बृ० उ० ४।४।२२
३. छा० ८।१।६ ४. बृ० उ० ४।३।१४
५. तत्रैव ४।३।१५ ६. तत्रैव ३।९।२६

( उपासना ) आश्रयणीया। समुच्चयेन भिन्नभिन्नानामाश्रयणे तु निश्चित-रूपेण कस्यांचिदेकस्यां विशेषोपासनायां सम्यग्निष्ठाभावात् चित्त-विक्षेपो भवेत् इत्येकस्या एव उपयोगित्वम्।

षष्टितमसूत्रमेतन्निर्दिशति यत् 'स य एतमेव वायुं दिशां वत्सं वेद 'न पुत्ररोदं रोदिति'[1]; स यो नाम ब्रह्म इत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो 'भवति'[2], इत्येवमादिषु क्रियावदहष्टेन आत्मना आत्मीयं तत्तत्फलं साधयन्तीषु काम्यविद्यासु साक्षात्करणापेक्षा नास्तीति तत्र 'अविशिष्टफलत्वात्' इत्यस्य विकल्पहेतोरभावात् ताः समुच्चीयेरन् न वा समुच्चीयेरन् इत्यत्र याथाकाम्यम् ब्रह्मप्राप्तिमतिरिच्य अन्यफलका-मनापूर्त्यर्थं क्रियमाणासु उपासनासु यथेच्छपार्थक्येनापि उपासनाः कर्तुं शक्यन्ते समस्तोपासनाश्चापि। यतो हि सकामोपासनानां हि फलं कर्मानुसारं भिद्यते एकफलार्थी एकामेवोपासनां कर्तुं सम्भवति। अनेक-फलार्थी चानेकाः किन्तु ये ब्रह्म ( मोक्ष ) प्राप्तिनिमित्तं ब्रह्मविद्या अवलम्बन्ते तैः स्वाधिकारानुरूपमेकस्या एव विशेषविद्यायाः अवलम्बनं श्रेयस्करम्।

एकषष्टितमसूत्रतः षट्षष्टितमसूत्रं यावत् अस्य पादस्य अन्तिम-मधिकरणम्। तत्र कर्माङ्गेषु उद्गीथादिषु आश्रितानां वेदविहितो-पासनानां यथावाक्यानुष्ठानप्रदर्शनेन पादसमाप्तिः।

इत्थं च उपनिषदुक्तसर्वब्रह्मोपासनाप्रणालीभिरेकमात्रं ब्रह्मैव प्राप्तव्यम् इति सर्वासां मोक्षफलप्रदायकत्वेन कांचिदेकामुपासनाप्रणालीमवलम्ब्य तस्याः निष्ठापूर्वकसाधनेनैव जीवस्य कृतार्थतेति निष्कर्षः।

---

## तृतीयाध्यायस्य चतुर्थः पादः

पादपरिचयः—तृतीयपादे परमात्मप्राप्त्युपायभूतभिन्नभिन्नोपासन-विषयं विचार्य सिद्धान्तो निरूपितः। इदानीं परमात्मप्राप्तिरूपपुरुषार्थ-सिद्धिः किं केवलेन ज्ञानेन कर्मादिसमुच्चयेन वा इति विवेचनपूर्वकं ब्रह्म-विद्याया एव स्वातंत्र्येण मोक्षलाभैकमात्रहेतुत्वम्, कर्म तु केवलं चित्त-मालिन्यमपाकृत्य तद्विद्यासहकारि इति न यागादि कर्मणां साक्षान्मोक्ष-प्रापकत्वम् एतत् सिद्धान्तयितुं चतुर्थपादारम्भः।

---

१. छा० उ० ३।१५।२ २. तत्रैव ७।१।५

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

(१) शंकरमते निर्गुणज्ञानस्य बहिरंगसाधनभूतानाम् आश्रमयज्ञादीनामन्तरंगसाधनभूतानां च शमदमश्रवणमननादीनां निरूपणद्वारा साधनत्वनिरूपणम्।

(२) रामानुजमते च साधनांगनिरूपणम्।

(३) निम्बार्कमते च विद्यातः तदङ्गात्कर्मणो वा पुरुषार्थविचारः।

(४) मध्वमते च ज्ञानसामर्थ्यनिरूपणम्।

(५) उपासनायाः बहिरंगाणामाश्रमयज्ञादीनां भगवद्दर्शनरूपफलत्वात् उत्तरकाण्डोक्तब्रह्मफलकसर्वात्मभावे अपि पूर्वकाण्डोक्तकर्मणामुपसंहारः।

## सविश्लेषणप्रत्यधिकरणभाष्यपञ्चकसमीक्षणम्—

अस्मिन् पादे अन्येषु सूत्रेषु अस्मदालोच्यविषयसामग्री नोपलभ्यते इति पूर्ववत् प्रत्यधिकरणं भाष्यपंचकसमीक्षणं न सम्भवति, अन्तिमसूत्रद्वये हि शंकरेण सुदूरवर्ती सगुणनिर्गुणोभयविद्याभेदः पुनरपि निर्दिष्ट इति तदेवात्र सूत्रद्वयं विवेचनविषयीक्रियते। अत्र वल्लभमतिरिच्य एकविंशत्रयोविंशसूत्रमध्ये सर्वैरन्यैराचार्यः 'भावशब्दाच्च' इत्येतदपि सूत्रं स्वीकृतम्। एवमेव चतुश्चत्वारिंशत् षट्चत्वारिंशत्तमसूत्रमध्ये 'श्रुतेश्च' इत्येतत् सूत्रं रामानुजनिम्बार्कावतिरिच्य अन्यैस्त्रिभिराचार्यैः स्वीकृतम्। शंकरमध्वाचार्याभ्यां तु उभाभ्याम् उभयं स्वीकृतमिति सूत्रसंख्याभेदः। तच्चालोच्यविषयं सूत्रद्वयमेतत्—

'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्' (३।४।५१)

'एवं मुक्तिफलानियमस्तदवस्थावधृतेः (३।४।५२)

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (३।४।२६) इति सूत्रमारभ्य पूर्वोक्तसूत्रद्वयं यावत् विद्यायाः (ज्ञानस्य) बहुविधसाधनानि निर्धारितानि। तत्फलस्वरूपा सिध्यन्ती विद्या किमिहैव जन्मनि सिध्यति अथवा परस्मिन् इत्येतस्मिन् प्रश्ने एकपञ्चाशत्तमसूत्रमुत्तरम्। प्रक्रान्तस्य विद्यासाधनस्य यदि उपस्थितविपाकेन अन्येन कर्मणा प्रतिबन्धो न क्रियते तदा इहैव विद्या सिध्यति। कृते तु प्रतिबन्धे परस्मिन् जन्मनीति तदर्थः।

अतः परवर्ति द्विपञ्चाशत्तमं सूत्रमेतत्प्रतिपादयति यद् ब्रह्मसाक्षात्कारवत् विद्याफलस्य (मुक्तेः) अपि नियमो न वर्तते—'ब्रह्मविद् ब्रह्मैव

भवति' इत्यादिश्रुतिषु ब्रह्मसाक्षात्कारोत्तरं हि मोक्षावस्थाया अवधारणम्। अतः अस्मिन्नेव जन्मनि मोक्षो भवेदिति नियमो नास्ति। शंकरस्य एतत्तात्पर्यम् यत् प्रारब्धकर्मप्रतिबन्धाभावे यज्ञादिभिः संचितपापप्रतिबन्धस्य निरस्तत्वात् श्रवणादिना इहैव विद्योदयः। सति तु प्रतिबन्धे, भोगेन तन्निरासात् अमुत्र। इत्थं विद्यायाः ऐहिकामुष्मिकत्वविशेषनियमे सत्यपि ब्रह्मविद् ब्रह्मैव भवति इत्यादिश्रुतिषु मोक्षोदयस्य ब्रह्मसाक्षात्कारोत्तरकालमेव जायमानत्वनिश्चयात् तथा—नियमाभावः।

अयमत्राशयः—ज्ञानसामग्र्यां सत्यामपि तत्प्रतिबन्धे सति ज्ञानोदये विलम्बः सम्भवति किन्तु ज्ञाने सति मुक्तौ विलम्बो न। वाय्वादिप्रतिबन्धे सति दीपप्रज्वलने विलम्बो भवतु नाम किन्तु दीपे प्रज्वलिते सति तमोनिवृत्तिस्तत्क्षणमेव जायते। इत्थं ज्ञानोदये अज्ञाननिवृत्तौ न कश्चिद् विलम्बः।

शंकरः अग्रे प्रतिपादयति—'सगुणासु तु विद्यासु मनोमयः 'प्राणशरीरः', इत्याद्यासु गुणावापोद्वापदर्शनात् भेदोपपत्तौ सत्याम् कर्मफलवत् यथास्वं फलभेद-नियमः उपपद्यते। तथा च लिंगदर्शनम्—'तं यथा यथोपासते तदेव भवति' इति। नैवं निर्गुणायां विद्यायाम्, गुणाभावात्। तथा च स्मृतिः।

'नहि गतिरधिकास्ति कस्यचित् सति हि गुणे प्रवदन्त्य'तुल्यताम्' अस्य भाष्यस्य इदमेव तात्पर्यं यत् कर्मणामुपासनानां च गुणभेदेन तारतम्यात् फलतारतम्ये युक्तेऽपि निर्गुणविद्यायास्त्वेकरूपत्वात् तत्फलैकरूप्यम्।

अस्मिन्नर्थे द्वे आपत्ती सम्भवतः—एका इयं यत् नियमाभावार्थकः अनियमशब्दः ज्ञानोत्पत्तौ मुक्तिफले चोभयत्र समानतया योजनार्हः अपि एकत्रैव मुक्तिफले योजितः। विद्योदयः क्वचिदिह भवति क्वचिन्न नेति नियमः किन्तु मुक्तिविषये अयम् नियमः न सम्भवति इति तत्र अयम् अनियमः।

द्वितीया चैषा यत् 'एवं'शब्दो द्वयोरपि (ज्ञानोत्पत्तिमुक्तिफलयोः) विषये तुल्यार्थद्योतकः। विरोधार्थद्योतकत्वे हि अयम् अभिप्रायः 'तु-शब्देन अभिव्यज्येत किन्तु सूत्रे तदभावे अपि शंकरेण तदर्थः सन्निवेशितः। ततः परं सूत्रे यद्यपि सगुणविद्यानिर्देशकः कश्चित् शब्दो नास्ति तथापि तत्प्रसंगो दृश्यते।

---

१. छा० उ० ३।१४।२

२. शां० भा० पृ० २२९९ (ब्र० प्र० भा० सं०)

रामानुजश्च 'ऐहिकम्' अभ्युदयफलम् उपासनम्, अप्रस्तुतप्रतिबन्धे अप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे असति अनन्तरम् ( शीघ्रमेव जायते ) प्रतिबन्धे सति तदुत्तरकालमित्यनियमः इति एकपञ्चाशत्तमसूत्रस्य तथा तेनैव प्रकारेण मुक्तिफलानाम् विद्यानामपि अनियमः अर्थात् ता अपि सद्यः कालान्तरेण वोत्पद्यन्ते—'मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तावेवमेव कालानियमः' इत्यर्थं स्वीकरोति। किन्तु रामानुजस्वीकृतः 'ऐहिकम्' इत्यस्य अर्थः न सन्तोषावहः। तथाभिप्राये च सूत्रकारेण मुक्तिफलवत् ऐहिकफलमित्येतदुच्येत।

निम्बार्कः एकपञ्चाशत्तमसूत्रं शंकरवद् व्याचक्षाणः द्विपञ्चाशत्तमसूत्रमेवं व्याचष्टे यत् तथैव एतद्देहपातानन्तरं मुक्तिरूपफलस्य प्राप्तिः स्यादेवेति नियमो न वर्तते। तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ[2] 'सम्पत्स्ये' इति छान्दोग्यश्रुतौ अशेषकर्मबन्धनानन्तरमेव ब्रह्मरूपतावाप्तिप्रतिपादनात्। इत्थं च यथा प्रतिबन्धाभावे अस्मिन् जन्मन्येव ज्ञानोदयः सति तु प्रतिबन्धे नेति ज्ञानोदयः अस्मिन्नेव जन्मनि भविष्यतीत्यत्र निश्चितनियमो न वर्तते तथैव अवाप्तविद्यस्य मुक्तिरूपा विद्याफलप्राप्तिः सद्यो देहपातानन्तरमेव भविष्यतीति निश्चितनियमो न वर्तते।

निम्बार्कस्य अयमर्थः पूर्वोक्तदोषैः सर्वथा निर्मुक्तः। स्वाभाविकं च एतत् यत् विद्यास्वरूपतदङ्गविवेचनानन्तरं सूत्रकारः पादं सामान्यतया ज्ञानोदयसंक्षिप्तप्रसंगेन तत्फलेन ( मुक्त्या ) च सम्बध्नीयात्। यद्वा अस्तु, शंकरस्य सगुणनिर्गुणविद्यानिर्देशस्तु सर्वथैव निराधारः। एतच्चैतेन अपरथापि प्रमाणीक्रियते यन्मध्वाचार्येणापि एतत्सूत्रद्वयम् निम्बार्कपद्धत्यैव व्याख्यातम्।

वल्लभस्तु पंचाशत्तमसूत्रम्—प्रस्तुतं प्रभुभजनं, तत्प्रतिबन्धासम्भव एवैहिकं कर्म कार्यम् इत्थं व्याख्याय मोक्षरूपफलप्राप्तये प्रभुभजनस्यैव हेतुत्वं प्रतिपादयन् यदि प्रभुभजने कश्चिद् विघ्नो न भवेत् तदा ऐहिकं कर्म कर्तव्यमित्युक्तवान्। अस्य मतेन मुक्तिरेव जीवस्यान्तिमं लक्ष्यमपि तु ब्रह्मसम्पत्तिः। सा च पुरुषोत्तमसंगे लीलारसानुभवरूपा या च मुक्तेः फलमिति तदनन्तरं जायते। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति छान्दोग्यश्रुतिः मुक्तेः फलं भक्तिरसानुभवमेव प्रतिपादयति। तच्च फलमितः पूर्वमुक्तस्य मुक्तस्य गृहिणो भवति न वेति संशये एकपंचाशत्तमसूत्रे मुक्तिफलानियम इति प्रतिपादनम्। ब्रह्मसम्पत्तिरूप

---

१. रा० भा० पृ० ३३६ २. छा० उ० ६।१४

मुक्तिफलं हि भगवदिच्छाधीनं न तत् साधनप्राप्यम् । अत एव श्रीमद्भागवते 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्' इत्युक्तम् । एवं सति मुक्तिपर्यन्तमेव कर्मादिसाधनमिति वल्लभनिर्णयस्तत्पूर्वाचार्येभ्यः सर्वथा भिन्नः ।

## उपसंहारः

इत्थमस्मिन्नध्याये सर्वाचार्याणां मते सामान्यतया, प्रथमपादे जीवानां संसारगतिवर्णनपूर्वकं श्रुतिस्मृतिप्रभृतिशास्त्रप्रमाणैः सयुक्तिकतर्कैश्च जीवेषु विषयवैराग्योत्पादनप्रयत्नः । द्वितीये च जीवानां स्वप्नाद्यवस्थाः विचार्य प्रासंगिकरूपेण ब्रह्मणो द्वैरूप्यं वैशद्येन प्रतिपाद्य मुक्तिनिमित्तं सर्वनियन्तुर्ब्रह्मणः उपासनायाः एव प्रयोजनीयत्वमिति प्रदर्शितम् । तृतीयपादे उपनिषदुक्तनानाविधब्रह्मोपासनाः विचार्य विभिन्नरूपेण ब्रह्मचिन्तनस्यैव तदुपासनासारत्वनिर्देशनपुरस्सरं साधकस्य स्वाधिकारानुरूपं अन्यतमोपासनोपादानेनैव कृतकृत्यतेति कथनम् । चतुर्थे च यागादिकर्मापेक्षया विद्यायाः ( ज्ञानस्य ) स्वातन्त्र्यं तन्मोक्षफलदानक्षमत्वं च प्रतिपाद्य गार्हस्थ्यसंन्यासाद्याश्रमभेदेन यज्ञादिकर्माचरणसम्बद्धपार्थक्यविवेचनपूर्वकं ज्ञानिनः ( विद्यावतः ) संन्यासिनो गृहिणश्च उभयोर्मोक्षाधिकारो व्यवस्थापितः । इत्थं मोक्षसाधनरूपेण अयं तृतीयाध्यायः विशेषेणादरणीयः ।

---

## चतुर्थाध्यायस्य प्रथमः पादः

पादपरिचयः—एतावत्पर्यन्तं ब्रह्मजीवजगत्स्वरूपं ब्रह्मणा सह जीवजगतोः सम्बन्धः, जीवस्य परमपुरुषार्थ ( मोक्ष ) प्राप्तिसाधनभूतोपासनादिना चैतत्समस्तं निरूपितम् । चतुर्थाध्याये चेह मोक्षविचारं विशेषेण प्रारिप्सुः सूत्रकारः प्रथमे पादे अविश्रान्तसाधनावलम्बनस्यात्यन्तावश्यकत्वम् उपासनाकाले च साधकस्य स्वाचिन्तनप्रकारम्' पूर्वाध्यायोक्तप्रतीकाद्युपासनाप्रकारं च उपासनासिद्धौ च जीवितपुरुषस्यावस्थाप्राप्तिजिज्ञासां चैतत्सर्वं मीमांसिष्यते ।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

( १ ) शंकरमते श्रवणाद्यावृत्त्या निर्गुणम् उपासनया सगुणं वा ब्रह्म साक्षात्कृतवतः जीवतः पुण्यपापलेशविनाशलक्षणायाः मुक्तेः अभिधानम् ।

( २ ) रामानुजमते च उत्तरपूर्वाघाश्लेषविनाशरूपोपासनारोहमाहात्म्य-निर्देशः।

( ३ ) निम्बार्कमते च प्रयाणपर्यन्तं साधनावृत्तिः कर्तव्येति निरूपणम्।

( ४ ) मध्वमते च कर्मनाशाख्यफलनिर्देशः।

( ५ ) वल्लभमते च सूक्ष्मलिंगलौकिकशरीरक्षपणानन्तरं जीवः अलौकिकं तत्प्राप्य फलेन सम्पद्यते इति निरूपणम्।

## सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

(४।१।१-२) प्रथमद्वितीयसूत्रयोः प्रथममधिकरणं सर्वं भाष्यानुसारम् एतत्प्रदर्शयति यत् आत्मसाक्षात्काररूपफलावाप्तिपर्य्यन्तं श्रवणादीनामावृत्तिः करणीया तृतीयसूत्रस्य द्वितीयमधिकरणम् तस्य एतत्तात्पर्यं यत् 'एष त आत्मा सर्वान्तरः',[1] "एष त आत्मा अन्तर्याम्य[2]मृतः, 'तत्त्वमसि'[3] इत्यादि-वेदान्तवाक्यानि ईश्वरमात्मरूपेणैव ग्राहयन्तीति तत्त्वविद् 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्यादिमहावाक्यैः आत्मरूपेण ब्रह्म गृह्णाति, तत्त्वमसीत्यादि महावाक्यैश्च स्वशिष्यान् ब्रह्म अवबोधयन्ति च इत्येतेनेत्थमायातं यदात्मरूपेणैव ( उभयोरभेदबुद्ध्यैव ) ब्रह्म ग्राह्यम्। तथा च शांकरभाष्ये 'आत्मा इत्येव ईश्वरे मनो[4] दधीत'।

रामानुजस्य तु अत्र अयमाशयः यत् स्वशरीरस्य स्वयं यथा आत्मा तथा स्वात्मनः अपि परं ब्रह्म आत्मा इत्येवोपासीत; 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि',[5] य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम् य आत्मानमन्तरो यमयति[6] इत्यादि श्रुतिभिर्हि तथैव प्रतिपादितम्।

इत्थं च 'सर्वं खल्विदं[7] ब्रह्म' तज्जलानिति श्रुत्वा चिदचिद्वस्तुनः तज्जत्वात्, तल्लत्वात्, तन्नियाम्यत्वात् तच्छरीरत्वाच्च सर्वस्यायमात्मेति यथा—प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वात् देवः अहम्, मनुष्यः अहम् इत्यनुसन्धानम् तथा प्रत्यगात्मनः अपि आत्मत्वात् परमात्मनः

---

१. बृ० उ० ३।४।१ २. तत्रैव ३।७।३

३. छा० उ० ६।८।७

४. शां० भा० पृ० २३३६ ( अ० प्र० मा० सं० )

५. रा० भा० पृ० २६७

६. बृ० उ० ३।७।३० ( श० ब्रा० १४।३।५।३० )

७. छा० उ० ३।१४।१

तस्यापि अहमित्येवानुसंधानं युक्तम्। अस्मिन्नेवार्थे ( मनुष्योऽहमितिवत् ब्रह्माहमित्यर्थे ) ब्रह्मणो जीवत्वम्।

निम्बार्कः इदं सूत्रमित्थं व्याचष्टे यत् मुमुक्षुणा परमपुरुषः स्वात्मत्वेन ध्येयः। यतो हि परमात्मा जीवात्मनः तथैवात्मा यथा च सूर्यः स्वकीयकिरणस्येति स तदंशः अपि प्रातिस्विकरूपेण भिन्नः।

मध्वाचार्यः अत्र विष्णूपासनं स्वीकरोति। तन्मते स एव सर्वात्मा सर्वेश्वरश्च तथाहि—

> आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः।
> नानाक्लेशसमायुक्तः अप्येतावन्न विस्मरेत्॥[1]
> आत्मा विष्णुरिति ध्यानं कर्तव्यं च विशेषतः।
> सर्वेषां च मुमुक्षूणामुपदेशश्च तादृशः॥[2]

वल्लभानुसारेण एतत्सूत्रं ज्ञानमार्गफलमुपदिशति। तस्य अयमभिप्रायः यत् ज्ञानिनः भगवन्तमात्मत्वेनैव उपासते। तस्य आनैरन्तर्ये अनेकजन्मभिः तथैव तेषां हृदि भगवान् स्फुरति। तदा स्वानंदांशस्यापि आविर्भावात् ब्रह्मभूतः सन् आत्मत्वेनैव ब्रह्म स्फुरितम् इति तदानन्दात्मकः सन् तमनुभवति एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति। अस्य मते उपपूर्वक गम् धातोरिह उप समीपे गमनं प्रवेशः ऐकात्म्यम् इत्यर्थः। साधारणतया उपपूर्वक गम् धातोस्तु सेवनम्, पूजनम्, ध्यानमित्येव अर्थः।

चतुर्थं सूत्रं तृतीयाधिकरणम् शंकररामानुजानुसारमेतत्प्रतिपादयति यत् प्रतीकोपासनायां प्रतीके अहंग्रहो न विधेयः तत्रात्मतत्त्वानुभवबलश्रुतिप्रामाण्यजीवाभिन्नब्रह्माभिन्नत्वान्यतमकारणाभावात् तथाहि—तत्रात्मतत्त्वानुभवबलेनोपासकः आत्मरूपेण प्रतीकमनुभवति, नापि च श्रुतिप्रामाण्येन, तस्य सर्वथा अभावात्। नापि च जीवाभिन्नब्रह्माभिन्नत्वेन, प्रतीकस्य स्वरूपतः ब्रह्माभिन्नत्वाभावात्। इत्थं च प्रतीके अहंग्रहनिषेधः सिद्धः। तथा च शांकरभाष्ये, 'न प्रतीकेष्वात्मबुद्धिं बध्नीयात्। न हि स उपासकः व्यस्तानि आत्मत्वेनाकलयेत्।[3]

एवं च श्रीभाष्ये, 'प्रतीके नात्मानुसंधानं कार्यम्। नह्युपासितुरात्मा प्रतीकः। प्रतीकोपासनेषु प्रतीक एवोपास्यः न ब्रह्म, ब्रह्म तु तत्र दृष्टिवि-

---

१–२. म० भा० १५९ पृष्ठे ब्रह्मपुराणवचनम्

३. शां० भा० २३२९ ( अ० प्र० मा० सं० )

शेषणमात्रम्। प्रतीकोपासनं हि नाम अब्रह्मणि ब्रह्मदृष्ट्या अनुसन्धानम्। तत्र उपास्यस्य प्रतीकस्य उपासितुः आत्मत्वाभावात् न तथा अनुसन्धेयम्"[1]

मध्वाचार्यश्च एतद्विभिन्नतया इत्थं तद् व्याचष्टे, 'प्रतीकोपासनायां प्रतीके ब्रह्मदृष्टिर्न कार्या (प्रतीकमेव ब्रह्म न मन्वीत) किन्तु तत्स्थानेनैव (तत् प्रतीकं ब्रह्मस्थानमिति मत्वा) उपासनं कर्तव्यम्'। वल्लभाचार्यो हि प्रतीकेन इत्येतत् एकपदं तृतीयान्तं स्वीकरोति इति अतद्रूपे तत्त्वेन उपासनं हि प्रतीकमुच्यते, न च तादृशेन तेन स मोक्षो न भवतीति सूत्रस्यार्थं प्रतिपादयति।

चतुर्थमधिकरणं पंचमसूत्रमेतत्प्रतिपादयति यत् एवंभूतप्रतीकोपासनासु प्रतीके एव ब्रह्मदृष्टिः कर्तव्या न तु वैपरीत्येन। अयं भावः—'उत्कृष्टदृष्टिर्हि निकृष्टे अध्यसितव्या तदेव श्रेयसे। यथा हि लोके सूते राजदृष्टिः श्रेयसे राज्ञि च सूतदृष्टौ अपकर्षं नीयमानो राजा न श्रेयसे स्यादेवं निकृष्टेषु आदित्यादिषु प्रतीकेषु एव उत्कृष्टदृष्टिः (ब्रह्मदृष्टिः) कल्याणाय भवेत्।

रामानुज-निम्बार्कौ च शंकरानुसारमेव सूत्रं व्याचक्षाणौ अपि इदं सूत्रं तदव्यवहितपूर्वसूत्रप्रतिपादितविषयमेव प्रमाणयितुं युक्त्यन्तररूपेण उपस्थापयन्तौ चतुर्थपञ्चमयोरेकाधिकरणमभ्युपगतवन्तौ। मध्वाचार्यश्च इदं सूत्रं स्वतन्त्राधिकरणम् अभ्युपगत्य इत्थमर्थापयति यत् ब्रह्म शब्दस्य महत्त्ववाचकत्वात् विष्णौ एव ब्रह्मत्वबुद्धिर्युक्तेति विष्णुरेव केवलो ब्रह्मरूपेणोपासनीयः। तथा हि—

'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम्।
महत्त्ववाची शब्दोऽयं महत्त्व ज्ञानमेव[2] हि'॥

वल्लभानुसारेण सूत्रमेतत् पूर्वाधिकरणस्यैवांशभूतं सत् एतद्व्यनक्ति यत् सर्वत्र ब्रह्म दृष्टिर्न प्रतीकात्मिका। सर्वस्य वस्तुतः ब्रह्मात्मकत्वात्। सा च (ब्रह्मदृष्टिः) नोपदेशसाध्या अतो नोपदिश्यते किन्तु अनूद्यते। सा तु अधिकारोत्कर्षात् स्वतः एव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वम्।[3]

---

१. रा० भा० पृ० ३६८

२. म० भा० १६० पृष्ठे वद्धृतम् ब्रह्मतर्कवचनम्।

३. अणुभाष्यम् पृ० १२७४ (चौ० सं०)

शंकररामानुजनिम्बार्कानुसारं पञ्चमधिकरणं षष्ठं सूत्रमेतत्प्रतिपादयति यत् 'य एवासौ तपति तमुद्गीथमुपासीत';[1] इत्यादिषु अंगावबद्धेषु उपासनेषु किमादित्यादिषु किमुद्गीथादिमतिः करणीया आहोस्वित् उद्गीथादिषु आदित्यादिमतिरिति विनिगमनाविरहे उद्गीथादिषु आदित्यादिमतिः कर्तव्या न तु आदित्यादिषु प्रणवादिमतिरिति सिद्धान्तः। आदित्यादयो हि कर्माङ्गेभ्यः उद्गीथादिभ्यः श्रेष्ठा इति 'मनो ब्रह्मेत्युपासीत आदित्यो ब्रह्मेत्युपासीत इत्यादौ निकृष्टेषु मनःप्रभृतिषु उत्कृष्टस्य ब्रह्मणो मतिरिव ( मनःप्रभृतीनां ब्रह्मस्वरूपध्यानमिव ) आदित्यादीनामुद्गीथाद्यपेक्षया श्रेष्ठत्वात् उद्गीथादिषु एव आदित्यादिमतिर्युक्ता न त्वादित्यादिषु उद्गीथादिभावना, इत्थं च साधको ब्रह्मरूपेण आत्मानं चिन्तयेत् न तु जीवरूपेण ब्रह्मेति तात्पर्यम्।

वल्लभाचार्यः एवं सूत्रं व्याचष्टे यत् 'य एतमेवं विद्वान् आदित्यं ब्रह्मेत्युपास्ते प्रभृतिषु आदित्यादौ या ब्रह्मत्वमतयः उच्यन्ते तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमपि अंगम् उपासितं फलदम् इत्येकांगविषयिण्यः ताः विधीयन्ते। 'अंगं प्रतीकोऽवयवः' इति कोशात् अङ्गमेव प्रतीकम्। साकारव्यापकब्रह्मणोऽङ्गमपि ब्रह्म तदुपासनं च अंगोपासनमेवेति तदपि भगवदुपासनमिव फलाय'।

ततः अग्रे स निर्दिशति यत् 'अंगानां भगवत्स्वरूपात्मकत्वेन ऐक्यम् इति ज्ञापनाय अङ्गे इत्येकवचनम्'[2] सर्वमेतद् दृश्यादृश्यादि तस्यैव साकारस्य भगवत्स्वरूपस्य अंगरूपेणैकत्वसम्पादकमिति तद्धियैव सर्वमुपास्यमिति तत्तात्पर्यम्।

मध्वाचार्यो वदति यत् 'चक्षोः सूर्योऽजायते',[3] इत्यादिवाक्येषु सूर्यादिदेवोपासनं स्वोत्पत्तिस्थानत्वात् स्वाश्रयत्वात् 'मनश्चन्द्रे निलीयते' एवं रीत्या मुक्तौ तत्र लयस्य अपेक्षितत्वाच्च विष्णोश्चक्षुषि करणीयम्। तथाहि—

'स्वोत्पत्त्यंगं च देवानां विष्णोश्चिन्त्यं सदैव तु।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते[4] बुधैः॥'

अत्र सर्वत्र अंगोपासननिर्देशो यद्यपि समानतया कृतो वर्तते तथाप्यन्तिमव्याख्यानद्वये न स्वाभाविकमिति स्पष्टम्।

---

१. छा० उ० १।३।१

२. अणुभाष्यम्, पृ० १२७९ (चौ० सं०)  ३. ऋ० १०।९०।१३

४. मध्वभाष्ये १६० पृष्ठे उद्धृतं नारायणतंत्रवचनम्

( ४।१।७–१० ) एतत् षष्ठमधिकरणं शंकरानुसारमेतत्प्रतिपादयति यत् गमनादीनां चित्तविक्षेपकरतया आसीन एव उपासनानि कुर्वीत ।

( ४।१।११ ) सप्तममधिकरणमेकादशसूत्रमेतन्निर्दिशति यत् श्रुतिषु उपासनायाः कुत्रापि देशकालविशेषादिनिर्देशाभावात् यत्रैव दिशि, देशे, काले वा मनसः सौकर्येण एकाग्रता स्यात् तत्रैव उपासीत । तथाहि—

तमेव देशं सेवेत तं कालं तमवस्थितम् ।
तानेव भागान् सेवेत मनो यत्र प्रसीदति[1] ॥

( ४।१।१२ ) अष्टममधिकरणं द्वादशसूत्रमेतत्सूचयति यत् मरणपर्यन्तमुपासनं कर्तव्यम् । अयं भावः—'आवृत्तिरसकृदुपदेशात्'[2] इति सूत्रे सामान्येन सर्वोपासनानामावृत्तिरुक्ता । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च' इत्येवं जातीयकस्य ह्यसकृदुपदेशस्य अनुष्ठानावृत्तिसूचनात् । तत्र अवघातादीनां तण्डुलादिनिष्पत्तिपर्यवसानवत् सम्यग्दर्शनोपासनानां श्रवणादीनामावृत्तिः दर्शनपर्य्यवसायिनीति तत्र तद्दृष्टार्थता, यज्ञाङ्गत्वेन विहितानि कर्माङ्गोपासनानि हि कर्मस्वरूपानुरूपं विहितानीति यद्विष्यनुष्ठानार्थं यदुपासनं विहितं तदनुष्ठानावसायिनी तदावृत्तिः । अभ्युदयफलार्थोपासनेषु ( अहंग्रहोपासनेषु ) चायं सन्देहो यत् कियन्तं चित्कालमेव प्रत्ययमावर्त्य उपरमेत् आहोस्वित् यावज्जीवमावर्तयेत् इति तत्र मरणपर्यन्तं तदनुष्ठाननिर्देशार्थं सूत्रमिति ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेषामामरणमावृत्तिः । तथा च–'यावत्क्रतुरस्माल्लोकात्प्रैति'[3] इति श्रुतिः, एवम्—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः[4] ॥

इतिस्मृतिरपि तदेव प्रतिपादयति ।

रामानुजनिम्बार्कमध्वैरपि चैतानि सूत्राणि एवमेव समानरूपेण व्याख्यातानि किन्तु एतेषां मते सर्वाण्येतान्युपासनानि आत्मसाक्षात्कारसाधनानि एतावानेव विशेषः ।

१. तत्रैव १६१ पृष्ठे वाराहपुराणवचनम्
२. ब्र० सू० ४।१।१ ३. गीता ८।६
४. मध्वभाष्ये १६२ पृष्ठे उद्धृता सौपर्णश्रुतिः ।

शंकरवल्लभमध्वानुसारम् ‘अप्रायणात्’ इति सूत्रपाठः। रामानुज-निम्बार्कौ चैतत् ‘आप्रयणात्’ ‘आप्रयाणात्’ इति पठतः। मध्वाचार्यश्च आप्रायणात् इत्यस्य यावन्मोक्षस्तावदुपासनादिकं न केवलं मृत्यु-पर्यन्तम् इत्यर्थमाह—

‘सर्वदैनमुपासीत यावद्विमुक्तिः। मुक्ता अपि ह्येनमुपासते”

किन्तु प्रायणशब्दस्य अयमर्थो न सर्वसम्मतः इति निर्विवादम्। वल्लभाचार्यस्तु ‘अत्र अन्तरनुभूतभगवत्स्वरूपं भगवत्प्राकट्यम्’ बहिर-नुभूतभगवत्स्वरूपमेवं भक्तद्वयं निर्दिश्य प्रायणमित्यस्य ‘परमं पार-लौकिकं फलम्’ इत्यर्थमाह[1]। तत्र प्रकृष्टमयनं प्रायणम् इतियोगात् तादृशं फलमुच्यते। किन्त्वयं तस्यार्थः साम्प्रदायिकतानुबन्ध इति न विचारसहः।

एतदवधि पूर्वाध्यायपरिशिष्टभूतानि मोक्षसाधनोपासनविषयाणि सूत्राणि व्याख्यातानि। अतः परं मुख्यफलविषयकः ( मोक्षविषयकः ) विचारः।

त्रयोदशसूत्रं नवममधिकरणमेतत्प्रतिपादयति यत् एतैरुपासनै-र्ब्रह्माधिगमे सत्युत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः॥ उत्तरस्य अश्लेषः पूर्वस्य च विनाशः एवं हि श्रुतिः। तत्रोत्तरस्य अघस्य अश्लेषविषये-‘यथापुष्करपलाश आपो न श्लिष्यन्ते एवमेवं विदि पापकर्म न [2]श्लिष्यते’ इयं श्रुतिः। विनाशविषये च—‘तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः [3]प्रदूयन्ते’। अयं चापरः कर्मक्षयव्यपदेशः—

> भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
> क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे [4]परावरे॥

दशममधिकरणं चतुर्दशं सूत्रमेतत्प्रतिपादयति यत् पुण्यस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसंगात् ज्ञानवतः तत्कर्मणः अप्येव-मेव ( पापवदेव ) असंश्लेषो विनाशश्च जायते। तथाहि श्रुतिः—‘उभे

---

१. श्रीमद्भागवते एकादशस्कन्धे एकादशाध्यायोपान्ते ज्ञानमार्गाद्भक्ति-मार्गोत्कर्षं वदता भगवतोक्तम्—‘प्रायेण भक्तियोगेन, सत्संगेन विनोद्धव। नोपायो विद्यते सम्यक् प्रायणं हि सतामहम्। ’श्रीमद्भागवतम् ११।११।४८

२. छा० ४।१४।३ ३. तत्रैव ५।२४।३।

४. मुं० उ० २।२ ८ ५. बृ० उ० ४।४।२२

द्वेवेष एते 'तरति', इत्यादौ दुष्कृतस्येव सुकृतस्यापि प्रणाशव्यपदेशात्। एवं धर्माधर्मयोर्बन्धहेत्वोः विद्यासामर्थ्यादश्लेषविनाशसिद्धेर्विदुषः शरीरपाते मुक्तिरवश्यंभाविनी । 'पाते तु' इत्यस्य शंकरनिम्बार्काभिमतः 'शरीरविनाशे' अयमेवार्थः । रामानुजस्त्वेतदवशिष्टसूत्राव्यवहितशब्दैरेव सम्बध्य शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्ति इत्यर्थं कृतवान् । इत्थं च विद्याप्राप्तौ उत्तरपूर्वाघयोस्तत्क्षणमेव अश्लेषविनाशौ । पुण्यस्य तु ( पुण्यकर्मणां तु ) शरीरपाते एव तथात्वम् इतीयान् भेदः इति रामानुजमते पूर्वस्मिन् सूत्रे 'तदधिगमे' अस्मिंश्च 'पाते' इत्यनयोः परस्परं विरुद्धार्थकत्वेन सुकृतदुष्कृतयोरपि तदनुकूलमेव अश्लेषविनाशस्वीकारे आधिक्येन स्वाभाविकत्वम् ।

मध्वाचार्यस्त्वत्र 'यथा विष्णुभक्तस्य दुष्कृतानामश्लेषविनाशौ भवतस्तथैव अन्धतमसपतनोन्मुखस्य विष्णुविद्वेषिणः सुकृतानामप्यश्लेषविनाशौ जायेते इत्यभिप्रायकः। इत्थमस्य मते 'इतरस्य' अयं शब्दः परस्परविरुद्धब्रह्मभक्ततद्द्वेषिणोः तथाभूत ( परस्परविरुद्ध ) सुकृतदुष्कृतयोश्चोभयोर्निर्देशकः । किन्त्वयमर्थो न विद्वज्जनाभिमतः इत्यविचारसहः ।

वल्लभाचार्यः इत्थमत्र 'पाते तु' इत्यस्यार्थं करोति यत् भक्तिमार्गे भगवद्भावात् च्युतिः पातः इत्युच्यते । इत्थं च 'पाते' अर्थात् सांसारिकसंगजदोषात् भरतादिवत् भगवद्भावात् च्युतौ ( भोगेन ) दुष्कृतानामश्लेषविनाशौ । सुकृतानां तु न तथा—

> न कर्हिचिन्मत्पराः शान्तरूपे,
> नङ्क्ष्यन्ति नो मेऽनिमिषो लेढिहेतिः ।
> येषामहं प्रिय आत्मा सुतश्च,
> सखा गुरुः सुहृदो दैवमिष्टम्[१] ॥

इति श्रीमद्भागवते भगवता विष्णुना तथैव प्रतिपादनात् । इत्थं च वल्लभमतेन पातशब्दस्य देहपातम्, तु शब्दस्य अवधारणार्थमुक्त्वा देहपाते मुक्तेरावश्यकत्वावधारणं वाक्यार्थः इति शंकरस्योक्तिः मुक्तिवाचकपदाभावात् भोगेन त्वितरे इत्यग्रे एकोनविंशतितमसूत्रे वक्ष्यमाणत्वाच्च न साधीयसी ।

( ४।१।१५ ) एकादशमधिकरणं पंचदशं सूत्रमेतत्प्रतिपादयति यत्

---

१. श्रीमद्भागवते ३।२५।३८ २. छा० उ० ६।१४।२

पूर्वयोरधिकरणयोः ज्ञाननिमित्तसुकृतदुष्कृतयोर्यः विनाशः अवधारितः सः, अप्रवृत्तफलविषयक एव न तु प्रवृत्तफलविषयकः इति जन्मान्तर-संचिते, अस्मिन्नपि जन्मनि ज्ञानोत्पत्तेः प्राक्संचिते सुकृतदुष्कृते, ज्ञानाधिगमात् क्षीयेते। आरब्धकार्ये अथ च सामिभुक्तफले तु न। यतो हि तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये,[1] इति श्रुत्या क्षेमप्राप्तेः शरीरपातः अवधिः निर्दिष्टः किंच, यथा व्यवहारे तूणीरस्थित-बाणस्य आदानप्रक्षेपणयोः स्वतंत्रः अपि धनुर्धरः प्रक्षिप्तबाणे किंचिदपि कर्त्तु न शक्तः, क्षीणे एव तद्वेगे हि तत्पातावलोकनम् तथैवारब्धफले पुण्यपापकर्मणि यदनुरूपमिदं ब्रह्मज्ञानसाधनं शरीरं प्राप्तं तत्र न विद्यायाः सामर्थ्यम् अपि तु शरीरपाते स्वतस्तस्य नाशः।

(४।१।१६–१७) द्वादशमधिकरणं षोडशसप्तदशसूत्रयोः एतत्प्रति-पादयति यत् ब्रह्मज्ञानोदये अग्निहोत्रदानतपः प्रभृतीनामाश्रमविहित-कर्मणां निवृत्तिर्न जायते (न तानि परित्याज्यानि अपि त्वनुष्ठेयान्ये-वेति भावः) यतो हि न तानि विद्याविरोधीनि अपितु 'तमेतं वेदानु-वचनेन ब्राह्मणा विविदिषन्ति यज्ञेन[2] दानेन' इत्यादिश्रुतौ नित्यकर्मणां वैदिकाग्निहोत्रादीनां विद्योत्पादकत्वमुपलभ्यते।

(४।१।१८) अष्टादशसूत्रं त्रयोदशमधिकरणमेतन्निर्दिशति यत् 'तमेतमात्मानं[3] यज्ञेन विविदिषन्ति' इत्यत्र अग्निहोत्रादेः आत्मज्ञाना-ङ्गत्वं प्रतिपाद्यते किन्तु यत् यज्ञादि एवं जानानेन पुरुषेण क्रियते तदे-वात्मज्ञानसाधकम् अन्यत्तु न इत्यनियमः तथा चोक्तम्-'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च[4] न वेद'; इत्थं चैवमजानेनापि पुरुषेण कृतमग्नि-होत्रादि कर्म आत्मज्ञानसाधनं भवति। आम, विद्याविहीनात्, ब्राह्मणात् विदुषो ब्राह्मणस्य स्वतो विशिष्टत्वमिव विद्यासंयुक्तमग्निहोत्रादिकम् कर्म विद्याविहीनादग्निहोत्रादिकर्मणः विशिष्टम्। तथा च श्रुतिः—

'यदेव विद्यया करोति श्रद्धया उपनिषदा तदेव वीर्यवत्तरं भवति' इति।

(४।१।१९) चतुर्दशमधिकरणमूनविंशतितमं सूत्रमेतत्प्रतिपाद्-यदुपसंहरति यत् अनारब्धफलयोः पुण्यपापयोः विद्यासामर्थ्यात् क्षयः। इतरे तु अर्थात् आरब्धफले पुण्यपापे (ब्रह्मवित्) उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते। तथा च श्रुतिः—

---

१–२. बृ० उ० ४।४।२२ ३. छा० १।१।१०
४. छा० उ० १।१।१० ५. तत्रैव ६।१४।२

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ 'सम्पत्स्ये; तथा, ब्रह्मैव सन् 'ब्रह्माप्येति'। अयं चारब्धफलभोगः शंकरानुसारम् इहैव जन्मनि परिसमाप्नोति इति विद्यया सर्वाज्ञानविनाशतया जन्मान्तरजननमरण-हेतुत्वाभावात् ब्रह्मविद् मुक्तः संजायते।

रामानुजमते तु आरब्धफलयोः कर्मणोः भोगेनैव क्षपयितव्यत्वात् तयोः पुण्यपापयोरेकशरीरोपभोग्यफलत्वे तच्छरीरावसाने, अनेकशरीर-भोग्यफलत्वे च तदनेकशरीरावसाने ब्रह्मविद् ब्रह्म सम्पद्यते।

निम्बार्कस्तु पारिजातसौरभे 'विद्वान् आरब्धकार्ये तु सुकृतदुष्कृते भोगेन क्षपयित्वा ब्रह्म सम्पद्यते, एवं भोगस्य एकजन्म-जन्मान्तरान्य तरानिर्देशपूर्वकं सामान्येनैव ब्रह्मैकत्वं प्रतिपादयति।

---

## चतुर्थाध्यायस्य द्वितीयः पादः

पादपरिचयः—गतप्रथमपादे उपासनाविषयं निर्णीय येषां जीव-न्मुक्तमहापुरुषाणां ब्रह्मलोकगमनं न सम्भवति तेषां कथं परमात्मप्राप्ति-रिति विचारितम्। अस्मिंश्च द्वितीयपादे ब्रह्मविद्योपासका ब्रह्मलोकं (कार्यब्रह्मलोकम्) गच्छन्ति इति तेषां गमनप्रकारः वर्ण्यते।

एतत्पादविषये शंकरस्यायमभिप्रायो यत् इह केवलसगुणोपासकानां गतिरवधारिता किन्तु महर्षिणा बादरायणेन सगुणनिर्गुणान्यतरोपास-कयोर्नामग्राहं न कश्चिद् भेदः प्रदर्शितः, अन्येन न केनापि च भाष्य-कारेण स समर्थितः, सूत्रसमूहक्रमः अपि न शंकरसिद्धान्तमनुमापय-तीति न कस्यापि श्रेणीविशेषोपासकविषयस्य वर्णनमिह वक्तुं शक्यते। इत्थं च सर्वप्रकारोपासकानां मृत्युकालीनावस्थाया एव वर्णनमस्य विषयः। परापरब्रह्मविषये परापरविद्याविषये चापि शंकरस्यात्रेदं तात्पर्यं यदिह सर्वत्र विदुषः (परब्रह्मणः, परस्या विद्याया उपासकस्य) तथा अविदुषः (अपरब्रह्मणः अपरस्याः विद्यायाः उपासकस्य) च मध्ये भेदःप्रदर्शितो वर्तते। यथा च सप्तदशसूत्रे वक्ष्यते—'समाप्ता प्रासंगिकी परविद्यागता चिन्ता, सम्प्रति त्वपरविद्याविषयामेव चिन्तामनुवर्तयति'[3] विद्वान् ब्रह्मणा एकी-भवति। अविदुषश्च नोपास्योपासकभेदः शान्तिमुपगच्छति। किन्तु अन्ये भाष्यकाराः एवंभूतं न कमपि भेदमुपवर्णयन्ति इत्यवशिष्टपादत्र-

---

१. तत्रैव ६।१४।२ २. बृ० उ० ४।४।७

३. शां० भा० पृ० ९४३५

ये तेषां मते एकप्रकार एव विद्वान्। सूत्रालोचनसमये यथास्थलमेतत् प्रदर्शयिष्यते यत् तत्र एवंभूतो भेदो न्यायसंगतो न वा।

प्रतिपाद्यसंकेतः—अस्मिन् पादे—

( १ ) शंकरमते म्रियमाणस्य उत्क्रान्तिप्रकारवर्णनम्।

( २ ) रामानुजमते चापि म्रियमाणस्य उत्क्रान्तिप्रकारनिरूपणम्।

( ३ ) निम्बार्कमते च विद्वदविद्वत्साधारणोत्क्रान्तिनिरूपणम्।

( ४ ) मध्वमते च देवानां मोक्षः तथा उत्क्रान्तिनिरूपणम्।

( ५ ) वल्लभमते च पुष्टिमार्गीयस्य मर्यादामार्गीयस्य च सद्योमुक्तिक्रममुक्तिप्रकारकथनम्।

## सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

आद्यं सूत्रषट्कं शंकरमते अविदुषः उत्क्रान्तिम् अधिकरणत्रयेण इत्थं वर्णयति यत् उपशान्तदेहौष्ण्यस्य ( मृतस्य ) सर्वेन्द्रियाणां मनसि सम्पत्तिः, मनसः 'प्राणे स प्राणः जीवे तथा च स प्राणसम्पृक्तोऽध्यक्षः तेजः सहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेषु अवतिष्ठते। एष एकस्य अन्यस्मिन् लयो न स्वरूपेण अपि तु वृत्त्या जायते। यतो हि मनसो वागिन्द्रियस्य अप्रकृतित्वात् उपादानकारणाभावात् न वागिन्द्रियं तत्र स्वरूपेण प्रतिपत्तुं शक्नोति। यस्य हि यतः उत्पत्तिः तस्य तत्रैव प्रलयस्य न्याय्यत्वात्, यथा मृदि शरावस्य। इत्थं च मनोवृत्तौ वर्तमानायाः वाग्वृत्तेः पूर्वोपसंहारो न च वृत्तिमत्या वाच एव मनस्युपसंहारः इति। एवंचाग्रे 'अविभागो[2] वचनात्' इतिसूत्रस्य जागरूकत्वेन वागिन्द्रिये उपरते अपि मनः प्रवृत्तौ दृश्यमानायाम् च, 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्,'[3] इत्यत्र वृत्त्युपसंहारविवक्षायां वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्तावुपस्थितायामित्येवार्थः। एवं चक्षुरादिवृत्तीनामपि सवृत्तिके मनसि लयो बोद्धव्यः।

रामानुजनिम्बार्कौ इह अधिकरणत्रयेण विदुष एव साधारण्येन उत्क्रान्तिं निर्दिशन्तौ लयस्य नापि स्वरूपेण नापि च वृत्त्या अन्यस्य अन्यस्मिन् सम्पत्तिः ( लयः ) अपि तु संयोग इत्यर्थं कुरुतः—'वाचो मनसा संयोगमात्रं सम्पत्तिः न तु लयः'[4] इत्यादि।

'तच्च प्राणेन[5] संयुज्यते'।

---

१. छा० उ० ६।८।६ २. ब्र० सू० ४।२।१६

३. छा० ६।८.६ ४. रा० भा० पृ० ३७४

५. नि० भा० पृ० ५३७

मध्वाचार्यः अत्र सूत्रेषु वाङ्मनःप्राणप्रभृतिशब्दान् तत्तदधिष्ठित-देवतार्थकान् अभ्युपगत्य इह रुद्राग्निप्रभृतिविभिन्नदेवानां मोक्षोत्क्रान्ति प्रतिपादयति । तथाहि—'देवानां मोक्ष उत्क्रान्तिश्चास्मिन् उच्यते । तथा च वागभिमानिनी उमा मनसः अभिमानिनि रुद्रे विलीयते—

उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः ।
तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्धि हीयते ॥'[1]

एवमग्रे अपि तत्तत्सूत्रेषु तत्तदभिमानिदेवानामर्थस्तत एव अवगन्तव्यः । वल्लभाचार्यश्च चतुर्थसूत्रे उपगमशब्दस्य पुष्टिमार्गे अभ्युपगमः, स्वीकार इत्यर्थं कृत्वा आद्यसूत्रचतुष्टये पुष्टिभक्तं[2] निर्दिशति । यस्य च पुष्टिभक्तस्य हृदये बाह्यरूपेणाविर्भूते आन्तरिकरूपेण वा प्रकटिते भगवति प्रलीयमानेषु सर्वेन्द्रियप्राणादिषु स भक्तः सद्यो भगवत्स्वरूपैकत्वमवाप्नोति ।

पंचमसूत्रं च परतः मर्यादाभक्तं निर्दिशति, स च संयमाद्युपासनया भगवतो भक्तिं कुर्वन् मुक्तिमन्विच्छति । अस्य सर्वेन्द्रियाणि भूतेषु (न साक्षात्परमात्मनि) लीयन्ते । तथा हि—'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति । वातं प्राणाश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरम आकाशात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते' ।[3]

षष्ठं सूत्रमेतत्प्रतिपादयति यत् प्राणस्तेजसि[4] इत्यत्र प्राणस्य तेजस्यवस्थितिरुक्ता, तत्र प्राणसम्पृक्तः अध्यक्षः तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठते इत्यर्थः । प्राणस्य तेजस्येव अवस्थिति प्रतिपादयन्त्या अपि श्रुतेः 'स अध्यक्षे' इत्यध्यक्षस्यापि अन्तराले उपसंख्यातत्वात् (यः स्रुघ्नात् मथुरां गत्वा पाटलिपुत्रं गच्छति सः अपि स्रुघ्नात् पाटलिपुत्रं गच्छतीतिवत् तथा वक्तुं शक्यत्वात्) किन्तु उत्क्रमणकाले एकस्मिन् तेजस्येव न जीवस्य स्थितिः । श्रुतिस्मृत्यनुरोधेन तेजः पदस्य पंचभूतानामुपलक्षकत्वात् देहस्य च पांचभौतिकत्वात् पंचस्वपि भूतेषु तदवस्थितिर्बोद्धव्या ।

---

१ मध्वभाष्ये १६५ पृष्ठे उद्धृतम् स्कन्दपुराणवचनम

२. पुष्टिभक्तो भगवतो विशिष्टकृपया स्वीकृतः मर्यादाभक्तश्चोपासनादिभिर्मुक्ति-मन्विच्छति ।

३. बृ० उ० ३।२।१३ (आर्तभागवचनम्)

४. छा० ६।८।६

एतस्य पादस्य अवशिष्टसूत्रेषु बहूनि सूत्राणि विभिन्नाचार्यैर्विभिन्नतया व्याख्यातानि, शंकरवल्लभौ च तत्र क्रमशः ज्ञानस्य भक्तेश्च वैशिष्ट्यं निर्दिशतः।

सप्तमं सूत्रमेतत्प्रतिपादयति यत् एतावत्पर्यन्तम् उक्ता एषा वाङ्मनसीत्याद्युत्क्रान्तिः अविशेषश्रवणात् आसृत्युपक्रमात्[1] अर्थात् दक्षिणोत्तरमार्गोपक्रमं यावत् (देवयानमार्गोपक्रमं यावत्) विदुषः अविदुषश्च समाना। किन्तु गमनमार्गारम्भे विशेषः संजायते अविद्वान् देहबीजभूतानि भूतसूक्ष्माणि आश्रित्य कर्मप्रेरितः देहग्रहणार्थं संसारमागच्छति। विद्वाँस्तु ज्ञानप्रकाशितं मोक्षनाडी (सुषुम्ना) द्वारम् आश्रयते। 'विद्ययामृतम्' इतिश्रुत्या विदुषा अमृतत्वं प्राप्तव्यं तत्तु न देशान्तरायत्तमिति कथं तस्य भूताश्रयत्वं सृत्युपक्रमः (अन्यतरयानोपक्रमः) वा इति संशये तु शंकरमते यदा उपासकः अविद्यादिक्लेशान् (शरीरेन्द्रियादिसम्बन्धान्) निःशेषेण[2] अनुपोष्य अर्थात् अदग्ध्वैव अपरविद्यासामर्थ्येन आपेक्षिकममृतत्वं प्रेप्सते तदा निराश्रयाणां प्राणानां गतेरनुपपन्नतया अयं सृत्युपक्रमः भूताश्रयत्वं च सम्भवति इत्येतदुत्तरम्।

किन्त्वत्र एतद्वक्तव्यं यत् सत्याम् अविद्यायाम् अमृतत्व-(मोक्ष)-लाभस्य न कश्चिदप्यर्थः। श्रुत्यापि कुत्रापि एवंभूतामवस्थामनुलक्ष्य अमृतत्वपदं न व्यवहृतम् 'अनुपोष्य' शब्दस्य च परित्यागम् अकृत्वा इत्यर्थः (इन्द्रियादिसहित एवमुक्तः पुरुषः अपि मोक्षमार्गं गच्छतीति भावः) इत्थं च 'अनुपोष्य[3] चेदम् अदग्ध्वा अत्यन्तमविद्यादीन् क्लेशानपरविद्यासामर्थ्यात् आपेक्षिकममृतत्वं प्रेप्सते, सम्भवति तत्र सृत्युपक्रमो भूताश्रयत्वं च। न हि निराश्रयाणां प्राणानां गतिरुपपद्यते[4] तस्माददोषः' इति शंकरोक्तिः सूत्रवाक्यार्थद्वारा न कथमपि प्रतिपद्यते अतः नितरां काल्पनिकी।

अवशिष्टे समस्ते एतस्मिन् पादे निम्बार्कः रामानुजमन्वसरत् इति तन्मते विद्वदविदुषोः समाना गतिः।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्यः अमृतो भवत्यत्र ब्रह्म समश्नुते[5]॥

---

१. सृतिः मार्गः

२. अनुपोष्य इत्येतत शंकररामानुजमते 'उष-दाहे' इत्यस्य रूपम्। वैदिकमुनिना हरप्रसादेन तु निजब्रह्मसूत्रीयवृत्तेः ८१६ इत्यस्मिन् पृष्ठे निवासकर्मणो वसते रूपं नोषतेर्दाहकर्मणः तेन तस्य शरीरं मुक्त्वा इत्यर्थः प्रतिपादितः।

३–४. शां० भा० २।४।१३ (ब्र० प्र० भा० सं०) ५. बृ० उ० ४।४।७

इत्यत्र गत्यादिमन्तरेणैव श्रूयमाणं विदुषः अमृतत्वं तु शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव यदुत्तरपूर्वार्धयोरश्लेषविनाशरूपं (पूर्वपादोक्तम्) प्राप्यते तद्विषयकम् तथा 'अत्र ब्रह्म समश्नुते' इति यदुक्तं तत्तूपासनवेलायां यो ब्रह्मानुभवस्तद्विषयकम्।

(४।२।८-११) शंकरमते एतदधिकरणमेतत्प्रतिपादयति यत् 'तेजः परस्यां देवतायाम्' इत्यत्र प्रकरणसामर्थ्यात् तस्य प्रयतः पुंसः (प्रायणं कर्तुः पुरुषस्य) साध्यक्षम् सप्राणम्, सकरणग्रामं भूतान्तरसहितं प्रकृतं तेजः परस्यां देवतायाम् परमात्मनि सम्पद्यते (विलयं याति) इति यो विलय उक्तः सः न साकल्येन तत्क्षणमेव जायते अपि तु तत्र तत्तेज आदिभूतसूक्ष्मश्रोत्रादिकरणाश्रयभूतं आ ऽपीतेः (आ अपीतिम् ब्रह्मणि अप्ययं लयं यावत्) सम्यग् ज्ञानेन संसारात् मोक्षं यावदित्यर्थः। पृथक् अवतिष्ठते। अस्यैव च सूक्ष्मस्य शरीरस्य एष ऊष्मा यमेतस्मिन् शरीरे संस्पर्शेनोष्माणं विजानन्ति' तथाहि मृतावस्थायां देहे अवस्थिते अपि विद्यमानेष्वपि च रूपादिषु देहगुणेषु ऊष्मा नोपलभ्यते। जीवदशायां तूपलभ्यते। अत एव एतदुपपन्नं भवति यत् प्रसिद्धशरीरव्यतिरिक्तशरीरमाश्रितः एवैष ऊष्मेति। तथा च श्रुतिः, 'उष्ण एवैष जीविष्यन् शीतो मरिष्यन्।' अत एव च सूक्ष्मशरीरम् स्थूलशरीरविनाशे अपि न विनश्यति।

रामानुजनिम्बार्कानुसारेण इमानि सूत्राणि पूर्वाधिकरणसम्बद्धानि, इत्थं च 'अथ मर्त्यः अमृतो भवति'[१८] इति श्रुतौ उक्तममृतत्वम् जीवात्मनः शरीरस्य च नात्यन्तिकसम्बन्धविच्छेदे न सम्बन्धविनाशेनामृतत्वं सूचयति। तदवस्थाप्राप्ति यावत् देहसम्बन्धलक्षणस्य संसारस्य, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इत्यादावुपलब्धेः। सूक्ष्मशरीरं च जीवमनुगच्छति इत्यस्यापरं प्रमाणम्, किन्त्वेतत्स्वीकारे दशमे सूत्रे सप्तमसूत्रस्यैव पुनरुक्तिप्रसंगेन तद्वैयर्थ्योपपत्तिः। अथ चैतस्यैव सूक्ष्मशरीरस्य क्वचिद्विद्यमानोपपत्तेः प्रक्रान्तमरणस्य जनस्य मरणात्प्राक् कश्चित्कः ऊष्मा स्थूले शरीरे समुपलभ्यते न चैव ऊष्मा स्थूलशरीरस्यैवैतद्वक्तुं शक्यते तथात्वे च सर्वस्मिन् शरीरे तत्समुपलब्धिसम्भवात्। इत्थं चैतत्सूक्ष्मशरीरस्य पृथगवस्थितिरेव पूर्वस्मिन् सप्तमसूत्रोक्तामृतत्वस्य लाक्षणिकत्वप्रदर्शने प्रमाणान्तरम्।

एतस्य पादस्य अवशिष्टानि सूत्राणि विभिन्नतया व्याख्यातानि इत्यस्मत्समालोच्यविषयस्य सर्वथा उपयोगीनि।

(४।२।१२-१४) एतेषां सूत्राणां शंकरमते षष्ठं पृथगधिकरणं परब्रह्मविदः (ज्ञानिनः) गतिमित्थं वर्णयति यत् तस्य स्थूलशरीरात् सूक्ष्मशरीरोत्क्रान्तिः न जायते, तत्र द्वादशसूत्रं पूर्वपक्षमवतारयदित्थमर्थयितुं शक्यते—यदि चेत्थं प्रतिपाद्यते यत् 'न तस्य प्राणाः उत्क्रामन्ति' इति श्रुतौ परब्रह्मविदः शरीरात्प्राणानामुत्क्रान्तिः निषिध्यते, तन्न; शारीरात् आत्मनः एष उत्क्रान्तिप्रतिषेधः शरीरात् प्राणानाम् उत्क्रान्तिप्रतिषेधो न। न तस्मात्प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते' इति शाखान्तरे पंचमीप्रयोगात्। सम्बन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या सम्बन्धविशेषे स्थाप्यते। अतस्तस्मादिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही सम्बध्यते, न देहः न तस्मादुच्चिक्रमिषोर्जीवात् प्राणाः अपक्रामन्ति–सहैव तेन भवन्तीत्यर्थः। इत्थं च पूर्वपक्षिमते परब्रह्मविदः (ज्ञानिनः अपि) शरीरात् सूक्ष्मशरीरात्क्रान्तिर्जायते इति ज्ञानवैयर्थ्यम्।

त्रयोदशं सूत्रमित्थं सिद्धान्तपक्षं सूचयति, 'यत्रायं पुरुषो' म्रियते' इत्यत्रार्तभागप्रश्ने 'अत्रैव समलीयन्ते इत्थं प्राणानां प्रविलयं प्रतिज्ञाय तत्सिद्धये, 'स उच्छ्वयति आध्मायति आध्मातो मृतः शेते' इति 'स' शब्देन परामृष्टस्य प्रकृतस्य उत्क्रान्त्यवधेः[2] पुरुषस्य देहस्य उच्छ्वयनादीनि श्रुतिः प्रतिपादयति, उच्छ्वयनादीनि च देहस्यैव स्युर्न देहिनः तत्सामान्यात् न तस्मात् प्राणाः उत्क्रामन्ति अत्रैव समवलीयन्ते' इत्यत्रापि अभेदोपचारेण देहादेवोत्क्रमणस्य प्रतिषेधः, इत्थं चात्र देहादुत्क्रमणनिषेधोपलब्धौ "परब्रह्मविदः अपि देहादुत्क्रान्तिर्भवति, प्रतिपेधस्य देह्यपादानविषयत्वात्" इति यदुक्तम्। किंच, बृहदारण्यके अपि "चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः तमुत्क्रामन्तं प्रायः अनूत्क्रामति···"[3] इत्येवमविद्वद्विषयेषु सप्रपंचमुत्क्रमणं संसारगमनं च दर्शयित्वा 'इति तु कामयमानः'[4] एवमविद्वत्कथामुपसंहृत्य अथ अकामयमानः'[5] इति विद्वांसं व्यपदिश्य तद्विषये अपि चेदुत्क्रान्तिमेव प्रापयेत् तदा तद्व्यपदेशः असमंजस एव स्यात्। तस्मादवि द्वद्विषये प्राप्तयो-

---

१. बृ० उ० ३।२।११

२. अत्र पुरुषशब्दवाच्यो देह एव इत्ययम् उत्क्रान्त्यवधिरुच्यते। स शब्दपरामृष्टस्य प्रकृतस्य पुरुषस्य उच्छ्वयनादिधर्मस्य जीवत्वायोगात् इत्यर्थः।

[ रत्नप्रभा २४२२·१३ ]

३. बृ० उ० ४।४।२ ४–५. बृ० उ० ४।४।६

गत्युत्क्रान्त्योर्विद्वद्विषये प्रतिषेधः इत्येव व्याख्यानं युक्तम् । न च सर्वगत-ब्रह्मात्मभूतस्य प्रक्षीणकायकर्मणः निमित्ताभावात् उत्क्रान्तिर्गतिर्वा उपपद्यते, 'ब्रह्मैव सन् ब्रह्माप्येति' अत्र ब्रह्म समश्नुते' इति च एवंजातीयकाः श्रुतयश्च गत्युत्क्रान्त्योरभावं सूचयन्ति ।

रामानुजनिम्बार्कौ च द्वादशत्रयोदशसूत्रयोरेकमेव सूत्रमिति मन्येते । भाष्यं चाप्युभयोः समानार्थम्, 'एतयोर्मते द्वादशत्रयोदशचतुर्दशसूत्राणि पूर्वाधिकरणतः सम्बद्धानि विद्वत्सामान्यमेव निर्दिशन्ति । तयोरयं भावः—बृहदारण्यके 'न तस्य प्राणा उत्क्रामन्ति' इति निषेधदर्शनात् विदुषः स्थूलशरीरात् सूक्ष्मशरीरोत्क्रान्तिर्न जायते इति न वक्तव्यम् । यतो हि तस्य इत्यनेन तत्र शरीरिणः (जीवात्मनः) न देहस्य । स्पष्टं चैतत् तस्मिन्नेव वाक्ये 'तस्य' इत्यस्य स्थाने 'तस्मात्' इति पठतां माध्यंदिनानामाम्नाये । इत्थं च तस्य (जीवात्मनः) प्राणोत्क्रान्तौ अजायमानायामपि शरीरादुत्क्रान्तिर्भवत्येवेति सिद्धम् । 'यत्रायं पुरुषो म्रियते' इति बृहदारण्यके पठितः पुरुषशब्दो न विद्वांसमपि तु पुरुषसामान्यं सूचयति इत्थं चास्माभिरवलोक्यते यत् शंकरमते य एव पूर्वपक्षः स रामानुजनिम्बार्कमते सिद्धान्तः ।

शङ्कराचार्यश्च सूत्रमेतत् पार्थक्येन पठित्वा 'प्रतिषेधादिति' चेन्न शारीरात्' एतावदेकं स्वतन्त्रं सूत्रं 'स्पष्टो ह्येकेषाम्'[2] एतावच्चापरं सूत्रं स्वीकृत्य पार्थक्येन तद्व्याख्यां कृतवान् । तत्र प्रथमोक्तांशं व्याख्याय शंकरः अभिधत्ते = यत् पूर्वपक्षीयमिदं सूत्रमिति परवर्तिनः अंशस्य, 'सप्राणस्य च प्रवसतः……'इत्यारभ्य अत्र ब्रह्म समश्नुते इति चैवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति' इति इत्थं विरोधिनो व्याख्याद्वयस्य कथमपि सामंजस्याभावे अपि यथाप्रसंगं शंकरमतमिह किंचिदालोच्यते—

(१) 'प्रतिषेधादिति चेन्न शारीरात्' इत्यस्य पूर्वपक्षत्वे 'स्पष्टो ह्येकेषाम्' इत्यस्य च सिद्धान्तांशत्वे भगवतो व्यासस्य न कश्चिन्निर्देशः सूत्रे सूत्रांशे वा कृतः अवलोक्यते । ब्रह्मसूत्रे हि भगवान् व्यासः पक्षव्यावर्तने (पक्षान्तरकथने) उत्तरस्थानीये सूत्रे प्रायः सर्वत्र 'तु' 'वा' 'न वा' इत्याद्यन्यतमशब्दं सन्निविष्टवान् । अत्र च तथा न वर्तते इति 'स्पष्टो ह्येकेषाम्' एषः अंशः पूर्वोक्तांशस्यैव पोषकः प्रतिभाति न तु तद्विपरीतमतज्ञापकः इत्येतत्प्रमाणस्वरूपम् एतत्सूत्रसंघटनेन सह 'अन्यसूत्रद्वयसंघटनमभिलक्षीकरणीयम् ।

---

१. ब्र० सू० ४।२।१२ २. तत्रैव ४।२।१३

'न [1]भेदादितिचेन्न प्रत्येकमतद्वचनात्' तथा अपि[1] चैवमेके' इत्यत्र प्रथमसूत्रे 'भेदात्' इत्येषः अंशः पूर्वपक्षीयः तं च परस्थितेन 'इति चेत्' इत्यनेन प्रदर्श्य तदुत्तरमेव भगवता व्यासेन नकारनिषेधः कृतः। तदनन्तरमेव च 'प्रत्येकमतद्वचनात्' इति वाक्यद्वारा तत्कारणं प्रदर्शितम् तथा 'अपि चैवमेके' इत्यग्रिमसूत्रेण तदुक्तकारणस्य समर्थनं कृतम्। प्रस्तुतसूत्रद्वयस्यापि[3] संघटनं नितरामुक्तसूत्रद्वयसंघटनानुरूपम्। इति पूर्वदर्शितरीत्यैव तदर्थग्रहः समुचितः। तथाहि—'प्रतिषेधात्' एतावान् अंशः पूर्वपक्षीयः तं च 'इतिचेत्' इत्यनेन तत्परस्थितेन वाक्येन प्रदर्श्य तदुत्तरे नकारः कथितः। कुतश्चन ? इत्यस्य कारणं प्रदर्शयितुं सूत्रकारेण 'शारीरात्' तच्चैव समर्थयितुं 'स्पष्टो ह्येकेषाम्' इति वाक्यद्वयं प्रतिपादितम्'। इत्थं पूर्वापरोभयसूत्रसंघटनपर्य्यालोचनया इत्थं ज्ञायते यदस्य सूत्रस्य अंशद्वयमेकमेव सिद्धान्तं प्रतिपादयतीत्येकेनांशेन पूर्वपक्षः शेषांशेन च तदुत्तरपक्षः इतिशंकरस्याभिप्रायो नानुमितिपथमवगाहते।

( २ ) 'समानाचासृत्यु[4]पक्रमात्' एतत् अस्याध्यायस्य द्वितीयपादे सप्तमं सूत्रम्' शंकरेण इदमित्थं व्याख्यातम्—समाना चैषोत्क्रान्तिः वाङ्मनसीत्याद्या विद्वदविदुषोः आसृत्युपक्रमात् भवितुमर्हति अविशेषश्रवणात्। विद्वदविदुषोः ( ब्रह्मज्ञाब्रह्मज्ञयोः ) उत्क्रान्तिक्रमः—( वागादीन्द्रियाणां मनसि, मनसश्च मुख्यप्राणे, मुख्यप्राणस्य च जीवेन सहैकात्म्यभावः ) तुल्यः। श्रुतौ हि कस्यचिदपि भेदस्य उल्लेखो न वर्तते। सप्तमसूत्रे 'अमृतत्वं चानुपोष्य' इत्यस्य शंकरानुसारिणः अर्थस्य असंगतिस्तु तत्रैव प्रदर्शिता। कथमेतदुपपन्नमिह स्यात् यत् सूत्रचतुष्कानन्तरमेव अस्मिन् द्वादशे सूत्रे सूत्रकारो निष्कामस्य विदुषः उत्क्रान्त्यभावं प्रतिपादयेत्। यदि च शंकरमीमांसानुसारं सगुणनिर्गुणोपासकभेदेन एषा उत्क्रान्तिः अनुत्क्रान्तिश्च सूत्रकाराभिमता स्यात् तदा सूत्रान्तरं विरच्यावश्यं तेन तन्निर्दिश्येत। न च क्वापि तथा तेन निर्दिष्टमिति न तथा तदभिप्रायः। किंच, तृतीयाध्यायस्य तृतीये पादे सप्तपंचाशत्तमे सूत्रे ( विकल्पोऽविशिष्टफलत्वात् ) एष निर्देशो विहितः यत् सर्वविधोपासनानाम् ( विद्यानाम् ) ब्रह्मावाप्तिरूपमेकमेव फलम्। इत्थं चैवंभूतभेदकल्पनायाः न किमपि कारणमवलोक्यते।

( ३ ) निष्कामाप्तकामात्मकामपुरुषगतिविषयकश्रुतिमुद्धृत्य शंकरा-

---

१. तत्रैव ३।२।१२ २. तत्रैव ३।२।१४

३. ब्र० सू० ४।२।१२ तथा ४।२।१३ ४. तत्रैव ४।२।७

चार्येण स्वकीया व्याख्या समर्थिता। किन्त्वत्र एतद् जिज्ञास्यं यत् सगुणब्रह्मोपासकः समुपलब्धब्रह्मज्ञानः, विद्वत्पदवीमवाप्तः, अनिष्कामः अपि ब्रह्मविद् भवति न वा। जीवितदशायामेव तस्य ब्रह्मज्ञानावाप्तिसम्भावना श्रुत्यनुसारेण सूत्रकारेण तृतीयाध्यायान्तिमपादमारभ्य चतुर्थाध्यायपर्य्यन्तं सर्वत्रैव प्रतिपादिता न च शंकरस्याप्यत्र कुत्रापि वैमत्यम्। एतेनावश्यम् एतत्स्वीकर्तव्यं स्यात् यत् स जीवितदशायामेव आप्तकामो जायते। ब्रह्मदर्शने हि जीवस्य हृदयग्रन्थिच्छेदः पूर्वसंचितकर्मसमूहक्षयः, आरब्धकर्मसु च तदनवलिप्तिः, एतत्सर्वं सगुणनिर्गुणोभयोपासकाभेदेन सश्रुतिप्रामाण्यं सूत्रकारेण पूर्वमेव प्रमाणीकृत्यापि तृतीयाध्यायीयोपासनाप्रकरणे स्पष्टतया एतन्मीमांसितं यत् उपासनानाम् (विद्यानाम्) भिन्नत्वे सत्यपि सर्वासां ब्रह्मविद्यानां ब्रह्मावाप्तिरूपमेकमेव फलम्। सिद्धायां च ब्रह्मोपासनायां जीवितकाले एव ब्रह्मदर्शनलाभः इति। सगुणब्रह्मोपासका इव निर्गुणब्रह्मोपासका अपि ब्रह्मसाक्षात्कारानन्तरं जीवन्त्येवेति सर्वविधब्रह्मोपासका जीवितकाले एव निष्कामत्वमाप्तकामत्वं वा अवाप्तुं शक्नुवन्ति। इत्थं च जीवन्मुक्तानां सर्वविधब्रह्मोपासकानाम्, अकामनिष्कामात्मकामाप्तकामत्वे श्रुत्या सूत्रकारेण वा नान्तिमकालगतिविषयकं क्वापि पार्थक्यं निर्दिष्टमिति शंकराचार्यकृतपार्थक्यकल्पना निर्मूला प्रतिभाति।

केवलस्य अनिर्देश्यस्य सद्रूपस्य ब्रह्मण उपासकानाम् आनन्दवर्जितकेवलचिद्रूपस्य ब्रह्मणो वोपासकानाम् देहपातानन्तरं न क्वापि गतिरपि तु सर्वज्ञसर्वशक्तिमदानन्दमयसगुणब्रह्मोपासकानामेव देहपातानन्तरं गतिर्भवतीत्थं ब्रह्मवित्पुरुषेषु श्रेणीविभागस्य वस्तुगत्या न कश्चिदपि संगतो हेतुरवलोक्यते। 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथा इतः प्रेत्य भवति' इतिश्रुत्या येन रूपेण ये उपासनां कुर्वन्ति तेषां तद्रूपताप्राप्तेः स्पष्टतयाप्रतिपादनात्। सगुणब्रह्मोपासकाश्चासंख्यश्रुतिसम्मतसर्वव्यापिसर्वशक्तिमद्रूपेणैव ब्रह्मोपासनां कुर्वन्तीति निर्गुणब्रह्मोपासकस्य ब्रह्म यथा यथा उपासकस्वरूपं सन्निकटति तथा तथैव न तत् सगुणोपासकात्मनो दूराद् वर्तते। सर्वजीवात्मनां तस्यैव चिदंशमात्रत्वात्। निर्गुणोपासकाः तस्य परमात्मनो न कमपि गुणं ध्यायन्ति। सगुणोपासकाश्च गुणैः सह तद् ध्यायन्तीतीयानेव केवलो भेदः। अदूरस्थित च तत् उभयोः पक्षे वर्तते। उभावपि निष्कामौ, उभावपि आत्मकामौ; जीवितकाले च ब्रह्मसाक्षात्कारेण आप्तकामौ भवितुं शक्नुतः। न चापि श्रुत्या सूत्रकारेण वा क्वापि तयोः पार्थक्यम् अन्तिमगतिभिन्नत्वं

च प्रदर्शितम् इति निर्गुणोपासकानां गतिनिषेधस्वीकारे सगुणोपासकानामपि अर्थापत्त्यैव तथात्वं सिध्यति। श्रुतिर्हि अनेकस्थलेषु ब्रह्मज्ञपुरुषाणां देहपातानन्तरम् अर्चिरादिमार्गेण गतिं प्रतिपादयति। तथाहि—'एष सम्प्रसादः अस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते एष[1] आत्मा"। अन्यत्रापि 'तयोर्ध्वमायन्नमृतत्व[2]मेति'। भगवता सूत्रकारेणापीत्थमेव प्रदर्शितमिति शंकरसिद्धान्तो न कथमपि बादरायणसिद्धान्तपदवीमारोहति। शंकराचार्येण च यान् हेतूनाश्रित्य स्वकृतसूत्रव्याख्या संस्थापिता तेषामेकैकशः असंगतित्वमिह ग्रन्थगौरवभिया न निर्दिश्यते।

शंकरमते पंचदशषोडशसूत्रे पार्थक्येनाधिकरणद्वयं निर्मिमाते पर—ब्रह्मज्ञमेव च निर्दिशतः। अयं च तस्याभिप्रायः यत् 'एवमेवास्य परिद्रष्टुः इमाः षोडशकलाः पुरुषायणाः पुरुषं [3]प्राप्यास्तंगच्छन्ति' इति श्रुत्या परब्रह्मविदः प्राणाः इन्द्रियाणि सूक्ष्मभूतानि च तस्मिन्नेव परब्रह्मणि अविभागाय प्रलीयन्ते न च तानि अविद्वच्छरीरादिव स्थूलशरीरादुत्क्रामन्ति। एतदेव भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषः अकलः अमृतः[4] भवति' अनया श्रुत्यापि प्रतिपादितम्।

रामानुजनिम्बार्कौ अपि एतत्सूत्रद्वयं प्रायः तेनैव रूपेण व्याख्यातवन्तौ किन्तु न तौ एताभ्यां विशेषेण ब्रह्मविदमेव अपि तु विद्वत्सामान्यं निर्दिशतः। यस्य शरीरपातानन्तरं भूतानि इन्द्रियादीनि च स्थूलशरीरादुत्क्रम्य परब्रह्मणि प्रलीयन्ते।

एतदिहावधेयं यद् रामानुजमते 'अविभागः' अपृथग्भावः, पृथग्भावानर्हः संसर्गः। तन्मते एतेषामिन्द्रियादीनाम् वाचः मनसि इव ब्रह्मणि सम्पत्तिर्न तु कारणे कार्यस्य इव लयः।

निम्बार्कस्तु 'अविभागः' तादात्म्यापत्तिः (नद्याः समुद्रपतने इव) इत्यर्थमाह। यश्च रामानुजार्थापेक्षया अधिकं संगतः प्रतीयते। स्पष्टीकृतं चैतत् निम्बार्कशिष्यश्रीनिवासाचार्यकृतवेदान्तपारिजातसौरभटीकायां वेदान्तकौस्तुभे—'नायं वाङ्मनसयोरिव संयोगः किन्तु नद्याः समुद्रे इव आत्यन्तिकमेकीभवनम्'।

रामानुजो हि वाङ्मनसयोः संसर्गं भूतेन्द्रियादीनां ब्रह्मणा सह अविभागेन मिश्रयति इति सम्भवतः स एतत्पक्षं प्रबलयति यत् उभयोः

---

१. छा० ८।३।४ २. तत्रैव ८।६।६

३—४. प्र० उ० ६।५

( चिदचितोः ) व्यक्तिगतो भेदः आत्यन्तिकरूपेण कस्मिन्नपि काले न जायते। रामानुजस्य अविभागशब्देन यः कश्चिदपि अभिप्रायो भवेत् शंकरसिद्धान्ते तु अयम् अविभागशब्दो न तथा तस्य सिद्धान्तानुकूलो यथा लयसम्पत्यन्यतर शब्दः।

सप्तदशं सूत्रं नवममधिकरणमेतत् प्रतिपादयति यत् म्रियमाणस्य पुरुषस्य जीवो हृद्देशमागत्य ततः शरीराद् बहिर्निर्गच्छति। स च विदुषः सुषुम्नानाड्या अविदुषश्च अन्यया कयाचिन्निर्गच्छति इति विशेषः। यथाचोक्तं शांकरे—'तस्मात् हृदयालये...','शतं चैका च हृदयस्य नाड्यः तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे 'भवन्ति'

शंकरमते एषा अपरविदुषो गतिः। रामानुजनिम्बार्कौ चेमां विद्वत्सामान्यगतिं स्वीकुरुतः।

अष्टादशैकोनविंशसूत्रयोः दशममधिकरणमेतत्प्रतिपादयति यत् सुषुम्ना नाड्या बहिर्देहान्निःसृतो जीवः उपासकनाडीसंसृष्टसूर्यकिरणान् अवलम्बमानः किरणद्वारेण ब्रह्मलोकं गच्छति। शिराकिरणसम्पर्कस्य च यावद्देहभावित्वात् निशासु शैशिरेषु दुर्दिनेषु अपि च तत्सम्बन्धस्य तथैव वर्तमानत्वात् दिवारात्रौ वा मरणे न तद्रश्मिशिरासम्पर्कव्याघातः।

रामानुजनिम्बार्कौ च एकोनविंशसूत्रस्य पृथगधिकरणं स्वीकृत्य विदुषः कर्म संयोगस्य यावद्देहभावित्वात् इदानीं बन्धनाभावे रात्रावपि मृतस्य विदुषो ब्रह्मसामीप्योपगमसिद्धेश्च 'निशिमृतस्यापि विदुषो ब्रह्मप्राप्तिः' इत्यर्थं कुरुतः।

विंशैकविंशसूत्रयोः पादस्यान्तिममधिकरणमेतत्प्रतिपादयति यत् दक्षिणायने अपि मृतो विद्वान् विद्याफलम् ( ब्रह्मावाप्तिरूपम् ) प्राप्नोति। अत्र अपि शंकरमते 'विद्वान्' शब्देन अपरविदुषः ( नोत्कृष्टस्य ) रामानुजनिम्बार्कमते च विद्वत्सामान्यस्य निर्देशः।

मध्वाचार्यस्य सप्तमसूत्रतः षोडश सूत्रं यावत् अस्मिन् फलाध्याये अवश्यवक्तव्यत्वेन प्रसक्ताया अपि विद्वद्गतेः ऐकान्तिकभिन्नः सूत्रार्थः वयं च तमर्थं न कयापि समालोचनप्रयोजनविशिष्टया अपि तु केवलं तत्कालपनिकार्थोदाहरणनिर्दिष्टिदृष्ट्या एव इह प्रदर्शयामः। सप्तमसूत्रतः चतुर्दशसूत्रं यावत् एकस्मिन्नधिकरणे प्रकृतेः ( लक्ष्म्याः ) विष्णौ

१. छा० ८।६।६ ( शा० भा० पृ० २४३७ )

( परमेश्वरे ) पूर्वसूत्रोक्तदेवानामिव लयो जायते न वेति विषयमुपपादयन् सः लक्ष्मीनारायणयोः—प्रकृतेः ( लक्ष्म्याः ) परेशस्य च प्रकृतिं ( स्वरूपं ) वर्णयति। अत्र च तस्य अयमभिप्रायः यत् तस्या अमृतत्वमनुपास्य स्वत एवामृतत्वमिति सा विष्णौ न प्रलीयते अपि तु सर्वदा तस्मात् पृथगवतिष्ठते। 'प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ, नित्यौ च सर्वगतौ एतौ ज्ञात्वा'[1] विमुच्यते।

एतेनापि च तयोः नैसर्गिकपार्थक्यं समायाति यत् प्रकृतौ विलीनः संसारमेति अर्थात् प्रकृतौ विलयः संसारः कथ्यते। परमेश्वरे च विलीनः अमृतत्वमेति अर्थात् परमेश्वरे लयश्च अमृतत्वम् ( मुक्तिः ) परिभाष्यते। परमेश्वरश्च प्रकृतेः सूक्ष्मतरः ज्ञानानन्दादिगुणयुक्तश्चेति प्रकृतेरुत्कृष्टः।

प्रकृतेः परमेश्वरस्य च पार्थक्यगुणातिरिक्तांशे समानत्वमपि वर्तते। उदाहरणार्थं तयोर्नैतावता साम्यं यत् परमेश्वरः (ब्रह्म) ऐश्वर्यादिसम्पन्नः प्रकृतिश्च न तथा। वस्तुगत्या ब्रह्मणा सहैष साम्यनिषेधो जीवात्मानं निर्दिशति न प्रकृतिम्। इत्थं च प्रकृतिपुरुषयोः साम्यं न वर्तते इति ( पुरुषेण सह प्रकृतेः साम्यनिषेधो ) न कथमपि वक्तुं शक्यते। किञ्च, प्रकृतिपुरुषयोरेतत्साम्यवैषम्ये केषुचिद् वैदिकवाक्येषु अपि निरूपिते। तथाहि—'अथातः समाश्वासमाश्वाभिधीयन्ते······माध्यंदिनानां समादि'[2]वादः। स्मृतिरपि—

मत्स्यकूर्मवराहाद्या समाविष्णोरभेदतः।
ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा[3]॥

पंचदशषोडशसूत्रे पार्थक्येनाधिकरणद्वयं निर्मिमाणे एतत्प्रतिपादयतः यत् पूर्वोक्तानि तदतिरिक्तानि अन्यान्यपि च सर्वाणि दैवतानि प्राणद्वारेण परमात्मनि विलीयन्ते। तथाहि—'सर्वे देवाः प्राणमाविश्य देवे, मुक्तालयं परमे यान्त्यचिन्त्ये',[4] 'तथा चैते देवा एतमात्मानमनुप्रविश्य सत्यासत्यकामाः सत्यसंकल्पाः यथाकाममन्तर्बहिः परिचरन्ति'[5]। अत्र सत्यकामादयः पारिभाषिकशब्दानां परमात्मना सह एकोद्देश्यत्वमात्राभिव्यंजकत्वेन 'अविभागोवचनात्'इत्यस्मिन् सूत्रे अविभागशब्दः

---

१. म० भा० पृ० १६६–६७ २. म० भा० पृ० १६८
३. तत्रैव वाराह पुराणवचनम्
४. तत्रैव १६९ पृष्ठे उद्धृता कौषारवश्रुतिः।
५. तत्रैव उद्धृता गोपवनश्रुतिः

परमेश्वरकामाद्यविभागार्थकः । तथाहि माध्वे—'तत्परमेश्वरकामाद्य-विभागेनैव तेषां सत्यकामत्वम्''[1] ।

पादस्यान्तिमसूत्रपंचकं सप्तदशसूत्रतः एकविंशसूत्रं यावत् प्रायः शंकरानुसारमेव व्याख्यायमानं सत् परापरविदुषोर्भेदराहित्येन विद्वत्सा-मान्यं निर्दिशत् विद्वदात्मनः ( ज्ञानिनः ) गतिं प्रतिपादयति ।

वल्लभमते सप्तमसूत्रतः षोडशसूत्रं यावत् सूत्राणि पुष्टिमार्गीयमुक्ति-दशां वर्णयन्ति । पुष्टिमार्गे च व्रतादिकमन्तरेणैव अमृतत्वमवाप्यते । तथाहि वाल्लभे—'विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा । साधनक्रमेण मोचनेच्छा हि मर्यादामार्गीया[2] मर्यादा' । तत्र पुष्टिमार्गे-णावाप्तायाः मुक्तेः विशिष्टत्वम् । मर्यादामार्गेण च अवाप्ताया न्यूनत्वम् । यतो हि नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायां भगवदानन्दा-नुभवः । मर्यादायां च तदभावः इति पुष्टिदृष्ट्या तत्र संसारत्वव्यपदेशः । पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्विज्ञेयं च । तन्मार्गेणावाप्तामुक्तिदशा च वक्तु-मशक्या, सर्वं हि तदानीं तिरोधत्ते । अयंभावः-मुमुक्षोर्विरहिदशा प्रिय-संगमदशा चेति दशाद्वयमेव भवति नान्यत् । तत्र विरहिदशायाः अति-दुःसहत्वेन सर्वेषांभावानां तिरोधानात् तदानीम्, उपदेशो न भवति । संगमदशायां तु पुरःप्रकटपरमानन्दस्वरूपात् भगवतः एव हेतोः न अन्यस्मै उपदेशो भवति, भगवदग्रे तदसंभवात् ।

पुरुषोत्तमविरहेण अवाप्तः ऊष्मा ( विरहसन्तापः ) एव आनन्दा-त्मकरसात्मकस्य अस्यैव भगवतो धर्मः । आनन्दात्मके, रसात्मके चापि ऊष्मत्वं तत्र इत्थमुपपद्येत यद् भगद्विरहस्य सर्वसाधारणत्वे अपि स्थायिभावात्मकरसरूपभगवत्प्रादुर्भावः यस्य भक्तस्य हृदि भवति तस्यैव हृदि तदप्राप्तिजस्तापः; तदनन्तरं नियमतस्तत्प्राप्तिश्च जायते । यश्च न तथाभूतो भक्तः तस्य हृदि न तदुत्पत्तिः । इत्थं च अन्वय-व्यतिरेकाभ्याम् रसात्मके तस्मिन् भगवति अयमूष्मा ( विरहसन्तापः ) सम्पद्यते । तस्य च वस्तुनो रसात्मकत्वात् तत्तापः अपि रसात्मक एवेति सर्वमनवद्यम् । तादृशे भक्ते एव 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखम्' इत्यादिश्रुत्या शरीरसम्बन्धिनो हेतोः मृत्युरोगादेरुत्पन्नस्य कर्मजनितस्य लौकिक दुःखस्यैव तत्र प्रतिषेधः क्रियते न तु पूर्वोक्तद्विरहो-ष्मतापदुःखस्य । तस्य च अन्तर्बहीरसात्मकभगवत्प्राकट्यम् । तद्दर्शन-

---

१. म० भा० पृ० १६९

२. अणुभाष्यम् पृ० १३१४ ( चौ० )

जनितो विरहभावः तज्जनितः तापः, तदीयप्रेमौत्कट्यं तदा तत्प्राकट्यम्। ततः पुरुषोत्तमपूर्णस्वरूपानन्ददानादिकं चैतत्सर्वं वैकुण्ठे अपि अप्राप्यं नान्यत्र कुत्रापितु गोकुले एव। यथाचोच्यते—

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि[1]॥

एवंभूतं कृपापथमनुसरन् भक्तो यदा गोकुलं प्रवेशितः पुरुषोत्तमेन सहैकीभवति तदा न कदापि तस्य ततो (भगवतः) विभागो जायते।

सप्तदशसूत्रतः एकविंशसूत्रं यावत् वल्लभेन सर्वाणि सूत्राणि प्रायः शंकरेणेव व्याख्यातानि किन्तु तेषु तेन मर्यादामार्गीयभक्तिर्निर्दिष्टा। इह एतद् द्रष्टव्यं वर्तते यत् शंकरानुसारेण येषु सूत्रेषु (सप्तमसूत्रतः षोडशसूत्रं यावत्) पराविद्या निर्दिष्टा तानि वल्लभानुसारेण पुष्टिमार्गं निर्दिशन्ति। येषु च शंकरानुसारेण (सप्तदशसूत्रतः एकविंशसूत्रंयावत्) अपरा विद्या निर्दिष्टा तानि वल्लभानुसारेण मर्यादामार्गं निर्दिशन्ति। इत्थंचेदं प्रकारद्वयमुक्तिविशेषस्थापनं शंकरवल्लभयोरुभयोरपि समानम्।

---

## चतुर्थाध्यायस्य तृतीयः पादः

पादपरिचयः—द्वितीये पादे सूक्ष्मशरीरेण सह उपासकस्य स्थूलशरीराज्जीवस्य निर्गमणमुक्तम्। इदानीं सूत्रकारः तस्य ब्रह्मावाप्तिमार्गं, तेन मार्गेणावाप्तब्रह्मस्वरूपं च वर्णयितुं तृतीयपादमारभते।

प्रतिपाद्यसंकेतः—अस्मिन्पादे—

(१) शंकरमते मृतस्य सगुणब्रह्मविदः उत्तरमार्गाभिगमनम्।
(२) रामानुजमते च अर्चिरादिगतिप्रतिपादनम्।
(३) निम्बार्कमते च ब्रह्मप्राप्तये विदुषो गतिनिरूपणम्।
(४) मध्वमते च सर्गगम्ययोर्निरूपणम्।
(५) वल्लभमते च क्रममुक्तौ प्राप्यस्वरूपनिरूपणपूर्वकं प्राप्तिप्रकारप्रदर्शनम्।

### सविश्लेषणप्रत्यधिकरणभाष्यपंचकसमीक्षणम्—

(४।३।१-३) आद्यानां त्रयाणां सूत्राणाम् अधिकरणत्रयेण श्रुतिप्रतिपादितविभिन्नस्थितिषु इत्थं सामंजस्यं समुपस्थापितं यद् देवया-

---

१. ऋ० १।१५४।६

नापरपर्यायः अर्चिरादिमार्ग एव एकः खलु श्रुतिषु सर्वत्र उपासकमार्गः उच्यते। इत्थं च 'तद्य इत्थं विदुर्ये चेमे अरण्ये श्रद्धा तप इत्युपासते··· देवयानः [1]पन्थाः; तथा, 'स एतं देवयानंपन्थानमासाद्य अग्निलोकमार्चिषमागच्छति स वायुलोकं स आदित्यलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमागच्छति';[2] तथा यदा वै पुरुषः अस्माल्लोकात्प्रैति स वायुमागच्छति';[3] 'सूर्यद्वारेण ते विरजाः प्रयान्ति';[4] एवं तत्र तत्र अनेकविशेषणोपलक्षितः अपि ब्रह्मलोकं प्रतिप्रस्थितस्य उपासकस्य ब्रह्मलोकं प्रापयिता एक एव मार्गः।

( ४ ३।४-६ ) चतुर्थसूत्रतः षष्ठसूत्रं यावत् द्वितीयमधिकरणम् अर्चिरादीनां ब्रह्मलोकस्य मार्गचिह्नत्वम्[5]—मनुष्यलोकः, पितृलोकः, देवलोकः इत्यादिवद्भोगायतनत्वं च निषिध्य अर्चिरादिषु विद्युदन्तेषु च तेषु चेतनातिवाहिकत्वं ( नेतृत्यम ) स्थापयति। शंकराचार्यः एतैः सूत्रैः अपरविदुषः क्रममुक्तिं निर्दिशति। सा च क्रममुक्तिः परविदुषः सद्यो मुक्तितः भिन्ना। रामानुज-निम्बार्कमध्वाचार्यास्तु तानि सूत्राणि विद्वत्सामान्यविषयकाणि वदन्ति। वल्लभश्च सूत्राणि तथैव रीत्या व्याचक्षाणः अपि शंकराभिमतापरविद्वत्तुल्यम् इह मर्यादामार्गं निर्दिशति। 'उभयव्यामोहात् तत्सिद्धेः', एतत् सूत्रं, किन्तु, तेन अन्यथा व्याख्यातम्। तथाहि— 'देवयानः पन्था अपि भगवतैव सृष्टः अस्ति तत्र कस्याश्चित् कामनायाः अभावे अपि स एव काँश्चित् ज्ञानिनः मर्यादामार्गीयभक्तान् व्यामोहयन् लीलां करोति इति तेषां तदिच्छया तदनुसरणेन तत्सृष्टिसिद्धिः। अतः परं वल्लभः अर्चिरादिमार्गगन्तृणां देहवियोगेन सम्पिण्डितेन्द्रियग्रामत्वेनास्वातंत्र्यं व्यामोहः, अर्चिरादीनां च अचेतनत्वेनास्वातन्त्र्यं व्यामोहः कार्यकरणासामर्थ्यमिति यावत्। तेनार्चिराद्यधिष्ठातृदेवैरतिवाह्यन्ते इति सिद्धम्, इत्यत्र व्यामोहशब्दस्य सामर्थ्यहीनत्वरूपमर्थं शंकराभिप्रेतं 'यत्तु इत्यादिना खण्डयित्वा तस्य 'अज्ञानवाचकत्वं प्रदर्शयति'। रामानुजनिम्बार्कभाष्ययोरेतत्सूत्रमेव न अवलोक्यते। वल्लभमते च तृतीयचतुर्थसूत्रयोर्मध्ये वरुणाच्चाधीन्द्रप्रजापती' इत्येकमितरत्सूत्रं वर्तते।

---

१. छा० उ० ५।१०।१-२ २. कौ० उ० १।३

३. बृ० उ० ५।१८।१ ४. मु० उ० १ २।११

५. यथा हि लोके कश्चिद्ग्रामं नगरं वा प्रतिष्ठासमानः अनुशिष्यते—त्वमितः अमुं गिरिं गच्छ ततो न्यग्रोधम्, ततो ग्राममित्यादिरीत्या मार्गप्रदर्शने गिरिन्यग्रोधादीनि मार्गचिह्नानि।

(४।३।७-१४) सप्तमसूत्रतः चतुर्दशसूत्रं यावत् पंचममधिकरण-मेतत् शंकरमते 'स एतान् ब्रह्म 'गमयति', सः अमानवः पुरुषः एतान् उपासकान् सत्यलोकस्थं ब्रह्म गमयति इत्यत्र किं कार्यम् अपरं ब्रह्म गमयति आहोस्वित् परमेव अविकृतं मुख्यं ब्रह्म इति संशये ब्रह्मशब्द-प्रयोगात् गतिश्रुतेश्च, कार्यमेव सगुणम् अपरं ब्रह्म गमयतीति बादर्या-चार्यमतम्। यतो हि प्रदेशवत्वेन कार्यब्रह्मण्येव गन्तव्यत्वम् (प्राप्तव्य-त्वम्) उपपद्यते। परस्य ब्रह्मणः सर्वगतत्वात् गन्तॄणां प्रत्यगात्मत्वाच्च तस्मिन् गतिः, गन्तृत्वं गन्तव्यत्वं वा न किमपि सम्भवति इति। ब्रह्मलोकानित्यत्र बहुवचननिर्देशः, 'ब्रह्मलोकान् गमयति ते तेषु ब्रह्म-लोकेषु परापरावतो [2]वसन्ति'; इत्थं चात्र बहुवचनविशेषणस्य परस्मिन् ब्रह्मण्यसंभवात् कार्यब्रह्मणि चावस्थाभेदोपपत्तेस्तत्सम्भवात् कार्यब्रह्म (अपर ब्रह्म) विषयिका एव गतिरिति बोधः। कार्यब्रह्मणो हि कारण-ब्रह्मसान्निध्यमिति ब्रह्मशब्दस्य मुख्यया वृत्त्या कारण ब्रह्मप्रतिपादकत्वे अपि तत्सान्निध्यात् (सामीप्यलक्षणया) कार्यब्रह्मण्यपि प्रयोगो न विरुध्यते। यदि तु 'एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्तन्ते [3]नावर्तन्ते', तथा, 'तयोर्ध्वमायन् अमृतत्वमेति'[4] इत्यादिश्रुतिषु ब्रह्मावाप्तानां जनाना-मनावृत्तिः श्रूयते, कार्यब्रह्मावाप्तौ च तन्न संघटते परब्रह्मणः अन्यत्र नित्यतायाः असंभवात् इति चेत्, अनावृत्तिश्रुतेः 'कार्यब्रह्मलोकनाशान-न्तरं तल्लोकस्वामिना हिरण्यगर्भेण सह तत्रैव समुत्पन्नसाक्षात्कारा विद्वांसः परं ब्रह्मपदं प्राप्नुवन्ति' इत्यर्थकत्वात्। इत्थं चानावृत्तिश्रुतौ क्रममुक्तेर्निर्देशः स्वीकर्तव्यः, अंजसैव तत्साक्षात्कारासंभवात्। किंच

> 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे।
> परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्।'[5]

इति स्मृत्या अपि कार्यब्रह्मलोकं प्राप्ताः क्रमेण मुक्तिं प्राप्नुवान्ति, इत्यवगन्तव्यम्। एतस्य सिद्धान्तपक्षस्य पूर्वपक्षस्वरूपं जैमिनेर्मतं द्वाद-शत्रयोदशचतुर्दशसूत्रेषु प्रतिपादितं वर्तते। ब्रह्मशब्दस्य मुख्यया वृत्त्या परब्रह्मणः प्रतिपादकत्वात् 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययात्, 'स एतान् ब्रह्म गमयति' इत्यत्र ब्रह्मशब्देन परब्रह्मणो ग्रहणमिति जैमिनिः।

---

१. छा० ४।१५।५ २. बृ० उ० ६।२।१५
३. छा० उ० ४।१५।५ ४. तत्रैव ८।६।६
५. प्रतिसंचरः महाप्रलयः इत्येकादशसूत्रे रत्नप्रभा०

एवं गन्तव्यनिरूपणानन्तरमस्य पादस्य पंचदशषोडशसूत्रयोः-अन्तिमं षष्ठाधिकरणम् गन्तॄन् निर्धारयति—'य एनान् गमयतीति श्रुति-प्रतिपादितः अमानवः पुरुषः प्रतीकालम्बनान्'[1] वर्जयित्वा अन्यान् सर्वान् विकारालम्बनान्[2] ब्रह्मलोकं नयतीति बादरायणाचार्यमतम् । यतोहि आश्रयान्तरप्रत्ययस्य आश्रयान्तरे प्रक्षेपः प्रतीक इति वृद्धाः । ब्रह्माश्रयश्च प्रत्ययोनामादिषु प्रक्षिप्तः इति नामतन्त्रः तस्मान्न तदुपासको ब्रह्मक्रतुः किन्तु नामादिक्रतुः (नामाद्युपासकः) इति प्रतीकालम्बनान् विदुषः वर्जयित्वा सर्वानन्यान् विकारालम्बनान् (सगुणविद्यावतः) अमानवो ब्रह्मलोकं नयति=कार्यं ब्रह्मलोकमिति भावः) प्रतीकालम्बनानां तु क्रतुत्वाभावात् विद्युत्पर्यन्तमेव गमनं न तदग्रे इति विशेषः ।

अयमत्राशयः–स सामभिरुन्नीयते ब्रह्मलोकम्',[3] 'ते ब्रह्मलोकेषु[4] परान्तकाले' इत्याद्यासु ब्रह्मलोकशब्दः कार्यं ब्रह्मलोकगोचरः । 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते'[5] इत्याद्यासु चाकार्यं ब्रह्मलोकगोचरः इत्थमुभयगोचरः खलु, ब्रह्मलोकशब्दः प्रयुज्यमानः उपलभ्यते इतीह सन्देहो भवति यत् सः अमानवः पुरुषः किमुपासकं कार्यं गमयति अथवा परब्रह्मपरमेश्वरात्मकमकार्यं ब्रह्मलोकम् ? एवं प्राप्ते सामान्यतया एतदायाति यत् 'स एनान् ब्रह्म गमयति[6] इति श्रुतौ अविशेषेण ब्रह्मप्राप्तिव्यपदेशः, तथा च ब्रह्मलोकशब्दवत् न हि क्वचित् ब्रह्मशब्दः, अपि कार्यब्रह्मलोके प्रयुज्यते । अतः अमानवः पुरुषः उपासकम् अकार्यमेव ब्रह्मलोकं गमयतीति मन्तव्यम् । अत्र बादरेराचार्यस्य अयं सिद्धान्तपक्षः यत् सः अमानवः पुरुषः उपासकं कार्यंब्रह्मलोकं गमयति न अकार्यं ब्रह्मलोकम् इति । तस्य च एतत्कारणं यत् यदि उपासकस्य अकार्यो ब्रह्मलोकः खलु गन्तव्यो मन्येत तदा तस्य तं प्रति श्रूयमाणा गतिर्नोपपद्येत । यतो हि स लोकः परब्रह्मपरमात्मनो वर्तते, स च व्यापकः इति न तं प्रति केनचिन्मार्गेण गन्तु-

---

१. प्रतीकेषु च नामादिषु ध्येयेषु ब्रह्मणो गुणत्वात् न प्राधान्येन ब्रह्मध्येयत्वमस्ति । [ भामती पृ० १२२८ ]

२. आश्रयान्तरप्रत्ययस्य आश्रयान्तरे क्षेपो हि प्रतीकः । यथा 'नाम ब्रह्म' इत्यादौ नामादिषु ब्रह्माश्रयस्य प्रत्ययस्य प्रक्षेपः, तदालम्बनाः प्रतीकालम्बनाः तान् विहाय अन्यान् विकारालम्बनान् , सगुणविद्यावतः सर्वान् इति यावत् ।

[ र० प्र० पृ० १२२८ ]

३. प्र० उ० ५।५ ४. मु० उ० ३।२।६

५. छा० ८।१५।१ ६. तत्रैव ५।१०।२

गतिरुपपद्यते। आत्मनो व्यवहितं हि किंचित् मार्गविशेषेण गन्तुं शक्यते। न च उपासके गन्तरि प्रत्यगात्मनि परब्रह्मणि परमेश्वरे च किंचिद् व्यवधानं विद्यते—तस्य तदन्तरात्मत्वात्। कार्यो ब्रह्मलोकश्च अस्मात् भूमिलोकात् भूरिशो व्यवधीयते यतो हि "यत्र देवा अमृतमानशानाः तृतीये धामन्नध्यैरयत",[1] "अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि"[2] इत्यादि श्रुतिभिः सः अस्मात् पृथिवीलोकात् तृतीयः अभ्युपगम्यते। तृतीयत्वे च उपासकस्य गन्तुर्गन्तव्ये देशकृतमत्यन्तं व्यवधानं युक्तम्। यत्र च व्यवधानं तं प्रति लोकवदुपासकस्य गन्तुः अर्चिरादिना मार्गेण गतिरुपपद्यते। तस्मादुपासकं सूर्यरश्मिमुख्यः अमानवः पुरुषः कार्यं ब्रह्मलोकं गमयति नाकार्यमिति बादरिराचार्यो मन्यते।

किंच, "तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति, ते तेषु ब्रह्मलोकेषु पराः परावतो [3]वसन्ति" इत्याद्यासु श्रुतिषु ह्युपासकानां गन्तव्यो ब्रह्मलोकः खलु बहुत्वेन वासाधिकरणत्वेन च विशिष्यते। यदि तेषामकार्यो ब्रह्मलोकः तावद् गन्तव्यो भवेत् नैव स एवं विशेष्येत। न हि बहुत्वं वासाधिकरणत्वं च परब्रह्मात्मके तस्मिन् कथंचित् संगच्छते। कार्यस्य तु देशविशेषत्वात् अवान्तरप्रदेशभेदेन बहुत्वं वासाधिकरणत्वं च सुखेनोपपद्यते। 'तेषां न [4]पुनरावृत्तिः' इति कार्यं ब्रह्मलोकं प्राप्तानाम् उपासकानाम् अपुनरावृत्तिश्च तत्र ब्रह्मज्ञानप्राप्तिसम्भावनया अनुशिष्यते न तु अकार्यब्रह्मलोकबुद्ध्या परब्रह्मपरमेश्वरप्राप्तितः अन्यत्र सर्वत्र पुनरावृत्तेर्नियमात्। तस्मात् कार्यं ब्रह्मलोकं गमयति सूर्यरश्मिमुख्यः उपासकमिति निश्चप्रचम्।

'स एनान् ब्रह्म [5]गमयति' इत्यविशेषेण ब्रह्मप्राप्तिव्यपदेशस्तु सामीप्याद् बोद्धव्यः। कार्यं ब्रह्मलोकं प्राप्तानाम् उपासकानाम् हि बहवः संसाराद्विरक्ता भवन्ति, विरलाः किल तदनुरक्ताः। तत्र विरक्ताः शुद्धान्तःकरणत्वात् प्रत्यगात्मानं परब्रह्म परमेश्वरं च सुविविच्य अनुभवन्तो नैरन्तर्येण जगज्जन्मादिकारणे भगवति तस्मिन् निर्भयं प्रतितिष्ठन्ति। तत्र यथा प्रतिष्ठितानां च तेषामदूरं खलु साक्षात्तद्दर्शनं, तदनु च तत्प्राप्तिः। तदिदं कार्ये ब्रह्मलोके परब्रह्मणि

---

१. यजुर्वेदः ३२।१० २. छा० ८।५।३
३. बृ० ६।२।१५ ४. तत्रैव ६।२।१५
५. छा० उ० ५।१०।२

परमेश्वरे च सामीप्यम्। तदेवाभिसन्धाय 'स एनान् ब्रह्म गमयति' इत्यविशेषेण ब्रह्मप्राप्तिर्व्यपदिश्यते। यथा वृन्दावनं प्रापयितव्येषु गुरुकुलानुरागिषु केषुचिन्माणवकेषु भाविनीं गुरुकुलप्राप्तिमनुसन्धाय 'स एनान् गुरुकुलं प्रापयति' इति व्यपदेशः सामीप्यादौपचारिकः प्रवर्तते तथा तेन अमानवपुरुषेण कार्यं ब्रह्मलोकं गमयितव्येषु केषुचिदुपासकेषु भाविनीं साक्षाद्दर्शनहेतुकां ब्रह्मगतिमभिसन्धाय 'स एनान् ब्रह्म गमयति' इत्यविशेषेण ब्रह्मप्राप्तिव्यपदेशः अपि सामीप्यादौपचारिकः प्रवर्तितुमर्हति इति नूनमिह ब्रह्मशब्दः सामीप्येन निमित्तेनोपचारात् कार्ये ब्रह्मलोके प्रववृते इति सूत्रकृदाशयो विस्पष्टः। एतेन 'सत्यं ज्ञानमनन्तं ब्रह्म'[1] इत्याद्यासु 'ये यदन्तरा तद्ब्रह्म'[2] [3]'विज्ञानमानन्दं ब्रह्म' इत्याद्यासु श्रुतिषु ब्रह्मशब्दस्य परब्रह्मणि प्रयुज्यमानत्वे अपि तत्सामान्यात् स एनान् ब्रह्म गमयतीत्यत्रापि स तत्रैव प्रयुक्तः' इति जैमिनिमतं व्युदस्तम्। सर्वासां हि प्रतिपत्तिविधायिकानां श्रुतीनां कार्यब्रह्मलोकप्राप्तावेवाभिसन्धिलक्षणात् परब्रह्मप्राप्तौ च अलक्षणात् सर्वत्रार्चिरादिमार्गेण उपासकानां गत्यभिधानाच्च। नहि परब्रह्मप्राप्तौ केनापि मार्गेण गतिरपेक्ष्यते। तस्य तस्याश्च सर्वत्र वर्तमानत्वात्। कार्यब्रह्मलोकस्य च देशविशेषत्वादस्ति गतेरपेक्षेति वादरिमतमेव समीचीनम्।

इत्थं गन्तव्यं निर्धार्य 'स एतान् इत्यत्र एनान् इत्यनेन 'गन्तृन् निर्दिष्टवान् बादरायणस्य इदं तात्पर्यं—द्विविधाः किलोपासकाः भवन्ति (१) ब्रह्मोपासकाः (२) प्रतीकोपासकाश्च। तत्र ये सर्वगं सर्वज्ञं सर्वशक्ति ब्रह्म उपासते ते ब्रह्मोपासकाः। प्रतीकश्च आश्रयान्तरस्य प्रत्ययस्य आश्रयान्तरे प्रक्षेपः; सरलशब्दैरिदमेव इत्थं वक्तुं शक्यते यत् प्रतीकः प्रकृत्यवयवः इत्थं च ये कश्चित् प्रकृत्यवयं सूर्यम्, चन्द्रमसम्, विद्युतम्, तैजसं, पार्थिवं वा किंचिद् मूर्तद्रव्यं ब्रह्मदृष्ट्या उपासते ते प्रतीकोपासकाः। तेषां ये ब्रह्मोपासकाः ते कार्यं ब्रह्मलोकं नीयन्ते नेतरे, तत्र 'क्रतुमयः पुरुषो यत्क्रतुरस्मिन् लोके भवति तथेतः प्रेत्यभवति'[4] तथा 'स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते'[5] एतया श्रुत्या इत्थं स्फुटमवगम्यते यत् ये ब्रह्म क्रतवः ते एव ब्रह्मलोकं नीयन्ते न च प्रतीकोपासकाः कर्हिचित् ब्रह्मक्रतवः सम्भ-

---

१. तै० २।१ २. छा० ८।१४।१
३. बृ० ३।९।२८ ४. छा० ३।१४।१
५. बृ० ४।४।५

वन्ति। यतो हि प्रतीकोपासनेषु प्रतीकास्तावन्मुख्या भवन्ति ब्रह्म च तद्विशेषणत्वात् अमुख्यम्। न चामुख्यक्रतवः (अमुख्योपासकाः) उपासकाः कदाचिद् उपपद्यन्ते मुख्यामुख्ययोः मुख्यस्यैवोपासनविषयत्वात्। यदि चाब्रह्म क्रतवः सन्तः अपि एते ब्रह्मलोकं नीयेरन् तदा नूनमेषा तत्क्रतुश्रुतिरुपरुध्येत। अतो ब्रह्मोपासकानेवकार्यं ब्रह्मलोकं सः मानवः पुरुषो नयति न जातुचित् प्रतीकोपासकानिति।

रामानुजः किन्तु सम्पूर्णानि सूत्राणि सप्तमतः षोडशपर्यन्तानि एकमधिकरणं मत्वा तेषु अद्यावधि प्रतिपादितमार्गेण कथंभूता उपासका नीयन्ते इति विषयविवेचनं निर्धारयति। तत्र सप्तमसूत्रतः एकादशसूत्रं यावत् प्रतिपादितंबादर्याचार्यमतं द्वादशतः चतुर्दशसूत्रं यावत्प्रतिपादितं जैमिनिमतं चैतन्मतद्वयं पूर्वपक्षस्वरूपमिति तदाशयः। बादरायणस्य च पंचदशषोडशसूत्रयोः सिद्धान्तपक्षः प्रतिपादितः। तत्र बादरेराचार्यस्य एतन्मतं यत् अमानवः पुरुषः उपासकान् कार्यं ब्रह्म (हिरण्यगर्भम्) नयति। यतो हि हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तिः न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परंब्रह्म उपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते। जैमिनिरित्थमाकलयति यत् 'ब्रह्मोपासका एव तत्र नीयन्ते'। बादरायणस्य सिद्धान्तपक्षः किन्त्वयं वर्तते यत् अमानवः पुरुषः प्रतीकोपासकातिरिक्तान् सर्वान् अर्थात् ये परब्रह्म उपासते ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते तानुभयविधान् नयति। ये तु ब्रह्मकार्यान्तर्भूतनामादिकं वस्तु देवदत्तादिषु सिंहादि दृष्टिवत् ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते न तान्नयति। यतोहि उभयोः पक्षयोः यदि, केवलं कार्यं ब्रह्म उपासीनान् नयति न परब्रह्मोपासकानिति पक्षः स्वीक्रियेत तदा अस्माच्छरीरात्समुत्थाय परं 'ज्योतिरुपसंपद्य······इत्यादिश्रुतिर्विरुध्येत। अत्र हि दहर-सत्यविद्यानिष्ठपरब्रह्मोपासकगणस्यास्माच्छरीरात् उत्थाय परमज्योतिः स्वरूपपरमात्मानं प्राप्तस्य स्वीयचिन्मयरूपप्रतिष्ठालाभ उक्तः। परमेवोपासीनान् इति नियमे तु 'तद्य इत्थं विदुर्ये चेमे अरण्ये श्रद्धातप इत्युपासते'[1] इत्यादिश्रुतिविरोधः। यतोह्यत्र पंचाग्न्युपासकानामर्चिरादि गतिरुपदिष्टा। अतः उभयोरन्यतरस्वीकारे उभयथा दोषः स्यात्। तस्मादुभयविधान्नयतीति अयमेवार्थः श्रेयान् उभयथा दोषप्रदर्शनार्थमेव सम्भवतः स उभयथा दोषशब्दयोर्मध्ये चकारं पठति। शंकरस्तु तदभावेन अदोषादिति छित्वा प्रकारान्तरेण सूत्रं व्याख्यातवान्।

---

1. छा० ८।३।४

तुलनात्मकदृष्ट्या उभयार्थावलोकनेन इत्थमस्माभिः स्वीकर्तव्यं भवति यत् शंकराभिमतः अर्थः सापत्तिकः। सिद्धान्तपक्षस्य पुरः कथनेन पूर्वपक्षस्य च पश्चात्प्रदर्शनेन अस्वाभाविकश्च वर्तते। शंकराचार्यः अपि एतज्जानानः स्वकीयसिद्धान्तस्थापने चतुर्दशसूत्रे सातिशयकृतश्रमः अवलोक्यते। सूत्राक्षरसम्बद्धा किन्तु तदीया व्याख्या स्वाभाविकी रामानुजस्य च काल्पनिकी। यतो हि सप्तमसूत्रे[1] 'कार्यम्' इति शब्दानन्तरम् रामानुजः उपासीनान् इति शब्दान्तरमवगच्छति। शंकरानुसारं च यथोक्तमेव सूत्रं साधीयः। एवमेव अस्य एषः अपि शब्दः प्रकृत्या स्वसन्निहित-कार्य-शब्दपरामर्शकः।

रामानुजः किन्तु तं 'कार्यमुपासीनस्य' 'इत्येतत्परामर्शकमभिधत्ते। एतदतिरिच्य अष्टमसूत्रे 'तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् 'गमयति' इत्यत्र गमयतीति क्रियायाः वर्तमानत्वेन यद् बहुवचनेन विशेषितम् तद्गन्तव्यस्थानं वर्तते न चोपास्यम्। तथा दशमसूत्रं 'कार्यब्रह्मोपासकाः कथं न पुनरावर्तन्ते, कथं च तेषाममृतत्वप्राप्तिरित्यस्य उत्तरं वर्तते। अस्माकमित्थमिह गन्तव्येन प्रयोजनं न चोपास्येन।

त्रयोदशसूत्रम् 'एष सम्प्रसादः अस्मात् शरीरात् समुत्थाय परं ज्योतिरूपसम्पद्य' इत्यादिश्रुतिप्रामाण्येन इदमेव गन्तव्यं परिपोषयति, न चोपास्यम्' यच्चापि रामानुजेन त्रयोदशचतुर्दशसूत्रयोः कार्यब्रह्मणः परब्रह्मणो वोपासकाः निरदिश्यन्त तच्चापि प्रतीकोपासनातिरिक्तान्योपासनान् निर्दिशता पंचदशसूत्राधारेण। किन्तु नैतत्तदवलम्बितविषयप्रसारणार्थं न्यायसंगतं पर्याप्तं प्रमाणम्।

एतत्सर्वथा सम्भवति यत् सप्तमसूत्रतः चतुर्दशसूत्रपर्यन्तमेकमधिकरणम्, पंचदशषोडशयोश्चान्यत्, यच्च शंकराभिप्रेतम्। सूत्राक्षरानुसारं प्रथमाधिकरणे गन्तव्यम्, यथाभूतं ब्रह्म वा प्रापयितुमात्मा पूर्वोक्तेन मार्गेण नीयते एतद्विवेचनार्हम्। सूत्रकारानुसारेण प्रथमं प्रतिपादितं बादरिमतं पूर्वपक्षः। परस्तात्प्रतिपादितञ्च जैमिनिमतं सिद्धान्तः। सूत्रकारश्च इह पूर्वोक्तमार्गेण कार्यं 'ब्रह्म 'गन्तव्यम्' इतिमतं खण्डयितुमिच्छुः कार्यब्रह्मपरब्रह्मभेदभावराहित्यभावनया परब्रह्म एवैकं गन्तव्यमिति स्थापयति। दशमसूत्रे च समाधानार्थं बादरिणा उत्थाप्यमाने, 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते', तयोर्ध्वमायन्नमृतत्वमेति इत्येतद्विषयकप्रश्ने विशेषेण निर्दिश्यमानम् 'अनावृत्तिः शब्दात्' इत्येतत्सूत्रं

---

१. बृ० उ० ६।२।१५

सूत्रकारस्य समक्षं वर्तते। शंकराचार्योत्पूर्वं केचिदेवमप्यासन् ये बादरेर्मतं पूर्वपक्षं जैमिनेश्च सिद्धान्तपक्षं स्वीकुर्वन्ति स्म। एतच्च—'केचित् पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्ति उत्तराणि सिद्धान्तसूत्राणीति व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति तदनुपपन्नम्" इत्यादिना प्रमाणीक्रियते तच्च महता प्रयत्नेन शंकरः खण्डितवान्।

एवमवाप्तव्यब्रह्मविषयकप्रश्ननिरूपणानन्तरं सूत्रकारः पंचदशषोडशसूत्रयोरग्रिमे नवीनाधिकरणे पूर्वोक्तमार्गेण नेतव्यान् गन्तॄन् निर्दिशति। इत्थं च (१) प्रथमसूत्रतः षष्ठसूत्रं यावत् गतिनिर्देशः (२) सप्तमसूत्रतः चतुर्दशसूत्रं यावत् गन्तव्यनिर्देशतः (३) पंचदशषोडशयोश्च गन्तृनिर्देशः। एवमस्य पादस्य त्रिधाविभागज्ञानमेतदीयविषयक्रमं हृदयंगमयितुमुपयुक्तं साधनम्। तदेव च वाल्लभाणुभाष्येणापि दृढीक्रियते। वल्लभः अपि हि सप्तमसूत्रतश्चतुर्दशसूत्रं यावदेकस्मिन्नधिकरणे गन्तव्यं निर्दिशति। पंचदशषोडशसूत्रयोश्चान्यस्मिन्नधिकरणे गन्तारम्। सः अपि च एतत्स्वीकरोति यत् बादरेर्मतं पूर्वपक्षं स्थापयति जैमिनेश्च सिद्धान्तम्। शंकरादिमते कार्यब्रह्मलोकपरब्रह्मलोकयोर्विकल्पः। अस्य च मते ब्रह्म-ब्रह्मलोकयोर्विकल्पः। स दार्ढ्येन इत्थं प्रमाणयति यत् 'स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति······स प्रजापतिलोकं स 'ब्रह्मलोकम्"[1] इति कौशीतकिश्रुतौ अग्न्यादिलोकप्राप्तिवदविशेषेणैव प्रजापतिलोकप्राप्त्यनन्तरं ब्रह्मलोकप्राप्तिरुच्यते। अतः ब्रह्मलोकशब्देनेह परब्रह्मलोक एव अभिप्रेतः न तु कार्यब्रह्म—(हिरण्यगर्भ) लोकः। ब्रह्मलोकाव्यवधानेन ततः पूर्वं पार्थक्येन प्रजापतिलोकस्योक्तत्वात् तस्य च निश्चयेन कार्यब्रह्मलोकवाचकत्वात्; तथाहि—'नहि तत्र ब्रह्मलोकशब्देन कार्यः स उच्यते इति वक्तुं शक्यम्। पार्थक्येन प्रजापतिलोकस्योक्तत्वात्। एवं सति-प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्यासम्भवात् तच्छङ्कापि भवितुं नार्हति'[2]।

पञ्चदशसूत्रमेतत्प्रतिपादयति यत् 'ब्रह्मविदाप्नोति परम्', 'सत्यं ज्ञानमनन्तं ब्रह्म', यो वेदनिहितं गुहायाम् परमे व्योमन्' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यादिश्रुतिवाक्यानुसारं ये 'सर्वं खल्विदं ब्रह्म' इति भावनया ब्रह्मोपासते ते एव ब्रह्मलोकं

---

१. कौ० १।२

२. अ० भा० पृ० १३५४–५६ (चौ०)

गच्छन्ति। ये च वस्तुविशेषं ब्रह्मभावनया उपासते तेषां प्रतीकावलम्बनत्वात् न ते तत्र गच्छन्ति। यतो हि एषा उपासना निम्नप्रकारेण उभयथा दोषदुष्टा—ब्रह्मणः सर्वव्यापकत्वे अपि तद्वस्तुविशेषे शुद्धब्रह्मातिरिक्तवस्तुभावना इत्येको दोषः। ब्रह्मातिरिक्ते वस्तुनि कस्यापि शुद्धभावना न उपलभ्यते तथापि तत्र उपासनार्थं ब्रह्मत्वभावनेति द्वितीयः। इत्थं च वस्तुतो यद् ब्रह्मरूपं तत्र अब्रह्मत्वनिश्चयः, यच्च ब्रह्मातिरिक्तं वस्तु तत्रोपासनार्थं ब्रह्मत्वभावनेत्युभयथा दोषदुष्टत्वम्।

एवं ज्ञानमार्गीयस्य व्यवस्थामुक्त्वा भक्ति मार्गीयस्य व्यवस्थां स इत्थमाह यत्—'सर्वं मद्भक्तियोगेन'……इति वचनात् न तस्योपासनापेक्षेति न प्रतीकादिसम्भावना। भक्तो हि इच्छामात्रेणैव अंजसा पुरुषोत्तमं नीयते। षोडशसूत्रमेतत्प्रतिपादयति यत् ज्ञानमार्गावलम्बिनां भक्तिमार्गावलम्बिनां च अयमेव भेदो यत् ज्ञानी ब्रह्म नीयते भक्तश्च पुरुषोत्तमम्।

निम्बार्कः सप्तमसूत्रतः चतुर्दशसूत्रं यावत् शंकरानुसारमेव व्याचक्षाणः ब्रह्मैव गन्तव्यत्वेन निर्दिशति किन्तु पंचदशसूत्रमित्थमुपसंहृत्य रामानुजवद् व्याचष्टे—'इति सिद्धान्तो भगवान् बादरायणो मन्यते'।

मध्वाचार्यः सप्तमसूत्रतः षोडशसूत्रं यावत् सर्वाणि सूत्राणि एकस्मिन्नेवाधिकरणे संदब्धानि मन्यते। तत्र सप्तमसूत्रतः चतुर्दशसूत्रं यावत् सर्वाणि सूत्राणि शंकरवद् व्याचक्षाणो बादरिजैमिन्योरुभयोर्मतं पूर्वपक्षत्वेन स्वीकृत्य बादरायणस्य च सिद्धान्तरूपेणाभ्युपगच्छन् यत्क्रतुश्रुत्या स्वीयाधिकारानुरूपं कार्यब्रह्म-परब्रह्मान्यतरद् उपासको नीयते इत्याकलयति। पंचदशसूत्रे 'प्रतीकालम्बना' इतिशब्दस्य 'स्वदेहे ब्रह्मदृष्टयः' इत्यर्थं कुर्वन् केवलम् इमे एव कार्यब्रह्मलोकं नीयन्ते, व्याप्तविष्णुदर्शनाश्च वैकुण्ठे परब्रह्म नीयन्ते इत्यर्थं करोति। तथाहि—

> प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम्।
> न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते॥
> अप्रतीकाश्रया ये हि ते यान्ति परमेव तु।
> स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्म सलोकताम्'॥

एवमतिरुचिकरी अर्थविभिन्नतेहावलोकिता। किमत्र सूत्रकारस्य याथातथ्येन तात्पर्यमिति तु यद्यपि अनिश्चितिगुहायामभिनिविष्टं तथाप्येतावन्मात्रमभ्युपगतेः न पर्याप्तो हेतुर्यत् ब्रह्मविषयको ज्ञानिज्ञानयोरुभय-

---

१. माध्वभाष्ये १७५ पृष्ठे उद्धृतं गारुडवचनम्

विधो भेदो न, तत्सिद्धान्तावयवस्तथागत्यर्थं निर्दिष्टो मार्गः विदुषो जीवात्मानं न केवलं कार्यब्रह्मलोकमेव अपि तु परब्रह्मलोकमपि नयति इति ।

---

## चतुर्थाध्यायस्य चतुर्थः पादः

पादपरिचय :—तृतीयपादे ब्रह्मोपासनाफलम् अर्चिरादिमार्गेणकार्यब्रह्मलोकप्राप्तिः निरूपिता । सम्प्रत्यस्मिन् चतुर्थपादे तज्ज्ञानफलम् इहैवब्रह्मप्राप्तिः 'निरूपयिष्यते' । यां किल ब्रह्मविदः दुःखात्यन्तनिवृत्तिपूर्वक ब्रह्मानन्दोपभुक्तिस्वरूपत्वात् मुक्तिं परिब्रुवते सा द्विविधा-एका जीवन्मुक्तिः द्वितीया च विदेहमुक्तिः । तत्र जीवतः, प्राणान् धारयतः शरीरस्य सतो मुक्तिः जीवन्मुक्तिः । विदेहस्य, विगतदेहस्य शरीररहितस्य मुक्तिर्विदेहमुक्तिः । तत्र अभ्यर्हितत्वात् बहुवक्तव्याभावाच्चादौ विदेहमुक्तिं निरूपयितुमिच्छुः सूत्रकारः मुक्तात्मनः स्वरूपं ज्ञानानन्दैश्वर्यं ब्रह्मणा सह तत्सम्बन्धं च आद्यसूत्रसप्तकाधिकरणत्रयेण प्रतिपाद्य अग्रे पादसमाप्तिपर्य्यन्तं जीवन्मुक्तिवर्णनं करोति । शङ्कराचार्येणात्रापि परापरविदुषो द्विविधो भेदः प्रदर्शितः । तत्राद्यसूत्रसप्तकं, परविद्वत्सम्बद्धम् । अवशिष्टानि चापरविद्वत्सम्बद्धानि । रामानुजनिम्बार्कमते सर्वत्रैव विद्वत्सामान्येनैव सम्बन्धः ।

प्रतिपाद्यसंकेत :—अस्मिन् पादे—

( १ ) शंकरमते पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तेः, उत्तरभागेन च सगुणब्रह्मविदः ब्रह्मलोकस्थितेर्निरूपणम् ।
( २ ) रामानुजमते ब्रह्मप्राप्तिरूपाया अपुनरावृत्ते र्निरूपणम् ।
( ३ ) निम्बार्कमते अर्चिरादिमार्गेण परब्रह्मप्राप्तानामाविर्भाववर्णनम् ।
( ४ ) मध्वमते परब्रह्मप्राप्तानां भोगनिरूपणम् ।
( ५ ) वल्लभमते च मुक्तौ पुरुषोत्तमप्राप्तिरूपफलानुभवप्रकारविवेचनपूर्वकं तत्पुरुषोत्तमस्वरूपविचारः ।

### सविश्लेषणप्रत्यधिकरणभाष्यपञ्चकसमीक्षणम्—

( ४।४।१-३ ) आद्यानां त्रयाणां सूत्राणां प्रथममधिकरणं शंकररामानुजनिम्बार्काचार्यत्रयमतेन एतत्प्रतिपादयति यत् ज्ञानादिसाधनानुष्ठानसम्पन्नो जीवात्मा अस्मात् शरीरादुत्थितः देहात्मभावनां परित्यज्य परब्रह्मसाक्षात्कुर्वन् तेनैव आत्मस्वरूपेण अभिनिष्पद्यते नागन्तुकेन अपररूपेणेति ।

चतुर्थं सूत्रं द्वितीयमधिकरणं शंकरानुसारेण मुक्तजीवात्मनः परमात्मना सह अविभक्तसम्बन्धं प्रतिपादयति। ब्रह्मैव सन् ब्राह्मणे 'तत्त्वमसि' इत्यादि श्रुतिषु अभेददर्शनात् मुक्तो जीवः निरतिशयानन्दब्रह्मरूपेणावतिष्ठते इति च तदर्थः।

रामानुजनिम्बार्कानुसारेण इह, किन्तु, अयं प्रश्नः समुत्तिष्ठते यत् 'सः अश्नुते सर्वान् कामान् सह ब्रह्मणा 'विपश्चिता' इति तैत्तरीयश्रुतौ[1] मुक्तात्मनः परमात्मना सहभावदर्शनात् "तत्वमसि' इत्यादौ[2] च तादात्म्यदर्शनात् किमयं परं ज्योतिरूपसम्पन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति आहोस्वित् तत्प्रकारतया तदविभक्तम्। तत्र अयं सिद्धान्तः यत् मुक्तो जीवात्मा परस्माद् ब्रह्मणः स्वात्मानमविभागेनानुभवति। परब्रह्मोपसम्पत्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात्। स्वात्मनः स्वरूपस्य च 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'ऐतदात्म्यमिदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' इति सामानाधिकरण्यनिर्देशैः, 'य आत्मनि तिष्ठन् आत्मनः अन्तरः यमात्मा न वेद यस्यात्मा शरीरम्' 'अन्तः प्रविष्टः शास्ता जनानाम् सर्वात्मा' इत्यादिभिश्च परमात्मात्मकस्य तच्छरीरतया तत्प्रकारभूतत्वेन प्रतिपादितत्वात् अविभागेन 'अहं ब्रह्मास्मि' इति मुक्तजीवानुभवः। 'भागाविरोधिभागेन जीव आत्मानमनुभवतीति' निम्बार्कसम्मतम्।

अत्र पुनरेतदवधेयं वर्तते यत् मुक्तात्मपरमात्मनोः सम्बन्धद्योतनाय सूत्रकारप्रयुक्तः 'अविभागेन' इत्येष शब्दः प्रकृत्या (१) अभेदेन (२) अविभागेन (३) भागाविरोधेन चेत्थं सन्देहत्रययुक्तः इति 'तदनन्यत्वमारम्भणशब्दादिभ्यः'[3] इत्यत्र कार्यकारणयोः सम्बन्धद्योतनाय अनन्यशब्दवत् तादात्म्यादिशब्दमपहाय सूत्रकारस्य नञ्विशिष्टो विभागशब्दप्रयोगः एतदनुमापयति यत् सूत्रकारः अस्मै विचाराय विशेषतां न प्रवृत्तवान्। पार्थक्यतादात्म्ययोः विभागाविभागयोः सत्वेनापि तदैकत्वेन च तयोः सामंजस्य वा स्थापयितुं तथा प्रयसितवान्।

पंचमषष्ठसप्तमसूत्राणां तृतीयमधिकरणं मुक्तात्मनः स्वरूपस्य विषये मतत्रयं प्रदर्शयति। तत्र जैमिनेरयमभिप्रायः यत् 'स्वेन रूपेणाभिनिष्पद्यते एष 'आत्मा'[4] इत्यत्रात्ममात्ररूपेण अभिनिष्पद्यते नागन्तुकेन पररूपेणेति प्रतिपादितमिदानीं किं तदात्मरूपमितिविशेषबुभुत्सायां

---

१. तै० २।१ २. छा० ८।७

३. ब्र० सू० २।१।१४ ४. छा० ८।३।४

'स्वप्नस्य रूपं ब्राह्मम्—अपहतपाप्मत्वादिसत्यसंकल्पत्वावसानम् तथा सर्वज्ञत्वं सत्येश्वरत्वं च; तेन रूपेण अभिनिष्पद्यते' इति। औडुलोमिश्चेत्थं स्वीकरोति यत् जीवात्मनां चैतन्यात्मकत्वात् चैतन्यात्मना अवस्थिते मुक्ते ब्रह्मणि सर्वज्ञत्वादिशब्दा व्यर्था एव। सिद्धान्तपक्षरूपेण उपस्थापितं बादरायणमतं त्वेतद् यद् मुक्तात्मनः पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमे अपि व्यवहारापेक्षया सप्रपंचनिष्प्रपंचत्वयोरविरोधात् चैतन्यात्मकत्वं सर्वज्ञत्वादिकञ्चोभयं तत्र संगच्छते। अत्रापि पुनः धारणाद्वयविभिन्नाचार्याणां प्रकारभेदेन सामंजस्यस्थापनम्। शंकरानुसारेण मुक्तात्मा पारमार्थिकचैतन्यस्वरूपस्तथापि व्यावहारिकरूपेण स सर्वज्ञत्वाद्यपहतपाप्मत्वादिगुणसम्पन्नः।

रामानुजनिम्बार्कानुसारेण, किन्तु, पूर्वोक्तधारणाद्वयं सत्यम्। अर्थात् मुक्तो जीवात्मा परमार्थतः चैतन्यस्वरूपः अपि सत्यसंकल्पत्वादिविशिष्टः। स च इत्थम्—यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रियावगते, चक्षुराद्यन्यज्ञानेन्द्रियावगतारूपकाठिन्यादयो न विरुध्यन्ते। तथैव प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य प्रज्ञानघनत्वे अपि अपहतपाप्मत्वंसत्यसंकल्पत्वादि धर्मसम्बन्धो वाक्यान्तरावगतो न विरुध्यते।

इत्थं च अत्र एतत्स्पष्टं संजायते यत् शंकराचार्यः एकत्वस्य पारमार्थिकत्वं, बहुत्वस्य च व्यावहारिकत्वमभ्युपगत्योभयोः सामंजस्यं स्थापयति। रामानुजनिम्बार्कौ चोभौ उभयोरपि एकत्व-बहुत्वयोः स्वस्वक्षेत्रे सत्यत्वमाकलयतः।

अत्र सूत्राक्षरार्थावलोकनेन रामानुजनिम्बार्कयोरर्थः शंकरार्थापेक्षया वरीयान् प्रतिभाति। यतो हि शंकरेण एतत्सूत्रस्वभाष्ये "एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमे अपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्यः अवगतस्य ब्राह्मस्य ऐश्वर्यरूपस्य अप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते" इत्यत्र पारमार्थिकव्यवहारशब्दौ स्वपक्षपुष्टीच्छया एव सन्निवेशितौ, सूत्रे तयोस्तदर्थस्य वा सर्वथा अभावात्। अत्र हि व्यावहारिकविषयस्य न कश्चिदपि सम्बन्धः। देहपातानन्तरं, स सम्बन्धो लुप्तः। परब्रह्मभावश्चावाप्तः। कश्च अयं परब्रह्मभावः इत्येतत्प्रसंगे जैमिन्यौडुलोम्योर्मते समुल्लिख्योभयोः सामंजस्यस्थापनपूर्वकं श्रुतिवाक्यैकतां प्रदर्शयन् भगवान् बादरायणः एकतः तत्परब्रह्मभावस्य विज्ञानघनत्वरूपमर्थं परतश्च सत्यसंकल्पत्वापहतपाप्मत्वप्रभृत्यर्थं प्रतिपादयति।

इत्थं च इदमेव सूत्रं शांकराद्वैतसिद्धान्तविरोधीति अद्वैतविरोधिनां निम्बार्कादीनां मतम् ।

एतावत्पर्यन्तं शंकरानुसारेण परा विद्या पादस्य विषयः आसीत् । अतः परमवशिष्टपादान्तं यावदपरा विद्या विषयीभविष्यति[1] ।

अष्टमनवमसूत्रयोःचतुर्थमधिकरणमेतत्प्रतिपादयति यत् विदुषः संकल्पादेव सर्वैश्वर्यप्राप्तिर्जायते, तथाहि—"स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" ।[2]

दशमसूत्रतः चतुर्दशसूत्रं यावत् पंचममधिकरणं मुक्तात्मनो देहसद्भावासद्भावविषयकमतत्रयं समुपस्थापयति—(१) यतो हि "संकल्पादेवास्य पितरः समुत्तिष्ठन्ति"[3] इति छान्दोग्यश्रुत्या पूर्वत्र विदुषो मनः संकल्पसाधनं सिद्धम् । इत्थं च प्राप्तैश्वर्यस्य विदुषः शरीरेन्द्रियैरप्यवश्यं भवितव्यम् इति सन्देहे "मनसा एतान् कामान् पश्यन्[4] रमते" इति श्रुत्या ब्रह्मलोके मनसैव केवलेन विहारप्रतिपादनात् मोक्षे सद्भावाभावः प्रमाणीक्रियते । देहेन्द्रियैश्च विहारे 'मनसा' इति विशेषणस्य वैयर्थ्यापत्तेः ।

( २ ) जैमिनिराचार्यस्तु "स एकधाभवति त्रिधाभवति"[5] इत्यादिश्रुतिप्रामाण्येन मुक्तं प्रति मनोवत् शरीरस्यापि सेन्द्रियस्य भावं मन्यते' शरीरभेदेन विना अनेकविधतायाः असम्भवात् ।

( ३ ) किन्तु बादरायण इत्थं स्वमतं सिद्धान्तरूपेण अवतारयति यत् 'मनसा' इति विशेषणात् अनेकधा भावविकल्पाच्चेति लिंगद्वयात् सशरीरतासंकल्पे सशरीरत्वम् अशरीरतासंकल्पे वा शरीरत्वमित्युभयप्रकारकं विदुष ऐश्वर्यं सत्यसंकल्पत्वात् संकल्पवैचित्र्याच्च संजायते । इत्थं च सशरीरो मुक्तो विद्वान् जाग्रदिवानन्दाननुभवति शरीरेन्द्रियरहितश्च स्वप्नक् इव इत्युभयथा सामञ्जस्यम् ।

पञ्चदशषोडशसूत्रयोः षष्ठमधिकरणमेवं प्रश्नमुत्थापयति यत् 'भावं जैमिनिर्विकल्पामननात्[6]' इत्यत्र जैमिनिमतेन मुक्तस्य शरीरास्तित्वामननात् , 'स त्रिधा भवति पञ्चधा भवति' इति श्रुतौ अनेकशरीरसर्गत्वाभिप्रेताच्च किं दारुयंत्रवन्निरात्मकानि शरीराणि सृज्यन्ते अस्मदादिशरीरव-

---

१. एवं परविद्याफलमुक्तम् , इदानीमपरविद्याफलं प्रपंचयति (र० प्र० २५२८)

२. छा० ८।२।१ ३. छा० ७।२।१

४. तत्रैव ८।१२।५ ५. तत्रैव ७।२६।२

६. ब्र० सू० ४।४

त्सात्मकानीति वा। सत्यपि च शरीरानेकत्वे आत्ममनसोर्विभागासम्भवेन तयोश्चैकेनैव शरीरेण योगादेकदैव कथमितरैः सह सर्वैरानन्दानुभवः। उत्तरं चैतस्येत्थं प्रतिपादितं यत् यथा एकः अपि प्रदीपः वर्त्यन्तरसंयोजितः अनेकप्रदीपभावमापद्यते एवं विद्वान् एकः अपि सन् ऐश्वर्ययोगात् अनेकभावमापद्य सर्वाणि शरीराण्याविशति। आत्ममनसोर्विभागानुपपत्तेरनेकशरीरयोगासम्भव इति तु न, सत्यसंकल्पत्वात् स एकमनोऽनुवर्तीनि समनस्कान्येवापराणि शरीराणि स्रक्ष्यति स्रष्टेषु च तेषु उपाधिभेदात् आत्मनः अपि भेदेनाधिष्ठातृत्वं योक्ष्यते। योगशास्त्रेषु च योगिनामेषा एव अनेकशरीरयोगप्रक्रिया, 'निर्माणचित्तान्यस्मितामात्रात्'[1] तथा 'प्रवृत्तिभेदेप्रयोजकं चित्तमेक[2]मनेकेषाम्' इति सूत्राभ्यां भवगता पतञ्जलिना सूचिता।

इदानीमयं सन्देहः यत् यदा शंकरो जीवात्मनो विभुत्वं स्वीकरोति तदा तन्मते अस्य प्रश्नस्यैव कथं सम्भवः?

रामानुजनिम्बार्कयोर्मते तु द्वितीयाध्यायतृतीयपादस्य एकोनविंशसूत्रतः द्वाविंशसूत्रं यावत् जीवात्मनः अणुत्वे साधिते उपपद्यते चैष प्रश्नः यत् कथं तस्य एकदैवानेकशरीरेषु आत्माभिमानः सम्भवेत्? एतस्य इदमुत्तरं यत् स स्वकीयचैतन्येन कर्तुं तथैव शक्नोति यथा एकस्यैव प्रदीपस्य एकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरप्रवेशः संजायते। इत्थं च एकदेहस्थितस्यैवात्मनः स्वचैतन्यात्मकप्रभया सर्वशरीरप्रवेशो नानुपपन्नः। अत एव संसारदशायाम् एकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनः अपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः संगच्छते, तत्रमुक्तामुक्तयोरियान् विशेषः यत् अमुक्तस्य, कर्मणा संकुचितज्ञानस्य, आत्मनः देहान्तरेषु आत्माभिमानानुगुणा व्याप्तिर्न संभवति; मुक्तस्य तु असंकुचितज्ञानस्य यथासंकल्पमात्माभिमानानुगुणा व्याप्तिरित्यमुक्तस्य कर्मनियामकम्, मुक्तस्य तु स्वेच्छया एव सर्वसम्भवः इति सर्वमनवद्यम्।

षोडशं सूत्रमेतत्प्रतिपादयति यत् 'तत्केन कं विजानी[3]यात्', 'न तु तद्द्वितीयमस्ति ततः अन्यद् विभक्तं यद् विजानी[4]यात्' इत्यादिषु सतीष्वपि विशेषविज्ञाननिवारकश्रुतिषु मुक्तात्मनः कथमनेकशरीरप्रवेशाद्यैश्वर्यसम्भव इत्यापपत्तिस्त्विह न सम्भवति उक्तश्रुतीनां सुषुप्ति

---

१. पा० यो० सू० ४।४।११ २ तत्रैव ४।५

३. बृ० उ० ४।५।१५ ४. तत्रैव ४।३।३०

सम्पत्त्यन्यतरविषयत्वात् । शंकरेण स्वीकृता इयमेवसम्पत्तिः, लयः कैवल्यं वा रामानुजनिम्बार्कमते मृत्युः उत्क्रान्तिः वा उच्यते । इत्थं च प्रकरण-वशात् क्वचित् काचित् श्रुतिः सुषुप्तिविषयिणी क्वचिच्च सम्पत्ति (लय) विषयिणीत्यदोषः । सर्वत्रैव शास्त्रे एवमेव सुषुप्तौ सम्पत्तौ (मृत्यौ उत्क्रान्तौ वा) संज्ञाहीनत्वं मुक्तावस्थायां च सर्वज्ञत्वं स्पष्टतया प्रतिपादितं वर्तते ।

सप्तदशसूत्रतः द्वाविंशसूत्रं यावदन्तिममधिकरणमेतत्प्रतिपादयति यत् जगदुत्पत्त्यादिव्यापारमतिरिच्य मुक्तात्मा सर्वथा परिपूर्णपरमात्मवदेव सर्वैश्वर्यसम्पन्नश्च जायते । अन्तिमसूत्रं च मुक्तात्मनः अनावृत्तिं पुनराग-मनाभाव सूचयति ।

मध्वाचार्यः अस्मिन् पादे मुक्तात्मना भुज्यमानान् भोगान् प्रतिपाद-यति 'ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते' यान् एव अहं शृणोमि यान् पश्यामि यान् जिघ्रामि तान् एव एते इदं शरीरं विमुच्य अनुभवन्ति' इति चतुर्वेदशिखायां दृष्टत्वात् । भविष्यत्पुराणे अपि—

मुक्ताः प्राप्य परं विष्णुं तद्भोगाल्लेशतः क्वचित् ।
बहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथंचन[1] ॥

दशमसूत्रतः चतुर्दशसूत्रं यावत् सर्वाणि सूत्राणि शंकररामानुजवदेव व्याख्यातानि । तत्र चतुर्दशसूत्रे ब्रह्मवैवर्तवचनानुसारं भोगोपयुक्तशरीर-निर्देशः—

स्वप्नस्थानां यथा भोगो विना देहेन भुज्यते ।
एवं मुक्तावपि भवेद् विना देहेन भोजनम् ॥
स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवद् भुक्त्या त्यागः कदाचन[2] ॥

पंचदशसूत्रे मुक्तात्मनः केवलपुण्यभोगानुभवप्रतिपादनम्—'शरीरमनु-प्रविश्यापि तत् प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति न तु दुःखादीन् यथा प्रदीपो दीपिकादिषु प्रविष्टः तत्स्थं तैलाद्येव भुंक्ते न तु तत्-काष्र्ण्यादि ।

षोडशसूत्रमेतत्प्रतिपादयति यत् स्वर्गे लोके न भयं किंचनास्ति' इत्यादौ स्वर्गशब्देन सुषुप्तिः मुक्तिर्वोच्यते न स्वर्गादिः । तदर्थं प्रमाण-स्वरूप स ब्रह्मवैवर्तपुराणवचनमुपन्यस्यति—

ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः ।
भुजते स्वसुखान्येव न दुःखादीन् कदाचन ॥

---

१. म० भा० पृ० १७७ २. म० भा० पृ० १८०

तीर्णा हि सर्वशोकान्ते पुण्यपापादिवर्जिताः ।
सर्वदोषनिवृत्तास्ते गुणमात्रस्वरूपिणः'[1] ॥

अवशिष्टेष्वपि सूत्रेषु एवमेव अर्थविषयकः अधिकरणविषयकश्च भेदो लक्ष्यते तानि चास्मत्प्रकृतलक्ष्यानुपयोगितया त्यज्यन्ते ।

वल्लभानुसारेण अयं पादः पुष्टिमार्गावलम्बिमुक्तात्मनां मुक्तिदशां निर्दिशति । तत्र प्रथमसूत्रमेतत्प्रतिपादयति यत् ब्रह्म सम्पद्यापि स्थितस्य मुक्तस्य जीवस्य स्वरूपात्मकभजनानन्दानुभवार्थमाविर्भावः पुनः विशिष्ट-शरीरोपलब्धिः ( नास्मदादिशरीरवत्साधारणशरीरोपलब्धिः ) भवत्येव । यतो हि 'सः अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति श्रुतिः मुक्तात्मनः पुरुषोत्तमेन सह सर्वकामभोगं वदति । स च विग्रहं विना न सम्भवतीति श्रुतिबलात् विशिष्टशरीरोपलब्धिर्मन्तव्या । इत्थमिह आविर्भावशब्दो वैचित्र्येण व्याख्यातः ।

पंचमषष्ठसप्तमसूत्राणि मुक्तात्मनः स्वरूपत्रयं जैमिन्यादिमतत्रयेण उपन्यस्यति । तत्र ब्राह्मेण ब्रह्मसम्बन्धिना शरीरेण ( अस्मदादिभौतिक-शरीरविरुद्धेनेत्यर्थः ) ब्रह्मणा भगवता एव स्वभोगानुरूपतया सम्पादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तान् कामान् अश्नुते इति जैमिनि-राचार्यो मन्यते ।

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः इति श्रुतौ घनपदेन ज्ञानात्मकविग्रहात्मकत्वं ब्रह्मणो बोध्यते । तथा च तादृशेन भोगकर्त्रा सह तादृशेनैव भाव्यमिति चिति (चिद्रूपे ब्रह्मणि) तन्मात्रेण, चिन्मात्रेण रूपेण कामान् भुंक्ते न तु विग्रहेण इत्यौडुलोमिराचार्यो मनुते । चिदात्म-कत्वं जीवस्य एतन्मते नैसर्गिकम् ।

बादरायणस्य च अयं सिद्धान्तपक्षः यत् श्रुतिषु भक्तस्य कामभोगो निरूपितः स यावता अर्थेन विना नोपपद्यते तावान् स श्रुत्यभिमतो मन्तव्यः । तथा च ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येवेति यथानुग्रहं स तादृशं तदाविश्य भगवदानन्दमश्नुते ।

अष्टमसूत्रमेतत्प्रतिपादयति यत् तस्यैव केवलं पराप्तिः संजायते यं स भजनानन्दं दातुं संकल्पविषयं करोति, 'यमेवैष वृणुते तेन लभ्यः' इत्यादि-श्रुतौ तथैव प्रतिपादनात् ।

---

१. तत्रैव पृ० १८१

दशमैकादशद्वादशसूत्राणि शंकरानुसारमेव व्याख्यातानि किन्तु एतन्मते तानि पुष्टिमार्गीयभक्तान् निर्दिशन्ति।

पंचदशसूत्रे एकांशोदाहरणमित्थं वैचित्र्येण प्रदत्तं वर्तते—भगवान्भक्तं प्रविशतीति भगवत्स्वरूपतां प्राप्तो भक्तो भगवता सह सर्वान् कामान् अश्नुते। एतच्च प्रदीपवत् संजायते अर्थात् यथा प्राचीनो दीपः स्नेहयुक्तायां नवीनवर्त्यां समाविष्टः तां स्वकार्यक्षमां करोति स्वयं स्नेहाधीनस्थितिश्च भवति तद्वदिहापीति बोध्यम्।

षोडशसूत्रे सम्पत्तिशब्दः पुष्टिमार्गीयमोक्षार्थको व्याख्यातः इति तद् व्याख्यानं शंकरव्याख्यानतुलां समारोहति। सम्पूर्णं सूत्रमेतदर्थकं यत् 'न तदश्नोतिकश्चन' इत्येतादृशवाक्ये सुषुप्त्यवस्थायां प्रतिपादितो भोगाभावः 'सर्वान् कामान् अश्नुते सह ब्रह्मणा विपश्चिता इत्यत्र प्रतिपादितः भोगः ब्रह्मसम्पत्तिं ( कैवल्यम् ) निर्दिशति।

सप्तदशसूत्रमित्थं वैचित्र्येण व्याख्यातं यत् मुक्तस्य ब्रह्मणा सह भोगकरणं जगत्सम्बन्धिलौकिककायवाङ्मनोव्यापाररहितं भवति; 'ब्रह्मविदाप्नोति परमित्युपक्रमेण मुक्तिप्रकरणात्, तत्र च लौकिकव्यापारस्यासंभवात्।

अन्तिमसूत्रे प्रतिपादिता अनावृत्तिः, भक्तानाम् ( पुष्टिमार्गीयाणाम् ) ज्ञानिनाम् ( मर्यादामार्गीयाणाम् ) चोभयेषामुच्यते। तत्र अनावृत्तिः शब्दात्।

अनावृत्तिः शब्दात् इत्थं पुनरुक्तेः समाप्तिबोधकत्वे अपि पूर्वेणानावृत्तिशब्देन पुष्टिमार्गीयभक्तविशेषाणां भगवन्निकटगतौ विशेषेण अनावृत्तिरित्यर्थोध्वनितः। परेण च अनावृत्तिशब्देन वेदरूपाच्छब्दात् उक्तसाधनात् मर्यादामार्गीयाणामनावृत्तिरित्यर्थोध्वनितः। एवमत्र वल्लभस्य शंकरेण सह मुक्तिभक्तद्वैविध्ये यत्किंचित्साम्ये अपि अन्तिमाध्यायस्य अन्तिमपादे पुष्टिमार्गीयफलस्यैव वल्लभमते मुख्यतया साधितत्वात् 'ब्रह्मविदाप्नोति परमितिश्रुत्युक्तं' ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्युक्तं च फलं सपरिकरं विचारितम्।

---

## उपसंहारः

अस्य अध्यायस्य प्रथमे पादे विशेषेण अविश्रान्तसाधनावलम्बनस्य नितरामावश्यकत्वं प्रतिपाद्य उपासनाकाले साधकस्य आत्मचिन्तनप्रकारो वर्णितः। उपासनासिद्धौ च जीवितपुरुषः कामवस्थां प्राप्नोतीत्यादिर्जि-

ज्ञास्यमपि मीमांसितम् । द्वितीयपादे ब्रह्मविदः अर्चिरादिमार्गद्वारा ब्रह्मलोकगमनस्य तत्र परब्रह्मप्राप्तेश्च वर्णनं कृतम् । तृतीयपादे च ब्रह्मविदः उत्क्रान्तौ मार्गस्य तत्प्राप्तव्यस्य च स्पष्टतः निर्देशो विहितः । ततश्चतुर्थपादे स्वरूपतावाप्तौ जीवस्य बन्धनमुक्तदशा अवधारिता । एवं ब्रह्मज्ञानावाप्तेः तत्फलस्य च मुख्यतः वर्णनेनास्यफलाध्यायनामसार्थक्यम् ।

इत्थं च प्रथमाध्यायतश्चतुर्थाध्यायपर्यन्तं क्रमशः ब्रह्मजीवजगत्स्वरूपम् , ब्रह्मणा सह जीवजगतोः सम्बन्धं परमपुरुषार्थावाप्तिसाधनभूतोपासनां च निर्दिश्य स्वस्वसिद्धान्तानुसारं सर्वैः आचार्यैः अन्ते एतत्प्रतिपादितं यद्वेदान्तसूत्राभिमतपरमनिःश्रेयसमवाप्य जीवो न पुनः कदापि संसारावर्ते पततीति ।



# तृतीय: अध्याय:

## ( भाष्यकारपंचकस्य संक्षिप्तः परिचयः )

### १ शंकरः

शंकराचार्यस्य आविर्भाव-स्थितिकालविषये यद्यपिमतभेदः तथापि बहुमतेन तस्याविर्भावः अष्टाशीत्यधिकसप्तशततमेशवीयवत्सरे तिरोभावश्च विंशत्यधिकाष्टशततमेशवीयवत्सरे मन्यते । एतद्विषये या सामग्री समुपलभ्यते तया इदं निश्चीयते यत् तस्य जन्म केरलप्रदेशीय-पूर्णानदीतटवर्ति-कलादीनामकग्रामे वैशाखशुक्लपंचम्यामभवत् । सुभद्रा-शिवगुरू च तस्य मातापितरौ । सुभद्रा स्वपत्यनुरूपमेव विदुषी धर्मपरायणा च पत्नी शिवगुरुश्च महाविद्वान् धर्मनिष्ठः ब्राह्मणः आसीत् किन्तु अतिक्रान्तप्रौढावस्थयोरपि तयोर्न काचिदपि सन्ततिरभवत् इति ताभ्यां श्रद्धाभक्तिपूर्वकं सकामभावनया भगवान् शंकरः समाराधितः। आशुतोषश्च ब्राह्मणदम्पत्योरुपासनया संतुष्टः अभीष्टं वरमदादिति शुभमुहूर्ते सुभद्रा दिव्यकान्तिपुत्ररत्नं प्रासोष्ट । स च शंकरकृपया उत्पन्न आसीदिति शंकराभिधानः समभवत् ।

परम्पराप्रामाण्येनेत्थमवगम्यते यत् अष्टवार्षिकः शंकरः सर्ववेदपारंगमो बभूव । अस्य गुरुः माण्डूक्योपनिषत्कारिकाकारः गौडपादशिष्यः गोविन्दाचार्यः आसीत् । तस्मादधिगतसकलशास्त्रः सः षोडशवर्षावस्थायां ब्रह्मसूत्रभाष्यं[1] विरचितवान् ।

शंकरः असाधारणप्रतिभाशाली धार्मिकसुधारकः दार्शनिकः कविश्चासीत् । स मुख्यासु दशसु उपनिषत्सु ब्रह्मसूत्रेषु श्रीमद्भगवद्गीतायां च अद्वैतवादटीकां विधाय स्वमतं स्थापितवान् ।

तस्य अलौकिकप्रातिभवैदुष्येण अतिप्रसन्नः तद्गुरुः काशीं गत्वा ब्रह्मसूत्रभाष्यं प्रणेतुमादिष्टवान् इति काशीमुपगतस्य तस्य ख्यातिरवर्द्धत । तत्सिद्धिमुग्धाश्च जनाः तस्य शिष्यत्वं स्वीकर्तुमुपचक्रमिरे ।

---

१. एस्० दासगुप्ता—ए हिस्ट्री आफ् इण्डियन फिलासफी प्रथमभागः पृ० ४३२

सनन्दनस्तस्य सर्वप्रथमः शिष्यः। स च पश्चात् पद्मपादाचार्यनाम्ना प्रसिद्धः अभवत्। जनश्रुत्या इत्थमवगम्यते यत् एकदा भगवान् विश्वनाथः चाण्डालरूपेण तमात्मानमदर्शयत्। तं परिचित्य प्रणतः शंकरश्च तेन ब्रह्मसूत्रेषु भाष्यं रचयितुं धर्मं च प्रचारयितुं समाज्ञप्तः। स च तदनुसारं यदा ब्रह्मसूत्रभाष्यं परिसमापितवान् तदा एकस्मिन् दिने कश्चिद् ब्राह्मणः गंगातटे तेन संगतः अभवत् स च शंकराद् ब्रह्मसूत्रेष्वेकतमस्य सूत्रस्य अर्थं पृष्टवान्। तस्मिन् सूत्रे तेन ब्राह्मणेन सह शंकरस्य अष्टौ दिनानि शास्त्रार्थः प्राचलत्। पश्चात् शंकरः परिज्ञातवान् यत् ब्राह्मणो भूत्वा साक्षाद् व्यास एव शास्त्रार्थं करोति। तदैव भक्त्या शंकरः तं प्रणम्य क्षमां प्रार्थितवान् इति तुष्टो व्यासस्तस्यायुः षोडशवर्षतः द्वात्रिंशद्वर्षाणि कृतवान्।

काश्यां तिष्ठन् शंकराचार्यः प्रायः सर्वान् प्रतिवादिनः पराजित्य ततः कुरुक्षेत्रमागत्य बदरिकाश्रममगमत्। तत्र कतिचित् दिनानि स्थित्वा कतिपयान् ग्रन्थान् व्यरचयत्।

बदरिकाश्रमात् प्रयागं गतः शंकरः कुमारिलभट्टेन साक्षात्कृतः तस्यकथनेन च मागध्यां माहिष्मत्यां नगर्यां मंडनमिश्रेण सह शास्त्रार्थं कर्त्तुमागतवान्। मंडनमिश्रश्च शंकरेण तत्र पराजितः तस्य शिष्यत्वं प्राप्तः पश्चात् सुरेश्वराचार्यनाम्ना प्रसिद्धिमगमत्।

मगधविजयानन्तरं शंकरो दक्षिणदिशमभिमुखो महाराष्ट्रे शैवान् कापालिकाँश्च पराजितवान्। ततस्तुंगभद्रातटे मन्दिरमेकं निर्माप्य तत्र शारदादेवीं स्थापितवान्। एवं सर्वत्र दक्षिणे धर्मध्वजामुद्धूयाद्वैतवेदान्तस्य महिमानं चोद्घुष्य पुनरुत्तरभारतं निवर्तमानो मार्गे निषध (बरार) प्रान्ते कतिचिद्दिनानि स्थित्वा उज्जयिनीमागतो भैरवभीषणसाधनाः समवसायितवान्। ततो गुर्जरप्रान्तमायातो द्वारकायां स्थापितैकमठः स्वशिष्यं हस्तामलकाचार्यं तत्र आचार्यपदे नियुक्तवान्। तदनन्तरं गंगाप्रान्तीयपण्डितान् पराजित्य शारदाक्षेत्रं काश्मीरमुपगत्य तत्रत्येषु पण्डितेषु विजयमानः स्वमतमतिष्ठिपत्। तत आचार्यः कामरूपमागतः तत्रत्यैः शैवैः सह शास्त्रार्थमकरोत्। तदनन्तरं बदरिकाश्रमं परावर्तितः तत्र ज्योतिर्मठं संस्थाप्य तोटकाचार्यं मठाधीशं कृत्वा केदारक्षेत्रमागतवान्। तत्र च कतिचिद्दिनानि स्थितो भारतस्य अयमुज्ज्वलप्रदीपो विंशत्यधिकाष्टशततमेशवीयवत्सरे निजायुषो द्वात्रिंशत्तमे वर्षे निर्वाणमलभत।

## २ श्री रामानुजाचार्यः

रामानुजाचार्यस्य जन्म सप्तदशाधिकदशशततमेशवीयवत्सरे दक्षिण-भारतस्य 'भूतपुर्याम् (वर्तमानपेरम्बुधुरनामकस्थाने) अभवत्। कान्ति-मतीकेशवयाजिनौ च तस्य मातापितरौ। अयं संकर्षणस्य अवतारः स्वी-क्रियते। एतदीयशैशववर्णनविषये विशेषसामग्री नोपलभ्यते। तथाऽप्ये-तावद् ज्ञायते यत् अस्य पिता इमम् अष्टमे वर्षे उपनीय षोडशवर्ष यावत् सर्वान् वेदान् अध्यापयामास। षोडशे वर्षे तस्य विवाहः समजायत। त्रयस्त्रिंशदधिकदशशततमेशवीयवत्सरे स वेदान्तमधिगन्तुं तदानीन्तनं सुविख्यातं श्रीयादवप्रकाशमाश्रितवान् किन्तु यदा कदा कस्मिँश्चिद्विषये गुरुशिष्ययोर्महान् मतभेदः समभवत्। त्रिचत्वारिंशदधिकदश-शततमेशवीयवत्सरे स यामुनाचार्यस्य शिष्यत्वं स्वीकर्त्तुं श्रीरंगं गतवान्। किन्तु तत्र प्राप्तेः पूर्वमेव श्रीयामुनाचार्यस्य मृत्युरभूदिति न तस्य तदि-च्छापूर्तिरजायत। अतः स कांचीं परावर्तितवान्। एकोनपंचाशदधिकदश-शततमेशवीयवत्सरे स यामुनाचार्यशिष्येण निजमातुलेन महापूर्णेन 'मधु-रान्तकम्' इति स्थाने दीक्षितः परित्यक्तपारिवारिकजनसम्बन्धः सन्यस्य तस्मादेव वेदान्तरहस्यं चाधिगत्य बहुकालमितस्ततो भ्रमणानन्तरम् अष्टादशाधिकैकादशशततमेशवीयवत्सरे श्रीरंगं परावर्तत। तत्र स्थितः स कथंचिदेतद् ज्ञातवान् यत् बोधायनेन ब्रह्मसूत्रेषु वृत्तिर्लिखिता सा च काश्मीरे वर्तते। तत्र स स्वशिष्यतां प्राप्तेन प्रतिभाशालिना कुरेशनाम्ना निजस्वस्रीयेण सहागमत्। स च ग्रन्थः काश्मीरे एकस्मिन् पुस्तकालये तेन समुपलब्धः किन्तु तदधिकारिभिः अध्ययनाय केवलमस्मै प्रदत्तः यश्च कुरेशेन कण्ठस्थीकृतः इतितत्साहाय्येनैव रामानुजः ब्रह्मसूत्रभाष्यं विरचय्य तदादाय पुनः काश्मीरं गतः तत्रत्यान् विदुषः प्रदर्शयमास। ते चातिसंतुष्टा भाष्यं प्रशस्य 'श्रीभाष्यम्' इति च तन्नाम कृत्वा रामा-नुजाय हयग्रीवस्यैकां मूर्तिमुपजह्रुः।

वेदान्तसारः, वेदार्थसंग्रहः, वेदान्तदीपः, भगवद्गीताभाष्यं च तस्य अन्ये ग्रन्थाः। स दक्षिणभारते पर्य्याप्तं पर्य्यटनं स्वकीयं सिद्धा-न्तं च प्रचारयन् सप्तत्रिंशदधिकैकादशशततमेशवीयेवत्सरे तदनुसारं चतु-

---

१. अस्याः पुर्याः माहात्म्यं स्कन्दपुराणान्तर्गतभूतपुरी माहात्म्ये इत्थ-मुपलभ्यते—

> यत्तुभूतपुरं नाम नगरं पापनाशनम्।
> तस्य दर्शनमात्रेण नरः पापैः प्रमुच्यते।

नवत्यधिकैकादशशततमे वैक्रमाब्दे माघशुक्लदशम्यां[1] शनौ विंशत्यधिकशतावस्थायां विष्णुलोकमगात्।

## ३ श्रीनिम्बार्काचार्यः

भेदाभेदसम्प्रदायस्य सर्वप्रथमः प्रवर्तकः निम्बार्काचार्यः यदाकदा स [2]आद्याचार्यः भास्कराचार्य इति वा उच्यते। नियमानन्द इति तस्य प्राचीनं [3]नाम। स शैशवादेव कृष्णस्य परमभक्तः आसीत्। स च विष्णोः सुदर्शनचक्रस्य साक्षादवतारो मन्यते अस्य सम्प्रदाये एतत् प्रचलितं यत् अयं सूर्यस्य अवतारः पाखण्डान्धकारं विनाशयितुं भूमण्डलमवातरत्। जनश्रुतिर्द्रढयति यद् जयन्ती देवी अरुणमुनिश्च तस्य माता पितरौ आस्ताम्। अन्येषां मते सरस्वती-जगन्नाथौ च तत्पितरौ। निम्बापुरं तस्य जन्मस्थानम्। तच्च आन्ध्रप्रदेशे निम्बा 'नैदूर्यपट्टन' इति वा नाम्ना प्रसिद्धम्। स च तेलगु ब्राह्मणः। अक्षयतृतीया चैतस्य जन्मदिवसम्।

कृष्णदासकृतचैतन्यचरितामृते[4] कृतायामणुभाष्यनामकनिजव्याख्यायां श्रीमद्वार्षभानवीदयितदासेन इत्थं प्रतिपादितं यत् निम्बादित्यस्य जन्म मुँगेरपट्टनग्रामे अभवत्। श्रीनिवासाचार्योदयश्च तस्य एकोनत्रिंशत् शिष्या आसन्।

नाभादासकृतभक्तमालतः[5] इत्थं ज्ञायते यत् एकदा कश्चित् दण्डी जैन उदासीनो वा वृन्दावनसमीपस्थम् अस्य आश्रमं समागतवान्। परस्परमुभयोर्मध्ये ब्रह्म-विचारः प्राचलत् इति आसायं भोजनव्यवस्था न संजाता। तदनन्तरं च भोजनायाहूतः अतिथिः एतदर्थं तत्र भोजनाग्रहं प्रत्याख्यातवान् यत् दण्डिनो जैनस्य वा सन्ध्यायां रात्रौ च भोजनं निषिद्धम्। एतत् श्रुत्वा उक्त आचार्यः निजेष्टदेवं दध्यौ। स चाशु तत्र तत्साहाय्यार्थमागत्य स्वकीयं सुदर्शनचक्रमस्ताचले स्थापयामास यच्च अनस्तंगतसूर्य इव अवलोक्यते स्म। स च साधवे एकस्मात् निम्बवृक्षस्य शिखरात् प्रदर्शितः। तं च दृष्ट्वा स नियमानन्देन सह भोक्तुमुपयुजे भोजनानन्तरम् अन्धतमसं संजातम् येन अतिथिः घटनाया वस्तुगतिं

---

१. डा० के० डी० भारद्वाज—दि फिलासफी आफ रामानुज पृ० ८

२. सिद्धान्तजाह्नवी पृ० २०१; सिद्धान्त सेतुकम् पृ० १७२

३. वेदान्तरत्नमंजूषा पृ० १

४. कृष्णदासकृत चैतन्य चरितामृतम् पृ० ४; ५. भक्तमाल

परिजज्ञे । गमनवेलायां स नियमानन्दमित्थमुक्तवान् यत् त्वं माम् निम्ब-शिखरात् स्वभक्त्या सूर्यं प्रादर्शयः अतः त्वमतः परं निम्बार्कनाम्ना निम्बादित्यनाम्ना वा प्रसिद्धो भविष्यसि । ततः परं तस्यैतन्नाम प्रसिद्धिं गतम् । अतः परमस्य जीवनविषये न किमप्युपलभ्यते ।

डा० भण्डारकरमहोदयस्य एतत्कथनं यत् निम्बार्कस्य मृत्युः प्रायः द्विषष्ट्यधिकैकादशेशवीये वत्सरे अभूदिति तस्य समयः द्वादशशताब्द्याः आदिः एकादशशताब्द्या अन्तो वा अस्ति । भविष्यत्पुराणपरिशिष्टे[1] एतत्कथितं वर्तते यत् निम्बादित्यो विष्णुस्वामिनः पश्चात् मध्वाचार्य-स्य च पूर्वमभूत् । अयं च मध्वाचार्यः नवनवत्यधिकैकादशेशवीयवत्सरे अभूत् । एतेनापि तस्य स्थितिः एकादशशताब्द्यां निश्चीयते ।

## ४ मध्वाचार्यः

द्वैतवादस्य तथा मध्वसम्प्रदायस्य तात्त्विकसिद्धान्तानां प्रचारकः श्रीमध्वाचार्यः आसीत् । अस्य जन्म दक्षिणतुलुवदेशस्य बेलिग्रामे नवन-वत्यधिकैकादशशततमेशवीयवत्सरे आश्विनशुक्लदशम्यामभवत् । अस्य पितुः नाम मधिजी( मध्यगेह )भट्टस्तथा मातुर्नाम वेदवती आसीत् । शैशवकाले अस्य नाम वासुदेव आसीत् । प्रारम्भत एवायं वैराग्यसम्पन्नः अभवत् इत्येकादशवार्षिक एव सः अद्वैतमतसन्यासिनः श्री अच्युत-पक्षाचार्यतः दीक्षां गृहीतवान । अत्र अस्य नाम् पूर्णप्रज्ञ इति प्रसिद्ध-मभवत् । कतिपयवर्षानन्तरमयं वेदान्तपारंगमः संजात इति गुरुणा आनन्दतीर्थ इति नाम कृत्वा मठाधीशत्वे नियोजितः ।

अयमत्यन्तकोमलहृदय आसीदिति यज्ञे शालिचूर्णस्य अजेन बलिप्रथां प्रचार्य पशुहिंसां निवारितवान् ।

आनन्दतीर्थः अत्यन्तकर्मनिष्ठ आचार्य आसीत् । अनेन गीताभाष्य-ब्रह्मसूत्रभाष्यादीनां प्रायः सप्तत्रिंशद्ग्रन्थानां रचनां कृतवान । सर्वमूल-नामकस्तेषां सर्वेषां संग्रहः कुम्भकोणमित्यत एकः, अन्यश्च बेलगाँवतो हिन्दीभाषायां प्रकाशितः ।

अस्य शिष्येषु त्रिविक्रमनामा प्रसिद्धो विद्वानभवत् । अस्य पुत्रेण नारायणेन मध्वाचार्यस्य जीवनचरितविषये मध्वविजय–मणिमंजरी-नामकग्रन्थद्वयं लिखितम् ।

---

1. विष्णु स्वामी प्रथमतो निम्बादित्यो द्वितीयकः ।
मध्वाचार्यस्तृतीयस्तु तुर्यो रामानुजः स्मृतः ॥
[ भविष्यत्पुराणपरिशिष्टम् अ० २१ ]

मध्वाचार्यस्य देहावसानं[1] त्र्यधिकत्रयोदशशततमेशवीयवत्सरे अभव-दिति मन्यते। तन्मतसिद्धान्तस्य संक्षेपः निम्नांकितश्लोके प्रदत्तः—

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत् तत्त्वतो
भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः।।

## ५ वल्लभाचार्यः

चतुर्षु वैष्णवसम्प्रदायेषु रुद्रसम्प्रदायः अन्यतमः। अयमेव च शुद्धाद्वैतवादी सम्प्रदायः कथ्यते। अस्यार्वाचीनः प्रवर्तकः प्रचारकश्च वल्लभाचार्यः। अस्मिन् सम्प्रदाये बालगोपालविग्रहस्य पूजा संजायते। श्रीरुद्रदेवेन बालखिल्यर्षिभ्यः प्रदत्त उपदेशः शिष्यपरम्परया विष्णुस्वामिनं प्राप्तः शुद्धाद्वैतनाम्ना प्रचारितः। श्रीवल्लभाचार्यो हि अस्य सिद्धान्तस्य न आदिमः प्रवर्तकः अपि तु केनापि आचार्येण दीक्षितः अयमिमं सिद्धान्तं प्रसारितवान्। तेनैव च एतन्मतानुसारं ग्रन्थान् लिखितवान्। एतन्मतं माध्वमतेन बाहुल्येन साम्यमुपैति।

श्रीवल्लभाचार्यस्य जन्म पंचत्रिंशदधिकपंचदशशततमे वैक्रमे अब्दे वैशाखकृष्णैकादश्यां रायपुरमण्डलान्तर्गतचम्पारण्यस्थाने समभवत्। श्रीयल्लभागारु-लक्ष्मणभट्टौ अस्य मातापितरौ। अयम् आपस्तम्बसूत्रो, भारद्वाजगोत्रीयः उत्तरादितैलंगो ब्राह्मणः। अस्य पूर्वजा दक्षिणभारतस्य कांकरवाउनामकग्रामे न्यवसन्।

सोमयज्ञक्रिया हि लक्ष्मणभट्टस्य वंशपरम्परीणा। एवमनुश्रूयते यद् यस्य वंशे सोमयज्ञशतं पूर्यते तस्य वंशे भगवतः भागवतस्य वा आविर्भावः संजायते। एतन्नियमानुसारं श्रीलक्ष्मणभट्टकाले सोमयज्ञशतं पूर्तिमगच्छत् इति वल्लभाचार्यरूपेण अस्मिन् वंशे भगवतः अवतारः समजायत। सोमयज्ञपूर्तिमुपलक्ष्य लक्षसंख्यकब्राह्मणान् काश्यां भोजयितुं प्रस्थितस्य सपत्नीकस्य लक्ष्मणभट्टस्य अयं द्वितीयः पुत्रः मार्गे 'चम्पारण्य'नामकस्थाने समुदपद्यत।

यथासमयं द्विजातिसंस्कारैः संस्कृतः अयमेकादशवार्षिक एव काश्यां श्रीमाधवेन्द्रपुरीतः सम्पूर्णवेदशास्त्रादीन् अधिगतवान्। काशीतः

---

1. डा० बी० एन० के० शर्मणा कतिपयप्रमाणैः अस्य समयः १२३८–१३१७ ई० इति निर्धारितः। द्रष्टव्यम्—द्वैतस्कूल आफ वेदान्त. पृ० ७०२–३

स वृन्दावनं गतः। कंचित्कालं तत्र निवासं च कृत्वा तीर्थान् पर्यटितुं निरगच्छत्। विजयनगरस्य राज्ञः कृष्णदेवस्य सभायां स्थितश्च महतो विदुषः शास्त्रार्थे पराजित्य वैष्णवाचार्यस्य उपाधिम् उपात्तवान्। राज्ञा च महामान्यानां विदुषां समक्षमेव स्वर्णसिंहासनमारोह्य वल्लभाचार्यः सांगोपाङ्गं पूजितः बहु हिरण्यादिकं च उपहृतः। किन्तु तस्मिन् काले वल्लभस्तस्माद् द्रव्यादेः किंचिदेव गृहीत्वा अवशिष्टं सर्वं ब्राह्मणेभ्यो विद्वद्भ्यश्च वितीर्णवान्। राज्ञः कृष्णदेवस्य राज्यकालः नवाधिकपंचदशशततमेशवीयवत्सरं यावन्मन्यते इति वल्लभः षोडशशताब्दीप्रारम्भे वर्तमान आसीदिति निर्विवादम्।

श्रीवल्लभो विजयनगराद् उज्जयिनीमागतवान्। तत्र च शिप्रानद्याः तटे वर्तमानस्य एकस्य अश्वत्थवृक्षस्य अधोभागे अतिष्ठत्। स चाद्यावधि तन्नाम्ना प्रसिद्धो वर्तते। मथुराया एकस्मिन् घट्टे अपि एकं तन्निवासस्थानम्।

कतिपयवर्षानन्तरं भगवान् श्रीकृष्णः तस्य अचलभक्त्या प्रसन्नः तस्मै दर्शनं प्रदत्तवान्। एतत्प्रसिद्धं यत् कृष्णप्रेरणया एव स ब्रह्मसूत्राणाम् अणुभाष्यं विरचितवान्। तत्रत्यं शांकरं मतं खण्डयित्वा स्वमतं चातिष्ठिपत्।

निजैहिकजीवनकार्याणि समाप्य स काश्याम् एकस्मिन् दिने गंगास्नानार्थं गतः। तत्र उत्थिते एव स्नाति तस्मिन् अग्निज्वालैका समुत्थितेति पश्यत्सु एव जनेषु श्रीवल्लभः सदेहः आकाशमुत्थितः तत्रैव विलीनः समजायत। काश्यां 'हनुमान्घट्टे' तस्य एकं मन्दिरमद्यावधि वर्तते। इत्थं सप्ताशीत्यधिकपंचदशशततमे वैक्रमाब्दे द्विपंचाशद्वर्षायुष्कः स ऐहिकलीलां समापत्।

अणुभाष्यम्, श्रीमद्भागवतस्य सुबोधिनीटीका, सिद्धान्तरहस्यम् इत्यादयः अनेके तस्य ग्रन्थाः।

## भाष्यपंचकबहिरंगपरिचयः

परिभाषा—झलकीकरमहोदयेन निजन्यायकोषे इत्थं भाष्यस्य परिभाषा दत्ता वर्तते—

> सूत्रार्थो वर्ण्यते येन शब्दैः सूत्रानुसारिभिः।
> स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो [1]विदुः॥

1. झलकीकरन्यायकोषः पृ० ६२७

इत्थं च सूत्रसन्निहिताखिलतात्पर्यावबोधकव्याख्यानं भाष्यमिति सिद्धम् । एतद्धि स्वसन्निहितनिजविभिन्नवैशिष्ट्यम् एकं विशेषविधं व्याख्यानम् ।

सूत्राणामतिगूढार्थतया तेषां तात्पर्यबोधनाय परायत्ता अपि आचार्याः स्वकीयस्वतन्त्रविचारप्रकाशकपदवाक्यादिसन्निवेशेन सूत्राक्षराणां च यथाभिमतार्थकरणेन निजसिद्धान्तं संस्थापयितुं स्वायत्ता आसन्निति तदर्थावबोधनसहायकरूपेण, स्वभावतः यत्र तत्र यत्किंचित्परिवर्तनेन, मौलिकसूत्राणि सपरिष्कारमुपाबृंहयन् ।

स्वल्पाक्षरैरेव वाक्यार्थावबोधनं हि सूत्राणां लक्ष्यमिति यथाशक्याल्पाक्षरसंदृब्धानि इमानि सूत्राणि अतिसंक्षिप्तान्यपि यत्र कुत्र वाक्यार्थगर्भितार्थानि इति न स्पष्टं भावं सविस्तरं प्रकटीकुर्वन्ति । अतः तेषां तात्पर्यम् अल्पबुद्धिभिः अनुमातुम् अशक्यम् तज्जिज्ञासुषु कृपापरायणाः परम्परागताध्ययनाध्यापनप्रणाल्या सम्यगवबुद्धतदर्थाः आचार्याः येन व्याख्यानेन इमां न्यूनतामपाकार्षुस्तत्साहित्यं भाष्यमुच्यते ।

## प्रारम्भः (रचनाकालः)

भाष्याणां रचना वेदांगकाले जाता । निरुक्तं च तत्र सर्वप्रथमं भाष्यमिश्रितवेदांगम् । तदेव भाष्यप्रणाल्या विरचितग्रन्थानामादिममिति वक्तुं शक्यते । कालक्रमानुसारेण अन्यसूत्रग्रन्थानामप्यर्थावबोधनाय भाष्यविरचनप्रणाली प्रचलिता ।

पाणिनिसूत्रेषु पतंजलिनिमितं भाष्यं सर्वप्रथममतिमहत्त्वपूर्णं च भाष्यम् । अस्य निर्माणपद्धतिः मुख्यस्वरूपाभिव्यंजिकेत्यतिविस्तृतत्वेन महत्त्वपूर्णत्वेन चैतद् 'महाभाष्यम्' उच्यते । तस्य च समयः ईशवीयपूर्वद्वितीयशतकमध्यकालो [1]निर्धारितः ।

भारतीयास्तिकदर्शनेषु सर्वप्रथमं जैमिनिसूत्रेषु शबरस्वामिनो मीमांसाभाष्यम् । राज्ञो विक्रमादित्यस्य पितृत्व प्रतिपादयतः एकस्य श्लोकस्य प्रामाण्येन गंगानाथझामहोदयः शबरस्वामिनमीशुतः सप्तपंचाशद्वर्षपूर्वकालिकं मन्यते । क्रमबद्धाधिकरणसूत्रे चैतस्मिन् भाष्ये—

> विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
> निर्णयश्चेति पंचांगं शास्त्रेऽधिकरणं विदुः[2] ॥

१. P. Masson oursel : Comparative philosophy P. 74.

२. सर्वदर्शनसंग्रहः पृ० २६१

अधिकरणस्य इमे सर्वे नियमा यथावत्परिपालिताः ।

ईशवीयचतुर्थशताब्दीनिर्मितम् अपरमपि भाष्यत्रयम्, तथाहि—गौतमसूत्रेषु ईशवीयचतुर्थशतकप्रारम्भकालिकेन वात्स्यायनेन विस्तृतं भाष्यं लिखितम्। ततः परं कणादसूत्रेषु प्रशस्तपादभाष्यम्। प्रशस्तपादो हि वात्स्यायनात् परकालिकः ईशवीयचतुर्थशताब्दीक इति-दासगुप्तः[1]।

योगसूत्रेषु कृतं व्यासभाष्यमपि चतुर्थशताब्दीकालिकम् उत्तमं-भाष्यम् । ईश्वरकृष्णनिर्मितसांख्यकारिकासु कृतं गौडपादभाष्यम्। अयं च गौडपादः ईशवीयाष्टमशताब्दीकः इति राधाकृष्णनमहोदयः[2]।

## ( शङ्करस्य शारीरकभाष्यम् )

अतः परमायान्ति ब्रह्मसूत्रभाष्याणि। ब्रह्मसूत्रेषु उपलभ्यमानं सर्व-प्रथमं शंकराचार्यस्य शारीरकभाष्यम् ब्रह्मसूत्रेषु शंकराचार्यस्य एत-द्भाष्यं दार्शनिकान्तर्दृष्टिसंवलितं नितरां मौलिकम् । सूक्ष्मातिसूक्ष्म-गम्भीरविचारपरिपूर्णमेतद्भाष्यं प्राच्यपाश्चात्यदार्शनिकविद्वद्भिरैकमत्येना-द्वितीयं स्वीक्रियते ।

एतन्मते अद्वैतश्रुतयः पारमार्थिकसत्यं द्वैतश्रुतयश्च व्यावहारिकसत्य-मभिव्यंजन्ति इत्येतस्य दार्शनिकमतं पारमार्थिकरूपेण धर्ममतं च व्याव-हारिकरूपेण सत्यं वर्तते ।

## ( रामानुजस्य श्रीभाष्यम् )

शंकराचार्यस्य शारीरकभाष्यानन्तरं रामानुजस्य श्रीभाष्यमा-याति । एतद्भाष्यं मुख्यतः बोधायनवृत्तेः ( इदानीमनुपलब्धायाः ) अनुसारीति 'अथातो ब्रह्मजिज्ञासा' ( ब्र० सू० १।१।१ ) इत्यस्य भाष्ये रामानुजः। अस्य भाष्यस्य वास्तविकं मूल्यमनङ्क्यम् । अस्य पाठकस्य हृदये आदितः अन्तपर्य्यन्तं पदे पदे विशेषतो विवादास्पद-स्थानेषु उपलभ्यमानं शंकरसिद्धान्तालोचनं व्याख्यातुर्मनीषाचमत्कृति-मभिद्योतयति ।

---

१. एस् दासगुप्तः—ए हिस्ट्री ऑफ इण्डियन फिलासफी. प्र० भागः पृ० ३०६

२. एस् राधाकृष्णन महोदयः—इण्डियन फिलासफी. द्वि० भागः पृ० २५५

## ( निम्बार्कस्य वेदान्तपारिजातसौरभम् )

ततः परं निम्बार्कभाष्यं ब्रह्मसूत्रेषु अतिसंक्षिप्तं वेदान्तपारिजातनाम्ना प्रसिद्धम् । बहुषु स्थलेषु एतद्भाष्यपद्धत्या इत्थमवगम्यते यदेतद्भाष्यं रामानुजभाष्यानुसारि वर्तते। अस्य भाष्यस्य उपरि श्रीनिम्बार्काचार्यशिष्येण श्रीनिवासाचार्येण वेदान्तकौस्तुभनाम्नी टीका कृता । श्रीनिवासाचार्यः आत्मानं साक्षान्निम्बार्कशिष्यं प्रतिपादयति । 'अथातो ब्रह्मजिज्ञासा' ( ब्र० सू० १।१।१ ) इत्यस्य व्याख्यां प्रारिप्सुः स इत्थमपि निर्दिशति यत् 'तदाज्ञया ( गुरुवर्यश्रीनिम्बार्काज्ञया ) तदुक्तवर्त्मना तदनुग्रहकामेन तच्छिष्येण मया मृदुमितपदो वेदान्तकौस्तुभः……विरच्यते' ( वे० कौ० १।१।१ ) निम्बार्कवदेव सः अपि पारिजातसौरभस्य पंक्तीः अतिसरलया मितभाषया च व्याख्यातवान् ।

## ( मध्वभाष्यम् )

ततः परकालिकम् आनन्दतीर्थ-पूर्णप्रज्ञ–मध्व–मन्दिरापरनामकमध्वाचार्यनिर्मितं मध्वभाष्यम् । द्वैतसिद्धान्तस्थापकमेतद्भाष्यं विशेषतः स्मृत्याधारेण भगवन्तं विष्णुमेव परात्परं शंकरस्य ब्रह्मस्थानीयं तत्त्वं मनुते ।

## ( अणुभाष्यम् )

वल्लभस्य मुख्यभाष्यकारपंचके ब्रह्मसूत्राणामन्तिमो भाष्यकारो वल्लभाचार्यः । स च अणुभाष्यं विरचितवान् । एतदीयविभिन्नपद्धत्या, इत्थं श्रूयते, यदस्य प्रारम्भात् तृतीयाध्यायद्वितीयपादपर्यन्तो भागः वल्लभकृतः तदग्रिमः षट्पादीयांशश्च तद्द्वितीयपुत्र–विट्ठलकृतः । इत्थं च 'स्थानविशेषात् प्रकाशादिवत्' (ब्र० सू० ३।२।३४) एतत्सूत्रपर्यन्तमेतद्भाष्यम् स्वयं वल्लभेन लिखितं, ततः परं तत्पुत्रेण विट्ठलेशेनेति प्रसिद्धिः । अस्य भाष्यस्य असाधारणी वैदुषी, व्याख्यानक्रमपद्धतिः, अपूर्वमार्मिकदार्शनिकान्तर्दृष्टिश्चाणुभाष्यम् उत्कृष्टस्थाने स्थापयति ।

## प्रमाणमीमांसापूर्वकविषयविवेचनपद्धतिः

इमानि सर्वाणि भाष्याणि शास्त्रार्थप्रणाल्या ( वादपद्धत्या ) लिखितानि वर्तन्ते । वादश्च खलु गौतमसूत्रवृत्तौ वात्स्यायनानुसारेण 'नाना-

प्रवक्तृकः प्रत्यधिकरणसाधनः अन्यतराधिकरणनिर्णयावसानः वाक्य-समूहः'[1]। सर्वदर्शनसंग्रहानुसारेण च तत्त्वनिर्णयफलः कथाविशेषो वादः[2]। इत्थं च सर्वथा सत्यनिर्णयो वादः इति प्रसिद्ध्या 'वादे वादे जायते [3]तत्त्वबोधः' इत्यादौ तथैव तस्य प्रयोगो दृश्यते।

भाष्यकारैः गृहीता एषा वादपद्धतिः बादरायणस्य सूत्राणां रचना-कालत एव प्राचलत्। ब्रह्मसूत्रेषु एव 'प्रतिज्ञा[4]हानिः, [5]अनवस्था, इतरे-तरा[6]श्रयत्वम्' इत्याद्येतादृशानेकपारिभाषिकशब्दानां प्रयोगो लभ्यते। एतेषां शब्दानां सम्बन्धः विशेषेण वादपद्धत्या (शास्त्रार्थप्रणाल्या) एव वर्तते। एतस्मिन् प्रसंगे 'स्वपक्षदो[7]षाच्च' एतत्सूत्रद्वयं विशेषेण द्रष्टव्यम्। एतदानुपूर्विसूत्रद्वये एवंभूता युक्तयः उत्थापिताः यासां पर्यवसानं निरनु-योज्यानुयोगनामकनिग्रहस्थाने संजातं वर्तते।

अस्यां पद्धतौ प्रमाणानां महत्त्वपूर्णं स्थानम्। स्वपक्षपुष्ट्यर्थं हि तेषामनुपदम् आवश्यकत्वम्। प्रमाणरहितं च न किमपि मान्यतापदवी-मारोहति। अत एव चित्सुखाचार्येणापि 'मानाधीना [8]मेयसिद्धिः' इति प्रतिपादितम। प्रमाणमेव हि न्यायशास्त्रस्य आधारः अत एव च तत् 'प्रमाणशास्त्रम्' उच्यते। प्रमाण[9]साहाय्येन यस्य कस्यचिदपि सूक्ष्मसमी-क्षणं तल्लक्ष्यप। प्रमाणमेव[10] च ज्ञानप्राप्तेरेकमात्रं साधकतमं कारणम् इति प्रामाणिकनिष्कर्षः तत्रैव निर्विभर्ति। अत एव प्रमाणानां स्वरूपे तत्क्षेत्रे च ज्ञाते सति तल्लक्षणसमन्वयेन सरलतया वास्तविकं ज्ञानमुप-जायते इति न्याय(तर्क)प्रस्थाने वेदान्तदर्शने तद्विवेचनस्यात्यन्ता-वश्यकत्वम्।

---

१. वात्स्यायनभाष्यम् पृ० ६ २. सर्वदर्शनसंग्रहः पृ० १३९

३. सुभाषितम्

४. प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः (ब्र० सू० २।३।६)

५. अनवस्थितेरसंभवाच्च नेतरः (ब्र० सू० ४।१।१५)

६. इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वात् (ब्र० सू० २।२।१९)

७. ब्र० सू० २।१।१० तथा तत्रैव २।१।२९

८. चित्सुखी १।१८

९. प्रमाणैरर्थपरीक्षणं न्यायः (वात्स्यायन भाष्यम् पृ० ३)

१०. 'प्रमायाः करणं प्रमाणम्' तर्कभाषा पृ० १३ तथा तर्कसंग्रह दीपिका पृ० २४

तेषां प्रमाणानां मीमांसा भिन्नभिन्नदर्शनेषु भिन्नभिन्नरूपेण कृता वर्तते। तेषां संख्या अपि प्रातिस्विकरूपेण भिन्ना तथापि प्रकृतभाष्यपंचकपरिचये प्रकृताचार्यपंचकमीमांसितप्रमाणानामेव संक्षिप्तनिर्देशः प्रासंगिकः।

प्रमाणबलेनैवास्माकं यथार्थज्ञानं जायते। यथार्थज्ञानमेव च प्रमा। कालान्तरीणानुभवेन प्रमाणान्तरेण वा यन्न मिथ्या तदेव यथार्थम् इति। तथ्यानां यथार्थताया विरोधाभावस्य चैव प्रामाण्यम्। अत एव प्रमायाः लक्षणं कुर्वता वेदान्तपरिभाषाकारेण धर्मराजाध्वरीन्द्रेण 'अनधिगताबाधितार्थविषयज्ञानत्वं 'प्रमात्वम्' इत्युक्तम्।

प्रमाणस्वरूपनिरूपणे अद्वैतवेदान्तेन साधारणतया मीमांसापद्धतिरेव अनुसृतेति मीमांसकैरिव तैरपि ज्ञानस्य स्वतः प्रामाण्यमेव स्वीक्रियते। यद्यपि शंकरपरकालिकभाष्यकारैः कुमारिलभट्टाभिमतप्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धीतिप्रमाणषट्कस्योल्लेखः कृतः तथापि जैमिनिना प्रत्यक्षानुमानशब्देतिप्रमाणत्रयमेव स्वीकृतम्। तदेव च शंकरेणाप्यनुसृतम्।

अद्वैतवेदान्तानुसारेण ब्रह्मणः सम्बन्धे प्रमाणानां विशिष्टं स्थानम् आत्मज्ञाने च प्रमाणानां गौणरूपेण सहायकत्वं स्वीकृतम्। शंकरानुसारेण तेषां केवलमेतत्कार्यं यत् तानि आत्मचैतन्यावरणमपसारयन्ति। आवरणरूपविघ्नापसरणानन्तरमेव च स्वतः प्रकाशितं चैतन्यं स्वयमेवाभिव्यक्तं संजायते—

न प्रकाश्यं प्रमाणेन प्रकाशो ब्रह्मणः स्वयम्।
तज्जन्यावृत्तिभंगत्वात् प्रकाशो ब्रह्मणः स्वयम्[२]॥

यथा च स्वतः प्रकाशचेतनाभिव्यक्तौ प्रमाणानां न किमपि साहाय्यं तथैव आत्मनः सत्तां प्रमाणयितुमपि न तान्यावश्यकानि। ज्ञानस्य सम्पूर्णं साधनं स्वानुभवे निर्विभर्ति इति एवंभूतः अनुभव एव स्वतः प्रमाणम्।

"आत्मा तु, प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यति, न च ईदृशस्य निराकरणं सम्भवति। आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम्। य एव हि निराकर्त्ता तदेव तस्य स्वरूपम्"[३]। अर्थात् आत्मनः अस्तित्वं न अस्वीकर्त्तुं शक्यते. य एव हि अस्वीकर्त्ता तदेव तस्य स्वरूपमिति स स्वयंसिद्धः 'स्वयंसिद्धस्य च साक्षिणोऽ-

१. वे० प० पृ० १ २. सर्वदर्शनसंग्रहः पृ० ४१५
३. शां० भा० ( ब्र० सू० २।३।७ )

प्रत्याख्येयत्वात्[1]। यथार्थज्ञानेन नात्मनः सिद्धिः कर्त्तुं शक्यते तस्य स्वयंसिद्धत्वात् इति भावः। एवमेव एतदपि तर्कसंगतं यत् अज्ञानस्य अस्तित्वं प्रमाणयितुमपि प्रमाणं व्यर्थम्। अज्ञानस्य स्वरूपं केनापि प्रमाणेन स्थापयितुं न शक्यते। अज्ञानं हि अन्धकारसमानम्; प्रमाणं च प्रकाशस्वरूपमिति प्रकाशसाहाय्येन अन्धकारस्य प्रत्यक्षत्वं न सम्भवति। रामानुजः यथार्थज्ञानप्रापकं (प्रमाकरणं) प्रमाणम् इति मन्यते। तन्मते प्रत्यक्षानुमानशब्दा इति त्रयमेव प्रमाणम् एतच्च तेन जिज्ञासाधिकरणे स्पष्टीकृतम्[2]। एतन्मते ज्ञानस्य स्वतः प्रामाण्यम्। स एतदपि मनुते यत् अनुभवस्वरूपं स्वसत्तयैव, यावत्स्थिति, स्वतः प्रकाशशीलम्। यतो हि तदाधारः आत्मा प्रकाशशीलः। शब्दान्तरैस्तदित्थं प्रतिपादयितुं शक्यते यत् अनुभवो निजविषयप्रमाणीकरणस्य साधनम्, तथाहि—

'अनुभूतित्वं नाम वर्तमानतादशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्। स्वसत्तयैव स्वविषयसाधनत्वं[3] वा'।

रामानुजः एतत्स्वीकरोति यत् सर्वेषां प्रमाणानां सम्बन्धः सविशेष-(सगुण) पदार्थैः सह वर्तते। तत्सिद्धान्तानुसारेण विवेक एव चेतनस्य महत्त्वपूर्णावश्यकविशेषता वर्तते। यावच्च वयं कस्यापि पदार्थस्य आवश्यकविशेषतां न जानीमहे तावत्तद्विषयकं ज्ञानं भवितुं न शक्नोति। यतो हि येन केनचित् विशेषणेन विशिष्टस्यैव पदार्थस्य ज्ञानं सम्भवति। अतः ये इत्थं स्वीकुर्वन्ति यत् एवंभूतमपि किमपि तत्त्वं वर्तते यत् निर्गुणम् (निर्विशेषम्) अस्ति ते एतत्प्रमाणयितुं किमपि प्रमाणमुपस्थापयितुं न शक्नुवन्ति—

'निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्, सविशेषस्तु विषयत्वात् सर्वप्रमाणानाम्'।[4]

किंच, 'सर्वप्रमाणस्य सविशेषविषयतया निर्विशेषवस्तुनि न किमपि प्रमाणमस्ति'।[5]

प्रमाणानां विषये अन्यभाष्यकाराणां विचाराः एतदपेक्षया सरलाः, दार्शनिकोपयोगदृष्ट्या च न तावन्महत्त्वपूर्णास्तथापि एतस्यां दिशि तेषां पृथक्-पृथक् स्वकीयं वैशिष्ट्यम्।

---

१. तत्रैव (ब्र० सू० २।२।२८) २. रा० भा० महासिद्धान्ते पृ० ७३
३. रा० भा० (ब्र० सू० १।१।१) ४. रा० भा० (ब्र० सू० १।१।१)
५. सर्वदर्शन संग्रह पृ० १०७

निम्बार्कानुयायिभिः प्रत्यक्षानुमानश्रुतीनां प्रामाण्यं स्वीकृतम्। एतेषु ब्रह्मज्ञानं केवलं श्रुतिप्रामाण्येनैव भवितुं शक्नोति। एतत् कदापि न विचारणीयं यद् ब्रह्म श्रुतिवाक्यसाधनद्वारा ज्ञानस्य विषयो न भवितुं शक्नोति—'वेदैकप्रमाणमेव ब्रह्मेति सिद्धान्तः'[1]। तथा; 'ननु प्रत्यक्षादिप्रमाणाविषयत्ववत् शब्दप्रमाणाविषयत्वस्यापि श्रुतिसिद्धत्वात् न शास्त्रैकप्रमेयं ब्रह्मेति प्राप्ते ब्रूमः। जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव नान्यप्रमाणकम्'[2]।

साधारणेन्द्रियाणि ब्रह्म साक्षात्कारयितुं सर्वथा असमर्थानीति न तैः ब्रह्म साक्षात् कर्त्तुं शक्यते—'न च प्रत्यक्षप्रमाणगम्यं ब्रह्म; तद्ग्रहणे हि साधारणानामिन्द्रियाणामसामर्थ्यात्'।[3]

एतावत् सूक्ष्मं हि ब्रह्म यत् तज्ज्ञानसाधनरूपे अनुमानादयः विचारयितुमप्यशक्याः—किंच, सर्वज्ञैर्मन्त्रैः ऋषिभिश्च साकल्येन सर्वथा अगम्यं दुर्बोधमचिन्त्यानन्तगुणशक्त्यादिमज्जगत्कारणं ब्रह्म अनुमानादिवेद्यमिति कोऽनुन्मत्तो ब्रूयात्।[4]

निम्बार्कमते ज्ञानं जीवस्य विशेषधर्मः। तदुत्पत्तौ च न वृत्तेरावश्यकता। जीवो ज्ञानस्वरूपमप्यस्ति तथापि जीवज्ञानयोर्धर्मिधर्मभावस्वीकार एव श्रेयान्,

'जीवतज्ज्ञानयोर्ज्ञानत्वाविशेषे अपि धर्मधर्मिभाव युक्त एव'।[5]

जीवात्मा शुद्धप्रकाशस्वरूपस्तथापि स वास्तविको ज्ञाता मन्यते—

'अहमर्थभूत एव आत्मा ज्ञाता भवति'।[6]

निम्बार्कानुयायिनः प्रमाणानां प्रामाण्यं शंकरानुसारमेव मन्यन्ते।

मध्वाचार्येण यथार्थज्ञानस्य प्रत्यक्षानुमानशब्दाः इति प्रमाणत्रयमेव स्वीकृतम्। एतदतिरिच्य तेन यथार्थज्ञानमपि स्वयम् एतद्दृष्ट्या प्रमाणं स्वीक्रियते यत् तत् यस्य कस्यचिदपि तथ्यस्य साक्षाद्ज्ञानं कारयति न तु परम्परया। अतो न तज्ज्ञानस्य साधनम्। रामानुजश्चोभयं स्वीकरोति—(१) यथार्थं ज्ञानं ज्ञानरूपेणापि प्रमाणम् (२) ज्ञानसाधनरूपेणापि प्रमाणम् इति। इत्थं तन्मते कस्यचिदपि विषयस्य ज्ञानार्थं

---

१. वे० कौ० (ब्र० सू० १।१ ३)
२. निं० भा० (ब्र० सू० १।१।४)
३. वे० कौ० (ब्र० सू० १।१।२)
४. तत्रैव (ब्र० सू० १।१।२)
५. निं० भा० (ब्र० सू० २ ३।२७)
६. तत्रैव (ब्र० सू० २।३।१८)

केवलप्रमाणम् अनुप्रमाणं चैतत्साधनद्वयम्। तत्र अनुप्रमाणस्यैव प्रत्यक्षादयस्त्रयो भेदाः।

दार्शनिकविषयेषु मध्वाचार्यमते अनुमानस्य किमपि महत्त्वपूर्णं स्थानम्। तस्य एतत्कथनं यत् अनुमानेन यः कश्चिदपि स्वाभिमतं यं कमपि निष्कर्षं प्राप्तुं शक्नोति। अतः अनिश्चितिहेतोः सत्यस्य निश्चित्यै नानुमानं स्वतन्त्रं साधनं भवितुमर्हति—'न चानुमानस्य स्वातन्त्र्येण प्रामाण्यम्', 'यथाकामं हि अनुमातुं शक्यते, अतो न तत्त्वे पृथगनुमानमपेक्ष्यते, उक्तञ्च स्कान्दे—

"यथाकामानुमा यस्मात् तस्मात् सानपगा[1] श्रुतेः"।

श्रुतिसाहाय्येनैव तत्प्रामाण्यं समुचितमिति वक्तुं शक्यते इत्थं च श्रुतिवाक्यसाहाय्यं विना अनुमानं न किमपि वस्तु निर्णेतुं शक्नोति। स्वकीयम् एतन्मतं प्रमाणयितुं तेन पुराणादीनामनेके श्लोकाः[2] उद्धृताः। तथाहि—

श्रुतिसाहाय्यरहितम् अनुमानं न कुत्रचित्।
निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च॥
श्रुति–स्मृतिसहायं यत् प्रमाणान्तरमुत्तमम्।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा॥[3]

वाराहपुराणस्य उद्धरणमेतत्प्रमाणयति यत् श्रुतिवाक्यसाहाय्यमन्तरेण प्रत्येकविधानुमानं कर्तुं शक्यते किन्तु श्रुति साहाय्यं बिना तत्र न किमप्यनुमान सत्यतायाः निर्णायकं भवितुं शक्नोति। तथाहि,

सर्वत्र शक्यते कर्त्तुमागमं तु विनाऽनुमा।
तस्मान्न सा शक्तिमती विनागममुदीक्षितुम्॥[4]

स्कन्दपुराणस्य एतत्कथनं यत्—

यथाकामानुमा यस्मात् तस्मात्सानपगाश्रुतेः।
पूर्वापरविरोधाय चेष्यते नान्यथा क्वचित्॥[5]

पुरुषोत्तमतन्त्रे च क्वचिच्छ्रुतिवाक्यविरोधे तार्किकयुक्तीनां किंचित् उपयोगित्वं प्रतिपादितम्—

यद्वाक्योक्तं न तद्युक्तिः विरोद्धुं शक्नुयात् क्वचित्।
विरोधे वाक्ययोः क्वापि, किंचित्साहाय्यकारणम्॥[6]

---

१. म० भा० ( ब्र० सू० १।१।२ ) २. तत्रैव ( ब्र० सू० १।१।१८ )
३. तत्रैव कूर्मपुराणवचनम् ४. तत्रैव वाराहपुराणवचनम्
५. म० भा० (ब्र० सू० १।१।१८) ६. तत्रैव ( ब्र० सू० २।१।२७ )

किन्तु ब्रह्मसाक्षात्कारे श्रुतिवाक्यमेव केवलं प्रमाणमित्येतस्मिन् विषये प्रत्यक्षस्य न किमपि स्थानम्। ज्ञानस्य स्वतः-प्रामाण्यं तु रामानुजवत् मध्वाचार्येणापि स्वीक्रियते।

वल्लभाचार्येण सर्वाणि प्रमाणानि स्वीक्रियन्ते तथापि तदनुसारं श्रुतेरेव मुख्यं प्रामाण्यम्। अन्येषां तु तावदेव प्रामाण्यं यावत् न तेषां श्रुतिवाक्यैर्विरोधः। वेदानां स्वतःप्रामाण्यम्—'अतोनिरपेक्षा एव भगवन्निःश्वासरूपा वेदाः एव प्रमाणम्।'[1]

ज्ञानस्य अन्यत् साधनं प्रत्यक्षादि, प्रामाण्यार्थमन्याश्रितम् इति न तत् स्वातन्त्र्येण प्रमाणम्; 'चक्षुरादीनां प्रामाण्यमन्यमुखनिरीक्षकत्वेन, न[2] स्वतः।

वल्लभमते वेदानां प्रत्यक्षरं प्रामाणिकम् इति तत्र यत्किमप्युक्तं तेनाक्षरशः सत्येन भवितव्यम्। अन्यथा श्रुतेः प्रत्येकभागे अविश्वासः सम्भवेत्।

'वेदश्च परमाप्तः अक्षरमात्रमपि अन्यथा न वदति। अन्यथा सर्वत्रैव तदविश्वासप्रसंगात्।[3] ब्रह्मस्वरूपमतिसूक्ष्ममिति तज्ज्ञानार्थं श्रुतिरेवैकमात्रं साधनम्।

इत्थं प्रमाणसामान्यविषये आचार्यपंचकस्य धारणाःसंक्षेपेण निर्दिश्य तत्तद्भाष्यपंचके कथं प्रत्यक्षादीनां प्रयोग इतीदानीं निरूप्यते।

## ( प्रत्यक्षम् )

उक्ते प्रमाणत्रये प्रत्यक्षमाद्यं प्रमाणम्। विभिन्नभारतीयदर्शनग्रन्थेषु अस्य विभिन्नाः परिभाषाः उपलभ्यन्ते। गौतमेन स्वकीये न्यायसूत्रे प्रत्यक्षस्य इत्थं लक्षणं कृतम्—

'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं[4] प्रत्यक्षम्' वैशेषिकमतानुसारम्, 'प्रत्यक्षज्ञानकरणं प्रत्यक्षम्', इन्द्रियार्थसन्निकर्षोत्पन्नं[5] ज्ञानं प्रत्यक्षम्' एवं तर्कभाषायां केशवमिश्रेण 'साक्षात्कारि प्रमाकरणं[6] प्रत्यक्षम्' इति प्रदर्शितम् प्रत्यक्षज्ञानोत्पत्तेः प्रक्रिया तु वात्स्यायनेनेत्थं स्वभाष्ये प्रदर्शिता—'तदुत्पत्तिप्रकारस्तु आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन; ततः प्रत्यक्षज्ञान मुत्पद्यते। षड्दर्शनसमुच्चये अपि एषा एव प्रक्रिया उपलभ्यते—

---

१. अणुभाष्यम् (ब्र० सू० १।१।४)
२. तत्रैव (ब्र० सू० १।१।४)
३. तत्रैव (ब्र० सू० १।१।२)
४. न्यायसूत्रम् (१।१।४)
५. तर्कसंग्रहः पृ० १९
६. तर्कभाषा पृ० ४६

आत्मा सहैति मनसा मन इन्द्रियेण,
स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रम्।
योगोऽयमेव मनसः किमगम्यमस्ति,
यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा'[1] ॥

भारतीयदार्शनिकपद्धतौ प्रत्यक्षज्ञानस्य प्रायः इयमेव प्रक्रिया अनुसृता दृश्यते तथापि स्वसिद्धान्तानुकूलं प्रत्येकदार्शनिकेन यत्र कुत्र परिवर्तनमपि कृतम्।

तत्र शंकराचार्यस्य अद्वैतवेदान्तपद्धतौ ज्ञानं द्विविधम् (१) परोक्षम् (२) अपरोक्षं च। प्रत्यक्षस्य अर्थस्तु अक्ष्णि इति प्रत्यक्षम् इति विग्रहेण 'इन्द्रियजन्यं ज्ञानं' वर्तते इति तत् अपरोक्षज्ञानस्य प्रकारान्तरमेव। अस्मिन् केवलाद्वैते ज्ञानम्, (यद्य विषयं साक्षादेवोपस्थापयति) नेन्द्रियप्रत्यक्षतुल्यम्। इन्द्रियप्रत्यक्षमन्तरेणापि हि अपरोक्षज्ञानं जायते[2] तथा अपरोक्षज्ञानस्य व्यापके अर्थे प्रत्यक्षशब्दस्य प्रयोगः अपि उपलभ्यते यस्य च इन्द्रियप्रत्यक्षेण न किमपि तात्पर्यम्। शंकराचार्येण स्वयमपि प्रत्यक्षशब्दो व्यापके अर्थे प्रयुक्तः—'प्रत्यक्षावगमं चेदं फलम्। तत्त्वमसि इत्यसंसार्यात्मप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः[3]।' अतः 'इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्' इति न प्रत्यक्षस्य लक्षणम् अपि तु प्रमाणचैतन्यस्य[4] विषयचैतन्याभिन्नत्वमेव प्रत्यक्षम्। अत एव धर्मराजाध्वरीन्द्रेण 'स अयं देवदत्तः' 'तत्त्वमसि' इत्यादौ वाक्यजन्यज्ञानस्य प्रत्यक्षज्ञानबोधनार्थं वेदान्तपरिभाषायामित्थं तद्विवेचनं कृतम्—"नहि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रम्, दूषितत्वात्; किन्तु योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वम्" तथा च सः अयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निस्सृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्न-वृत्त्यवच्छिन्नचैतन्ययोरभेदेन सः अयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्। एवं 'तत्त्वमसि'

---

१. षड्दर्शनसमुच्चयः पृ० १५–१६

२. एम्० हिरियन्ना आउट लाइन्स आफ इण्डियन फिलासफी पृ० ३४५

३. शां० भा० (ब्र० सू० १।४।१४)

४. चैतन्यं त्रिविधम् (१) प्रमातृचैतन्यम् (२) प्रमाणचैतन्यम् (३) विषयचैतन्यं चेति, तत्र अन्तःकरणावच्छिन्नं चैतन्यं (जीवः) प्रमातृचैतन्यम्। अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्। घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम्। [वे० प० पृ० २२]

इत्यादिवाक्यजन्यज्ञानस्यापि तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्' ।[1] तत्र बाह्यविषयप्रत्यक्षम् इन्द्रियव्यापारद्वारा भवति । इच्छादीनां चान्तःप्रत्यक्षमिति न तत्रेन्द्रियव्यापारापेक्षा वर्तते ।

इत्थं शंकराचार्यः प्रत्यक्षम् अपरोक्षस्य व्यापके अर्थे स्वीकरोति नापि च तदिन्द्रियप्रत्यक्षं यावदेव सीमितं मन्यते, फलतः तदर्थं न शरीरमपेक्ष्यते । अत्र प्रत्यक्षस्य यः अर्थः अभिप्रेतः स प्रमातृचैतन्यविषयचैतन्ययोः संसर्गो वर्तते । एतदर्थं शरीरं सहायकमात्रमेव । तस्येदं कथनं यत् सति शरीरे प्रत्यक्षत्वम् असति तु तस्मिन् तदभाव इत्यस्य नैतत्तात्पर्यं यत् तत् शरीरस्य धर्मः । नैतदपि सत्यं यत् प्रत्यक्षे शरीरसाहाय्यस्य नितरामावश्यकत्वम् स्वप्नावस्थायां निश्चेष्टे अपि शरीरे विविधानां प्रत्यक्षाणां जायमानत्वात् 'एव सति देहे उपलब्धिर्भवति असति च न भवतीति न देहधर्मो भवितुमर्हति······न चात्यन्तं देहस्योपलब्धावुपयोगः, अपि दृश्यते निश्चेष्टे अपि अस्मिन् देहे स्वप्ने नानाविधोपलब्धिदर्शनात्' ।[2]

शंकरेण यद्यपि प्रत्यक्षस्य मनोवैज्ञानिकताया सविस्तरं विवेचनं न कृतमित्यस्मिन् विषये वयं तदनुयायिन एव आश्रयामस्तथापि स्वभाष्ये तेन प्रत्यक्षस्य अनेकस्थलेषु उपयोगः कृतः; उदाहरणार्थम्—'एवमनादिरनन्तः······सर्वलोकप्रत्यक्षः'[3] । तथा—'प्रत्यक्षं[4] चैतत् स्वापकाले'···इत्यादि ।

रामानुजस्य विशिष्टाद्वैतपद्धतौ अपि प्रत्यक्षं द्विविधम् ( १ ) निर्विकल्पकं ( २ ) सविकल्पकं च । अतः तदुभयातिरिक्तस्थले प्रत्यक्षस्य न किमपि स्थानम्—'प्रत्यक्षस्य निर्विकल्पक-सविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः'[5] ।

तत्र सर्वप्रथमावलोकितस्य पूर्वसम्बन्धादिरहितस्य च विषयस्य प्रथमं ज्ञानं निर्विकल्पकं ज्ञानम् 'अतो निर्विकल्पकमेकजातीयद्रव्येषु[6] प्रथमपिंडग्रहणम्' तथा येन तज्जातीयविषयस्य सर्वसाधारणविशेषतानां बोधो भवति तत् सविकल्पकं ज्ञानम् 'तत्र प्रथमपिण्डग्रहणे गोत्वादे-

---

१. वे० प० पृ० ४२–४३ २. शां० भा० (ब्र० सू० ३।३।५४)
३. शंकरस्य अध्यासभाष्यम् पृ० ४१ ( बम्बईसंस्करणम् )
४. शां० भा० ( ब्र० सू० १।१।२३ ) पृ० २१४ ( हं० सं० )
५. रा० भा० ( ब्र० सू० १।१।१ ) ६. तत्रैव

रनुवृत्ताकारता न प्रतीयते द्वितीयादिपिण्डग्रहणेषु एव अनुवृत्ति-प्रतीतिः ।[1]

अन्यदार्शनिकस्वीकृतसविकल्पकनिर्विकल्पकापेक्षया रामानुजस्वीकृत-सविकल्पनिर्विकल्पकप्रत्यक्षं भिन्नम् । रामानुजस्य एतत्कथनं यत् केवलं नामजात्यादिरहितमेव प्रत्यक्षं न निर्विकल्पकं प्रत्यक्षमपि तु तदपि सविशेषविषयकमेव भवति—'निर्विकल्पकमपि सविशेषविषयमेव' ।[2]

ब्रह्मज्ञानं श्रुतिप्रमाणातिरिक्तेन अन्येन केनापि प्रमाणेन न भवितुं शक्नोतीति प्रतिपादको रामानुजः प्रबलतया एतस्य खण्डनं करोति यत् प्रत्यक्षेण ब्रह्मानुभवो जायते । प्रत्यक्षम्, अपि नाम तत् ऐन्द्रियं यौगिकं वा, ब्रह्मज्ञानं कारयितुं सर्वथा असमर्थम् । तत्र ऐन्द्रियं प्रत्यक्षमतः कारणादसमर्थं यत् इन्द्रियाणि न कथमपि ब्रह्मणा सम्बद्धानि भवितुं शक्नुवन्ति । ब्रह्म हि प्रत्येकं वस्तु पश्यति तदेव च सर्ववस्तुनिर्मातृ—'बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्यस्वविषयबोधजनकानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपरमपुरुषविशेषविषयबोधकानि'.[3] यदि च तदान्तरिकं प्रत्यक्षं तदापि तेन केवलं सुखदुःखादिज्ञानमेव भवितुं शक्नोति तच्च बाह्येन्द्रियसाहाय्यमन्तरेण नान्यत् किमपि वस्तु प्रकटीकर्तुं शक्नोति,—'नाप्यान्तरम्' सुखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः'.[4] । योगजप्रत्यक्षं च केवलं पूर्वानुभूतवस्तूनां स्मरणमात्रम् इति न तत्प्रामाण्यम् । अतः तदपि न ब्रह्म अनुभावयितुं शक्नोति 'नापि योगजन्यम्, भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वे अपि पूर्वानुमतविषयस्मृतिमात्रत्वान्न प्रामाण्यम्' ।[5]

निम्बार्कस्य सिद्धान्तानुसारमपि प्रत्यक्षं द्विविधम् (१) मानसम् (आन्तरिकम्) बाह्यं च । मानसमपि द्विविधम् (१) लौकिकम् (२) अलौकिकं च । तत्र मानसप्रत्यक्षे इन्द्रियव्यापारो न अपेक्ष्यते इति सुखदुःखादिसाक्षादनुभवः हृदये भवति । आत्मप्रत्यक्षे च आत्मनः स्वयं प्रकाशमानत्वात् तं प्रति मानसिकप्रवृत्तिरेव तत्स्वरूपं प्रकटयति ।

बाह्यप्रत्यक्षे च प्रतिजीवं ज्ञानं वृत्त्या इन्द्रियेषु समायाति । तत्पश्चात् तत्परिवर्तनेन विषयेषु गच्छति, विषयं ज्ञानं चोभयं भासयति । ज्ञान-सम्पर्केणैव च विषयावभासो भवति तदभावे च विषया अनवभासिताास्तिष्ठन्ति ।

---

१. तत्रैव २. तत्रैव ३. रामानुजभाष्यम् [१।१।३] ४. तत्रैव [१।१।३] ५. तत्रैव

बाह्यप्रत्यक्षं च बाह्येन्द्रियद्वारा बाह्यविषयाणामेव भवति। निम्बार्को बाह्यपदार्थानां याथार्थ्यं स्वीकरोति यत्प्रामाण्यार्थं स मुख्यतया प्रत्यक्ष-माश्रयति—'एतदित्यनेन सर्वनाम्ना प्रत्यक्षादिप्रमाणसिद्धस्य जगतः उपस्थितत्वाच्च'[1] प्रत्यक्षमेव मुख्यप्रमाणं मत्वा तेन बौद्धानां शून्यवादिनां च मतं खण्डितम्—'विज्ञानव्यतिरिक्तस्य बाह्यार्थस्य प्रत्यक्षतः उपलब्धेः'[2]। तथा 'वादिप्रतिवादिभ्यां सर्वस्य जगतः सत्यत्वेन उपलम्भात्'[3]।

निम्बार्कस्य एतत्कथनं यत् ब्रह्मणः प्रत्यक्षमिन्द्रियद्वारा न भवितुं शक्नोति यतो हि साधारणेन्द्रियाणि तत् साक्षात्कारयितुं सर्वथा असमर्थानि। ब्रह्मज्ञानस्य च एकमात्रं साधनं वेदः। तथापि स एवं स्वीकरोति यत् मुक्तावस्थायामात्मा स्वानुभवद्वारा ब्रह्मणा सह तादात्म्या-नुभवं करोति—'मुक्तः परस्मादात्मानं भागाविरोधिना अविभागेन अनुभवति। तत्त्वस्य तदानीमपरोक्षतो दृष्टत्वात्'[4]। 'यन्मनसा न मनुते'[5] इत्यस्याः श्रुतेः तात्पर्यमेतद् यत् मनः परिपूर्णरूपेण, न तत् प्रत्यक्षीकर्त्तुं शक्नोति अथ चैतत् यत् गुरुणा सत्प्रवृत्तिभिर्वा यावन्मनो न सर्वथा तद्योग्यं क्रियते न तावत्तेन तदाभासः अपि प्राप्तुं शक्यते।

मध्वाचार्यस्यैतत्कथनं यत् केवलं प्रत्यक्षं न कदापि संसारस्य समस्यां समाधातुं शक्नोति। यथार्थज्ञानावाप्तये श्रुतेरपि साहाय्य-मपेक्ष्यते। पुरुषोत्तमतन्त्रस्य प्रमाणमुद्धरता तेन प्रतिपादितं यत् श्रुतिवा-क्यसहितः अनुभवः यथार्थज्ञानस्य उत्तमं साधनम्, केवलं शास्त्रं च मध्यमम्, प्रत्यक्षं च सर्वतः निम्नकोटिकं साधनम्—

'शास्त्रार्थयुक्तोऽनुभवः प्रमाणं तूत्तमं मतम्।
मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम्॥'[6]

वल्लभाचार्यश्च प्रत्यक्षं न तावदिन्द्रियप्रत्यक्षेणैव परिच्छिनत्ति— न तत् तावदेव सीमितम्, अपि तु तत्र सर्वेषामेव सविकल्पकज्ञानानां सन्निवेशः इति अभीष्टदेवताप्रातिभज्ञानमपि अनुभव एव, तस्यापि अपरोक्षज्ञानत्वात्'।

चाक्षुषादिप्रत्यक्षमप्रधानरूपेण (अन्यसाहाय्येन) प्रमाणं स्वीकर्त्तुं शक्यते न तु स्वातन्त्र्येण, सतोगुणयुक्तान्येव चेन्द्रियाणि प्रमाणम्

१. नि. भा० (ब्र. सू. १।४।१३) २. निम्बार्कभाष्ये वे. कौ० पृ० २००
३. तत्रैव पृ० २०१ ४. नि. भा० ब्र. सू. ४।४।४
५. केन उ० १।५ ६ म० भा० (ब्र. सू. २।१।१७)

इति सतोगुणयुक्तेन्द्रियजन्यं प्रत्यक्षं प्रामाणिकम्। स्वातन्त्र्येण च तेषां प्रामाणिकत्वे एतस्य कारणं वक्तुमशक्यं स्यात् यत् भ्रमः कुतो जायते—'चक्षुरादीनां प्रामाण्यमन्यमुखनिरीक्षकत्वेनैव न स्वतः, भ्रमानुत्पत्तिप्रसंगात्। सत्त्वसहितानामेव चक्षुरादीनां प्रामाण्यात्'[1]।

वल्लभाचार्यः बाह्यजगतः सत्यतां स्वीकरोति, तस्य मते जगदपि तावदेव सत्यं यावच्च ब्रह्म। यतो हि तदुभयमप्येकमेव। समस्तमेतज्जगत् ब्रह्मसत्तास्वरूपम्। ब्रह्म न जगतो रचयितृ अपि तु स्वयं जगदेव। यद्यपि स्वरूपे ब्रह्म परिज्ञातं न वर्तते तथापि यदा तत् संसाररूपेणात्मानमभिव्यनक्ति तदा ज्ञातं संजायते। अत एवैतदुच्यते—'प्रमाणबलेनाविषयः, स्वेच्छया विषयश्चेत्युक्तम्'[2]। प्रत्यक्षप्रमाणेन वल्लभो निजसिद्धान्तसत्यतां साधयति—'अस्य प्रपंचस्य न अभावः, उपलब्धेः, उपलभ्यते हि प्रपचः'[3]।

वल्लभाचार्यस्यैतन्मतं यत् अद्वैतसिद्धान्तानुसारेण एतत्स्वीकरणं यत् शब्दप्रमाणम् अपरोक्षज्ञानस्य कारणं भवितुमर्हति, यथा च 'दशमस्त्वमसि' इत्यत्र भवति, न समुचितम्। अस्मिन् वाक्ये हि दशमो जनः प्रत्यक्षेणैव आत्मानं दशमं बुध्यते, यतो हि प्रत्यक्षस्य समस्ता सामग्री—तस्य शरीरादि तदानीं तत्र वर्तते—'दशमस्त्वमसीत्यादौ प्रत्यक्षसामग्र्याः बलवत्त्वात् देहादेः प्रत्यक्षत्वात्'[4]। अतः प्रत्यक्षज्ञानेन शब्दप्रमाणस्य कश्चिदपि सम्बन्धो न वर्तते। तस्य एतत्कथनं यत् शब्दप्रमाणाश्रितप्रातिभज्ञानस्य प्रामाणिकत्वे प्रमाणद्वयस्य सांकर्यं स्यात् तच्च नोचितम्—'प्रमाणसंकरापत्तिश्च'[5]।'

वल्लभाचार्यस्य एतन्मतं यत् प्रत्यक्षप्रमाणस्य न किमपि महत्त्वपूर्णं स्थानम्। स हि मीमांसायाः प्रबलः अनुयायी अतः स स्वकीयविचारप्रामाणिकतायां श्रुतिमेव समाश्रयति।

प्रत्यक्षशब्दश्च स्वतन्त्ररूपेण अनुमानेन वा सह बादरायणब्रह्मसूत्रेषु चतुः प्रयुक्तो दृश्यते—

(१) शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् (१।३।२८)
(२) अपि च संराधने प्रत्यक्षानुमानाभ्याम् (३।२।२४)

---

१. अणुभाष्यम् (ब्र. सू. १।१४) २. तत्रैव
३. तत्रैव (ब्र. सू. २।२।१८) ४. तत्रैव (ब्र. सू. १।१।१)
५. तत्रैव

(३) प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः (४।४।१८)
(४) दर्शयतश्चैवं प्रत्यक्षानुमाने (४।४।२०)

भाष्यकाराणां कृते एतेषां शब्दानामर्थो महत्त्वरहितः। शंकर-रामानुजनिम्बार्कैः सर्वत्रैव प्रत्यक्षानुमानशब्दाभ्यां क्रमशः श्रुतिस्मृती गृहीते न च प्रत्यक्षानुमाने। उक्तसूत्रचतुष्टये, 'शब्द इति चेन्न:'......इत्यादि-प्रथमसूत्रस्य व्याख्यां कुर्वता शंकरेणोक्तम्—'प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात्। अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात्'[1]। स्मृतिरेतदर्थमनुमानमुच्यते यत् सा स्वप्रामाण्यार्थं तदर्थमूलकश्रुतेः अनुमानं करोति,—'स्मृत्या स्वप्रामाण्यार्थं मूलश्रुतिरनुमीयते'[2]। रामानुजनिम्बार्कयोरप्यस्मिन् विषये एतदेव मतम्।

किन्तु मध्वाचार्येण अनयोः शब्दयोः श्रुति-स्मृतिरूपः अर्थो न कृतः। तेन च प्रत्येकस्थले तयोः प्रत्यक्षमनुमानं चैष एव अर्थः स्वीकृतः—महतां प्रत्यक्षात् यथेदानीं तथोपर्य्यपि देवादयो भविष्यन्तीति इतरेषामनुमानाच्च'[3]। तथा—'विद्वत्प्रत्यक्षात् कारणाभावलिंगाच्च'[4]।

वल्लभेन यत्र[5] कुत्र प्रत्यक्षानुमानयोः प्रत्यक्षानुमानरूप एवार्थः स्वीकृतः यत्र कुत्र च[6] प्रत्यक्षानुमानरूपः, श्रुतिस्मृतिरूपश्चैतदुभयं[7] विकल्पेन।

## अनुमानम्

तर्कसंग्रहे श्रीअन्नंभट्टेन अनुमानस्य 'अनुमितिकरणमनुमानम्' इति लक्षणं कृतम्। पर्वते धूमं दृष्ट्वा एतत्स्मरणं जायते यत् यत्र धूमस्तत्र वह्निरिति। अत्र हि पर्वताद् धूम उद्गच्छति 'अतः पर्वते अवश्यमेव अग्निना भाव्यम्' इत्यनुमीयते। वात्स्याययेन स्वभाष्ये अस्य लक्षणं 'प्रत्यक्षेण अप्रत्यक्षस्य सम्बद्धस्य प्रतिपत्तिरनुमानम्'[8] इत्थं कृतम्। तस्येदं तात्पर्यं यत् प्रत्यक्षसाहाय्येन तत्सम्बद्धं यदप्रत्यक्षज्ञानं तदनुमानम्। तेनेत्थमपि प्रतिपादितं यत् 'स्मृत्यालिंगदर्शनेन च अप्र-

---

१. शां० भा० (ब्र० सू० १।३।२८)   २. तत्रैव पृ० २५२
३. म० भा० (ब्र० सू० १।३।२८)   ४. तत्रैव (ब्र० सू० ४।४।२१)
५. द्रष्टव्यमणुभाष्यम् (ब्र० सू० ४।४।२१) तथा ४।४।१८
६. द्रष्टव्यमणुभाष्यम् (ब्र० सू० ३।२।२४)
७. द्रष्टव्यमणुभाष्यम् (ब्र० सू० ४।४।२४)
८. वात्स्यायनभाष्यम् पृ० ६१७

त्यक्षः अर्थः 'अनुमीयते' । इत्थमेतन्निश्चितं यत् व्याप्तिज्ञानपूर्वक-प्रत्यक्षसाहाय्येन स्मृत्या लिंगपरामर्शेन वा यस्य कस्यचिदपि वस्तुनः अनुमानं संजायते। एवं च यस्मिन् स्थले यस्य पदार्थस्य साक्षात् चाक्षुष-प्रत्यक्षं न जायते तत्र तस्य सत्तायाः प्रमाणमनुमानेन कर्त्तुं शक्यते।

किन्तु शंकरस्यैतत्कथनं यत् एतदनुमानमैन्द्रियप्रत्यक्षात्परस्य पर-ब्रह्मणो ज्ञानं कारयितुं न कथमपि सहायकं भवितुमर्हति । तेन मुहुर्मुहुरे-तत्प्रतिपादितं यत् ब्रह्मसूत्राणां तात्पर्यं तार्किकयुक्तिभिः ब्रह्मस्वरूपस्थापनं न वर्तते। ब्रह्मज्ञानं च औपनिषदवाक्यैरेव सम्भवति—'तस्मात्शब्द-मूल एव अतीन्द्रियार्थयाथात्म्याधिगमः'[२] ।

वेदान्तसूत्रेषु श्रुतिवाक्यान्येव केवलं विवेचितानि । श्रुतिवाक्यार्थ एव च तेषां सर्वस्वम्। फलतः एतेषु एतत्प्रतिपादितं वर्तते यत् न तु अनुमानेन नापि च इतरप्रमाणैः प्रत्युत श्रुतिवाक्यविवेचनेनैव ब्रह्म ज्ञानमुत्पद्यते—'वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिर्नानु-मानादिप्रमाणान्तरनिर्वृत्ता'[३] । एवं च ज्ञानोत्पादने अनुमानस्य ताव-देव सार्थक्यं यावत् तत् श्रुतिप्रतिपादितनिष्कर्षं बलवत्तरं कर्त्तुं सहा-यकम्—'श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात्'[४] ।

बादरायणेनापि 'तर्काप्रतिष्ठानात्[५]...' इत्यस्मिन् सूत्रे एतत्प्रतिपा-दितं यत् इन्द्रियातीतविषयमवगमयितुं तर्कः सर्वथा असमर्थः। अस्य सूत्रस्य व्याख्याने शंकरेण अयं विषयः वैशद्येन स्पष्टीकृतः यत् पूर्वस्वी-कृततथ्यानां याथार्थ्यमवगमयितुं तर्को मुख्यतः समर्थः—तदेव च तस्य मुख्यं कार्यम्। किन्तु यथार्थज्ञानावाप्तये तर्कमात्र एव न पर्याप्तः 'एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति। नहि पूर्वजो मूढ आसीदित्यात्मना अपि मूढेन भवितव्यम् इति किंचिदस्ति प्रमाणम्'[६] ।

यद्यपि यत्र, कुत्र तर्कस्य पार्थक्येन स्वकीयं महत्वं प्रतीयते तथापि अतिदुरूहगम्भीरस्वरूपब्रह्मविषये स तावन्निरर्थको यावत् स आगमा-नुकूलो न भवेत्—'नहीदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धनमाग-ममन्तरेणोत्प्रेक्षितुमपि शक्यम्'[७] ।

ब्रह्म न च प्रत्यक्षस्य विषयो नापि चानुमानस्य; न तत्र किमपि रूपं न चापि तत्र शब्दः येन तद् द्रष्टुं श्रोतुं वा शक्येत। न चापि

---

१. तत्रैव पृ० १६ २. शां० भा० ( ब्र० सू० २।१।२७ )
३. शां० भा० ( ब्र० सू० १।१।२ ) ४. तत्रैव
५. ब्र० सू० २।१।११ ६–७. तत्रैव ब्र० सू० २।११

किमपि लिंगं येन तदनुमीयेत—'रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः लिंगाद्यभावाच्च नानुमानादीम्'[1]। अतः शंकरानुसारं विचारातीत-ब्रह्मणो विषये तर्कस्य प्रयोगो न कथमपि कर्त्तुं शक्यः। फलतः इन्द्रियातीतविषयस्य ज्ञानमागमबलेनैव भवितुमर्हति—'तस्माच्छब्दमूल एवातीन्द्रियार्थयाथार्थ्याधिगमः'[2]।

शंकर एतेन पूर्णपरिचितो यत् तर्केण अनुमानेन वा प्राप्तो निष्कर्षः तार्किकस्य अनुमातुर्वा योग्यतानुसारं विभिन्नः अपि भवितुं शक्नोति, अत एव एकया एव सामग्र्या विभिन्नास्तार्किका विभिन्नं निष्कर्षं प्राप्नुवन्ति। एतदेव कारणं यत् स, 'ब्रह्मज्ञाने अनुमानस्यापि कश्चिदुपयोगः' इत्यनेन सर्वथा असहमतः।

शंकराचार्येण एतन्निर्दिष्टं यत् श्रुतिप्रामाणिकतास्थापने अनुमानस्य न किमपि महत्वम् न चानुमानगम्यं शास्त्रप्रामाण्यम्'।[3] वेदवाक्यं हि त्रिकालाबाधित-संदेहरहितज्ञानावबोधकमिति तस्य स्वतः प्रामाण्यम्—'अबाधितानधिगतासंदिग्धबोधजनकत्वं प्रमाणत्वं प्रमाणानाम्। तच्च स्वत इत्युपपादितम्'[4]। अत एव यद्यपि वेदानामन्यभागेषु इव उपनिषत्सु-कर्मानुष्ठानस्य विधिवाक्यानि न सन्ति तथापि शंकरस्तत्प्रामाण्यमुद्घोषयति—'यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वात् न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम्'[5]।

इत्थं शंकरेण, आध्यात्मिकक्षेत्रे यद्यपि अनुमानस्य प्रामाण्यं न स्वीकृतं तथापि एतस्य नैतत्तात्पर्यं यत् दर्शनशास्त्रे तेन, ज्ञानस्य एतन्महत्वपूर्णसाधनस्य, काप्युपयोगितैव न परिलक्षिता। स्वस्वोपयुक्तक्षेत्रे तेन ज्ञानस्य सर्वाणि साधनानि स्वीकृतानीत्थमात्मनो महातार्किकत्वमपि प्रमाणीकृतम्।

प्रारम्भे एव, अध्यासभाष्ये, तस्य महातार्किकत्वमवगम्यते। अन्यत्र सर्वत्र श्रुतिवाक्यानि प्रमाणे समुद्धृतानि किन्तु तर्कपादे (द्वितीयाध्यायस्य द्वितीयपादे) श्रुतिवाक्यान्यनाश्रित्य स्वकीयैः प्रबलतर्कैरेव विरोधि-

---

१. शां० भा० (ब्र० सू० २।१।११)
२. तत्रैव (ब्र० सू० २।१।२७)
३. तत्रैव (ब्र० सू० १।१।४)
४. भामती पृ० ६५ (अ० प्र० मा० सं०)
५. शां० भा० (ब्र० सू० १।१।४)

दार्शनिकसिद्धान्तान् खण्डयता अनुमानं प्रमाणस्य विशिष्टं साधनमिति प्रदर्शितम् ।

रामानुजस्य अनुमानप्रणाली न्यायपद्धतेरनुकूला वर्तते किन्तु आध्यात्मिकज्ञानविषये तस्याप्येतत्कथनं यत् इन्द्रियातीतपदार्थसिद्धौ अनुमानं न कथमपि साधनं भवितुमर्हति । अनुमानं हि प्रत्यक्षाश्रितमिति सामान्यतो दृष्टं विशेषतो दृष्टं वा न कतरदप्यनुमानं ब्रह्मसिद्धेः साधनं भवितुमर्हति—'नाप्यनुमानम् , विशेषतो दृष्टं सामान्यतो दृष्टं वा । अतीन्द्रिये वस्तुनि सम्बन्धावधारणविरहान्न विशेषतो दृष्टम् । समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिंगमुपलभ्यते'[1] ।

इत्थं शंकराचार्यवद् रामानुजः अपि केवलां श्रुतिमेव ब्रह्मज्ञानसाधनं स्वीकरोति । तत्पुष्ट्यर्थमेव चानुमानमुपादेयमिति तदभिमतम्—'अतः अतीन्द्रिये अर्थे शास्त्रमेव प्रमाणम् । तदुपबृंहणाय एव तर्क उपादेयः'[2] । इत्थं बादरायणमनुसरता रामानुजेनापि तर्कस्याप्रतिष्ठितरूपता अभिव्यक्तीकृता ।

रामानुजो नैतत्स्वीकरोति यद् नैयायिकैरिव जगतः सत्तया परमात्मा अनुमातुं शक्यते—यदुक्तं सावयवत्वादिना कार्यं सर्वं जगत् ; कार्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेयः इति तदयुक्तम्''[3] ।

श्रीभाष्ये रामानुजाचार्येण यत्र कुत्र निजविवादिभ्यः स्वपक्षरक्षार्थमस्य अनुमानमहाशस्त्रस्य सफलः प्रयोगः कृतः किन्तु एवं भूतस्थलानि बहूनि न सन्ति । सत्स्वपि च तेषु तेन व्यावहारिकतर्कजालग्रस्तेन सता सत्यानुसरणं न विस्मृतम् एतस्मिंश्च तेन सर्वदा सतर्केण अस्थीयत यत् तर्कः वास्तविकज्ञानावाप्तये केवलं साधनमात्रमेव । भाष्ये च तेन परम्परागतशास्त्रार्थपद्धतिरेव अनुसृता यत्र यस्य कस्यचिदपि साध्यस्य सिद्धिः स्वतन्त्रप्रमाणैरेव क्रियते ।

निम्बार्कभाष्ये वेदान्तसूत्राणामर्थस्यैव विशदीकरणम् इति न तत्र एवं भूतानि विस्तृतविवेचनान्युपलभ्यन्ते । फलतः अस्मिन् भाष्ये अनुमानेन ज्ञानसाधनरूपे स्थानं नोपलब्धम् ।

---

१. रा० भा० ( ब्र० सू० १।१।३ )
२. तत्रैव ( ब्र० सू० २।१।१२ )
३. तत्रैव ( ब्र० सू० १।१।३ )

निम्बार्कानुयायिभिः सामान्यतः अनुमानस्य नैयायिकप्रणाली स्वीकृता, स्वसिद्धान्तान् सरलयितुं तत्प्रयोगश्चापि कृतः। तदनुसारमप्यनुमानस्य भेदद्वयम्—(१) स्वार्थानुमानम् (१) परार्थानुमानं च। यद्यपि प्रमाणानां विषये निम्बार्कानुयायिभिः रामानुजस्य अनुसरणं कृतं तथापि अनुमानस्य वर्गीकरणे महान् मतभेदः।

अन्यभाष्यकाराणामिव निम्बार्कस्यापि एतन्मतं यत् ब्रह्मज्ञानं श्रुतिभिरेवाप्तुं शक्यते। अनुमानस्य तत्र न कश्चिदुपयोगः इति नैयायिकाभिमतं, 'क्षित्यङ्कुरादिकार्येण' परमात्मरूपकारणस्यानुमानं निम्बार्कभाष्ये न स्वीकृतं वर्तते—'एवं क्षित्यङ्कुरादीनां प्रसिद्धानां कार्याणामपि कार्यत्वेन लिंगेन न ब्रह्म अनुमातुं शक्यते'।

मध्वाचार्यस्य मते अनुमानम् अनुप्रमाणम् इति तदनुसारेण तद्ज्ञानोत्पादनस्य बाह्यं साधनमात्रम्। अतः 'अन्यानुप्रमाणसमानं तद् गौणरूपेण ज्ञानस्य साधनम्',[२] इत्थं मध्वाचार्यसिद्धान्तानुसारं प्रत्यक्षानुमानयोः परोक्षापरोक्षप्रमाणरूपे न कमपि भेदं वयं कर्त्तुं शक्नुमः। प्रत्यक्षानुमानशब्दाः एतत्त्रयमपि परोक्षज्ञानस्य साधनम्।

महत्वपूर्णदार्शनिकसिद्धान्तज्ञाने मध्वाचार्येण अनुमानाय न किमपि महत्त्वं प्रदत्तम्। श्रुतिरेव विश्वसमस्यां समाधातुमेकमात्रं साधनम् इति तन्मतम्। मध्वाचार्येण प्रमाणरूपेण श्रुतिवाक्यानि विशेषतः पुराणवचनान्येव समुद्धृतानि तथा एतदुद्घोषितं यद् ब्रह्मज्ञानक्षेत्रे दार्शनिकसिद्धान्तान् निर्णेतुमनुमानस्य न किमपि स्वतंत्रस्थानम्। तद्धि अनवगतार्थावबोधने सर्वथा असमर्थम्। स्यादेतत्—अन्यसाधनद्वारा, विशेषतया श्रुतिवाक्यसाधनेन प्रमाणिततथ्यानां परीक्षणे तेषां क्रमबद्धकरणे वा सहायकं भवितुं शक्नोति अत एव मध्वाचार्यमते नैतत्स्वतंत्रं प्रमाणम्। आम्, प्रातीतिकसन्दिग्धश्रुतिवाक्येषु सामंजस्यस्थापने अनुमानस्य यत्किंचिदुपयोगित्वं स्वीकर्त्तुं शक्यते—

'प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु।
अनुमत्यो न स्वतन्त्राः प्रमाणपदवीं ययुः।[३]

ब्रह्मसूत्रभाष्ये मध्वाचार्येण अनुमानस्य स्वल्पातिस्वल्पः एव प्रयोगः कृतः। स्वमतं प्रमाणयितुं हि तेन तर्कापेक्षया अधिकांशतः श्रुतिवाक्यान्ये-

---

१. वेदान्तकौस्तुभे पृ० १६
२. एम्० हिरियन्ना 'दि ईसेन्शल्स ऑफ् इण्डियन फिलासफी पृ० १९७
३. म० भाष्ये ( ब्र० सू० २।१।१८ )

वाश्रितानि। स केवलं प्रमाणत्रयमेवस्वीकरोतीत्युपमानं तेनानुमानस्यै-वैकोभेदः अभ्युपगम्यते।

वल्लभाचार्येण अनुमानस्य विषये न कश्चिदपि विशेषो विचारः प्रकटीकृतः। स आध्यात्मिकविषयेषु शास्त्रस्यैव अन्तिमं प्रामाण्यं स्वीकरोति। तत्र च तर्कस्य न किमपि स्थानम्। तस्य मते परमात्मा प्रत्येकविरोधि-गुणानामाश्रयः तत्र प्रत्येकं वस्तु सम्भवति, एतदेव च तस्य वैशिष्ट्यम्. अत एव—

तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः"[1]

'अणोरणीयान् महतो महीयान्', अजोऽपि गृह्णतो जन्म निरीहस्य-हतद्विषः इत्याद्यात्मकः स श्रुतिवाक्यैः प्रमाणीक्रियते इतीह तर्कस्य न किमपि स्थानम्।

'ब्रह्म तु वेदैकसमधिगम्यं, यादृशं वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम'[2]।

वल्लभानुसारेण प्रत्यक्षवत् अनुमानस्य न स्वतः प्रामाण्यम्' तदर्थं हि बाह्यपरिस्थितयः अपेक्षिताः। अन्याचार्यवत् वल्लभः अपि परिपूर्णतया एतत्स्वीकरोति यत् अनुमाननिष्कर्षा न सीमिता इत्यनन्ताः, वास्तविकब्रह्मस्वरूपज्ञाने च श्रुतिसम्मतिरहितस्तर्कः न कथमप्युपयोगी वर्तते—

वेदोक्ते अर्थे शुष्कतर्केण प्रत्यवस्थानमयुक्तम्' तर्कस्य अप्रतिष्ठानात्',[3] अतएव अणुभाष्ये तेन प्रदत्ताः सर्वे एव तर्काः वेदाधाराः।

## शब्दप्रमाणम्—

प्रस्तुतभाष्यपंचके प्रत्यक्षानुमानयो र्यथास्थानं यथानिर्धारि-तस्वरूपविवेचनानन्तरमिदानीं ज्ञानस्य एकस्य साधनान्तरस्य शब्दस्यापि तत्र प्रयोगनिर्देशः आवश्यकः प्रतिभाति। ब्रह्मसूत्रभाष्येषु अस्य प्रमाणस्य अतिमहत्त्वम्। यतो हि वेदान्तसिद्धान्तो मुख्यतः श्रुतिप्रामाण्ये एव निर्बिभर्ति। तत्प्रतिपादकवेदान्तदर्शनं च एकतः वेदान्तस्य उत्तमः संक्षिप्तश्च ग्रन्थः। द्वितीयतश्च तत्र संदिग्धश्रुतिवाक्यानां

१. ई० उ० ५ २. अणुभाष्यम् ( ब्र० सू० १।१।१९ )
३. तत्रैव ( ब्र० सू० २।१।११ )

प्रामाणिकं निरूपणमित्यतः एतत्स्पष्टं यत् ब्रह्मसूत्रभाष्येषु शब्दप्रमाणस्य महत्त्वपूर्णं स्थानम् ।

न्यायप्रक्रियानुसारं शब्दस्य 'आप्तोपदेशः शब्दः'[1] एषा परिभाषा वर्तते । तत्र च येन धर्मस्य साक्षात्कारः कृतः, यथादृष्टमर्थं विख्यापयितुं यश्चोपयुक्तः उपदेष्टा स आप्तो मन्यते—'आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा'[2] इति न्यायभाष्ये स्पष्टम् ।

श्री विजयस्वामिशास्त्रिणा स्वकीयायां तन्त्रसिद्धान्तरत्नावल्यां शब्दप्रमाणस्यैषा परिभाषा प्रदर्शिता—'तत्र पदश्रवणानन्तरं गृहीतपदपदार्थसंगतिकस्य पुंसः पदार्थस्मृतौ जातायां तैरेव पदार्थैः स्मृतैरज्ञानाबाधितार्थविषयकं यद्विशिष्टवाक्यार्थज्ञानमुत्पद्यते सा शाब्दी प्रमा उच्यते । तज्जनकः शब्दः प्रमाणम्'[3] । स च शब्दो द्विविधः (१) पौरुषेयः (२) अपौरुषेयश्च । तत्र च यथा पूर्वमुक्तम् 'आप्तपुरुषोच्चरितः शब्दः पौरुषेयः, वेदवाक्यप्रतिपादितश्च शब्दः अपौरुषेयः उच्यते—'अपौरुषेयं वाक्यं[4] वेदः इति न्यायकोषात्' । तत्रलौकिकविषयेषु प्रामाणिकतार्थमपौरुषेयमेव वाक्यं ( वैदिकवाक्यम् ) महत्वपूर्णमाकलय्यते । शंकराचार्येण अनुपदमेतद् दृढीकृतं यद् ब्रह्मज्ञानं प्रत्यक्षेण प्रमाणान्तरसाधनेन वा न कदापि भवितुमर्हति । सर्वेषां जीवात्मनां ब्रह्मत्वं 'तत्वमसि' इति वेदवाक्यमतिरिच्य नान्येन केनापि ज्ञानसाधनेन ज्ञातुं शक्यते 'न च परिणिष्ठितवस्तुस्वरूपत्वे अपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, तत्वमसीतिब्रह्मात्मभावस्य शास्त्रमन्तरेण अनवगम्यमानत्वात्'[5] उपनिषत्सु निहिता 'सर्वं खल्विदं ब्रह्म, एषा भावना मानवचाक्षुषाद्यनुभवैर्न कथमपि निषेद्धुं शक्यते । अनुमानं तु प्रत्यक्षाश्रितम् । अतः तत् उपनिषत्प्रतिपादितैकत्वस्य न कथमपि विरोधि भवितुं शक्नोति । यदा च सर्वाणि वेदवाक्यानि जीवात्मना सह एकत्वं प्रतिपादयन्ति तदा न केनापि प्रमाणान्तरेण तन्निरस्तुं शक्यम् इति ब्रह्मस्वरूपनिर्धारणादिकेषु आध्यात्मिकविषयेषु अन्यसर्वप्रमाणापेक्षया शास्त्रप्रामाण्यस्यैव सर्वप्रथमं महत्वम् । अस्मिंश्च क्षेत्रे प्रत्यक्षानुमानयोस्तदेव उपयोगिता वक्तुं

---

१. न्यायसूत्रम् ( १।१।७ )

२. वात्स्यायनभाष्यम् पृ० २१ ( चौ० सं० )

३. तन्त्रसिद्धान्तमुक्तावली पृ० ६१ ४. न्यायकोषः पृ० ८०२

५. शां० भा० ( ब्र० सू० १।१।४ )

शक्यते यदा ते श्रुतिवाक्यसम्मते स्याताम् 'न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाण ब्रह्मजिज्ञासायाम् । किन्तु श्रुत्यादयः अनुभवादश्च यथासम्भवमिह प्रमाणम्, अनुभवसातत्यात् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य'[1]।

शंकरमते व्यावहारिकजगति प्रत्यक्षप्रमाणस्य सर्वाधिकं प्रामाणिकत्वम् । प्रत्यक्षीभूततथ्यानामतिक्रमणं हि न श्रुतिभिरपि कर्तुं शक्यते किन्तु तत्वानां विशेषताविषये विज्ञानस्यापि पूर्णतया प्रामाण्यं स्वीक्रियते ।

यदा वेदैः समेतानां सर्वेषामपि प्रमाणानां व्यावहारिकसत्यत्वम, यदा च शास्त्रं जीवात्मनां परमात्मना सह मौलिकमेकत्वं प्रतिपादयति तदा अस्माभिरेतत् स्वीकर्तव्यं भवति यन्मिथ्यासाधनैरपि सत्यलक्ष्यं प्राप्तुं शक्यते । शंकराचार्यः एनं विषयं जीवनस्य अनेकैरुदाहरणैर्बोधयितुं प्रायस्यत । एतच्च तस्य मुख्यसिद्धान्तस्य एतदर्थमविरोधि यत् तदनुसारं सर्वाण्येव प्रमाणानि, किं बहुना, शास्त्रमपि, परमात्मनो वास्तविकस्वरूपसाक्षात्कारानन्तरं समाप्नुवन्ति । स्पष्टीकृतञ्चैतत् श्रीशङ्कराचार्येण शारीरकभाष्ये 'तत्तुसमन्वमात्' इति सूत्रस्य व्याख्यावसाने—

'न चाहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्ति इति । अपि चाहुः—

गौणमिथ्यात्मनोऽसत्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माहमित्येव बोधे कार्यं कथं भवेत् ॥
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्'[2] ॥

रामानुजस्य तु शब्दप्रमाणविषये अयंसिद्धान्तः—'अनाप्तानुक्तवाक्यजनिततदर्थविज्ञानं शाब्दज्ञानम् । तत्करणं शब्दप्रमाणम्'[3] । तद्द्विविधम् (१) पौरुषेयम् (२) अपौरुषेयं च । तत्र पुरुषस्वातंत्र्याधीनरचनाविशेषविशिष्टं पौरुषेयं वाक्यम् । वेदानां च नित्यत्वेन अपौरुषेयत्वं करणदोषाभावः, बाधकप्रत्ययाभावश्च । यतो हि सर्गादौ भगवान् चतुर्मुखाय पूर्वपूर्वक्रमविशिष्टान् वेदान् स्मृत्वा स्मृत्वा उपदिशतीति उक्त्या

---

१. तत्रैव ( ब्र० सू० १।१।२ )

२. शां० भा० ( ब्र० सू० १।१।४ )

३. यतीन्द्रमतदीपिका, २ अवतारः पृ० ११

वेदस्य नित्यत्वमपौरुषेयत्वं च सिद्धम् इति करणदोषाभावो बाधक-प्रत्ययाभावश्च'[1]। एतदतिरिच्य श्रुत्यविरुद्धाचारव्यवहारप्रायश्चित्तादिप्रति-पादिका आप्तप्रणीता स्मृतिः प्रमाणम्। वेदोपबृंहणरूपेतिहासपुराणयो-रपि प्रामाण्यं स्वतः सिद्धम्। महाभारतरामायणयोः क्वचित्क्वचिद्विरोध-भाने अपि तत्वांशे वेदान्तवाक्यवदविरोधो नेयः।

पाञ्चरात्रागमस्यापि प्रामाणिकत्वम् यतो हि सम्पूर्णपांचरात्रस्य वक्ता परब्रह्मभूतः स्वयं नारायणः—'अतो वेदान्तवेद्यः परब्रह्मभूतो नारायणः स्वयमेव पञ्चरात्रस्य कृत्स्नस्य वक्ता'[1]।' इत्थं श्रीरामानुजाचार्यः न केवलं वेदानेव अपि तु पांचरात्रागममपि भगवत्प्रतिपादितं प्रतिपादयति।

अस्मिन् विषये शंकररामानुजयो र्विचारेषु महान् मत-भेदः। ब्रह्मसूत्रद्वितीयाध्यायद्वितीयपादान्तिमाधिकरणे शंकरः कथयति यद् भागवतसिद्धान्तः आंशिकतया एतदर्थं स्वीकार्यः यत् स ईश्वरं निमित्तोपादानोभयकारणं स्वीकरोति किन्तु तेनैतद् दृढीकृतं यत् एतन्मतम् एतदर्थं परिपूर्णरूपेण मान्यं न वर्तते यत् तत्र बहुविधो विप्रतिषेधः समुपलभ्यते—'विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उप-लभ्यते······वेदविप्रतिषेधश्च[2] भवति'। किन्तु रामानुजाचार्येण पांचरात्रागमस्य प्रामाणिकता स्वीकृता। तस्य एतत्कथनं यत् पचरात्रा-गमः वेदानां सारः इति स वेदानां गूढार्थं सारल्येन प्रतिपादयति—'वेदान् सुरनरदुरवगाहाँश्चावधार्य तदर्थयाथात्म्यावबोधिपंचरात्रशास्त्रं स्वयमेव निरमिमीतेति निरवद्यम्'[3]। अस्य विचारस्य प्रामाण्ये तेन अनेकान्युद्धरणानि प्रदत्तानि यत् भक्तेषु कृपापरवशो भगवान् स्वयमेव पंचरात्ररूपेण उपनिषदः संक्षिप्तवान्—

'वेदान्तेषु यथा सारं संगृह्य भगवान् हरिः।
भक्तानुकम्पया विद्वान् संचिक्षेप यथा सुखम्'[4]॥

तेनास्मिन्नधिकरणे तर्कपूर्णप्रमाणैः भागवतसिद्धान्तस्य उपयोगिता प्रदर्शिता। तथाचैतत्प्रतिपादितं यत्स्वयं सूत्रकारेण (व्यासेन) महा-भारते भागवतसिद्धान्तस्य संस्तुतिः[5] कृता।

---

१. रा० भा० (ब्र० सू० २।२।४१)
२. शां भा० (ब्र० सू० २।२।४५)
३. रा० भा० (ब्र० सू० २।२।४२)
४. तत्रैव ५. द्रष्टव्यम् रा० भा० (ब्र० सू० २।२।४२)

एतन्निर्णेतुं दुःशकं यत् शंकररामानुजयोः कतरेण 'विज्ञानादिभावे-तदप्रतिषेधः'[1] इत्यस्य बादरायणसूत्रस्य समुचिता व्याख्या कृता। फलतः एतन्निर्णेतुमपि कठिनं यदस्मिन्नधिकरणे भागवतसिद्धान्तस्य खण्डनं कृतं वर्तते स्थापनं वा। पाश्चात्येन विदुषा थीबोमहोदयेन रामानुजकृतः अर्थः समुचितः[2] स्वीकृतः किन्तु डा० बेल्वलकरमहोदय-स्यैतत्कथनं यत् रामानुजविचाराणां[3] न कश्चित् सुदृढ आधारः डा० घाटे महोदयः[4] अपि अनेनैव सहमतः।

रामानुजानुसारं स्मृतिप्रामाण्यं श्रुतिषु निर्भरम्। औपनिषदवाक्यानां स्पष्टीकरणे च स्मृतयः सहायिकाः। येषां न वेदानां परिपूर्णं ज्ञानं तान् औपनिषदवाक्यानि बोधयितुं स्मृतिसाहाय्यमत्यावश्यकं प्रामाणिकत्वं च किन्तु तासामेव स्मृतीनां वर्तते या न श्रुतिसिद्धान्तविरुद्धाः इति 'श्रुतिविरुद्धायाः स्मृतेरनादरणीयत्वम्'[5]। पुराणानां महाभारतस्य च प्रामाण्यमेवमेव श्रुतिषु निर्भरम्। रामानुजस्य मतमधिकांशतः पंचरात्रा-गमस्य पुराणानां प्रमाणेषु च निर्विभति।

रामानुजानुसारं ब्रह्मणस्तथा अतीन्द्रियविषयाणां ज्ञाने वेदानामेव केवलं प्रामाण्यम्—'ब्रह्मणः अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषय-तया ब्रह्मणः शास्त्रैकप्रमाणत्वात्'[6] तथा 'ब्रह्मणः प्रमाणान्तराप्रज्ञाततां द्रढयति यद् ब्रह्म न केनापि प्रमाणेन व्यक्तम्'[7]।

रामानुजसिद्धान्तानुसारं विभिन्नप्रमाणानां पारस्परिकप्रामाणिकता-स्वीकृते नावश्यकत्वम्, जगति द्वैतस्य प्रत्यक्षीकरणं सत्यम्। श्रुतिप्रति-पादितब्रह्मजीवयोरेकत्वमपि सत्यम्। अनयोर्द्वयोः सामंजस्यं केवलं तदैव भवितुं शक्नोति यदा विभिन्नरूपात्मकं जगदेतत्परमात्मनः शरीरं स्वीक्रियेत। यथाचान्तर्यामिब्रह्मश्रुतौ प्रतिपादितम्[8]—'यः पृथिव्यां तिष्ठन्[9]......इत्यादि। अत्र अस्याः श्रुतेरवश्यं प्रामाणिकत्वं मन्येत।

---

१. ब्र० सू० २।२।४४

२. थीबो—दि वेदान्तसूत्र विथ कामेण्ट्री बाई शंकर (भूमिका पृ० ३)

३. डा० बेल्वलकर ब्रह्मसूत्र आफ बादरायण विथ दी कामेन्ट्री आफ शंकर—पृ० १०५

४. घाटे—दी वेदान्त पृ० ८९ ५. रा० भा० ( ब्र० सू० २।१।१ )

६. रा० भा० ( ब्र० सू० १।१।३ )

७. वेदान्तदीपः ( ३।२।२२ )

८—९. सर्वदर्शनसंग्रहः, संस्कृतभूमिका पृ० ६५-६६ )

यतो हि सत्यामपि प्रत्येक जागतिकवस्तुविभिन्नतायां प्रत्यक्षप्रमाणेन श्रुतिप्रतिपादितैकताप्रामाण्यस्य विरोधः कर्त्तुं न शक्यते । एवमेव बाह्यजगति प्रत्यक्षीभूतभिन्नतायाः सत्यत्वं श्रुतिप्रतिपादितमिथ्यात्वेन अस्वीकर्त्तुं न पार्यते । अतः श्रुतीनामेवमेव अर्थः कार्यः यथा च तासां प्रत्यक्षप्रमाणेन विरोधो न भवेत् । इत्थं रामानुजसिद्धान्तानुसारं प्रत्यक्षादिसर्वप्रमाणानि परमात्मसाक्षात्कारपर्य्यन्तं सत्यानि ।

शंकराचार्यस्य एतत्कथनं यत् अन्ते—परमात्मसाक्षात्कारावस्थायां न केवलं जगदपि तु शास्त्रमपि मिथ्या अस्ति तथा ज्ञानस्य प्राप्तौ मिथ्यासाधनमपि सहायकं भवितुं शक्नोति', रामानुजानुयायिभिर्न स्वीकृतम् । तेषामेतत्कथनं यन्मिथ्यात्वं न कथमपि सत्यप्राप्तौ सहायकं भवितुमर्हति । केवलम्, एकेनसत्यज्ञानेनैव इतरस्य सत्यज्ञानस्य प्राप्तिः कर्त्तुं शक्यते ।

बादरायणमनुसरता निम्बार्काचार्येणाप्येतदेव स्वीक्रियते यत् ब्रह्मणः स्वरूपज्ञानं केवलं वेदेभ्य एव भवितुं शक्नोति । एवंभूताया अलौकिकशक्तेर्हि ईश्वरप्रतिपादितग्रन्थेष्वेव सम्भवात्—'जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव नान्यप्रमाणकम् । समस्तश्रुतीनां साक्षात्परम्परया वा तत्रैव समन्वयात्''[1] । अतीन्द्रियविषयेषु च प्रत्यक्षमनुमानं वा न कथमप्युपयोग भवितुं शक्नोति ।

द्वैताद्वैतयोरुभयोः प्रतिपादकानि श्रुतिवाक्यानि उपलभ्यन्ते । अतः अनयोरुभयोः सामंजस्यं तदैव भवितुं शक्नोति यदा ब्रह्म, एकदैव स्थूलमपि सूक्ष्मं तदुभयभिन्नं चापि स्वीक्रियेत । द्वैतप्रतिपादकश्रुतयः स्वतन्त्रसत्ताकस्य ब्रह्मणः, परतन्त्रसत्ताकयोः जीवजगतोश्च द्वैततां निर्दिशन्ति । अद्वैतताप्रतिपादकश्रुतयश्च सम्पूर्णसत्ताधारभूतमेकमात्रं परमस्वतन्त्रसत्ताकं परमात्मानं निर्दिशन्ति । निषेधात्मकवाक्यैः ब्रह्मप्रतिपादकश्रुतिवाक्यानि एतद् द्योतयन्ति यद् भौतिकपरिस्थितिवशात् सीमितवस्तूनामपेक्षया ब्रह्म सर्वथा भिन्नम् ।

निम्बार्काचार्यः एतत्स्वीकरोति यत् सरलतया श्रुत्यर्थपरिज्ञापनार्थं स्मृतयः अपेक्ष्यन्ते किन्तु स एवमपि स्वीकरोति यत् स्मृतिप्रामाण्यं वैदिकवाक्येषु निर्भरम्, इति यत् स्मृतिवाक्यं श्रुतिवाक्यानुकूलं तदेव प्रामाणिकम् अन्यथाप्रामाणिकम् । निम्बार्काचार्यप्रधानशिष्येण श्रीनिवासाचारिणा वेदान्तपारिजातसौरभस्य स्वकीये व्याख्याने वेदान्तकौस्तुभे

---

१. नि० भा० ( ब्र० सू० १।१।४ )

मनुस्मृतिमुद्धरता प्रतिपादितम् यत् वेदप्रतिकूलस्मृतिग्रन्थानां न कापि प्रामाणिकता मन्तव्या। ते हि मनुष्यान् सन्मार्गतः विचालयन्ति।'[1]

मध्वाचार्येण शब्दप्रमाणस्य निर्देशः केवलं दार्शनिकविषयेषु एव कृतः। एतदनुसारं शब्दप्रमाणं द्विविधम् (१) प्रामाणिकम् (२) अप्रामाणिकं च। तत्र शास्त्रं, सर्वथा निर्दोषत्वात्, प्रामाणिकं शब्द-प्रमाणम्। एतच्च शास्त्रं पौरुषेयमपौरुषेयं चेति द्विविधम्, एतदेव आगमः कथ्यते। अनयोश्च अपौरुषेयं शास्त्रं नितरां प्रामाणिकम्। न तत्कथमपि मिथ्या भवितुं शक्यते। पौरुषेयेण तु शास्त्रेण यदाकदा अप्रामाणिकेन असत्येन चापि भूयते।

मध्वाचार्येण चत्वारो वेदाः उपनिषदः ब्राह्मणग्रन्थाश्चेत्थं सम्पूर्णं वैदिकं साहित्यम् अपौरुषेयशास्त्रान्तर्गतं तथा रामायणं महाभारतं पंचरात्रागमश्चैतत् पौरुषेयशास्त्रान्तर्गतं मन्यते। येषां च ग्रन्थानामेतैः सह सामंजस्यं तेषामेव प्रामाण्यं नान्येषामिति तन्मतम्—

ऋग्यजुः सामाथर्वा च भारतं पंचरात्रकम्।
मूलरामायणं चैव शास्त्रमित्यभिधीयते॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्[2]॥

मध्वाचार्यस्यैतन्मतं यत् वेदानां पंचरात्रागमस्य च भावानां समानतया ऐक्यम् इत्यनयोरुभयोः प्रामाणिकत्वम्—'वेदपंचरात्रयोः ऐक्याभिप्रायेण पंचरात्रस्य प्रामाण्यमुक्तम्'[3]।

रामानुजस्येव मध्वाचार्यस्यापि प्रवृत्तिः आगमपुराणप्रामाणिकतायामाधिक्येन वर्तते। शंकरस्य च न तथा।

अन्यभाष्यकाराणामिव मध्वाचार्यस्याप्येतन्मतं यत् प्रत्यक्षम् अनुमानादिप्रमाणं च परब्रह्मस्वरूपज्ञाने न कथमपि सहायकं भवितुं शक्नोति इति तदर्थं वयं सामान्यतया श्रुतिषु विशेषतया च वेदेषु निर्भरामः।

मध्वाचार्यस्य मते सम्पूर्णं वैदिकं साहित्यं महत्वपूर्णम्। इति तत्कृते ज्ञानकाण्ड-कर्मकाण्डयोर्न कश्चिद् भेदः।

वल्लभः अपि एतत्स्वीकरोति यत् आध्यात्मिकविषयपरिज्ञाने शास्त्रमेव केवलं प्रमाणम्, श्रुतिप्रतिपादितं ब्रह्मस्वरूपं हि श्रुतिभिरेव ज्ञातुं

---

१. श्रीनिवासः—वे० कौ० (२।१।१)

२. म० भा० (ब्र० सू० १।१।३) ३. तत्रैव

शक्यते अतएवोक्तं तेन अणुभाष्ये—'ब्रह्म तु वेदैकसमधिगम्यं यादृशं वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम',[1] अस्मिन् मते वेदानामेव एकमात्रं प्रामाण्यं सर्वाधिकं स्वीकृतं वर्तते। अन्येषां प्रमाणानां तावतैव प्रामाण्यं यावता तानि श्रुतिवाक्याविप्रतिषिद्धानि सन्ति तदनुकूलानि भवन्ति।

वल्लभाचार्यः वेदेषु न क्वापि अर्थवादं स्वीकरोति। तस्यायं विश्वासः यत् वेदानामेकैकाक्षरस्यार्थो महत्वपूर्णो यथाप्रतिपादितसत्यार्थसूचकश्च। अन्यथा तेषामपौरुषेयतैव सन्देहास्पदं स्यात्—'वेदश्च परमाप्तः अक्षरमात्रमपि अन्यथा न वदति अन्यथा सर्वत्रैव तदविश्वासप्रसंगात्'[2]। अत एव वेदेषु मीमांसकाभिमतः अर्थवादो न वल्लभसम्मतः।

वल्लभः प्रामाणिकशास्त्रेषु श्रीमद्भागवतमपि मन्यते। इत्थं तन्मते वेदः, ब्रह्मसूत्रं, श्रीमद्भगवद्गीता श्रीमद्भागवतं चैतच्चतुष्टयं प्रमाणम्। तत्र चोत्तरोत्तरं प्रस्थानं पूर्वपूर्वप्रस्थानानां संदेहमपाकुर्वत् सामूहिकरूपेण तात्विकसिद्धान्तं प्रतिपादयति इति तदभिप्रायः,—

'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्।
उत्तरं पूर्वसन्देहवारकं परिकीर्तितम्'[3] ॥

यतो हि वेदानां प्रत्येकं स्थलं प्रमाणम्, अतः तद्गतवाक्यानां प्रातिभासिकविरोधेषु सामंजस्यं वल्लभमते अत्यावश्यकम् महत्वपूर्णं च वर्तते। तस्यायं विश्वासो यत्पूर्वोत्तरयोरुभयो मीमांसयो ब्रह्मैवैकः प्रतिपाद्यो विषयः। एतदाधारेण तस्येयं धारणा यत् जैमिनिबादरायणाभ्यामुभाभ्यां प्रतिपादिते पूर्वोत्तरमीमांसे एकमेव शास्त्रम्। तयो निर्माणोद्देश्यं च मानवमात्रस्य मोक्षप्रदानं वर्तते। षड्दर्शनसंग्रहे स्पष्टतया तयोरेकत्वं[4] प्रतिपादितं वर्तते।

वल्लभानुसारेण परमात्मा वासुदेवः अनन्तदिव्यगुणसम्पन्नः। तत्र कर्मज्ञानयोः प्रमुखता। पूर्वकाण्डं परमात्मनः कर्मस्वरूपमभिव्यनक्ति उत्तरकाण्डं च ज्ञानस्वरूपमिति फलतः उभयमपि स्वतन्त्रं काण्डम्। अतः एतत् स्वीकर्तुं सर्वथा समुचितं यत् पूर्वोत्तरमीमांसे उभयमपि एकस्यैव शास्त्रस्य शाखाद्वयम्। इत्थं वल्लभाचार्येण कर्मज्ञानयोरुभयोः

---

१. अ० भा० ( ब्र० सू० १।१।१९ )
२. तत्रैव ( ब्र० सू० १।१।२ )  ३. (ब) त० दी० नि० १।७
४. (ब) षड्दर्शनसंग्रहः ( पृ० ११८ )

सामंजस्यं संस्थापितम्। स्वकीयमेतन्मतं प्रमाणयितुं तेन एष महत्त्वपूर्णस्तर्कः प्रदत्तः यत् जैमिनिः व्यासस्य शिष्य आसीदिति नैतत्कथमपि सम्भवति यत् सः स्वगुरोर्विरुद्धं, किमपि मतं संस्थापयेत्—'तद्गुरुणैव व्यासेन ब्रह्मजिज्ञासायाः[1] प्रतिपादितत्वात्'।

कर्मज्ञानमार्गयोरुभयोस्सामंजस्येन प्रकृत्या यज्ञियकर्मसु अधिकं बलं दीयते। वल्लभो हि वैदिकमार्गस्यैवानुयायीति तत्कृते एतत्स्वाभाविकम्। एतत्सम्बन्धे एतदवधारणमत्यन्तावश्यकं यत् अनेनैव कारणेन सः स्वपुत्रेण कर्ममार्गप्रवर्तकः[2] उक्तः। वल्लभस्यायं विश्वासो यत् यज्ञकरणेन परमात्मा प्रसीदति, विशेषतानुसारं यजमानाय फलं च प्रदत्ते। यदि स ब्रह्मज्ञानी अस्ति तदा परमात्मा स्वयं तस्मै दर्शनं दत्त्वा क्रममुक्ति ददाति ब्रह्मज्ञानाभावे च स तस्मै आत्मानन्दं वैकुण्ठं वा प्रदत्ते। इत्थं वल्लभाचार्यः मर्यादामार्गे कर्मविशिष्टज्ञानस्य प्राचीनसिद्धान्तं स्वीकरोति—'कर्मब्रह्मणोः क्रियाज्ञानयोः धर्मिपरत्वेनैक्यात् कर्तृवाक्येषु सर्वत्र विरोधः'[3]। स च सिद्धान्तः केवलं तेष्वेव सीमितः ये मुक्तिमभिलषन्ति प्राचीनसाधारणरूढिवादं चानुगच्छन्ति।

सर्वथानिर्दोषः एकः अन्यो मार्गः। स च पुष्टिमार्गः कथ्यते। अस्मिन् भक्तो मुक्त्यर्थं सर्वथा परमात्मनः कृपायां निर्भरति। यदि कश्चिद् भक्तः स्वकीयेन उत्कृष्टप्रेम्णा भक्त्या च परमात्मनः कृपापात्रं संजायते तदा स तस्मै सद्यः मुक्तिं प्रदत्ते—

'विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्ग[4]मर्यादा'। तथा—'पुष्टिमार्गः अनुग्रहैकसाध्यः प्रमाणमार्गा[5]द्विलक्षणः'। इत्थं पुष्टिमर्यादेतदुभयमार्गसिद्धान्तेन वल्लभः कर्मज्ञानभक्तीनां परस्परं सामंजस्यमित्याध्यात्मिकतथ्यं स्वीकरोति।

वल्लभाचार्यः तासां श्रुतीनामाधिक्येन वैशिष्ट्यं स्वीकरोति याः परमात्मानमशेषगुणसम्पन्नं प्रतिपादयन्ति। 'सच्चिदानन्द' शब्दे च सन्निविष्टैस्तद्गुणैः परमात्मनः स्वरूपस्य संक्षिप्तः परिचयः प्राप्तुं शक्यते—सत्स्वरूपद्वारा दृष्टः केवलः कर्मविशिष्टः परमात्मा यज्ञपुरुषः

---

१. अणुभाष्यम् ( ब्र० सू० १।१।२ )

२. जी० एच्० भट्टः—जनरल आफ द ओरएण्टल इन्स्टीट्यूट १. ४. पृ० ३५३

३. अ० भा० ( ब्र० सू० १।१।१ )

४. तत्रैव ( ब्र० सू० ४।२।७ ) ५. तत्रैव ( ब्र० सू० ४।४।९ )

यश्च कर्मभिः सन्तोषयितुं शक्यते। एतदेव च ब्राह्मणग्रन्थेषु प्रतिपादितं वर्तते।

स्वकीयेन चित्स्वरूपेण दृष्टः चैतन्य (ज्ञान) विशिष्टः स एव परमात्मा ब्रह्म, यश्च ज्ञानद्वारा प्राप्तुं शक्यते एतच्चोपनिषत्सु प्रतिपादितं वर्तते।

आनन्दस्वरूपेण दृष्टः परमात्मा कृष्णः। स च गीताभागवतानुसारमेवाराधनीयः।

वल्लभाचार्येण सगुणनिर्गुणोभयप्रतिपादकश्रुतिवाक्येषु इत्थमेकवाक्यता संस्थापिता यत् यानि श्रुतिवाक्यानि ब्रह्मणो निर्गुणत्वं प्रतिपादयन्ति तेषामेतत्तात्पर्यं यत् परमात्मा साधारणविशेषतारहितः। स चेत्थं विश्वसिति यत् परमात्मा असंख्यासाधारणगुणसम्पन्नः इति सत्स्वपि तत्र विरोधिगुणेषु न तत्र कश्चिद् विरोधः—'तस्मात् प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां वा ब्रह्म साकारमनन्तगुणपरिपूर्णं चेति नाऽव्यक्तमेवेति निश्चयः';[1] तथा—'तस्मात् श्रुतिप्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन ब्रह्मप्रतीतेः न विरोधः'[2]।

इत्थमाचार्यैः श्रुतिप्रतिपादिततथ्यानामनुशीलनमत्यन्तसमुचितपद्धत्या कृतं दृश्यते। ते हि इमानि सत्यानि तेषाम् ऋषीणामाध्यात्मिकप्रातिभज्ञानोत्पन्नानि मन्यन्ते ये व्यक्तिगतात्मना सह सम्पूर्णजगदात्मनामैक्यं संस्थापयितुं समर्था अभूवन्। ते चाधिकाधिकसत्यानां प्रत्यक्षानुभवमकुर्वन् इति वेदानां सर्वाधिकप्रामाणिकत्वे एतदेव तात्पर्यं यत् सर्वेषु प्रमाणेषु प्रत्यक्षस्यैव सर्वाधिक्येन प्रामाणिकता वर्तते—'प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात्'[3]।

## तर्कः—

यद्यपि भाष्यकारैः स्वभाष्येषु यत्र तत्र उपमानार्थापत्यनुपलब्ध्यादीनामपि यत्किंचिन्निर्देशः कृतः तथापि स नगण्यः। वादपद्धतौ च तर्कस्य महत्वपूर्णस्थानमिति तन्निर्देश इह आवश्यकः प्रतिभाति। एष हि प्रमाणद्वारा निर्दिष्टानां सबलत्वविधायकतया समर्थक इति सत्यानुसन्धाने महोपयोगी वर्तते।

---

१. अ० भा० (३।२।२४) २. तत्रैव (३।२।२१)

३. शा० भा० (१।३।२८)

तत्र 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः' इति न्यायसूत्रम्। शंकराचार्येण च तर्कशब्दस्य साधारणः अर्थः स्वीकृतः। तेन च तत्र तर्कस्य सा प्रक्रियापि सन्निवेशिता, यस्याः सम्बन्धः प्रातीतिकविरुद्धश्रुतिवाक्येषु सामंजस्यस्थापनेन वर्तते। तस्यैतत्कथनं यत् बाह्यतः पारस्परिकविरोधप्रतीतीनां श्रुतिवाक्यानां समुचितार्थनिश्चितिः अर्थाभासस्य निराकरणे निर्भरति, तच्च वाक्यार्थानां समुचितव्याख्यात्रा तर्केण सम्भवति—'श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिराकरणेन सम्यगर्थनिर्धारणं तर्केणैव वाक्यवृत्तिनिरूपणरूपेण' क्रियते'। तथापि स नैयायिकैः प्रयुज्यमानेन तर्कशब्दस्य प्रयोगात्मकरूपेण पूर्णतया परिचित इत्येतत् तस्य व्याख्याकारिणीषु युक्तिषु कृतेन तर्कस्य भिन्नभिन्नरूपाणां प्रचुरप्रयोगेण परिज्ञायते।

सतीष्वपि तर्कस्य अनेकासु विधासु मध्ये वर्तमाननैयायिकैः स्वीकृतासु पंचविधासु शंकराचार्येण अनेकस्थलेषु, प्रमाणबाधितार्थप्रसंगस्य अनवस्थायाः, इतरेतराश्रयत्वस्य (अन्योऽन्याश्रयत्वस्य) च प्रयोगः कृतो दृश्यते।

तत्र प्रमाणबाधितार्थप्रसंगस्य विशेषोल्लेखो नावश्यकः प्रतिभाति, यतो हि स प्रायः बहुषु स्थलेषु समुपलभ्यते। तर्कस्यास्यां विधायां युक्तिः सर्वदा तथ्यविरोधिनी भवति। बादरायणशंकराभ्यामनेकस्थलेषु प्रयुक्तं 'अनिर्मोक्षप्रसंगः' इत्याद्येव केवलमस्य तर्कस्य स्वरूपम्। इयं हि तर्कस्य सा विधा या एवं निष्कर्षं प्रापयति यः प्रतिवादिनः अमतः सन् वादिनः अभीष्टं साधयति। इयं विधा प्रायः बाहुल्येनोपलभ्यते।

कार्यकारणयोः वास्तविकस्वरूपस्थापने शंकरेण अनवस्थायाः साहाय्येन अनयोः समवायसम्बन्धः खण्डितः। अस्मिन् प्रसंगे तस्यैतत्कथनं यत् कार्यकारणयोर्न अश्वमहिषवद्भेदबुद्धिरिति तयोस्तादात्म्यं स्वीकर्तव्यम्। अनयोः समवायसम्बन्धकल्पनायामपि समवायस्य समवायिभिः सह सम्बन्धस्वीकारे तेषामनेकसम्बन्धकल्पना कर्तव्या स्यात् इत्यनवस्था आपद्येत—'समवायकल्पनायामपि समवायस्य समवायिभिः सम्बन्धेऽभ्युपगम्यमाने तस्य तस्यान्योऽन्यः सम्बन्धः कल्पयितव्यः इत्यनवस्थाप्रसंगः''[२]।

संसारस्य अनादितां साधयितुमस्य विषयस्य विरुद्धमाक्षेपं प्रारभ-

---

१. शां० भा० (ब्र० सू० २.१.१८)

२. शां० भा० (ब्र० सू० २.१.११)

माणेन शंकराचार्येण तर्कस्य अन्योन्याश्रयविधाया इत्थं प्रयोगः कृतः—'सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभाग इतीतराश्रयत्वं प्रसज्येत'।[1] किंच, 'न च कर्मान्तरेण शरीरं सम्भवति न च शरीरमन्तरेण कर्म सम्भवतीतीतरेतराश्रयत्वप्रसंगः। अनादित्वे तु बीजाङ्कुरन्यायेनोपपत्तेर्न कश्चिद् दोषो भवति'[2]।

नैयायिकैः स्वीकृतासु तर्कस्योक्तविधासु प्रमाणबाधितार्थप्रसंगस्य, अनवस्थायाः अन्योन्याश्रयस्य च प्रयोगो रामानुजेनापि स्वकीये श्रीभाष्ये कृतो वर्तते। तत्र 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रे भाष्ये जीवात्माविद्ययोः प्रसंगे एवं प्रमाणबाधितार्थप्रसंगः—'आत्मनां भिन्नत्वे घटादिवज्जडत्वमनात्मत्वं क्षयित्वं च प्रसज्येत'[3]—तथा—'जीवो यदि नश्येत् स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्, नो चेदविद्यानाशेऽप्यनिर्मोक्षः।[4]

निजप्रतिपादितविषयं प्रमाणयितुं रामानुजस्य अत्यन्तं प्रियसाधनमनवस्था वर्तते। तथाहि—'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्य व्याख्यां कुर्वता तेन स्वरूपानुपपत्तिप्रकरणे 'द्रष्टृदृश्ययोस्तदवच्छिन्नायाः दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षया अनवस्था[5] स्यात्'। तथा यथार्थख्यातिप्रकरणे अज्ञानान्तरमिति चेत् अनवस्था[6] स्यात्'। एवं निवृत्त्यनुपपत्तिप्रकरणे, 'निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वात् ज्ञात्रपेक्षया अनवस्था[7] स्यात्' इत्थमनवस्था आश्रिता। प्रमाणबाधितार्थप्रसंगस्य अनवस्थायाश्चैतयोरुभयोरेकस्मिन्नेव वाक्ये इत्थं प्रयोग उपलभ्यते—'संस्थानस्यासतः उत्पत्तावसत्कार्यवादप्रसंग इति चेत् असत्कार्यवादिनः अपि उत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्यवादप्रसंगः, उत्पत्तिमत्त्वे च[8] अनवस्था'।

तर्कस्य अन्योन्याश्रयविधाया अपि प्रचुरः प्रयोगो रामानुजेन कृतो दृश्यते। तथाहि—आत्मस्वरूपनिरूपणे तेनोक्तं यत् शास्त्रं यद्यप्येकत्वप्रतिपादकं तथापि प्रत्यक्षीक्रियमाणा विभिन्नता न कथमपि अपलपितुं शक्यते। यदि चेत्थं मन्येत यदेवं स्वीकारे शास्त्रस्य विरोधः इत्येतदर्थ-

---

१. तत्रैव (२।१।१५)  २. तत्रैव (२।१।३६)
३-४. १२१. रा० भा० (ब्र० सू० २।१।१५)
५. रा० भा० (पृ० ८५)  ६. तत्रैव (पृ० ८७)
७. तत्रैव (पृ० १०२)
८. रा० भा० (ब्र० सू० २।१।१५) पृ० २२१

मेवैवं मन्तव्यं तदा नैतत्समुचितम्। तथात्वे हि निम्नलिखितप्रकारेण अन्योन्याश्रयः स्यात्—'अनेनैव शास्त्रविरोधेन ज्ञास्यते इति चेन्न, अन्योन्याश्रयणात्। शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चयः"[1] इति।

एवमेवाज्ञानस्य परिचयं ददता अग्रे उक्तम्—'किं च ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सद् ब्रह्म तिरस्करोति, ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम्'[2]।

निम्बार्केण तर्कस्य प्रयोगः सामान्यतया मुक्त्यर्थे एव कृतः—…'तर्कबलेन प्रत्यवतिष्ठते, जगतो न चेतनप्रकृतिकत्वं [3]विलक्षणत्वात्'। तथापि अनेकासु निजयुक्तिषु निश्चितरूपेण तेन तर्कविधानां प्रयोगः पारिभाषिकार्थप्रसंगे अपि कृतः। उदाहरणार्थं तेनेत्थमुक्तं यत् उत्पत्तेः पूर्वं कार्यस्य अनुपस्थितिर्न मान्येति उत्पत्तेः पूर्वमपि कारणे कार्यस्य स्थितिः स्वीकर्तव्या। अन्यथा कथं नाग्नेर्यवाद्यंकुरोत्पत्तिरिति प्रश्नः समुपतिष्ठते—'यद्यसदेव कार्यमुत्पद्यते तर्हि वह्नेर्यवाद्यंकुरोत्पत्तिः कुतो नास्तीति युक्तेः'[4]। इयं हि तर्कस्य प्रमाणबाधितार्थप्रसंगविधा यस्याः निर्देशः 'युक्ति' शब्देन कृतो वर्तते। एतदिहावधारणीयं यत् सूत्रेषु यत्र यत्र प्रसंगशब्दस्य प्रसक्तिशब्दस्य वा प्रयोगो लभ्यते तत्र सर्वत्र निम्बार्केण तार्किकप्रसंग एवार्थः स्वीकृतः। तस्य व्याख्या च प्रमाणबाधितार्थप्रसंगद्वारैव कृता वर्तते। तथाहि—

स्मृत्यनवकाशदोषप्रसंग इति चेन्न……(२।१।१)
अपीतौ तद्वत्प्रसंगादसमंजसम् (२।१।८)
इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः (२।१।२१)

निम्बार्कभाष्ये अनवस्थाया बहून्युदाहरणानि नोपलभ्यन्ते तथापि न सर्वथा तदभावः। वैशेषिकविरुद्धस्तेनायं तर्कः प्रदत्तो यत् परमाणूनां सावयवत्वस्वीकारे अनवस्था स्यात्-'सावयवत्वे अनवस्थाप्रसंगात्'[5]।

एवमेव तेन 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः'[6] इत्यस्मिन्

---

१. तत्रैव (ब्र० सू० १।१।१) पृ० ७२
२. तत्रैव (ब्र० सू० १।१।१) पृ० ८७
३. (अ) नि० भा० (ब्र० सू० २।१।४)
४. (ब) तत्रैव (ब्र० सू० २।१।१७)
५. नि० भा० (ब्र० सू० २।२।११)
६. ब्र० सू० २।२।११

सूत्रे समवायस्य स्वीकृतिं निर्दिशता अनवस्थारूपेण अनवस्थितिशब्दं व्याख्याय समवायिना सह समवायस्वीकृतेरसम्भवता स्पष्टीकृता—समवायः अपि समवायिभ्यां समवायसम्बन्धान्तरेण सम्बध्येतात्यन्त-भेदसाम्यात्, सोऽपि सम्बन्धान्तरेण इत्यनवस्थानात्'[1]।

मध्वाचार्यमते तर्कशब्दार्थः न केवलं यस्य कस्यचित्साध्यस्य सिद्धी-करणार्थं युक्तिमात्रे सीमितः, अपि तु स तस्य सामान्यतया व्यापकमर्थं स्वीकृत्य मुख्यतया तत्प्रयोगं श्रुतिवाक्यानां प्रातीतिकविरोधसामंजस्ये कृतवान्। तेनैतत्प्रतिपादितं यत् पूर्वोत्तरश्रुतिवाक्येषु सति सामंजस्ये कतरः अर्थः स्वीकार्यः एतस्य ऊहस्तर्कः। निरर्थकः शुष्कश्च तर्को हेयः—

'पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत्।
इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत्'[2]॥

श्रुतिवाक्येषु सामंजस्यं स्थापयितुमयं तर्कः अत्यन्तोपयोगी वर्तते। इत्थं च तर्कः सर्वदा श्रुतिवाक्येषु आधारितस्तिष्ठति। स्वातंत्र्येण न तत्प्रयोगः कर्त्तुं शक्यते—

परस्परविरोधे तु वाक्यानां यत्र युक्तता।
तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यते[3]॥

तर्केण कदापि श्रुतिवाक्यविरोधिना न भवितव्यम्। प्रत्युत एवं तत्र तेन संगतिः स्थापयितव्या, येन तत्र सामंजस्यं प्रतीयेत—

न युक्तियोगाद् वाक्यानि निराकार्याण्यपि क्वचित्।
विरोध एव वाक्यानां युक्तयो न तु शुक्तयः॥[4]

इत्थं मध्वाचार्यमते तर्कः अनुमानं चेत्यनर्थान्तरम्।

स्वल्पान्येव एवं भूतानि स्थलानि यत्र मध्वाचार्येण तर्कशब्दः तार्किकरीत्या प्रयुक्तः। तेन निम्नांकितसूत्रद्वये, यत्र चोभयत्र अनवस्थितिशब्दः सूत्रयोः बादरायणे प्रयुक्तो वर्तते, अनवस्थायाः निर्देशः कृतः—

( १ ) अनवस्थितेरसंभवाच्च नेतरः ( १।१।१७ )
( २ ) समवायाभ्युपगमाच्च साम्यादनवस्थितेः ( १।२।१३ )

सूत्रेभ्यः पृथक् स्वतंत्रतया एकस्मिन्नेव स्थले इत्थमनवस्थायाः निर्देशः कृतः यत् अनादिश्रुतिवाक्येषु दोषा न स्वीकर्त्तुं शक्यन्ते, यतो

---

१. नि० भा० ( ब्र० सू० २।२।१३ )
२. म० भा० ( ब्र० सू० १।१।२ )
३. तत्रैव ( २।१।१।७ )    ४. तत्रैव ( २।१।२६ )

हि तेषां स्वतः प्रामाण्यम्। अन्यथा तेषां सदोषत्वस्वीकारे तत्र अन्य-प्रमाणम्, तत्रापि चान्यत्प्रमाणम् इत्थमनवस्था सम्पद्येत—

'नहि नित्यदोषाः कल्प्याः स्वतश्च प्रामाण्यम् अन्यथा अनवस्थितेः।'[1]

बौद्धसिद्धान्तं खण्डयता मध्वाचार्येण केवलमेकत्रैव अन्योन्याश्रयस्य प्रयोगो विहितः—'समुदायस्यैकहेतुत्वं न युज्यते। उभयहेतुकेऽप्यन्योन्याश्रयत्वात् तदप्राप्तिः'।[2]

मध्वभाष्ये प्रमाणबाधितार्थप्रसंगस्य स्वल्पान्येवोदाहरणानि। एकत्र तस्येत्थमुदाहरणम्—'तच्छरीरस्य तत्तत्परिमाणत्वमिति न मन्तव्यम्, विकारित्वादनित्यत्वप्रसक्तेः'।[3]

वल्लभस्य अणुभाष्ये वेदान्तस्य तार्किकस्वरूपापेक्षया तस्य व्याख्यात्मकस्वरूपस्य अधिकं महत्वं प्रदत्तं वर्तते इत्यस्मिन् भाष्ये वादविवादयोस्तार्किकसाधनानां सीमितक्षेत्रे एव प्रयोगः उपलभ्यते। तथापि कतिचिदवश्यमेवंभूतोदाहरणानि यत्र वल्लभेन तार्किकप्रसंगस्य पारिभाषिके अर्थे तर्कस्य कतिपयविधानां प्रयोगः कृतो वर्तते। तत्र प्रमाणबाधितार्थप्रसंगस्य बहून्युदाहरणानि। तथाहि तस्यायं तर्कः यत् जीवात्मा अवश्यमेव अनादिः स्वीकर्तव्यः, अन्यथा कृतस्य कर्मणो हानिः, अकृतस्य च स्वीकृतेः प्रसंगः—'कृतहान्यकृताभ्यागमप्रसंगश्च।'[4] तात्पर्यं चैतत् यत् यदि जीवोऽनादिर्न स्यात् तदा प्रलयनैकट्यदशायां सदसत्कर्मकरणोत्तरं प्रलये जाते जीवानां ब्रह्मरूपत्वात् तदानीं कर्मफलभोगाभावात् कृतहानिः, पुनः सृष्ट्यारम्भदशायां विस्फुलिंगवत् विभागेऽपि ब्रह्मरूपतायाः अपेतत्वेन तदानीमपि भोगायोगाच्च कृतहानिः। सृष्ट्यारम्भे ब्रह्मरूपतया अतिशुद्धानां पुनः सकलदुःखनिवहसाधनीभूतशरीरसम्बन्धात् अकृताभ्यागमप्रसंगश्च स्यादत एतया उपपत्त्या जीवस्यानादित्वम्।

'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्य व्याख्यायां वेदान्तविचारो व्यर्थः सार्थको वेति विवेचनं कुर्वता तेन प्रतिपादितम्—'मनननिदिध्यासनविधीनामानर्थक्यप्रसंगात्'।[5] अन्यभाष्यकारैः इव वल्लभेनापि प्रायः अनेकस्थलेषु 'अनिर्मोक्षप्रसंगः' इत्येष शब्दः प्रयुक्तः। उदाहरणार्थं निम्नाङ्कितसूत्राणामणुभाष्यं द्रष्टव्यम्—

---

१. म० भा० ( ब्र० सू० २।१।३ ) २. तत्रैव ( २।२।१८ )
३. तत्रैव ( २।२।२९ ) ४. अ० भा० ( ब्र० सू० २।२।३५ )
५. तत्रैव ( १।१।१ )

( १ ) पुरुषाश्मवदिति चेत्तथापि ( २।२।७ )
( २ ) अंगित्वानुपपत्तेश्च ( २।२।८ )
( ३ ) अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ( २।२।९ )

अनवस्थाया अपि वल्लभेन यत्किंचित्प्रयोगः कृतः। उदाहरणार्थं 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' ( २।२।१३ ) इत्यस्मिन् सूत्रे तेनेत्थं निर्दिष्टं यत् समवायस्वीकारे समवायसमवायिनोः सम्बन्धस्वीकारार्थमन्यः समवायो मन्तव्यो भवेदित्थमनवस्थादोषोपस्थितिः'— 'यथा सम्बन्धिनि सम्बन्धान्तरापेक्षा एवं समवायस्यापि, तथा सत्यनवस्थितिः'।[1]

एवमेव बौद्धस्वीकृतवासनानादितां खण्डयता वल्लभाचार्येणेत्थमनवस्थाया निर्देशो विहितः—'अनादित्वे त्वन्धपरम्परान्यायेनाप्रतिष्ठैव'।[2]

अणुभाष्ये अन्योन्याश्रयस्यापि उदाहरणान्युपलभ्यन्ते। तथाहि— 'ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते तज्ज्ञानस्यैव साधनत्वेऽवगते तच्छेषत्वे च यागादीनामवगते तदर्थकर्मकरणे चित्तशुद्धौ सत्यां वैराग्यादि। इदं च वेदान्तविचारव्यतिरेकेण न भवति इत्यन्योन्याश्रयः'।[3]

एकत्र च तेनेत्थमन्योन्याश्रयस्य निर्देशः कृतः यत् सृष्टेः ( शरीरात् ) पूर्वं कर्मणः असम्भवः। यदि चेत्थं मन्येत यत् सृष्टेः ( शरीरप्राप्तेः ) पश्चात् कर्म भवति तदा अन्योन्याश्रयः 'न कर्म अविभागात् कार्योद्गमात् पूर्वं सम्भवति, पश्चात्तु अन्योन्याश्रयः इति चेन्न अनादित्वात्'।[4]

## निग्रहस्थानम्—

ब्रह्मसूत्रभाष्यकारैर्गृहीतायां शास्त्रार्थपद्धतौ निग्रहस्थानस्यापि सफलः क्रमबद्धश्च प्रयोगः उपलभ्यते। स्वकीयया तार्किकप्रतिभया प्रत्येकभाष्यकारेण यथास्थानं निजविरोधिनं निग्रहस्थानस्थितिं प्रापयितुं स्तुत्यः प्रयत्नः कृतः।

शंकराचार्यो हि अद्वितीयस्तार्किकः। तेन हेत्वाभासरूपिणा निग्रहस्थानेन निजविरोधिसिद्धान्ताः पदे पदे निरसिताः।

---

१. अ० भा० ( ब्र० सू० २।२।१३ )
२. तत्रैव ( ब्र० सू० २।२।३० )
३. तत्रैव ( ब्र० सू० १।१।१ )
४. तत्रैव ( ब्र० सू० २।१।३५ )

गौतमेन निजन्यायसूत्रे 'विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्'[1] इति निग्रहस्थानस्य लक्षणं प्रदत्तम्। तस्य च व्याख्यानं वात्स्यायनेनेत्थं कृतम्—'विपरीता कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। विप्रतिपद्यमानः पराजयं प्राप्नोति, निग्रहस्थानं खलु पराजयप्राप्तिः। अप्रतिपत्तिस्तु आरम्भविषयेऽप्यप्रारम्भः। परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धरति'[2] इति। अर्थात् कस्यचिद्विपरीतस्य विषयस्य प्रतिपादनं, विरोधिना स्थापितस्य पक्षस्य अप्रतिषेधः, तद्द्वारा निषिद्धस्य विषयस्य अनुद्धरणं वा यस्य कस्यचित्पक्षस्य पराजयस्य हेतुः। तत्र विप्रतिपत्त्यविप्रपत्त्योविकल्पान्निग्रहस्थानबहुत्वम्। निग्रहस्थानानि खलु पराजयवस्तूनि अपराधाधिकरणानि प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसम्प्लवन्ते। अस्य निग्रहस्थानस्य च प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः इत्यादयो द्वाविंशतिभेदाः। तेषु च हेत्वाभासानां महत्त्वपूर्णं स्थानम्। युक्तिप्रसंगे, निजविपक्षिकथने, शंकरेण तत्क्षणमेव यत्किंचिदेवं भूतं स्थलमवश्यमन्विष्यते यत्र अवश्यं कश्चिन्नकश्चिद् हेत्वाभासः समापतति। उदाहरणार्थं निम्नांकितं स्थलं द्रष्टव्यम्—सांख्यमतखण्डने भामत्यां वाचस्पतिना निर्दिष्टम्—'तदेतत्परिमितत्वं सांख्यीयराद्धान्तालोचनेनैकान्तिकमिति दूषयति'।[3] अस्मिन् स्थाने प्रयुक्तः अनैकान्तिकहेत्वाभासः। तथा च 'तस्मात्प्रवृत्तेरपि चेतनाधिष्ठानसिद्धिरिति 'शक्तितः प्रवृत्तेश्च' इत्ययमपि हेतुः सांख्यीयो विरुद्ध एवेत्युक्तं[4] वक्रोक्त्या', अस्मिन् स्थले निर्दिष्टो विरुद्धो हेत्वाभासः। अन्यत्रापि शंकरेण स्वयमसिद्धादिहेत्वाभासैर्निजविपक्षिसिद्धान्ता निरसिताः। तथाहि—'रचनानुपपत्तेश्चानुमानम्' (२।२।१) सूत्रे प्रधानस्य जगदुपादानकारणतां खण्डयता शंकरेण हेत्वसिद्धहेत्वाभासस्येत्थं निर्देशः कृतः, 'अन्वयाद्यनुपपत्तेश्च' इति चशब्देन हेतोरसिद्धिं समुच्चिनोति'।[5] एवमेव 'पयोम्बुवच्चेत्तत्रापि' (२।२।३) इत्यस्मिन् सूत्रे सांख्यमतं निरसता तेन दृष्टान्तासिद्धो निर्दिष्टः।

शेषनिग्रहस्थानेषु प्रतिज्ञाहानेराधिक्येन प्रयोगः शंकरेण कृतः। तथाहि—जगद्रचनायां चेतनपुरुषस्य अप्रवर्तकत्वम् अचेतनप्रकृतेः स्वतन्त्रप्रवृत्तिं च खण्डयता तेन अभ्युपेतहानेर्निर्देशो विहितः। सा चाभ्यु-

---

१. न्यायसूत्रम् १।२।१९ २. न्या० सू० भाष्यम् पृ० ७२

३. भामती पृ० ४१६ ४. तत्रैव पृ० ४१७

५. शां० भा० (ब्र० सू० २।२।१)

पेतहानिः प्रतिज्ञाहानिनिग्रहस्थानम्—'अभ्युपेतहानं तावद्दोषः' आपतति। प्रधानस्य स्वतंत्रस्य प्रवृत्त्यभ्युपगमात् पुरुषस्य च प्रवर्तकत्वानभ्युपगमात्' ।[1]

'आकाशे चाविशेषात्' (२।२।२४) इत्यस्मिन् सूत्रे अभावमात्रमाकाशं स्वीकुर्वतां बौद्धानां मतं खण्डयता शंकरेण अभ्युपगमविरोध (प्रतिज्ञाहानि) निग्रहस्थानस्येत्थं निर्देशो विहितः—'आवरणाभावमात्रमाकाशे मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत, सौगते हि समये पृथिवी भगवन् किंसंनिश्रया ? इत्यस्मिन् प्रतिवचनप्रवाहे पृथिव्यादीनामन्ते वायुः किंसन्निश्रयः' इत्यस्य प्रश्नस्य प्रतिवचनं भवति 'वायुराकाशसन्निश्रय इति तदाकाशस्य अवस्तुत्वे न समंजसं स्यात्' ।

रामानुजाचार्यः अपि शास्त्रार्थप्रक्रियायामतिकुशल इति युक्तिप्रदर्शनसमये स शीघ्रमेव येन केनचिन्निग्रहस्थानेन निजविपक्षयुक्तीनामसंभवत्वं साधयति। तार्किकभ्रान्तिषु हेत्वाभासानां महत्त्वपूर्णं स्थानमिति रामानुजाचार्यः प्राचुर्येण तानाश्रित्यात्मानं तर्कविषयकममज्ञप्रकाण्डमनीषिणं प्रमाणयति स्म।

विशिष्टाद्वैतमते हेत्वाभासानां स्वीकृतिः प्रायः न्यायानुकूलैव। श्रीनिवासाचार्येण यतीन्द्रमतदीपिकायामेतेषां भेदोपभेदानां विवेचनं न्यायानुसारमेव कृतम्—'अन्ये हेतुवद्भासमानाः हेत्वाभासाः। ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदेन [2]पंचप्रकाराः।' एतेषु हेत्वाभासेषु रामानुजाचार्येण स्वकीये श्रीभाष्ये अनैकान्तिक (सव्यभिचार) हेत्वाभासस्य प्रायः आधिक्येन आश्रयो गृहीतः। तथाहि—'अथातो ब्रह्मजिज्ञासा' इत्यस्य व्याख्यायां 'यदप्यस्या अनुपपत्त्या विचारान्तरनिरसनं तदप्यनुपपन्नम्। प्रागभावे व्यभिचारात्'[3]। एवमेव विपक्षाभिमताविद्याया अनादितादिनिराकरणार्थमित्थम् अनैकान्तिकः समाश्रितः। तथा च भवदभिमताऽविद्याऽनुपपन्नैव; विविधविकारास्पदं, तत्त्वज्ञानोदयात् अन्तवती चेति तस्यामनैकान्तिकत्वम्'[4]।

---

१ तत्रैव (२।२।७)

२. यतीन्द्रमतदीपिका—द्वितीय : अवतार : पृ० ९

३. रा० भा० (ब्र० सू० १।१।१) पृ० ३६

४. तत्रैव २।१।१५

बहुषु स्थलेषु रामानुजाचार्येण विरुद्धहेत्वाभासस्य निर्देशः कृतः। उदाहरणार्थम्—अद्वैतवादिना भावरूपाज्ञानस्थापनवाक्ये यो हेतुः प्रस्तुतः तन्निराकरणार्थं तेनोक्तं यत्तस्य अनभिमताज्ञानस्यापि साधकत्वेन विरुद्धो हेतुः, 'अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वाद् हेतोः'[1]। अस्मिन्नेव वाक्ये तेनैतदपि निर्दिष्टं यत् यदि स हेतुर्नाज्ञानान्तरसाधकस्तदा अनैकान्तिको हेतुः, 'तत्राज्ञानान्तरासाधने हेतोरनैकान्तिकत्वम्'[2]।

रामानुजाचार्येण निग्रहस्थानस्य अन्यभेदेषु प्रतिज्ञाविरोधस्य अपि पर्याप्तः प्रयोगः कृतः। उदाहरणार्थम् 'स्वपक्षदोषाच्च' (२।१।२९) अस्य सूत्रस्य भाष्ये प्रधानकारणवादं खण्डयता तेनेत्थं प्रतिज्ञाहानेः निर्देशो विहितः—'कथमिव महदादिविचित्रजगदारम्भ उपपद्यते?... किं सत्त्वरजस्तमसां समूहः प्रधानम्? उत सत्त्वरजस्तमोभिरारब्धं प्रधानम्? अनन्तरकल्पे प्रधानं कारणमिति स्वाभ्युपगमविरोधः स्वाभ्युपेतसंख्याविरोधश्च'[3]। यत्र कुत्रापि रामानुजेन स्वविपक्षी एवं स्मारितो यत् नायं भवदभिमतः पक्षः, तत्रैव तेन स प्रतिज्ञाविरोधनामकनिग्रहस्थानेन निगृहीतः। उदाहरणार्थम् आरम्भणाधिकरणस्य पूर्वपक्षे 'जीवभेदः किं स्वाभाविकः? उताविद्याकल्पितः?' एवमुक्त्वा एवं प्रतिपादितम्—'न तावत्स्वाभाविकः, अनभ्युपगमात्'।

कुत्रचिच्च रामानुजेन प्रतिज्ञाहानिनामकनिग्रहस्थानस्यापि प्रयोगः कृतः। उदाहरणार्थम्, मोक्षावस्थायाम्। 'अहम्' इत्येतज्ज्ञानस्य सत्त्वासत्त्वयोः सन्देहे यद्येतन्मन्येत यत् तदानीं तन्न भवति तदा शब्दान्तरेण अस्य अयमेवार्थः यत् तदानीं जीवात्मा विनश्यति—'तथा सत्यात्मनाश एव अपवर्गः प्रकारान्तरेण प्रतिज्ञातः[4] स्यात्'। अत्र स्पष्टतया प्रतिज्ञाहानेर्निर्देशः।

रामानुजेन यत्र कुत्र मतानुज्ञानामकनिग्रहस्थानस्यापि निर्देशः कृतः। तच्च अस्मिन् हि स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसंगो मतानुज्ञा[5] इतिलक्षणकम्। विरोधिना स्वविरुद्ध एव सिद्धान्तः स्वी-

---

१. तत्रैव १।१।१ पृ० ८८ २. तत्रैव १।१।१ पृ० ८८

३. रा० भा० (ब्र० सू० २।१।२९)

४. (ब) तत्रैव (ब्र० सू० १।१।१) पृ० ४९

५. न्यायसूत्र ५।१।२०

क्रियते । उदाहरणार्थम्, 'अथातो ब्रह्मजिज्ञासा' इत्यस्य व्याख्यायां ज्ञातुः ब्रह्मणश्च विवेचने तेनेत्थं मतानुज्ञाया निर्देशो विहितः—'ब्रह्मस्वरूपस्यैव ज्ञातृत्वे अस्मदीय एव पक्षः परिगृहीतः स्यात्'। एवमेव 'भावे चोपलब्धेः' (२।१।१५) इत्यस्मिन् सूत्रे 'तत्रेयं जीवभेदकल्पिका अविद्या ब्रह्मणः उत जीवानाम्? एवं संदिह्य समाहितम् 'ब्रह्मण इति चेत् आगतोऽसि मदीयं मार्गम्' अस्मिन् वाक्येऽपि मतानुज्ञाया निर्देशः ।

निम्बार्कस्य लक्ष्यं यद्यपि स्वभाष्ये सूत्रव्याख्यानमेवासीत्तथापि तेन यथास्थलं तार्किकसूक्ष्ममतानामुपेक्षा न कृता । उदाहरणार्थम् 'तर्काप्रतिष्ठानात्' (२।१।२) इति सूत्रे सांख्याभिमतप्रधानस्य जगत्कारणताया अनुमाने इत्थं सत्प्रतिपक्षस्य सम्भावना अभिव्यक्तीकृता—'हठतर्केण वेदविरुद्धे प्राधानिके जगत्कारणे अनुमिते तु तादृशेन तर्केण[1] सत्प्रतिपक्षसम्भवात्' ।

अन्यनिग्रहस्थानेषु निम्बार्केण अनेकस्थलेषु[2] प्रतिज्ञाविरोधस्य निर्देशः कृतो वर्तते । तथाहि—'पुरुषाश्मवदिति चेत्तथापि' (२।२।७) अस्मिन् सूत्रे सांख्यवादिविरुद्धं तेनेत्थं प्रतिपादितं यत् यद्येवं मन्येत यत् प्रधानं जडं तत्र च सक्रियत्वं पुरुषसाहाय्येनावाप्यते तदा पुरुषे यन्निष्क्रियत्वं स्वीकृतं तेन विरोधः स्यात् । किंच, इत्थं स्वीकारे प्रधानस्य प्रधानतैव अपगता भवेत्—'यथा पंगुरन्धम्, अश्मा आपः प्रवर्तयति तथा पुरुषः प्रधानमिति चेत् तथात्वे निष्क्रियत्वाभ्युपगमविरोधः'[3] । अन्यत्र बौद्धानां विरोधं कुर्वता तेनेत्थं प्रतिज्ञाविरोधः प्रदर्शितः—'असति हेतौ कार्योत्पत्त्यभ्युपगमे चतुर्भ्यो हेतुभ्यः इन्द्रियालोकमनस्कारविषयेभ्यो विज्ञानोत्पत्तिरित्यस्याः प्रतिज्ञाया बाधः स्यात्'[4] । एवमुपनिषद्वाक्यार्थं कुर्वता तेन प्रतिज्ञाविरोधस्य निर्देशः कृतः—'शब्दाविषयं ब्रह्म इति वाक्यस्य वाच्यं ब्रह्माभिप्रेतं नवेति । आद्ये वाच्यत्वसिद्धेरवाच्यत्वप्रतिज्ञाभंगः'[5] ।

मध्वाचार्यस्य स्वभाष्ये नैतल्लक्ष्यमासीद् यत्स स्वकीयवादपद्धतौ तार्किकयुक्तीराश्रयेत् । अतः तस्य ब्रह्मसूत्रभाष्ये वादविवादसाधनं यत्र तत्रैवोपलभ्यते । बौद्धमतं खण्डयता तेन निग्रहस्थानेषु विपक्षिविरुद्धं

---

१. (क) नि० भा० ( ब्र० सू० २।१।११ )
२. (ख) प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः' [ न्या० सू० ५।२।४ ]
३. नि० भा० ( २।२७ ) ४. तत्रैव ( २।२।२१ )
५. तत्रैव ( १।१।४ )

प्रतिज्ञाहानेरेव निर्देशः कृतः। तथाहि—'कारणे विनष्टे कार्यमुत्पद्यते चेत् तत्कार्यमिति प्रतिज्ञाहानिः'[1]। एवमेव आकाशस्य नित्यानित्यता-विचारे 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' (२।३।६) इत्यस्मिन् सूत्रे मध्वाचार्येण 'ब्रह्मणोऽन्यस्य नित्यत्वे इदं सर्वमसृजतेति प्रतिज्ञाहानिः' इत्थं प्रतिज्ञाहानेर्निर्देशः कृतः।

निजपक्षपुष्टौ प्रतिपक्षियुक्तिखण्डने वा वल्लभाचार्येण यद्यपि तार्किक-साधनापेक्षया मीमांसाया नियमा आधिक्येन आश्रिताः, तथापि तद्-भाष्ये यत्र तत्रैतेषां प्रयोगः अवश्यमुपलभ्यते।

यत्र तत्र वयं हेत्वाभासरूपनिग्रहस्थानमुपलभामहे। उदाहरणार्थं निम्नलिखितस्थले तेन सत्प्रतिपक्षहेत्वाभासस्येत्थं निर्देशः कृतः—'लोकानां भूर्भुवादीनामचेतनेन केवलेन प्रधानेन रचना नोपपद्यते··· अतश्चेतनकर्तृका रचना नाचेतनेन प्रधानेन कर्तुं शक्या। तस्मात्कार-णत्वेन प्रधानं नानुमातव्यम्। अन्यथोपपत्त्या बाधितमेवानुमानम्'[2]।

अस्य अणुभाष्यस्य सविस्तरां टीकां कुर्वता श्रीपुरुषोत्तमगोस्वामिना स्वकीये प्रकाशे एतत्प्रतिपादितम्—'भूरादिलोकरचना न केवलाचेत-नकारणिका, रचनात्वात्। गृहादिरचनावत्। भूरादिलोका नाचेतन-कर्तृकाः चेतनस्पार्शनक्रियात्मकरचनाविषयत्वात्। घटकुड्यादिवत्। तथा, प्रधानं स्वतोऽकर्तृ, अचेतनत्वात् स्तम्भादिवत्,' इत्यादिभिः प्रयोगैः सत्प्रतिपक्षत्वात् अर्थान्तरापादकत्वाच्च न तैरनुमानैः कारणत्वेन प्रधानमनुमातुं शक्यम्।[3] अणुभाष्यस्य 'बालबोधिनी'—टीकायामेत-देवेत्थं प्रतिपादितम्···'इति द्विधानुमानरूपा याऽन्यथानुपपत्तिस्तया सांख्यानुमानस्य सत्प्रतिपक्षदोषघटितत्वात् इत्यर्थः'।[4]

स्थले स्थले वल्लभाचार्येण अन्येषामपि निग्रहस्थानानां प्रयोगः कृतः। तथाहि—'अधिष्ठानानुपपत्तेश्च' (२।२।३९) इत्यस्मिन् सूत्रे नैयायिकैः स्वीकृते ईश्वरानुमाने प्रतिज्ञाविरोधस्य अनवस्थायाश्चेत्थं निर्देशः—'स चेश्वरो जगत्कर्तृत्वेन कल्प्यमानो लौकिकन्यायेन कल्पनीयः। स चाधिष्ठितलौकिककर्ता इव शरीरमधिष्ठायैव किंचित् करोतीति ईश्वरेऽप्यधिष्ठानमंगीकर्तव्यम्। तस्मिन् कल्प्यमाने मतविरोधः, अनवस्था असम्भवश्च'।[5]

---

१. म० भा० (ब्र० सू० २।२।२१)

२. अणुभाष्यम् पृ० ६०८ (चौ० सं०)

३. अणुभाष्यप्रकाशः ६०८ ४. अणुभाष्य बालबोधिनी पृ० २००

५. अ० भा० (ब्र० सू० २।२।३९) पृ० ६७०

अणुभाष्ये मतानुज्ञाया अप्युदाहरणान्युपलभ्यन्ते। उदाहरणार्थम् 'अंगित्वानुपपत्तेश्च' (२।२।८) इत्यस्मिन् सूत्रे सांख्यवादिविरुद्धस्तेनायं तर्कः प्रदत्तः यत् 'यदि प्रकृतिपुरुषयोरंगांगिभावो मन्येत तदा स्पष्टतया सांख्यत्वादिना स्वमतं परित्यज्य वेदान्तमतमभ्युपगतं भवेत्' तस्मिन् हि ब्रह्मैव प्रधानं कारणमभ्युपगतम्—'पुरुषस्यांगित्वे ब्रह्मवादप्रवेशो मतहानिश्च'।[1] 'स्वपक्षदोषाच्च' (२।१।१०) इति सूत्रस्य व्याख्यां कुर्वता वल्लभेन अन्यभाष्यकारैरिव निरनुयोगानुयोगनामकनिग्रह-स्थानस्य निर्देशः कृतः।

वल्लभेन परम्परागतशास्त्रार्थप्रणाली अनुसृता, किन्तु अद्वैतसिद्धान्तं खण्डयता तेन यत्र कुत्र स्वप्रसंगाच्च्युतेन शंकराचार्यः अनेकाभिः कटूक्तिभिर्भर्त्सितः। एवंभूतस्थलेषु तस्याक्षेपाः शास्त्रार्थपद्धतेरुच्चैः-स्तरतः तमत्यन्तनिम्नस्तरमवतारयन्ति। 'तदनन्यत्वमारम्भणशब्दा-दिभ्यः' (२।१।१४) 'अंगित्वानुपपत्तेश्च' (२।२।८) एवं 'नासतोऽ-दृष्टत्वात्' (२।२।२६) एषां सूत्राणामणुभाष्ये शंकरस्य कृते वल्लभेन प्रयुक्ताः कटुशब्दाः नितरामप्रासंगिका अहंयुताविशिष्टाश्च। 'क्षणिकत्वाच्च' (२।२।३१) इत्यस्मिन् सूत्रे 'माध्यमिकस्तु मायावादिवदसंबद्धभाषित्वा-दुपेक्ष्य इति न निराक्रियते आचार्येण' एवंभूताभिरुक्तिभिः माध्यमि-कसिद्धान्तमायावादयोर्नामोच्चारणमात्रेण तन्निराकरणोपेक्षा वल्लभा-चार्यस्य तां सूक्ष्मातिसूक्ष्मविषयविवेचनशालिनीं प्रातिभविशेषतां वैदुषीं लेशमात्रमपि नाभिधत्ते, या तेनान्यत्र प्रदर्शिता वर्तते।

## उपसंहारः

ब्रह्मसूत्राणां गूढार्थान् स्पष्टीकर्तुं भाष्यकारैः केषां केषां प्रमाणानां प्रयोगो विहितस्तथा तत्साहाय्येन कथं निजदार्शनिकरहस्यात्मकसि-द्धान्तानभिव्यञ्जद्भिरुक्तैः पंचभिरपि भाष्यकारैः शास्त्रार्थपद्धत्यां कियत्यो निजक्षमताः प्रदर्शिता एतत्प्रकटीकरणार्थं प्रमाणप्रयोगान् साधनीकृत्य भाष्याणां बहिरङ्गनिरूपणं कृतम्। एतेन एतत्स्पष्टं यद् ब्रह्मसूत्राणां निर्माणकाले भारतीयदर्शनं पूर्णतया विकसितावस्थां प्रापत्। एतच्च सर्वैर्निर्विवादरूपेण स्वीक्रियते यद् आलोचनात्मकपद्धत्या प्रमाण-शास्त्रस्य पूर्णतया स्थापनमन्तरेण दार्शनिकमतानामुत्पत्तिर्न सम्भवति। वेदान्तभाष्याणां निर्माणात्पूर्वमेव न्यायवैशेषिकसांख्य-

---

[1] तत्रैव (ब्र० सू० २।२।८)

योगमीमांसाद्यास्तिकदर्शनानां तद्विरोधिबौद्धजैनप्रभृतिनास्तिकदर्शनानां च महान्तो विचारकमनीषिणो दर्शनशास्त्रे अनया आलोचनात्मकपद्धत्या कृतप्रवेशाः समभवन्। भाष्यं च तस्या आलोचनात्मकपद्धतेः पूर्णं विकसितं रूपम्।

दार्शनिकपद्धत्या यं कंचिद् विषयमुपस्थापयितुं शास्त्रार्थप्रणाली अतिशयेनोपयुक्ता। आदर्शदार्शनिकपद्धतेश्चोत्तमो निकषग्रावा एषोऽस्ति यत् तद्विषयक्षेत्रमेतावद् विस्तृतं भवेत् यत् तस्य प्रतिदिशं विचाराः स्वातंत्र्येण प्रसारं प्राप्नुयुः, येन ते कस्यचिदपि सिद्धान्तविशेषस्य समीक्षणार्थं तत्क्षेत्रस्य प्रतिस्थलमवलोकयितुं शक्नुयुः। शास्त्रार्थप्रणाली एतत्सर्वं परिपूरयति। सा हि पक्षप्रतिपक्षपरिग्रहपूर्वकं यस्य कस्यचिदपि सिद्धान्तस्य गुणदोषान् तदुपयुक्ततार्किकयुक्तिभिर्विवेचयन्ती तत्स्थापनं खण्डनं वा कर्तुं क्षमते।

एकस्मिन् मान्यसिद्धान्तरूपे सत्यस्य गवेषणं तत्स्थापनं च शास्त्रार्थपद्धतेः मुख्यं लक्ष्यम्। सर्वे अपि भाष्यकाराः एतस्मिन् स्व······समक्षस्थापितमत एव ते स्वस्वभाष्येषु एकं समन्वयात्मकं सिद्धान्तं सर्वेषां समक्षं समुपस्थापयितुमशक्नुवन् तथा तस्य सर्वाणि स्वरूपाणि सहैव प्रदर्शयन्तः विपक्षिणामाक्षेपान् निजयौक्तिकप्रामाणिकोत्तरैश्च समादधतः तत्स्थापयितुं समर्था अभवन्।

शास्त्रार्थप्रणाल्यां विचाराणां सर्वतो मुखीकरणस्य क्षमता तर्कसाहाय्येन जायते। ज्ञानस्य विभिन्नैः सम्भवैरुपयुक्तैश्च साधनैः प्रत्येकविषयाणामान्वीक्षिक्या एतत्परमोपयोगि साधनम्, एतद्धि विवेच्यविषयं पूर्णतया विश्लिष्य तस्य तार्किकालोचनायां सुगमतां सौविध्यं चोपस्थापयति। अत एव ब्रह्मसूत्रभाष्यकारैः तर्कोपस्थापितसौविध्यानां विभिन्नांशैरुपयोगः कृतः। यद्यपि शंकरस्य कस्मिन्नपि ग्रन्थे प्रमाणानां क्रमबद्धविवेचनं नोपलभ्यते इत्यस्मिन् विषये वयमद्वैतानुयायिष्वेव निर्भरामः, तथापि ज्ञानसम्बन्धिनां तत्सिद्धान्तानामवगतिर्विशेषतया, वेदान्तसूत्राणां द्वितीयाध्यायस्य द्वितीयपादीयभाष्येण जायते। कस्यचिदपि विषयस्य व्याख्यां कुर्वता तेन तन्निर्णयार्थं प्रायः सर्वविधाः उपयुक्ताः सम्भाविताश्च युक्तयः प्रदत्ताः तथा एषा पद्धतिस्तेन स्वभाष्ये आदितः अन्तपर्यन्तमनुसृता।

रामानुजेनापि शंकरस्यैषा समीचीना पद्धतिराहृता। तदीयभाष्यस्य प्रारम्भिकभागे विशेषेणैषोपलभ्यते।

निम्बार्कमध्वाचार्ययोर्विषये एतदवधारणीयं वर्तते यत् इमौ द्वावपि सूत्राणामक्षरशः व्याख्यां कृत्वा यत्र कुत्र स्वमतसमर्थनेनैव च सन्तुष्टौ संजातौ। तौ तर्कस्य प्रयोगं नैतावन्तं कृतवन्तौ यत् स कस्यचिद्विषय-विशेषस्य विभिन्नस्वरूपाणां परिपूर्णगवेषणायां सहायको भवेत्।

वल्लभाचार्यश्च कतिपयप्रारम्भिकाधिकरणेषु निजव्याख्याकरणे परि-पूर्णां सफलतां प्राप्तवान्।

इत्थं सर्वे भाष्यकारा एतदवगच्छन्ति यत् तेषां शास्त्रार्थप्रणाल्याः साफल्यं ज्ञानस्य प्रामाणिकसाधनोपस्थापने वर्तते। ते जानन्ति यत् स्वतन्त्रविचाराणां सर्वतोमुखीं प्रवृत्तिं क्रमबद्धां कर्तुं प्रमाणानामुपस्था-पनमत्यन्तावश्यकम्। विचाराणां स्वतन्त्रतापूर्णा सर्वतोमुखी प्रवृत्तिश्च तदैव प्रयोजनवती भवति यदा सा प्रामाणिकज्ञाने पर्यवस्यति। प्रमा-णानि हि भाष्यविवेचनप्रक्रियाया महत्त्वपूर्णाधारस्वरूपाणीति तद्द्वारैव भाष्यकाराणां स्वस्वगवेषणाप्रगतिरेकस्यां स्वाभिमतनिर्दिष्टदिशायां समुपलभ्यते।

एवं ब्रह्मसूत्राणां पंचानामपि भाष्याणामवलोकनेनैतद् ज्ञायते यत् इत्थं प्रमाणानामुपस्थापनस्य भाष्यकाराणामेतदेव लक्ष्यं यत् तद्द्वारा एतेषां मौलिकसिद्धान्तानां समुचितं मूल्यांकनं कर्तुं शक्येत यत् परब्रह्मणः साक्षा-त्कारेण सह एकीभूता स्वानुभूतिरेव चरमसत्यस्य साक्षात्कारः, प्राचीनभारतीय-परम्परानुसारं तदभ्यासस्य कर्तृभिः प्रतिभाशालिभिः आध्यात्मिकरहस्यस्य वेत्तृभिस्तन्मार्गप्रदर्शनमेव च तस्य प्राप्तावेकमात्रं सहायकम्। स्वतन्त्रविचारैः शुष्कस्य तर्कस्य साहाय्येन वेयमनुभूतिः न कथमपि सम्भवति। एतदेव सुदृढीकर्तुं प्रमाण तर्कस्य मीमांसया भाष्याणां बाह्यांगनिरूपणे शास्त्रा-र्थपद्धतेर्विभिन्नांगनिर्देशपूर्वकं तद्विवेचनमावश्यकमापतितम्।

## वेदान्तपञ्चकसिद्धान्तपरिचयस्तदाधार-भूततत्त्वसमीक्षा च

इतः पूर्वत्र भाष्यपंचकबाह्यांगनिरूपणे एतद्विवेचितं यत् परब्रह्मणः साक्षात्कारेण सहैकीभूतस्वानुभूतिरूपचरमसत्यसाक्षात्कार एव सर्वेषां भाष्यकाराणां चरमं लक्ष्यम्। तदनुभूतये च तैः स्वसिद्धान्तानुसार-मभ्युपगतासु मान्यतासु तत्सिद्धान्ताधारभूततत्त्वसमीक्षेदानीमपेक्ष्यते।

मुख्यभाष्यकारपंचके शंकरेण स्वीकृतो वेदान्तसिद्धान्तः अद्वैतवादः कथ्यते। एतदनुसारं समस्तविश्वप्रपंचः एकस्मिन्नेव तत्त्वे अन्तर्भूतः,

तत्सत्तयैव स्थितः तत्प्रकाशेनैव च प्रकाशितः। एतन्मते चेतनतत्त्वाद् आत्मनः पृथक् कस्यचिदप्यन्यस्य वस्तुनः सत्तेह न वर्तते इत्यात्मैवैकमात्रं सत्यम्। स एव चोपाधिविवर्तितः अनेकजडचेतनपदार्थेष्ववलोक्यते। तस्य च स्वतः अखण्डत्वेन न तत्र भेदांशस्य किंचिन्मात्रमपि समवायः। 'ब्रह्म सत्यं जगत् मिथ्या' इति शब्दचतुष्टये संक्षेपेण तत्सिद्धान्तसन्निवेशः।

शंकरातिरिक्तेन रामानुजाद्यन्याचार्यचतुष्टयेन स्वीकृताः सिद्धान्ताः क्रमशः विशिष्टाद्वैत-द्वैताद्वैत-द्वैत-शुद्धाद्वैतनामभिः प्रसिद्धाः। भिन्नभिन्नानि च तेषां स्वसिद्धान्तानुसारमाधारभूततत्त्वानि। इत्थं च तेषां क्रमशः संक्षेपेण निर्देशः।

## शंकरसिद्धान्ताधारभूततत्त्वसमीक्षा—

### (१) आत्मा अनात्मा च—

ब्रह्मसूत्रभाष्यं प्रारिप्सुना भगवता शंकरेण सर्वतः पूर्वं युष्मदस्मदोरित्यादिना आत्मानात्मनोः विवेचनं कृतम्। सूक्ष्मेक्षिकया अवलोकनेन अयं जागतिकप्रपंचः प्रधानतया द्रष्टृदृश्य-भेदेन उभयथा विभाजयितुं शक्यते। समस्तप्रतीतीनामनुभवकर्त्ता एकः, अनुभवविषयश्च द्वितीयः। तत्र समस्तप्रतीतीनां चरमः साक्षी आत्मा, तदितरत्सर्वं तत्प्रतीतिविषयः अनात्मा। आत्मतत्त्वं हि नित्यम्, निश्चलम्, निर्विकारम्, असंगम्, अखण्डम्, सजातीयविजातीयस्वगतभेदशून्यं कूटस्थमेकं शुद्धचैतन्यस्वरूपं निर्विशेषं च वर्तते—'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतयस्तत्र प्रमाणम्। बुद्धिमारभ्य स्थूलभूतपर्यन्तं प्रपञ्चमात्रस्य न कश्चिदात्मना सम्बन्धः। जीवश्च अविद्यावशादेव देहेन्द्रियादिभिः स्वसम्बन्धं संस्थाप्य (स्वीकृत्य) आत्मानम् अन्धं विद्वांसं मूर्खं सुखिनं दुःखिनं कर्तारं भोक्तारं वा मन्यते। इत्थं बुद्ध्यादिभिः सह प्रतीयमानमात्मनस्तादात्म्यं शंकरेण 'अध्यास' इति शब्देन निरूपितम्। तत्सिद्धान्तानुसारं हि समस्तप्रपञ्चस्य सत्यत्वप्रतीतिर्मायापरपर्य्यायाध्यासनिमित्तेति अद्वैतवादः अपि अध्यासवादः, मायावादः वा कथ्यते। इत्थं च यत् किंचिद् दृश्यं प्रपञ्चजातं तत् सर्वं मायापरपर्यायाज्ञानेनैव विभिन्नं प्रतीयते। वस्तुतस्तु तत्सर्वमेकमखण्डं शुद्धं चिन्मात्रम्। ततः पृथक् न कस्यापीह वस्तुनः सत्ता वर्तते।

## ( २ ) ज्ञानमज्ञानं च—

समस्तविभिन्नप्रतीतिस्थाने एकाखण्डसच्चिदानन्दघनानुभव एव ज्ञानम्, तत्सर्वाधिष्ठाने दृष्टिम् अदत्त्वैव भेदे सत्यत्वबुद्धिस्थापनं चाज्ञानम्, तात्त्विकदृष्ट्या यथा सर्वेषां सौवर्णालंकाराणां कटककुण्डलादीनां सुवर्णमात्रत्वम्, विभिन्नानां च घटरुचकादीनां मृण्मयपात्राणां च मृत्तिकामात्रत्वमेवं वीचितरंगाणां वा यथा जलाभिन्नत्वमेव, तथैवानेकविधभेदसंकुलितं जगत् केवलं शुद्धं परब्रह्मैवेति न ततो भिन्नम्। यतो न तदतिरिक्तं किमपि वस्तु वर्तते, अत एव श्रुतिः 'सर्वं खल्विदं ब्रह्म' इति बोधयति। एवंभूतः अभेदबोध एव ज्ञानम्। यावन्न इत्थं बोधः न तावज्जीवः संसारचक्रान्मुक्तो जायते। सत्येव चास्मिन् बोधे तद्दृष्ट्या जगतः अत्यन्ताभावः इत्यन्येषां दृष्ट्या अवलोक्यमानधृतविग्रहः अपि स स्वयं मुक्तो भवति।

## ( ३ ) साधनम्—

भगवता शंकरेण श्रवणं मननं निदिध्यासनं च ज्ञानस्य साधनं स्वीकृतम्। किन्तु तत्त्वजिज्ञासायामेव तत्साफल्यमुक्तम्। तज्जिज्ञासोत्पत्तौ च दैवी सम्पत्तिः सहायिकेति तन्मते विवेकवैराग्यशमादिषट्कसम्पत्तिमुमुक्षुतासाधनसम्पन्नस्यैव चित्तशुद्ध्यनन्तरं ब्रह्मतत्त्वजिज्ञासा समुत्पद्यते। एवंभूतचित्तशुद्ध्यर्थं निष्कामकर्मानुष्ठानस्यात्यन्तिकावश्यकत्वम्।

## ( ४ ) भक्तिः—

भगवता शंकरेण भक्तिर्ज्ञानोत्पत्तेः प्रधानं साधनममन्यत, फलस्वरूपेण तु ज्ञानमेव तेन स्वीक्रियते। भक्तिं लक्षयता च तेन विवेकचूडामणौ—'स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते' इत्युक्तम्। इत्थमात्मनः शुद्धस्वरूपस्मरणस्य भक्तित्वेनात्मजिज्ञासोर्भक्तेः प्राधान्येऽपि न तेन सगुणोपासनोपेक्षिता। अत एव 'न च कार्ये प्रत्यपत्यभिसन्धिः' (४।३।१४) इति सूत्रे भाष्ये 'किं विषयाः पुनर्गतिश्रुतयः' इत्युपक्रम्य "सगुणविषया भविष्यन्तीति सत्यकामादिभिर्गुणैः सगुणस्यैवोपास्यत्वात् सम्भवति गतिः" इति सगुणोपासकानां गतिरुक्ता। प्रबोधसुधाकरे च तेन भगवतः श्रीकृष्णस्य स्पष्टतयैव भक्तिः प्रदर्शिता वर्तते।

## ( ५ ) कर्मसंन्यासः—

श्रीशंकराचार्येण स्वभाष्ये यत्र-तत्र कर्मणां स्वरूपेण त्यागमुक्त्वा जिज्ञासूनामुपलब्धात्मतत्त्वावबोधानां चोभयेषां कृते सर्वकर्मसंन्या-सस्यावश्यकता प्रतिपादिता। तन्मते निष्कामकर्मणा केवलं चित्तशुद्धिः। परमपदावाप्तिस्तु कर्मसंन्यासपूर्वकं श्रवणमनननिदिध्यासनादिभि-रात्मतत्त्वावबोधानन्तरमेव सम्भवति। व्यावहारिकपक्षश्चैतत्सिद्धान्त-स्यायं यद् ब्रह्मजीवयोरैक्यावबोधोपलब्धये मानसिकशुद्ध्यर्थं कर्म अवश्यं कर्तव्यम्, किन्तु ततः परं तत्परित्याग एव वरीयान्। ज्ञान-कर्मणोः प्रकाशान्धकारयोरिव परस्परविरुद्धतया कर्मसंन्यासमन्तरेण परिपूर्णमोक्षानुपपत्तेः। अयमेव निवृत्तिमार्गः ज्ञाननिष्ठा वोच्यते।

## ( ६ ) जीवः—

'जीवो ब्रह्मैव नापरः' इति शंकरकथनानुसारं जीवो ब्रह्मणः आभासमात्रमिति तत्तुल्यस्वभावः स्वप्रकाशश्चेति घटे भग्ने घटा-काशो महाकाश इव जीवः अपि बुद्धिरूपोपाधिविनाशानन्तरं ब्रह्मणि विलीयते। न तदानीं तदस्तित्वं तद्भोग्यं वा किमपि अवशिनष्टि। स चास्मिन्नेव देहे ब्रह्म साक्षात्कृत्य जीवन्मुक्तः शरीरपातानन्तरमतीत-सांसारिकसुखदुःखः सच्चिदानन्दब्रह्मस्वरूपो जायते।

अनेकश्रुतिवाक्यानि जीवात्मानमणुं प्रतिपादयन्ति, किन्तु शंकर-स्यैतन्मतं यत् जीवो ब्रह्मणोऽभिन्न इति तत्तुल्य एव विभुः। उपनिषत्सु जीवात्मनः अणुत्वप्रतिपादनस्यैतत्तात्पर्यं यत् सः इन्द्रियाग्राह्यः अत्यन्त-सूक्ष्मो वर्तते। तन्मते धृतविग्रहः अन्तःकरणावच्छिन्नः परमात्मैव जीवः।

अद्वैतवेदान्तस्यायं मूलसिद्धान्तः यत् व्यष्टिसमष्ट्योर्न किंचिद-न्तरम्। तत्र व्यक्तिशरीरं व्यष्टिः, समूहात्मकं च जगत् समष्टिः। एतत्-सिद्धान्तानुसारं व्यष्टौ स्वीकृतस्य स्थूल-सूक्ष्म-कारणनामकशरीरत्रय-स्याभिमानिनो जीवाः क्रमशः विश्व-तैजस-प्राज्ञाः उच्यन्ते। समष्टौ च तदभिमानि चैतन्यं क्रमशः विराट् (वैश्वानरः) सूत्रात्मे (हिरण्यगर्भः) श्वरनाम्नाभिधीयते। व्यष्टिसमष्ट्यभिमानिपुरुषयोरभिन्नत्वेऽपि आत्मा एभ्यः त्रिभ्यः पृथक् स्वतन्त्रा सत्ता वर्तते।

## ( ७ ) माया—

शंकरमते माया, अविद्या अज्ञानं चेति पर्यायाः। तत्र मीयते अमेयमनयेति माया ब्रह्मणः शक्तिः। ब्रह्माश्रिता सैव माया तत्र विविधविवर्तानुत्पादयति इति जगतो वैविध्यम् औपाधिकम्। सदसत्कर्मफलहेतुकस्वर्गनरकविषये च शंकरस्येयं धारणा यत्कर्मानुसारं मनुष्याणां गतिरिति धृतनवशरीरकृतशुभाशुभकर्मणां फलभोगः। इत्थं च कृतयज्ञादिशुभकर्माणो जनाः पितृयाणेन सगुणब्रह्मोपासकाश्च देवयानेन मुक्तिमार्गमनुसरन्ति। अशुभकर्मणां च कृते तृतीयं स्थानं सुरक्षितं वर्तते।

## ( ८ ) मोक्षः—

व्यावहारिकजगतः सन्तापेभ्यो मुक्तिप्राप्तिरेव तत्त्वसाधनस्य चरमं लक्ष्यम्। मनुष्यमात्रस्य च जीवनं यानि ध्येयानि पुरस्कृत्य प्रवर्तते तानि पुरुषार्थनाम्नोच्यन्ते। धर्मार्थकाममोक्षाश्च ते चत्वारः पुरुषार्थाः। मोक्षश्च तेषु सर्वश्रेष्ठः। एतद्विषये साधारणजनानामियं धारणा यदयं पुरुषार्थो नानेन शरीरेणावाप्यते। किन्तु शंकरस्योपनिषदाधारेणैतन्मतं यज्ज्ञानप्राप्तावनेनैव शरीरेण मोक्षः समवाप्यते। 'यदा सर्वे विमुच्यन्ते कामा यस्य हृदिस्थिताः। तदा मर्त्योऽमृतो भवत्यत्र ब्रह्म 'समश्नुते' इत्यादिश्रुतयस्तत्र प्रमाणम्। एषैव च मुक्तिर्जीवन्मुक्तिरुच्यते। इत्थं च तत्त्वमसीत्याद्यभ्यासेनोत्पन्नं विशुद्धं ज्ञानं जीवस्यानाद्यज्ञानं तज्जन्यमलिनसंस्कारजातं च विनाशयतीत्यहं ब्रह्मास्मीति रूपेण तदानींतनः ब्रह्मजीवयोरैक्यानुभव एव मोक्षः।

## विशिष्टाद्वैतसिद्धान्तपरिचयः

विष्णुपुराणेन सहयुक्तः प्रस्थानत्रयाधारितो रामानुजप्रतिपादितः सिद्धान्तो विशिष्टाद्वैतनाम्ना प्रसिद्धः। एष च तदर्थः—द्विधा इतम् द्वीतम् द्वीतमेव द्वैतम् न द्वैतमद्वैतम्, द्वैताभावः। विशिष्टस्य, चेतनाचेतनसमन्वितस्य अद्वैतम् विशिष्टाद्वैतम। अथवा द्वयोर्भावः द्विता सा एव द्वैतम् ( भेदः ) न द्वैतमद्वैतम्। विशिष्टं च विशिष्टं च विशिष्टे, स्थूलचिदचिद्विशिष्टम् सूक्ष्मचिदचिद्विशिष्टं च ब्रह्मणी। तयोर्विशिष्टयोर्ब्रह्मणोः अद्वैतं वस्तुतः अभेदः विशिष्टाद्वैतम्। तन्निर्णायको वादः ( सिद्धान्तः ) विशिष्टाद्वैतवादः विशिष्टाद्वैतसिद्धान्तो वोच्यते। चेतनाचेतनविभागविशिष्टब्रह्माभेदप्रतिपादकसिद्धान्तः (कारणरूपसूक्ष्मचिदचिद्विशिष्टस्य कार्यरूपस्थूलचिदचिद्विशिष्टस्य च अद्वैतवादः ) एव विशिष्टाद्वैतसिद्धान्त इत्यर्थः। अथवा अनन्तकल्याणगुणगणविशिष्टस्य ब्रह्मणो वा वादः

---

१. क० २।३।१४

तथोक्तः। तथा हि श्रीभाष्ये—'ब्रह्मणोऽनन्तेन कल्याणगुणगणेन विशिष्टत्वं सिद्धम्, (रा. भा. ३।२।२५) अस्य सिद्धान्तस्य चाधारः—'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वंप्रोक्तं त्रिविधं ब्रह्ममेतत्। इति श्वे० उ० १।१२ तथा 'स्कम्भो दाधार द्यावापृथ्वी उभे इमे'' '''इत्यादि' अथर्ववेदस्य (१०।७।३५) ऋक् च वर्तते।

## रामानुजसिद्धान्ताधारभूतत्वसमीक्षा

### (१) ब्रह्म—

एतत्सिद्धान्ते द्विविधं ब्रह्म (१) स्थूलचेतनाचेतनविशिष्टं (२) सूक्ष्मचेतनाचेतनविशिष्टं च। इत्थं चाभयविधब्रह्मैकत्वप्रतिपादकसिद्धान्तो विशिष्टाद्वैतवादः। तत्र 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिप्रामाण्येन ब्रह्मणः अद्वितीयत्वेऽपि न तस्य निरंशत्वम्। सजातीयविजातीयभेदशून्यत्वेऽपि तस्य स्वगतभेदो निश्चितः। जीवो जगच्चैव तस्य स्वगतभेदः। एतच्च विश्वं ब्रह्मणि लीनं, ब्रह्म च विश्वान्तर्हितम्[1]। तच्चैकमित्यद्वैतसिद्धान्ते जगतो मिथ्यात्वप्रतिपादनमन्तरेणापि विशिष्टाद्वैतवादे ब्रह्मणः एकत्वसिद्धिः।

ब्रह्म न निर्गुणमपि तु सगुणं तत्। तद्धि ज्ञानानन्दादिसद्गुणविशिष्टम्, नापि च तन्निर्विशेषम्, अपि तु सविशेषम्। ज्ञानानन्दादयः तस्य विशेषधर्माः। चेतनाचेतनविशिष्टं च जगत् तस्य विशेषणभूतं शरीरम्। निर्गुणत्वादिबोधकश्रुतयश्च तत्र निकृष्टप्राकृतिकगुणसम्बन्धमेव प्रत्याचक्षते इति श्रुतिभिरपि ब्रह्मणो निर्गुणत्वं प्रमाणयितुमशक्यम्।

### (२) जीवः—

ब्रह्मणः शरीरम्; जीवो ब्रह्म चोभयं चेतनम्। ब्रह्म विभुः, जीवश्चाणुः। न तयोः सजातीयविजातीयभेदः अपि तु स्वगतभेदः जीवो न ब्रह्मतुल्यस्वभावः स्वप्रकाशो महान् नित्यमुक्तश्च अपि तु अग्निस्फुलिंगवत् ब्रह्मवो निर्गतो ब्रह्मण एवांशः। नापि च स समस्वभावः जीवः अणुः, परब्रह्म च विभु; जीवोऽल्पज्ञः अल्पशक्तिः ब्रह्म च सर्वज्ञम् सर्वशक्ति जगतः कर्तृ च। किं च 'ज्ञाज्ञौ द्वावजावनीशौ' इत्यादिश्रुतिषु 'भेदव्यपदेशाच्चान्यः', 'अंशो नानाव्यपदेशात्' इत्यादिब्रह्मसूत्रे च ब्रह्मजीवयोर्भेदः प्रतिपादितो वर्तते।

---

1. तदनुप्रविश्य सच्च त्यच्चाभवत् (तै० २।६)

## ( ३ ) साधनम्—

रामानुजानुसारं ज्ञानं मुक्तिलाभे सहायकमपि न तल्लाभे साधकतमम् ( आत्यन्तिकसाधनम् ) भक्तिरेव च मुक्तेः प्रधानोपायः इति भक्तिसेवितभगवत्प्रसादेनैव जीवो ब्रह्मसायुज्यादिरूपमुक्तिलाभं करोति ।

## ( ४ ) भक्तिः—

संक्षेपेणास्या अयं व्यावहारिकपक्षो यत् विविधकर्मजालावनद्धे अस्मिन् संसारे वासुदेवस्य भक्तेरत्यन्तावश्यकत्वम् । एषा भक्तिर्न ज्ञानमपि तु ज्ञानस्य फलम् । सा चाविच्छिन्नतैलधारया इव ध्रुवस्मृत्योत्पद्यते ज्ञानोत्पादनाय च कर्मणः आवश्यकत्वम् । तदुत्पत्यनन्तरं च तदनावश्यकत्वम् ।

## ( ५ ) जीवन्मुक्तिः—

रामानुजानुसारं जीवस्य जीवन्मुक्तिवादः प्रवादवाक्यमात्रमेव । वस्तुतस्तु सति शरीरे न कस्यापि मुक्तिः सम्भवति । शरीरपातानन्तरमपि जीवो जीवरूपेणैव अवतिष्ठते । न स कदापि ब्रह्म भवितुं शक्नोति । आम् , तस्मिन् समये निरवच्छिन्नब्रह्मानन्दानुभवेन कृतार्थः सर्वभयविनिर्मुक्तश्च संजायते । 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन' एषा श्रुतिरपि एतदेव पोषयति ।

रामानुजः सत्कार्यवादस्य ( परिणामवादस्य ) समर्थकः । एतन्मते कारणस्य कार्यरूपे परिणतिरेव सृष्टिरिति सूक्ष्मरूपेण वर्तमानं तत्कारणमेव स्थूलरूपेण परिणमति । इत्थं च ब्रह्मणः शरीररूपेण वर्तमानस्य सूक्ष्मचिदचिद्रूपस्य कारणत्वम् , स्थूलचिदचिद्रूपस्य च कार्यत्वम् । एवं च रामानुजानुसारं विभिन्नमपि शरीरात्मरूपेणैकं ब्रह्मचिदचिदेतत् सद्वैयक्तिकसत्यत्वतत्वत्रयं वर्तते इति न चिदचितोर्ब्रह्मणः पृथक् स्थितिः सम्भवति । शरीरशरीरिणोरिव तत्पार्थक्यस्य सर्वथा असंभवात् । किंच, न शरीरमात्मा, न तथैव चिदचितोर्ब्रह्मत्वम् , अनेनैव प्रकारेण रामानुजसिद्धान्ते विविधोपनिषद्वाक्यप्रतिपादितैकत्वानैकत्वयोः समन्वयः संस्थापितः ।

## ( ६ ) माया—

मायामयमपि विश्वमेतत् न सर्परज्जुवन्मिथ्याभासम् । ब्रह्मण एवोत्पन्नं तद् ब्रह्मणः शरीरस्थानीयमित्यमिथ्यात्वे सति त्रिकालाबाधितम् । किंच, ब्रह्मशक्तिर्माया अपि यदा ब्रह्माश्रितैव तदा न कदापि सा मिथ्या अनिर्वचनीया वा वक्तुं शक्या ।

मायाऽज्ञानयोर्नैकत्वम्—माया भगवतः शक्तिः तदाश्रिता च; अज्ञानं च ज्ञानाभावः जीवाश्रितं सत् जीवमेव च विमोहयति। न तद-नन्तज्ञानाधारं ब्रह्म स्प्रष्टुमपीष्टे। एतदज्ञानमेव जीवं विमोह्य संसारबद्धं करोति भक्तिप्रसादप्राप्तौ च स्वयमन्तर्निधत्ते।

## (७) मोक्षः—

भगवतो दासत्वप्राप्तिरेव मोक्षः। जीवस्याग्निस्फुलिंगवद्ब्रह्मणोंऽशत्वे क्षुद्रशक्तिसम्पन्नत्वे च न कदापि तस्य ब्रह्मणा सहैकीभावः सम्भवति, जीवस्य स्वरूपतः नित्यत्वात्। सर्वदा स ब्रह्मणः पृथक् तिष्ठति। मोक्ष-दशायां केवलानन्दानुभव एव तस्य विशेषलाभः। इत्थं च ध्रुवानुस्मृति (उपासन) रूपाभक्तिरेव जीवस्यैकमात्रं मोक्षसाधनम्। भक्त्या सेवितस्य भगवतः प्रसादेनैव जीवो मुक्तो भवितुं शक्नोति किन्तु न कदापि क्षुद्रो जीवो ब्रह्म भवितुं शक्नोति—जीवः क्षोदीयान् ब्रह्म च महत्, जीवो दासः, अधीनः च सेव्यः तत्प्रभुरिति दासस्य स्वस्मिन् प्रभुत्वाभिमानोऽपराध्यः। इत्थं च भ्रमेणापि आत्मानं ब्रह्म आकलयन् क्षुद्रो जीवः राजविद्रोहिवत् सुदीर्घकालं दण्डार्हः।

## शंकररामानुजसिद्धान्तभेदः

शंकररामानुजयोः सिद्धान्तगतं भेदमवगन्तुं तयोस्तत्तद्विषयकविशिष्ट-मतसमीक्षा अपेक्षते। तत्र ब्रह्मविषये शंकरस्यैतत्कथनं यत् 'एकमेवा-द्वितीयं ब्रह्म' इत्यादि श्रुतिवचनैरित्थं ज्ञायते यत् ब्रह्म एकमखण्डमद्वितीयं त्रिविधभेदशून्यं च वर्तते। ततः पृथक् न कस्यचिदन्यस्य पदार्थस्य सत्ता। रामानुजमते चैकमद्वितीयमपि ब्रह्म न निरंशम् तस्य चैकत्वं नाद्वितीयं प्रत्युतचिन्मयेनात्मना जडप्रकृत्या च विशिष्टम् इति तथा विशिष्टाद्वैतवादो विशिष्टाद्वैतवादः। तत्र सजातीयविजातीय-भेदाभावेऽपि स्वगतभेदो वर्तते एव। जीवो जगच्चैव तस्य स्वगतभेदः। एवं ब्रह्मणो निर्गुणत्वेऽप्युभयोर्मतभेदः—साक्षी चेताः केवलो निर्गुणश्च, इतिश्रुत्याधारेण शंकरः ब्रह्म साक्षिवत् उदा-सीनम् निर्गुणं निर्विशेषं शुद्धं चैतन्यं चाकलयति किन्तु रामानुजस्यै-तत्कथनं यत् ब्रह्म न निर्गुणम् नापि च निर्विशेषम्। ज्ञानानन्ददयाद्य-खिलसद्गुणाकरत्वेन ब्रह्म न कदापि निर्गुणं भवितुमर्हति ब्रह्मणि च हेयप्राकृतिकगुणानामभाव इत्येवश्रुतिवाक्यतात्पर्यम्। एवं ज्ञानानन्दा-दयो ब्रह्मणो विशेषधर्माः, चेतनाचेतनसमन्वितं च जगत् तद्विशेषणभूतं शरीरम्। जगद्विषये चोभयोः शंकरस्यैतन्मतं यद् दृश्यमानमेतज्जगत्

मिथ्या मायामयं चास्ते। एषा माया च ब्रह्मणः अनिर्वचनीया शक्तिः। रामानुजमते च जगत् ब्रह्मण एव उत्पद्यते तस्य शरीरस्थानीयं चेति न कथमपि मिथ्या भवितुं शक्नोति। माया चापि ब्रह्मणः शक्तिरिति न मिथ्या नापि चानिर्वचनीयः पदार्थः।

जीवविषये च शंकरमते ब्रह्मजीवयोरेकत्वम्। जीवो ब्रह्मण एव आभासः (प्रतिबिम्बम्) इति तत्तुल्य एव नित्यमुक्तः स्वप्रकाशश्च। रामानुजमते च जीवो न ब्रह्मण आभासो नापि च नित्यमुक्त अपि तु अग्निस्फुलिंगः अग्नेरिव जीवोऽपि ब्रह्मणो निर्गतः तदंश एव। उभयोः रूपे महदन्तरम्, जीवोऽणुः ब्रह्म च महत्। जीवोऽल्पज्ञः ब्रह्म च सर्वज्ञम्। एवंभूतदशायामुभयोरभेदकल्पना नितरामसम्भवा।

मुक्तिदशायां च शंकरमते बुद्धिरूपोपाधिनाशे जीवो ब्रह्मणा सहैकीभूतस्तदाकारतां भजते। संसारिदशायांचोपाध्यवच्छिन्नो ऽपि जीवो मुक्तदशायां ब्रह्मणि लीयते। रामानुजः किन्तु नैतत् स्वीकरोति तन्मते जीवो ब्रह्मणोंऽशः, अणुरल्पज्ञश्चेति ब्रह्मणा सह तदेकीभावापन्नता न कथमपि सम्भवति अतः संसारिदशायां जीवो यथा ब्रह्मणः पृथक् तथैव मुक्तदशायामपि पृथगेव तिष्ठति। स मुक्तदशायां ब्रह्मानन्दमनुभवतीत्येतावानेव विशेषः।

शंकरमते माया अविद्या अज्ञानं चेति नामतो भिन्नमपि एकमेव पदार्थत्रयम्। शंकरमते माया ब्रह्माश्रित्य नानाविवर्तानुत्पादयति। किन्तु रामानुजो मायाविद्ययोरभिन्नत्वं न स्वीकरोति। तन्मते माया हि भगवच्छक्तिः, ब्रह्माश्रिता च। अज्ञानं तु ज्ञानाभावः जीवाश्रितं चेत्यज्ञानंमल्पज्ञं जीवमेव मोहयितुं शक्नोति न चानन्तं ज्ञानाधारं ब्रह्म स्प्रष्टुमपि शक्नोति। एतदेवाज्ञानं जीवं संसारे बध्नाति भक्तिजन्यभगवत्प्रसादेन च स्वयमेव तिरोधत्ते।

शंकरमते तत्वमसीति महावाक्यमभेदप्रतिपादकम्। एवं भूतोपनिषद् महावाक्यश्रवणमात्रेणोत्पन्नं ज्ञानमेव मुक्तिलाभे एकमात्रं साधनम्। रामानुजमते च भक्तिरेव मुक्तौ एकमात्रं साधनम्, ज्ञानं तु मुक्तौ सहायकमात्रमेव। भक्तिसेविततत्प्रसादेनैव जीवो मुक्तिं लभते। तत्वमसीत्यस्य च तात्पर्यं त्वं तस्य दासः असि इत्यस्ति। इत्थं च स्वामिसेवकभावप्रतिपादकमेतद्वाक्यं न कथमपि ब्रह्मजीवयोरैक्यं प्रतिपादयितुं क्षमम्।

शंकरमते च ब्रह्मसाक्षात्कारे जाते अस्मिन्नेव देहे जीवो मुक्तो जायते स एव च जीवन्मुक्तः उच्यते। शरीरपाते च जीवन्मुक्तः समतीतलौकिक

सुखदुःखः सच्चिदानन्दब्रह्मस्वरूपः संजायते। रामानुजमते च सति-देहे मुक्तिः सर्वथा असंभवा। मुक्तौ हि केवलस्य विशुद्धानन्दस्यैवानु-भवः। सति च देहे जीवो नानाक्लेशभाजनं तिष्ठति अतः मुक्तदशायाः आनन्दस्तदानीं न कथमपि भवितुं शक्नोति इति देहपाते एव मुक्तिः सम्भवति। सत्यपि देहपाते जीवो जीव एव तिष्ठति स न कदापि ब्रह्म संजायते। आम्, तदानीं ब्रह्मानन्दमनुभवन् जीवः सर्वक्लेशेभ्यो मुक्तः संपद्यते।

## द्वैताद्वैतसिद्धान्तपरिचयः

निम्बार्कमतानुसारं ब्रह्म चेतनाचेतनाभ्यामुभाभ्यामत्यन्तं पृथक् अपि अपृथक् वर्तते। अत एवैतस्य सिद्धान्तो द्वैताद्वैतसिद्धान्तः उच्यते, जीवो जगच्चोभयं ब्रह्मपरिणामः। जीवो ब्रह्मणो भिन्नोऽभिन्नश्च वर्तते, जगदपि तथैव भिन्नमभिन्नं चेति तत्सिद्धान्तसंक्षेपः।

एतन्मते भोक्तृ-भोग्य-नियन्त्रपरनामकं चिदचिदीश्वरात्मकं सत्ता-त्रयम्। तस्य चत्वारि रूपाणि (१) दृश्यं जगत् (२) द्रष्टा जीव-समूहः व्यक्तिगताहंकारः, यः सांसारिकपदार्थान् पृथक् पृथगवलोक-यति। (३) नियन्ता—ईश्वरः, यः सृष्टेः सर्वपदार्थान् एकदैव पश्यति (४) सच्चिदानन्दस्वरूपम् अक्षरं ब्रह्म—नामरूपरहितसनातनो निर्विकारः, आनन्दानुभवः स एव च श्रुतिभिः अक्षरमुच्यते।

पारिभाषिकशब्दैर्दृश्यमेतज्जगत् जडमचिच्चोच्यते। किन्तु वस्तु-गत्या अस्य जगतो न कश्चिदपि भागः अचेतनः। अस्य प्रत्यंशं वर्तमानः चित् 'पुरि शरीरे' शेते इति व्युत्पत्त्या पुरुषः उच्यते। इत्थं च दृश्य-मानोंऽशः अस्य शरीरम्। अन्तर्निहितश्चांशः पुरुषः, शरीरं पुरुषश्च सदा अभिन्नत्वेन तिष्ठतः। स च विश्वरूपशरीरे वर्तमानः चित्पुरुषो हिरण्यगर्भः कथ्यते। स च ईश्वरस्य व्यक्तरूपः। विराड्रूपस्य हिरण्य-गर्भस्य पृथक् पृथक् भागेषु अनन्तजीवा निवसन्ति गीतायामेतदेवेत्थं प्रतिपादितम्—

> भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
> अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
> अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
> जीवभूतां महाबाहो ययेदं धार्यते जगत्॥ (गी. ७।४-५)

भगवतोऽनन्तव्यक्तसमूहो विश्वम्। तच्च ब्रह्मण एवांशः। जीवस्य ज्ञाने परिवर्तनशीलम्, क्षरस्वभावम् अनन्तरूपं च तत्। जीवः अपि

ब्रह्मणः अंशः, अक्षरः, अणुः अगणितश्च । जीवो जगच्चोभयमीश्वरावलम्बितम् । ईश्वरश्च सर्वद्रष्टा अक्षरः, विश्वकर्त्ता, जीवानां नियन्ता, स्वयंभूः । सनातनमक्षरं च सत् ब्रह्म सर्वातिशायि सर्वज्ञानमयम् परब्रह्म कथ्यते । विष्णुपुराणस्य षष्ठभागे सप्तमाध्याये ब्रह्मणश्चतूरूपाणां विस्तृतं वर्णनमुपलभ्यते । इत्थं च ब्रह्म द्वैतमद्वैतं चोभयं वर्तते, ब्रह्मजीवयोश्चांशांशिभावः । स च द्वैताद्वैतसिद्धान्ते निम्नलिखितब्रह्मसूत्रेषु समर्थितः समवलोक्यते—

(१) अंशो नानाव्यपदेशात्......(२।३।४३)
(२) मंत्रवर्णात् (२।३।४४)
(३) अपि च स्मर्यते (२।३।४५)
(४) उभयव्यपदेशात्त्वहि कुण्डलवत् (३।२।२७)
(५) तदनन्यत्वमारम्भणशब्दादिभ्यः (२।१।१४)
(६) जन्माद्यस्य यतः (१।१।२)
(७) शास्त्रयोनित्वात् (१।१।३)
(८) तत्तुसमन्वयात् (१।१।४)

अयं च द्वैताद्वैतसम्प्रदायः सनत्कुमारादिभिः ऋषिभिः नारदाय, नारदेन च श्रीनिम्बार्कायोपदिष्ट इति 'भूमा सम्प्रसादादध्युपदेशात्' इति (१।३।८) ब्रह्मसूत्रे निम्बार्कभाष्ये स्पष्टम् ।

## निम्बार्कसिद्धान्ताधारभूततत्त्वसमीक्षा

### (१) जीवः—

अयं ज्ञानस्वरूपः न तु शांकरे इव ज्ञाता अर्थात् इन्द्रियाद्यसहकृत एव अयं सर्वं ज्ञातुं शक्नोति । अत एवायं प्रज्ञानघनः, स्वयं ज्योतिः ज्ञानमयः इत्यादिभिर्नामभिरुच्यते । स च यथा सूर्यः प्रकाशस्वरूपः अपि प्रकाशवान् तथैवरीत्या ज्ञानस्वरूपः अपि ज्ञानवान् । इत्थं च ज्ञानस्वरूपस्य आत्मनः तद्धर्मस्य ज्ञानस्य चैकत्वेऽपि तयोर्धर्मिधर्मभावेन अपार्थक्यम् । तैजसत्वेन रूपेण सूर्यतत्प्रकाशयोरिवैकत्वेऽपि तयोः पार्थक्यात्, एवं धर्मिधर्मयोरेकत्वं पार्थक्यं चोभयमुपलभ्यते' ।

जीवे कर्तृत्वमपि वर्तते तच्च सर्वदा तत्र वर्तमानं न मुक्तावस्थायामपि तत्पार्थक्यं भजते । कर्त्ता शास्त्रार्थवत्वात् (ब्र० सू० २।३ ३३)

---

1. ज्ञानस्वरूपं च हरेरधीनं शरीरसंयोगवियोगयोग्यम् । अणुं हि जीवं प्रतिदेह भिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः [ दशश्लोकी 1 ]

एतत् सूत्रं जीवस्य कर्तृत्वनिषेधकवाक्यानि च कर्तृत्वस्य अस्वातन्त्र्यमात्रमेवावबोधयन्ति; भोक्तृत्वमपि जीवे सर्वदशायां तिष्ठति।

किन्तु स ज्ञानकर्तृत्वाद्यर्थमीश्वराधीनः इति चेतनत्वज्ञातृत्वयोरीश्वरतुल्योऽपि तदाश्रितत्वेन तद्भिन्नः। इत्थं चैतन्नियम्यत्वं जीवे नियन्तृत्वमीश्वरे इव सार्वकालिकम्।

अयमणुः किन्तु तस्य धर्मः ज्ञानं व्यापकम्। एतेन स शरीरस्य सर्वस्मिन् भागे तथैव सुखदुःखानुभवं कर्त्तुं शक्नोति यथैकोऽपि दीपः स्वप्रकाशेन दूरस्थमपि वस्तु प्रकाशयितुं शक्तः। स्पष्टं चैतत् 'गुणाद्वा लोकवत् (२।३।२५) इति सूत्रे भाष्ये। जीवाश्च प्रतिशरीरं भिन्ना इत्यसंख्या अनाद्यविद्याजनितकृतकर्मानुसारं जीवस्य वास्तविकं स्वरूपं विकृतं परिच्छिन्नमपि चेश्वरकृपया तद्वास्तविकस्वरूपमाविर्भवति[1]। इत्थं च निम्बार्कमते संक्षेपेण जीवो ब्रह्मांशः ब्रह्म च तदंशि, तयोर्भिन्नत्वमभिन्नत्वं चोभयं वर्तते। जीवोऽणु र्न विभुः स चाल्पज्ञः। तस्य नित्यत्वं चिरस्थायीतिमुक्तावस्थायामपि स जीव एव। तदानीमपि सोऽणुः। स च बद्धो मुक्तश्च किन्तु बद्धावस्थायां स दृश्यजगता सहैकात्मकतां प्राप्तः आत्मनः जगतश्च ब्रह्मस्वरूपतामुपलब्धुं न शक्नोति। मुक्तावस्थायां तु स ब्रह्मणा आत्मनः जगतश्चाभिन्नत्वमनुभवति इत्यात्मानं जगच्च ब्रह्मरूपेणैवाव धारयति।

## ( २ ) जगत्—

अचितो जगतः त्रैविध्यम् ( १ ) अप्राकृतम् ( २ ) प्राकृतम्। ( ३ ) [2]कालश्च। एतत्त्रयं निजसूक्ष्मरूपे चिदिव ( जीववदेव ) नित्यम्। एतद्धि ब्रह्मनिमित्तोपादानोभयकारणकम्। ब्रह्म एव जगद्रूपेण परिणतं, प्रलयेचाखिलमेतद् ब्रह्मणि लीयते।

## ( ३ ) ब्रह्म ( ईश्वरः )—

निम्बार्कसिद्धान्ते तृतीयं परमतत्त्वं ब्रह्म, कृष्णनामधेयम्। अयं च कृष्णः ( ईश्वरः ) प्रकृत्या अज्ञानाहंकृतिलोभमोहादिसकलप्राकृतदोष-

---

१. अनादिमाया परिमुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात् [ वे० र० मं० पृ० २०—२३ ] तथा दशश्लोकी २

२. अप्राकृतं प्राकृतरूपकं च कालस्वरूपं तदचेतनं मतम्।
मायाप्रधानादिपदप्रवाच्यं शुक्लादि भेदाश्च समेऽपि तत्र [ दशश्लोकी ३ ] वेदान्तकौस्तुभे ( ब्र० सू० १।१।१ )

रहितः सकलगुणगणालयः[1] सर्वजनपूज्यः, वसुदेवसंकर्षणप्रद्युम्नानिरुद्ध-नामकचतुर्व्यूहसम्पन्नो मत्स्यकूर्मादिविविधरूपेणावतरति इदमेव ब्रह्म विश्वस्य जगतो निमित्तोपादानोभयकारणम्। सूक्ष्मरूपेण वर्तमानायाः चिदचिद्रूपायाः निजप्राकृतिकशक्तेः स्थूलरूपेण प्रकटीकरणे तदुपादान-कारणम् इति जगत्यस्मिन् यत्किंचिद् दृष्टिगोचरं श्रुतिगोचरं वा तत् सर्वं व्याप्यान्तर्बहिश्च नारायणो विद्यते[2]। जीवानां तत्कर्मानुसारं तत्फलैः भोगसाधनैश्च संयोजनेन च तन्निमित्तकारणम्। इत्थं च सूक्ष्मरूपेण वर्तमानस्य स्थूलरूपेण परिणतिरेव सृष्टिरिति जगदिदं ब्रह्मणो विवर्त-इत्येतत्कथनमसंगतम्।

कश्चैतेषां चिदचिद्ब्रह्मणां परस्परं सम्बन्ध इति प्रश्ने नैतेषाम-भिन्नत्वं वक्तुं शक्यम्, तद्भिन्नत्वप्रतिपादकानामौपनिषदवाक्यानां विरो-धात् परस्परभिन्नानां चैतेषां त्रयाणां पारस्परिकविरुद्धधर्मत्वाच्च। नापि चैतेषां नितरां भिन्नत्वं वक्तुं शक्यम् 'सर्वं खल्विदं ब्रह्म' तत्त्वमसीत्या-दिवाक्यविरोधात्। किंच, चिदचिद्भ्यां ब्रह्मणो भिन्नत्वप्रकृतिः तस्य विभुत्वं सर्वनियामकत्वं च व्याघ्नती तदपि चिदचिद्वत् ससीमशक्ति-प्रकृतिकं करोति। सदपि एतत्त्रयं वस्तुतोऽभिन्नम्, प्रतीयमानभेदस्त्वौ-पाधिक इति तु वक्तुमशक्यम्, तथात्वे च ब्रह्मणोऽपि सर्वेषामुपाधि-दोषाणां सम्भवे तदपि सुखदुःखरागद्वेषाद्यनुभावि सत् निजगुणविरुद्ध परिवर्तनादिप्राकृतिकगुणवत् सम्पद्येत। अतो वस्तुस्थितिरियं यत् भेदाभेदयोरुभयोः समानतया सत्यत्वम्, श्रुतिवाक्यानुसारं चिदचितो-रुभयोर्ब्रह्मभिन्नधर्मवत्वेन भिन्नत्वम्। ब्रह्माश्रिततया स्वातन्त्र्येण स्था-तुमशक्यत्वाच्च तयोर्ब्रह्मणोऽभिन्नत्वम्। अतो भेदेनैतस्यैतत्तात्पर्यं यत् तयोः भिन्नभिन्नसत्तायाः सम्भवः वर्तते किन्तु न तयोः स्वातन्त्र्यम् इत्युभयोरपि परतन्त्रसत्त्वभावः, उभयोरपि तयोः ईश्वराधीनत्वात्, अभेदेन चैतस्य एतत्तात्पर्यं यत् तयोः स्वतन्त्रसत्तायाः एवासम्भवः इति न तयोः स्वतन्त्रसत्त्वभावः। इत्थं च तत्त्वमसीत्येतद्वाक्ये तच्छब्दः सर्वज्ञ-सर्वशक्तिमत्-सर्वात्मस्वतन्त्रसत्ताकस्य ब्रह्मणो वाचकः। त्वं शब्दश्च स्वकीयसत्तायै ब्रह्माश्रितस्य जीवस्य बोधकः। असीत्येष शब्दः

---

१. स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्। व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् [ दशश्लोकी ४ ]

२. यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्मृतः [ सिद्धान्तजाह्नवी पृ० ५१ ]

अग्निस्फुलिंगयोः सूर्यप्रकाशयोरिवाभेदेऽपि भेदवत् तयोः सम्बन्धवाचकः। इत्थं च निम्बार्कमते ब्रह्मविषयकः अयं संक्षेपः यत् ब्रह्म सर्वशक्तिमत्। तदेव च जगतो निमित्तोपादानोभयकारणम्। सगुणभाव एव च तस्य मुख्यः, जगद्रूपेण परिणतमपि तन्निर्विकारम्। जगदतीतं च तन्निर्गुणम्। स्वरूपतः तज्जगतः अतीतम्, प्रलयावस्थायामखिलं जगत्तत्र विलीयते। गुणगुणिनोरभेद इति स्वरूपतो निर्गुणमपि ब्रह्म सृष्टिकारणरूपे सगुणं वर्तते।

## ( ४ ) साधनं मुक्तिश्च—

निम्बार्कसिद्धान्ते भक्तिरेव मुक्तिसाधनम्। उपासनया हि ब्रह्मावाप्तिः। तच्च ब्रह्म सगुणनिर्गुणोभयरूपेणोपासितुं शक्यते। उपासनाफलस्वरूपमेव चार्चिरादिमार्गेण ब्रह्मलोकावाप्तिः।

मुक्त्यर्थमेतन्मते प्रपत्तेरत्यावश्यकत्वम्। प्रपत्तिश्च—

'आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्।
रक्षिष्यतीति विश्वासः तथागोप्तृत्ववर्णनम्॥'

एवं रूपा कार्पण्या (नैःसाहाय्या)नुभवपूर्वकं तस्मिन्नात्मनो निक्षेप इति भावः। प्रपत्तिसम्पन्ने ( प्रपन्ने ) तदर्थमुद्भूतविशेषप्रेम्णो भगवतः अनुग्रहेण परमात्मसाक्षात्कारावसाना भगवद्भक्तिरुत्पद्यते।

## रामानुजनिम्बार्कसिद्धान्तभेदः—

इत्थं पर्य्यालोचनयेत्थं ज्ञायते यत् रामानुजनिम्बार्कसिद्धान्तयोः साम्याधिक्यम्—उभावपि भेदाभेदौ सत्यौ स्वीकुर्वाते किन्तु निम्बार्कस्वीकृतभेदाभेदावेकदेशीयौ, सहवर्तिनौ, सत्समममहत्वौ च; रामानुजे च अभेदो मुख्यः स च भेदविशिष्ट इति भेदोऽभेदसहायकः, उभयोः सिद्धान्तयोरयमेकोऽन्यो भेदो यत् रामानुजाचार्यो ब्रह्मणः शरीरं चिदचिद्रूपं ब्रह्मणि प्रकारीभूतं मनुते अत एव अस्य सिद्धान्तो विशिष्टाद्वैत ( चिदचिद्विशिष्टपरमेश्वराद्वैत ) सिद्धान्त उच्यते किन्तु निम्बार्को नैतदेतदतः स्वीकरोति यत् एतन्नावश्यकं यत्कस्यापि शरीरं तस्य धर्मो भवेत् ( तत्र प्रकारीभूतो भवेत् ) इत्थं चायं विचार एव असंभवः। स्वभावतया कोऽपि धर्मः ( गुणः ) स्वधर्मिणम् तदध मणो विभेदयति। प्रस्तुते च न किमप्येवं भूतं वर्तते यस्मात् चिदचिदेतद्द्वयेन स्वधर्मि विभिद्यते। यदि चेत्थमुच्येत यच्चिदचिदुभयं ब्रह्मणो भिन्नमभिन्नं चोभयं वर्तते तदा चिदचिद्विशिष्टेश्वरस्यैकत्वप्रतिपादनमेव उपहासास्पदं स्यात्।

## द्वैतसिद्धान्तपरिचयः

अस्मिन् जगति चेतनाचेतनात्मकं पदार्थद्वयमेवेति शांकराद्वैतवाद-परिचये स्पष्टीकृतम्। तत्राचेतनसम्बद्धविचारशास्त्रं 'विज्ञानम्' चेतन-सम्बन्धिनिर्णयशास्त्रं च दर्शनम्। अस्य दर्शनस्य मुख्यतः द्वौ भागौ। (१) वैदिकः (२) अवैदिकश्च। एकैकस्य च पुनर्द्वौभागौ (१) ईश्वर-वादी (२) अनीश्वरवादी च। एतेषु चतुर्षु भागेषु एकैकस्य तात्पर्य-भेदेन अनेके अवान्तरभेदाः।

एतेषु दर्शनेषु यानीश्वरवादिवैदिकदर्शनानि तेषु अनेकैः कारणैः उत्तरमीमांसानामकवेदान्तदर्शनमेव सर्वप्रधानम्। तस्य च सर्वतोभावेन ब्रह्मतत्त्वोपपादनमेव मुख्योद्देश्यम्। अत्रापि द्वौ मार्गौ (१) अद्वैतनाम्ना प्रसिद्धः निर्विशेषब्रह्मवादः (२) सविशेषब्रह्मवादश्च। तत्र सविशेष-ब्रह्मवादः विष्णुशिवशक्तिसूर्यगणपतिपरकः पंचविधः, अत्रापि चैकैक-स्यानेकप्रभेदत्वे आदिमस्य विष्णुपरकस्य चत्वारो विभागाः (१) विशिष्टाद्वैतवादः (२) द्वैताद्वैतवादः (३) द्वैतवादः (४) शुद्धाद्वैतवादश्च, तत्र तृतीयस्य द्वैतवादस्य सर्वप्रथमः समुपदेष्टा साक्षात् चतुर्मुखो ब्रह्मा। तदनन्तरपरम्परया कलौ श्रीमदानन्दतीर्थापरनामा श्रीमध्वाचार्य एतस्योपदेष्टा समजायत। तेन यस्यानादिसिद्धसम्प्रदायस्य प्रकाशः प्रचारो वा विहितः स एव द्वैतापरनामा माध्वसम्प्रदायः।

## मध्वसिद्धान्ताधारभूततत्त्वसमीक्षा

मध्वसिद्धान्तो नितरां द्वैतप्रतिपादकः। अयं च ब्रह्मजीवजडेषु विभिन्नतां स्थापयन् ब्रह्मणो जगत उपादानकारणतामपाकरोति। अद्वैत-विशिष्टाद्वैतविरोधे मध्वाचार्येण नित्यभेदपंचकज्ञानं, मोक्षार्थम्, आवश्यकतया निर्दिष्टम्। तथाहि—(१) ईश्वरजीवयोर्भेदः (२) ईश्वर-जगतोर्भेदः (३) एकस्य जीवस्य जीवान्तराद्भेदः (४) जीवजगतोर्भेदः (५) एकस्य जडपदार्थस्य जडपदार्थान्तराद् भेदश्च।

### ( १ ) ब्रह्म—

मध्वमते ब्रह्म सगुणं सविशेषं च वर्तते। तच्च स्वतंत्रं तत्त्वम् अनन्तगुणस्वरूपम्। भगवदधीनचेतनाचेतनजीवजगत्स्वरूपद्विविधभा-वात् सर्वथाभिन्नम्। एतन्मते विधि-हराद्यपेक्षया हरिः (विष्णुः) श्रेष्ठः सर्वे देवास्तद्वशवर्तिनः। स एव सर्वं सृजति, पालयति, संहरति, मुक्तिं च ददाति। कालतः, देशतः गुणतश्च स निस्सीमशक्तिरिति स्वतन्त्रः।

स हि ज्ञानानन्दस्वरूपः, सर्वतंत्रस्वतन्त्रः विभिन्नेष्वपि वस्तुषु एकस्तद्भिन्नः।

## ( २ ) जीवः—

जीवः अणुः, प्रतिशरीरं भिन्नः अस्वतंत्रः। न स कदापि भगवदभिन्नो—भवितुमर्हति। भगवान् सेव्यो जीवश्च सेवक इत्युभयोर्भिन्नत्वम्। जीवश्चेतनः किन्तु परिमितज्ञानः इति सर्वथा ईश्वराधीनः। दुःखी दुःखरहितश्चेति चेतनो जीवो द्विविधः। दुःखी जीवोऽपि द्विविधः, मुक्तियोग्यस्तदयोग्यश्च। सात्विकराजसिकतामसिकभेदेनापि च जीवस्य त्रैविध्यम्।

## ( ३ ) जगत्—

मध्वमते जगदिदं सत्यं जडमस्वतन्त्रं कालतश्च निरवधि तच्च प्रकृत्या सृज्यते या च परमात्मनः सर्वथा भिन्ना। परमात्मा चास्य जगतो निमित्तं कारणम्, न चोपादानम्। एतन्मते चेतनादीश्वरादचेतनस्य जगतः उत्पत्तिरनुपपन्ना।

## ( ४ ) मोक्षः—

हरेः साक्षाद् ज्ञानेन साक्षात्कारेण वा मोक्षावाप्तिः वैकुंठप्राप्तिरेव तन्मते मुक्तिः। सा च स्थूलसूक्ष्मसर्वपदार्थयथार्थज्ञानेन संजायते। ईश्वरजीवयोः पूर्णरूपेण पार्थक्यमेतत्पूर्णज्ञानावाप्त्यनन्तरमीश्वरगुणोपलब्धौ तदनन्तासीमशक्तिगुणगरिमावबोधे यावज्जागतिकपदार्थयथार्थस्वरूपावबोधे मुक्तिः।

एतत् साक्षाद्ज्ञानमर्जयितुं वैराग्यशमदमगुरूपसत्तिशरणागतिपरमात्मभक्तिपूर्वकसर्वकर्महरिसमर्पणपूर्वोक्तभेदपंचकपरिज्ञानावश्यकत्वम्। मुक्तोऽपि जीवो न ब्रह्मणा सहैक्यं भजते। एतदतिरिच्य भोक्ता, भोग्यम्, नियामकः एतत्त्रयं सर्वदा सर्वथा च परस्परं भिन्नं समानतया सत्यं च सत्तात्रयम्। इत्थं च ब्रह्मजीवभेदप्रतिपादकश्रुतिवाक्यान्येव मध्वो विशेषतः प्रामाण्येनोद्धरति, अभेदप्रतिपादकानि च वाक्यानि तेन अन्यथैव व्याख्यायन्ते। तथाहि—'तत्त्वमसि'—त्वं तस्य ( तदीयः ) असि, 'अयमात्मा ब्रह्म'—अयं जीवः वर्धनशीलः; ब्रह्मपक्षे च अयमात्मा अतनशीलः ( सातत्येनगमनशीलः सर्वव्यापको वा ) इत्यादि। एवं 'ब्रह्मविद् ब्रह्मैव भवति' इत्यादीनामपि स्वकल्पित एवार्थस्तेन स्वीकृतः इति तन्मते ब्रह्मजीवयोः, प्रकृतीश्वरयोः ( प्रकृतिपुरुषयोः ) सर्वदा सर्वथा च भिन्नसत्ताकत्वेन न कदाप्येकत्वसंभवः।

## ( ५ ) साधनम्—

भक्तिरेव मुक्तिसाधनम् । त्यागः, भक्तिः, ईश्वरप्रत्यक्षानुभूतिश्चैतत्सर्वं मुक्तेरेकमात्रं साधनम् । ध्यानमन्तरेण च नेश्वरसाक्षात्कृतिरिति भगवद्भक्तिः वेदाध्ययनम्, इन्द्रियसंयमः, विलासितापरित्यागः, सांसारिकनश्वरतापरिज्ञानम् सम्पूर्णरूपेण भगवत्यात्मसमर्पणमेतैर्गुणै र्विना भगवत्साक्षात्कारासंभवः । भगवत्सेवा चास्योत्तमं साधनम् ।

## शंकर रामानुज-निम्बार्कापेक्षया मध्वसिद्धान्तभेदः

सांख्यसिद्धान्तस्य द्वैतसिद्धान्तत्वेऽपि मध्वाभिमतद्वैतसिद्धान्तः सर्वथा तद्भिन्नः । सांख्यद्वैतसिद्धान्ते पुरुषः प्रकृतिश्चेति पदार्थद्वयम् । उभाविमौ नित्यौ सत्यौ च । मध्वमते च ब्रह्मजीवयोर्नित्यत्वेन पार्थक्यम् । उभयमपि पृथक् पदार्थद्वयमित्यर्थः ।

रामानुजो हि ब्रह्मजीवयोः स्वगतभेदं स्वीकुर्वन्नपि सजातीयविजातीयभेदं न स्वीकरोति । तन्मते ब्रह्म स्वतंत्रम्, जीवः परतन्त्रः तयोः सेव्यसेवकभावः इति न कदापि सेवकः सेव्यादभिन्नो भवितुमर्हति ।

द्वैताद्वैतसिद्धान्तोऽपि प्रायः विशिष्टाद्वैतसमान एवेति मध्वसिद्धान्तापेक्षया सर्वे इमे सिद्धान्ताः भिन्नाः ।

मध्वाचार्यतः पूर्वं नास्य सिद्धान्तस्य कोऽपि प्रवर्तकः समुपलभ्यते । अतः पुराणादिप्रमन्थनमेवास्य सिद्धान्तस्य प्रवृत्तौ मूलम् ।

मध्वाचार्यस्यायं सिद्धान्तो वैष्णवभक्तिसिद्धान्तस्य फलम् । शांकर मतस्य भक्तिवादस्य च यदा संघर्षः सर्वत्रासीत् तदैव माध्वमतस्योद्भवः इति संघर्षफलरूपेण विशिष्टाद्वैत द्वैताद्वैतयोः शांकरमतस्याधिकांशप्रभावपूर्णत्वेऽपि माध्वसिद्धान्तस्य सर्वथा तद्भिन्नत्वादत्र शांकरमतस्य तीव्रालोचना वर्तते ।

मध्वमते ब्रह्म सगुणं सविशेषं च, जीवश्चाणुपरिमाणो भगवतो दासः । प्रपंचं चैतत्सत्यम्--एतत्सर्वं रामानुजसमानम् । पदार्थतत्वनिर्णये चोभयोर्विरोधः । मध्वमते तत्वं द्विविधम् (१) स्वतंत्रम् (२) अस्वतंत्रं च । अशेषसद्गुणयुक्तो भगवान् विष्णुः स्वतन्त्रतत्वम् । जीवो जडं जगच्चास्वतंत्रं तत्वम् । मध्वाचार्यो हि पूर्णरूपेण द्वैतवादीति तन्मते जीवो भगवतो दासः । अतः परमसेव्यस्य भगवतः सेवामतिरिच्य- ...व्यम् । स्वतन्त्रस्य भगवतः प्रसन्नतावाप्ति

रेवैकमात्रं पुरुषार्थः। स चायं परमपुरुषार्थो भगवद्गुणानां ज्ञानमन्तरेणानवाप्यः । निर्वाणमुक्तिस्तु मरुमरीचिकैवेति सारूप्यसालोक्यादिमुक्तिरेव परमार्थः।

## शुद्धाद्वैतसिद्धान्तपरिचयः

वल्लभसिद्धान्तः शुद्धाद्वैतसिद्धान्त उच्यते। शंकरमते हि मायायुक्तमेव ब्रह्म इदं सर्वं जगत् सृजति किन्तु वल्लभानुसारेण मायारहितमेव ब्रह्म सर्वं करोतीति अयं सिद्धान्तः शुद्धाद्वैतनाम्ना प्रसिद्धः। मायारहितब्रह्मजीवयोरैक्यं हि तदर्थः। इत्थं चापाततः जीवजगतोर्ब्रह्मणा सहैक्यम्। जीवश्चाणुर्ब्रह्मणोऽभिन्नस्तदंशश्च[1]। स चाज्ञानापरिच्छिन्नः शुद्धः अज्ञानबन्धननिबद्धश्च, स्थूल-सूक्ष्मशरीरसम्बन्धेन जन्ममरणाद्यनुभवन् संसारी विद्यया विमुक्तबन्धनः। अणुरपि आत्मा स्वचैतन्यगुणेन एकदेशलिप्तमपि[2]चन्दनं स्वकीयगन्धरूपगुणेन स्थानान्तरे इव सर्वशरीरव्यापकः।

अयं च सिद्धान्तो भक्तिसम्प्रदाये पुष्टिमार्गनाम्ना प्रसिद्धः। ब्रह्मजीवयोरेकत्वैकान्तपक्षपाती अपि वल्लभो मायाशबलितब्रह्मपक्षपातिनः शंकरस्य वेदान्तान्निजमतं विभेदयितुमद्वैतशब्दात्पूर्वं शुद्धशब्दं व्यवहृत्य शुद्धाद्वैतनाम्ना प्रचारितवान्। यथाचोक्तं शुद्धाद्वैतमार्तण्डे—

> मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।
> कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्[3]॥

सच्चिदानन्दस्वरूपं हि परब्रह्म[4]। अखिलरसामृतमूर्तिः, अखिललीलानिकेतनो भगवच्छ्रीकृष्ण एव च तत्परब्रह्म। अग्नेः स्फुलिंगानामिव च तस्मात्परब्रह्मणो। जीवानामाविर्भावः[5]। जगच्चैतद्भगवतो। लीलाविलासः। आविर्भूतितिरोभूतिनामकभगवच्छक्ती एतस्य जगतो विकासलयहेतू[6]।

अस्मिन् सिद्धान्ते विपदागारादस्मात्संसारात् मुक्त्यर्थं मार्गद्वयं निर्दिष्टम् (१) मर्यादामार्गः (२) पुष्टिमार्गश्च। तत्र यज्ञयागादीनां यथोचितमनुष्ठानं श्रवणमनननिदिध्यासादिना ज्ञानार्जनं च मर्यादामार्गीयाणां

---

१. नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् [ ब्र० सू० २।३।२१ ]

अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयतएके [ ब्र० सू० २।३।४३ ]

२. अविरोधश्चन्दनवत् ( ब्र० सू० २।३।२३ ) गुणाद्वालोकवत् ( २।३।२५ ) तथा व्यतिरेको गन्धवत् ( २।३।२६ )

३. शुद्धाद्वैतमार्तण्डः पृ० २४

४. प्रमेयरत्नार्णवः पृ० ११-१५

५. शुद्धाद्वैतमार्तण्डः पृ० १०

६. तत्रैव पृ० ८-१२

मोक्षसाधनम् । किन्त्वेवंभूतदुर्गममार्गानुसरणं वेदाध्ययननिरतैस्त्रिवर्णपुरुषैरेवकर्त्तुं शक्यते । तत्र स्त्रीशूद्रादिभिरिति महाप्रभुणा एवं भूतानामपि कल्याणाय स्वकीयः पुष्टिमार्गो निर्दिष्टः । अस्मिन् मार्गे परब्रह्मणो भगवतः श्रीकृष्णस्यानुग्रह[1] एव मुक्तेरेकमात्रं साधनम् इति प्रसिद्धसाधनत्रयनिष्पादने असमर्थैर्जनैः स्वकीयं सर्वस्वं भगवतश्चरणारविन्दे समर्पणीयम्[2] । पूर्णया भक्त्या श्रीकृष्णपादारविन्दयोः प्रक्षिप्तं निराश्रयमात्मानमवश्यमेव स करुणावरुणालयः उद्धरति, केवलं तदनुग्रहे तदलौकिककृपायां चैव पूर्णविश्वासस्यावश्यकता वर्तते ।

एष च भगवदनुग्रहरूपः पुष्टिमार्गो नाधुनिकः अपि तु तस्य वैशिष्ट्यं श्रुतिष्वपि प्रतिपादितमुपलभ्यते—

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥

कठोपनिषद्यपि—'तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः । ( १।२।२० )

इत्युक्त्वा भगवतः प्रसादादेवात्मस्वरूपदर्शनस्य चर्चा कृतोपलभ्यते इति भगवदनुग्रहस्यैवसिद्धान्तः अत्यन्तप्राचीनः । अतएव वल्लभेन पुष्टिमार्गस्य मर्यादामार्गात् विशिष्टता स्पष्टतया निर्दिष्टा । मर्यादामार्गे हि जीवः फलार्थं निजकर्माधीनः । तत्कर्मानुरूपमेव फलं भगवान् तस्मै प्रयच्छति—'कर्मानुरूपं फलमिति हि मर्यादामार्गस्य प्रसिद्धः सिद्धान्तः किन्तु पुष्टिमार्गे न कर्मणः आवश्यकता[3] । मर्यादामार्गे च शास्त्रविहितज्ञानकर्माचरणेनैव मुक्तिरूपं फलमुपलभ्यते । पुष्टिमार्गे च ज्ञानकर्मणोर्नितान्तमनावश्यकतेति[4] सर्वनिराश्रयदीनजीवानामेकमात्रं मोक्ष-

---

१. 'पोषणं तदनुग्रहः' श्री० भा० २।१०।४

२. समस्तविषयत्यागः सर्वभावेन यत्र हि ।
समर्पणं च देहादेः पुष्टिमार्गः स कथ्यते ॥ [ प्रमेयरत्नार्णवः पृ० १८ ]

३. फलदाने कर्मापेक्षः, कर्मकारणे प्रयत्नापेक्षः, कामे प्रवाहापेक्षः इति मर्यादारक्षार्थं वेदं चकार । ततो ब्रह्मणि न दोषगन्धोऽपि न चानीश्वरत्वम् । मर्यादामार्गस्य तथैव निर्माणात् । यत्रान्यथा स पुष्टिमार्गः ( अणुभाष्यम् ब्र० सू० २।३।४२ )

४. अत एव पुष्टिमार्गे अंगीकृतस्य ज्ञानादिनैरपेक्ष्यं मर्यादायामंगीकृतस्य तु तदपेक्षितत्वं च युक्तमेवेति भावः । अणुभाष्यम् ( ब्र० सू० ३।३।२९ )

साधनमुद्धारोपायश्च पुष्टिमार्ग एव वर्तते । तत्र हि भगवता मनसा वाचा-कर्मणा स्वस्मिन्नात्मसमर्पकजीवानामुद्धारः स्वदयाबलेन[1] क्रियते । अत एवायं मार्गः सर्वजीवानां कृते वर्णजातिदेशादिभेदभावराहित्यपूर्वकं सर्वथोपादेयः ।

'सर्वधर्मोपपत्तेश्च' ( २।१।३७ )

सर्वोपेता च तद्दर्शनात् ( २।१।३० )

इत्यादिप्रमाणैः श्रीमद्वल्लभाचार्येण ब्रह्मणः सर्वधर्मसमन्वितत्वं प्रतिपादितम् , ब्रह्मणि नियतधर्मित्वस्वीकृतौ ब्रह्मण इयत्तापत्तिः, तस्यात्यन्तनिर्गुणत्वस्वीकृतेः तज्ज्ञानासंभवः इति मोक्षस्वरूपपुरुषार्थवैयर्थ्यम् , इत्थं च शास्त्रमात्रस्य वैयर्थ्यापत्तिः ।

विरुद्धसर्वधर्माश्रयत्वमपि ब्रह्मणो वर्तते 'उभयव्यपदेशात्त्वहिकुण्डलवत्' (३।२।२७) 'प्रकाशाश्रयवद्वा तेजस्त्वात्' ( ३।२।२८ ) आदिसूत्राणि इदमेव प्रतिपादयन्ति । परात्परस्य परब्रह्मणो माहात्म्यमेवेत्थमनवगाह्यं यत्तत्र सर्वविरुद्धधर्माश्रयत्वं प्रकृत्या सम्भवीत्येतदितिहासपुराणादिवचनैः प्रतिपाद्यते । अत एव ब्रह्म निर्विशेषं सविशेषं च, निर्गुणं सगुणं च, अणु च महदपि च । कूटस्थमपि चलम् , अगम्यमपि गम्यम् एतत् 'अपि च संराधने प्रत्यक्षानुमानाभ्याम्' ( ३।२।२४ ) 'लोकवत्तु लीलाकैवल्यम्' ( २।१।३२ ) अपाणिपादो जवनो ग्रहीता[2]......इत्यादिसर्वं ब्रह्मणः सर्वधर्माश्रयत्वं प्रतिपादयति ।

## वल्लभसिद्धान्ताधारभूततत्त्वसमीक्षा—

### ( १ ) ब्रह्म—

वल्लभेन ब्रह्म साकारम् , सर्वशक्तिमत् , सर्वज्ञम् , सर्वकर्तृसच्चिदानन्दस्वरूपं च स्वीक्रियते । तच्च ब्रह्म प्राकृतिकगुणातीतम् अपि अचिन्त्यानन्त्यशक्तिमत्त्वेन जगत्कर्तृ तत्सर्वं भवितुं कर्त्तु च शक्नोतीति तत्र विरुद्धधर्माणामपि समावेशो नाश्चर्यकरः । एतदेव ब्रह्म जगतो निमित्तमुपादानं च कारणम् । तत्र कर्तृत्वं भोक्तृत्वमुभयं वर्तते । कर्तृ अपि तद् ब्रह्म निर्विकारम् , उपादानकारणमपि च तत्सांसारिकधर्मरहितम् ।

अनन्तगुणसम्पन्नं नित्यं सर्वज्ञं हि तत् स्वभावतः सच्चिदानन्दस्वरूपम् । सर्वदा मायानिर्लिप्तं शुद्धमेकमद्वितीयम् । तद्धि सर्वैश्वर्यासम्पन्नमिति तद्विषये सविशेषनिर्विशेषप्रतिपादकानामुभयविधवेदान्त-

---

१. पुष्टिमार्गोऽनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षणः ( अ० भा० ४।४।६ )

२. श्वे० ३।१९

वाक्यानामविरोधः । अथ च निर्गुणबोधकवाक्यैः तेषां प्राकृतिकगुणानां निर्देशो यैश्च रहितं ब्रह्म वर्तते । सगुणबोधकवाक्यैश्चैश्वर्यादिसम्पन्नस्य ब्रह्मणोऽनन्तगुणानामवबोधो यैश्च युक्तं ब्रह्म वर्तते । इत्थञ्च जगदपेक्षया ब्रह्मणो विलक्षणत्वम् । ब्रह्म हि स्वेच्छयैव जीवजडादिरूपेण केवलं लीलायै आविर्भवति, न तत्र वस्तुतः किमपि परिवर्तनम् । कुण्डलीभूतस्य, अप्रकटितपुच्छफटादिरूपस्य सर्पस्येव तस्यैव जगद्रूपेण वर्तमानत्वम् । एवं च सदसद्गुणदोषादिरूपेण ब्रह्मण एव सर्वत्र वर्तमानत्वेन सुखित्व-दुःखित्वादि-जागतिकविभिन्नता-निमित्तक-पक्षपातादिदोषाणां तत्र सर्वथा असंभवात् तदर्थं क्रियमाणाः आक्षेपाः वल्लभमते अपास्ताः ।

## ( २ ) जीवः—

जीवोऽणुर्ब्रह्मांशः । स च हृदयस्थानो ब्रह्मवच्चेतनः शुद्धश्च । चैतन्यमस्य गुणः । हृदयस्थानस्याप्यस्यैतच्चैतन्यं सर्वशरीरं व्याप्नोति ।

## ( ३ ) जगत्—

जगत्प्रपञ्चः अव्ययमनभिव्यक्तचैतन्यानन्दगुणविशिष्टः इति सत्तैकगुणसम्पन्नः । ब्रह्मैव स्वयं स्थूलजगद्रूपेणाभिव्यक्तं भवतीति जगदेतद् ब्रह्मकार्यम् । एवं सर्गः प्रलयश्चापि भगवतः अविर्भावतिरो[1]भावस्वरूपाविति तस्यानुभवयोग्यत्वे ( अनुभवयोग्यस्वरूपाविष्कारे ) जगतः सृष्टिः, स्वकीयकारणरूपतां च परावर्तिते तस्मिन् ( साधारणानुभवयोग्यत्वाभावे ) जगतः प्रलयः । इत्थं च ब्रह्मण इव जगतः अपि नित्यत्वसत्यत्वे इति न तद् भ्रमात्मकं नापि च भगवद्भिन्नम् ।

विश्वस्य ब्रह्ममयत्वेन निर्विशेषमेतज्जगद् ब्रह्मेति भगवदिच्छया पटत्वघटत्वादिविशिष्टयोरपि पटघटयोर्वैपरीत्यं न विरुध्यते । तत्तद्धर्माणामेव तत्र तत्र विशेषेणोद्भूतत्वादन्यधर्माणां च तत्र तिरोभूतत्वादेकस्मिन् धर्मिणि घटादौ पटत्वादीनामनुपलम्भात् । एतेनैतदायातं यत् कार्यकारणयोर्नितरामैक्यमेव—भगवतो यस्मिन् रूपे मृदादौ अन्यद् घटादिकमुत्पद्यते तत्कारणम् । यच्च घटादिरुत्पद्यते तत्कार्यम् । एवं रूपेण 'सर्वं खल्विदं ब्रह्म' इत्यस्य बोधः ।

किन्तु मोहाद्यविद्या जीवे प्रभवतीत्येवंरूपेण सत्यमप्येतत्सर्वं जगत् तस्मै मिथ्यारूपेण अवभासते । जगतः सत्यत्वेऽपि नौकाधूमशकटाद्यारूढानां कृते तटादिस्थितवृक्षादीनां वस्तुतः स्थिरत्वेऽपि प्रतीयमान-

---

१. अनुभवविषयत्वयोग्यता आविर्भावः, तदविषयत्वयोग्यता तिरोभावः । ] विद्वन्मण्डनम् पृ० ७ ]

गतिमत्वादिव भगवद्रूपत्वात् वस्तुतः शुद्धसत्यस्यापि जगतो बाह्यतः मिथ्यात्वेन प्रतीतेः। इत्थञ्चायं प्रपंचः त्रयाणां भिन्नभिन्नपुरुषाणां कृते विभिन्नप्रकारेणेत्थमवभासते—(१) समवाप्तब्रह्मस्वरूपाणां कृते जगदिदं ब्रह्ममयम् (२) शास्त्रचक्षुर्भिरसमवाप्ततात्त्विकबोधानां धृतरंजितोपनेत्राणामिव च जगदिदं मायामयं प्रतीयमानमपि ब्रह्ममयमेवावभासते। तेषां सदसद्विवेकशालित्वेन जगतः सत्यत्वमिथ्यात्वोभयांशयोः स्पष्टत्वात्। (३) अवबोधरहितानां बालिशानां च कृते जगदिदं धृतरंजितोपनेत्राणां बालानां कृते, अरंजितेष्वपि वस्तुषु रंग इव सत्यत्वेनावभासते। इत्थं सर्वः अत्र भेदः प्रपंचप्रतीतेरेव न तु स्वरूपस्य; परस्परविरुद्धमिथ्यात्वात्ममयत्वयोरुभयोरेकप्रपंचेऽसम्भवात्।

इदमत्र संक्षेपेणावधेयम्—ब्रह्मरूपकारणस्यैतज्जगत् कार्यम्। कार्यकारणयोरभिन्नतया ब्रह्मरूपकारणस्य च सत्त्वेन तत्कार्यस्यापि अनिवार्यरूपेण सत्वाज्जगदपि सत्। हरीच्छयैवैतज्जगदाविर्भवति तदिच्छयैव च तिरोधत्ते। लीलायै एव केवलं ब्रह्म स्वेच्छया जगद्रूपेण परिणमतीति जगतो ब्रह्मात्मकत्वम्। सर्वं चैतत्प्रपंचं ब्रह्मणः कार्यम्। इत्थं वल्लभः अविकृतपरिणामवादीति न तन्मते जगदेतन्मायिकम् नापि च तद्भिन्नम्। ब्रह्मणः समुत्पत्तिविनाशौ न भवतः किन्तु जगतः सत्यत्वेऽपि तदाविर्भावतिरोभावौ भवतः। तिरोहितं हि जगत् कारणरूपेण, आविर्भूतं च तत् कार्यरूपेणावतिष्ठते। भगवदिच्छैवात्र सर्वत्र हेतुः। क्रीडार्थमेव च तेन जगत्सृष्टम्। न च तत्रैकाकिनः क्रीडासम्भव इति भगवता जीवा निर्मिताः।

## उपसंहारः—

इत्थं व्यक्तिगतरूपेण पृथक् पृथक् सर्वभाष्यकारपञ्चकसिद्धान्ताधारभूततत्त्वसमीक्षायां निम्नाङ्कितरूपेण साम्यवैषम्ये समुपलभ्येते—

अद्वैतमते जीवो विभुः, ब्रह्मणोऽभिन्नश्च स च मुक्तावस्थायां ब्रह्मणा सहैकीभवति। शेषाचार्यचतुष्टय ( वैष्णव ) मते च जीवस्य अणुभावो नैसर्गिकः। स च सदा अणुः परिच्छिन्नश्च। स च सर्वदा अंशिनो भगवतः अंश इति तदधीनः। तस्याणुत्वं च न कदापि निवर्तते। संसारिदशायां तु सः अपवित्रमनःप्राणदेहादिबन्धनैर्बद्धः किन्तु मुक्तदशायामेतैर्बन्धनैर्मुक्तोऽपि न कदापि स्वाणुत्वान्निवर्तते। द्वैतवादिनो मध्वमते तु स्पष्टतः जीवेषु तारतम्यसिद्धान्तोऽभिप्रेतः इति मुक्तदशायामपि स भगवतः पृथगेव सत्तां धारयति। सर्वे मुक्तपुरुषा अपि न समानमेवानन्दमनुभवन्ति। तत्रापि तेषां क्रमो वर्तते। जीवाणुत्वसत्तायां तु प्रत्येकवैष्णवाचार्यस्याग्रहः इति मुक्तेः कस्मिंश्चिदपि प्रकारे तस्याणुत्वं न निवर्तते।

अद्वैतमते ज्ञानमेव ब्रह्मसाक्षात्कारस्य साधनम्। किन्तु वैष्णवमते भक्तिरेव केवलं तत्साधनम्। ज्ञानकर्मणोस्तु गौणरूपेण तत्सहायकमात्रत्वम्।

वैष्णवमतेऽपि कतिपयसिद्धान्तेषु मतभेदो वैषम्यं चोपलभ्यते तथापि कतिपयतथ्येषु वैष्णवमात्रस्य, स्वसम्प्रदायसिद्धान्तरक्षापूर्वकम्, समानभावेन श्रद्धा दृश्यते।

## साम्यम्—

भगवत्तत्त्वम् सगुणं साकारं च। तत्पृष्ठभूमौ च निर्गुणनिराकारब्रह्मणः सर्वदैव स्थितिः। भगवाननन्तगुणनिकेतनः, भक्तपरवशः प्राकृतलोकेऽपि अवतरति। स च सगुणोऽपि निर्गुणः उच्यते।

स च भक्त्यैव केवलं प्राप्यः। ज्ञानकर्मणोश्च अंगत्वेनैव न प्रधानत्वेन तत्सहायकत्वम्। तत्र कर्मणामवलम्बनेन भक्तानां चित्तशुद्धिः जायते ज्ञानेन चात्मबोधः। परमात्मोपलब्धौ तु भक्तिरेवैकमात्रं साधनम्।

अद्वैतमते जीवन्मुक्तिरपि जायते, किन्तु वैष्णवमते विदेहमुक्तिरेव अभिमता। यावत् जीवः धृतशरीरस्तावत् क्षीणदुःखोऽपि स नाह्नाय क्षीणदुःखो जायते। देहसत्ता हि तत्सम्भावनां स्थापयति। विदेहमुक्तौ सत्यामेव तु जीवः भगवत्सान्निध्ये स्थितः तत्सेवां कुर्वन्नानन्दमयजीवनं यापयति।

## वैषम्यम्—

इत्थमीश्वरजीवमुक्तिकल्पनायां सत्यपि बहुशः साम्ये जीवेश्वरयोः परस्परसम्बन्धमादाय वैष्णवसम्प्रदायेषु पर्य्याप्तं पार्थक्यम्। तत्र शंकराचार्यद्वारा निर्दिष्टस्य मायावादस्य खण्डनं प्रत्येकवैष्णवाचार्येण कृतम्। वल्लभसम्प्रदायो मायासम्बन्धनिरहितशुद्धब्रह्मणः एकत्वे विश्वसिति। मध्वाचार्यश्च जीवेश्वरयोः पूर्णद्वैतभावस्य समर्थकः। रामानुजनिम्बार्कयोः सिद्धान्ते पर्याप्तं साम्यम् दृश्यते। रामानुजः चित् (जीवम्) अचित् च (जडं च) भगवतो गुणं विशेषणं वा मत्वा तदुभयविशिष्टब्रह्मणोऽद्वैततां स्वीकरोति। निम्बार्कस्तु अवस्थाभेदेन चिद् अचिच्च ईश्वराद्भिन्नमभिन्नं च मत्वा भेदाभेदम् (द्वैताद्वैतम्) समर्थयति।

रामानुजो मध्वाचार्यश्च विष्णोरुपासकाविति भगवति ऐश्वर्यभावस्य प्राधान्येनेमौ दास्यभावभक्तिमेवाभीशाते।

इत्थं सिद्धान्तोपासनोभयविधभिन्नतायां वैष्णवसम्प्रदायेष्वपि पारस्परिकवैषम्यमवश्यमुपलभ्यते। एतदेव च तेषां स्वकीयं वैशिष्ट्यम्।

# चतुर्थः अध्यायः

## ( भौतिकं जगत् )

### १ प्रकृतेरज्ञानस्य मायाया वा विवेचनम्

विश्वस्य विज्ञानभण्डारपरिपूरणार्थं भारतीयापरिमितदेयेषु सर्वश्रेष्ठं सर्वापेक्षातिगहनं च मायातत्त्वविज्ञानं वर्तते । एतज्ज्ञानमन्तरेण न केनापि जगतः तत्वमवगन्तुं शक्यते। यतो हि जगदेतत्स्वयमत्यन्त-दुरवबोधसमस्येति सर्वसम्मतम् ।

तत्र मायाशब्देन सदपेक्षया ( ब्रह्मापेक्षया ) विलक्षणं विश्वमूलोपा-दानमवबुध्यते, सम्पूर्णसृष्टिदृष्ट्या यत्तदुपादानकारणं, यच्च विश्वाधिष्ठान-सच्चित्स्वरूपब्रह्मदृष्ट्या स्वरूपतस्तत्त्वतो वा तत्र न विद्यमानम् अपि तु तस्मिन्नेव आश्रितम् , स एव सदसद्भ्यामनिर्वचनीयः पदार्थः माया कथ्यते। मायारूपेण यद्यपि न कश्चिदपि पदार्थः कस्याप्यनुभवगोचर-स्तथापि लोकमात्रप्रसिद्धाज्ञानस्यैव माया नाम । अधिष्ठाने विकारमनुत्पाद्य तत्रानेकप्रकारविचित्रसृष्टिकरणसामर्थ्येन अद्भुतसामर्थ्यदृष्ट्या अज्ञानस्यैव परिभाषा माया विद्यते । एतस्या विषये शंकरादिप्रमुखभाष्यकाराणां विभिन्ना विचाराः। निर्विशेषान्निर्लक्षणाद् ब्रह्मणः कथं सविशेषस्य सलक्षणस्य जगतः उत्पत्तिः, एकस्माद् ब्रह्मणः कथं नानात्मकजगत उद्भवः ? एवंभूतान् प्रश्नान् यथार्थमुत्तरीतुं शंकरेण मायाया आश्रयो गृहीतः ।

तत्र तन्मते 'प्रकृतिः, अज्ञानम् , माया, अविद्याचेत्यनर्थान्तरम्'—

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'[1] । अत्र मायायाः प्रकृतित्वेन एतत्तात्पर्यं यत् संसारमिममवलोकमानानां कृते रचनात्मिका सा माया एव मूलस्रोतःस्वरूपा प्रकृतिः, संसारस्य आदिकारणरूपा सा चाग्नेरपृथग्भूता दाहिका शक्तिरिव ब्रह्मणः अपृथग्भूता शक्तिः तत्साहाय्येन चाखिलैश्वर्यसम्पन्नः स परमात्मा अपि विभिन्नरूपाणि धारयति—'इन्द्रो मायाभिः पुरुरूप ईयते'[2] ।

शंकराचार्येण माया अविद्या चैतद्द्वयं समानार्थकत्वेन व्यवहृतम्—'अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया

---

१. श्वे० उ० ४।१०   २. बृ० उ० २।५।१९

मायामयी महासुप्तिः यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः'[1]। इत्थं च परमेश्वरस्य बीजशक्तिः माया, तद्रहिते तस्मिन् न कथमपि प्रवृत्तिरिति तद्रहितः स न जगद्रचयति एवं च सर्वस्य विश्वस्याधारचेतनाद्वितीयसत्तादृष्ट्या ज्ञेयं जगद् विविच्य यो ब्रह्माद्वैतवादः स एव सिद्धान्तोऽध्यस्तपदार्थदृष्ट्या मायावाद उच्यते। प्रथमे (ब्रह्माद्वैत वादे) अधिष्ठानस्य प्राधान्येन द्वितीये चाध्यस्तस्य प्राधान्येन विचार इत्युभयो दृष्टिभेदः।

'तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न [2]माया च' इत्यत्र शंकरेण माया नाम बहिरन्यथात्मानं प्रकाश्यान्यथैव कार्यं करोति सा माया मिथ्याचाररूपा' इत्थं मायाशब्देन मिथ्याचारत्वमुक्तम्।

वस्तुतस्तु माया अविद्या चैकमेव[3]। सृष्टिकारणं निर्दिशता शंकराचार्येण शब्दद्वयं प्रयुक्तम्। ब्रह्मसूत्रभूमिकायां तेनाध्यासनिमित्तमविद्यापरपर्यायं मिथ्याज्ञानमुक्तम्। कृत्स्नप्रसक्तिनामकाधिकरणभाष्ये ब्रह्मणः अनेकरूपाणि अविद्याकल्पितानि उक्तानि—'अविद्याकल्पितरूपभेदाभ्युपगमात्[4]। यत्र तत्र मायाशब्दः अपि प्रयुक्तः, 'यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते अवस्तुत्वात्, एवं परमात्मा अपि संसारमायया न संस्पृश्यते[5]।

इत्थं च शंकराचार्येण मायाऽविद्ययोरुभयोः शब्दयोरर्थाभेदेन प्रयोगः विहितः। साधारण्येनाविद्यायास्तात्पर्यं विद्याया ज्ञानस्य वा अभावः अवबुध्यते सा चैवंभूता अविद्या वैयक्तिकी अभावस्वरूपा च किन्तु वेदान्ताविद्या सार्वजनिकी भावस्वरूपा च। वस्तुतस्तु बद्धपुरुषाणां दृष्ट्या सैव माया। अविद्यायाः सम्बन्धः ज्ञात्रा (विषयिणा) सह आधिक्येन मायायाश्च ज्ञेयेन (विषयेण) आधिक्येन वर्तते। अविद्या बुद्धिधर्मः, मायायाश्च स्वयं ब्रह्मणा सम्बन्धः। सा हि ब्रह्मणः शक्तिः, किन्तु परवर्तिनो दार्शनिकाः अस्मिन् शब्दद्वये सूक्ष्मार्थभेदं समाकलयन्निति शुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना चाविद्या, इत्थं माया ईश्वरोपाधिः अविद्या च जीवोपाधिः इति भेदः—

---

१. शां० भा० (ब्र० सू० १।४।३) २. शां० भा० प्र० उ० १।१६

३. भाष्यकारेण चाविद्या मायाऽविद्यात्मिका माया शक्तिरिति तत्र निर्देशात्। टीकाकारेण चाविद्या माया अक्षरमित्युक्तत्वात् [पंचपादिकाविवरणम् पृ० ११]

४. शां० भा० (ब्र० सू० २।१।२७) ५. तत्रैव (ब्र० सू० २।१।९)

अविद्योपाधिको जीवो न मायोपाधिकः खलु ।
मायाकार्ये गुणच्छन्ना ब्रह्मविष्णुमहेश्वराः ॥

विवरणकारमतेन च माया अविद्या चेत्युभयमेकमेव किन्तु व्यवहार-भेदेन विक्षेपप्राधान्येन माया आवरणप्राधान्येन चाविद्येति संज्ञाभेदः 'तस्माल्लक्षणैक्याद् वृद्धव्यवहारे चैकत्वावगमात् एकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन माया आच्छादनप्राधान्येन चाविद्येति व्यवहारभेदः'[1] ।

इत्थं चाग्नेरपृथग्भूतदाहकशक्त्यनुरूपैव माया ब्रह्मणः अपृथग्भूता शक्तिः । त्रिगुणात्मिका च माया ज्ञानविरोधिभावरूपः[2] पदार्थः । भावरूपोक्त्या तदभावस्वरूपनिवारणे तात्पर्यम् । सा चेयं माया (अज्ञानम्) सदसाद्विलक्षणत्वेनानिर्वचनाया । ब्रह्मबोधेन तद्बाध इति न सा सत्, सत्वस्य त्रिकालाबाधितत्वात् । मायायाश्च सत्वे त्रिकाला-बाधित्वेन अनिशं सा प्रतीयेत । नापि च सा असत्, असद्वस्तुनो हि न कदापि प्रतीयमानत्वम् । अतः सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत इति मायायां बाधप्रतीत्युभयविधविरुद्धगुणसद्भावात् सा अनिर्वचनीया कथ्यते । सा चेयं माया सूर्योदये अन्धकार इव ज्ञानोदये स्थातुं न शक्नोति । अत एव नैष्कर्म्यसिद्धावुक्तम्—

सेयं भ्रान्तिनिरालम्बा सर्वन्यायविरोधिनी ।
सहते न विचारं सा तमो यद्वद्दिवाकरम्[3] ॥

मायायाः स्वरूपं प्रदर्शयता शंकराचार्येण विवेकचूडामणावुक्तम्—

अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका या ।
कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते ॥
सन्नाऽप्यसन्नाऽप्युभयात्मिका नो भिन्नाऽप्यभिन्नाऽप्युभयात्मिका नो ।
सांगाऽप्यनंगाप्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा[4] ॥

कार्यानुमेयत्वं चास्या वेदान्तसिद्धान्तमुक्तावल्यामित्थमुक्तम्—

लौकिकी वैदिकी चापि नाज्ञाने दृश्यते प्रमा ।
कार्यदृष्ट्याथ कल्प्यं चेल्लाघवादेकमेव तत्[5] ॥

अविद्या न ब्रह्मणः स्वभावः नार्थान्तरम्; नापि चात्यन्तमसती, नापि सती, एवमेव इयमविद्या माया मिथ्यावभास इत्युच्यते । स्वभाव-

---

१. पंचपादिकाविवरणम् पृ० ३२
२. अनादिभावरूपं यद्, विज्ञानेन विलीयते चित्सुखी (१।१।१२)
३. नै० सि० २।६६ ४. वि० चू० श्लो० ११०—११
५. वे० सि० मु० पृ० ८

श्चेत्कस्यचित् अन्यः तदन्यो वा परमार्थ एवेति नाविद्या। अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गम् तस्मादनिर्वचनीयेति ब्रह्मसिद्धिः।

इष्टसिद्धिस्तु 'मायायाः सकार्याया अपि वस्तुत्वावस्तुत्वाभ्यामनिर्वचनीयत्वम् प्रपंचस्य वस्तुत्वाभावात् नाद्वैतहानिः। अवस्तुत्वाभावाच्च प्रत्यक्षाद्यप्रामाण्याद्युक्तदोषाभावात् न यथोक्तब्रह्मासिद्धिः। ननु वस्तुत्वाभावे प्रपंचस्य प्रत्यक्षादेरप्रामाण्यं स्यादिति चेत् क्वेदं दृष्टम्—अवस्तुत्वाभावे अक्षजादेरप्रामाण्यमिति ? नृशृंगादाविति चेत् तन्न, अवस्तुत्वाभावात् प्रपंचस्य' इति वदति।

अनेनेदं ज्ञायते यत अप्रामाण्यकारणं विषयस्य अवस्तुत्वमेव न तु वस्तुत्वाभावः। अज्ञानम्, तत्कार्यं च न वस्तु न वा अवस्तु, किन्तूभयविलक्षणमनिर्वचनीयम्। अतोऽनिर्वचनीयत्वेऽप्यज्ञानादेरसत्त्वाभावात् न तद्विषयं प्रत्यक्षम् अनुमानादिकं वा अप्रमाणम्, वेदान्तानां ब्रह्मणि प्रामाण्येऽपि अयमेव न्यायः। वेदान्तानां विषयस्य ब्रह्मणो वा असत्त्वाभावात्। अतोऽविद्या भावाभावविलक्षणा तृतीयप्रकारा न सती, न असती, किन्त्वनिर्वचनीया। तत्त्वप्रदीपिकाद्वैतसिद्ध्यादयोऽपि भावाभावविलक्षणामविद्यामनिर्वचनीयां ज्ञाननिवर्त्यां चेमामध्यस्तस्वरूपामभिप्रयन्ति[1]।

एवंभूतायाश्चाज्ञानापर्यायाः मायायाः शक्तिद्वयी वर्तते—(१) आवरणशक्तिः (२) विक्षेपशक्तिश्च। आद्यया शक्त्या माया आत्मनो वास्तविकस्वरूपमावृणोति। द्वितीयया च जागतिकपदार्थान् सृजतीति संक्षेपशारीरके सर्वज्ञमुनिः—

> 'आच्छाद्य विक्षिपति संस्फुरदात्मरूपम्
> जीवेश्वरत्वजगदाकृतिभिर्मृषैव।
> अज्ञानमावरणविभ्रमशक्तियोगात्,
> आत्मत्वमात्रविषयाश्रयताबलेन'[2] ॥

इत्थं च अनादिभावस्वरूपत्वे सति विज्ञाननिरास्यं वा जगदुपादानत्वे सति सदसद्भ्याम्, सत्वेन असत्वेन, सदसदुभयत्वेन, ब्रह्मणो भिन्नत्वेन, ब्रह्मणो भिन्नत्वेनाभिन्नत्वेन भिन्नाभिन्नोभयत्वेन सावयवत्वेन निरवयवत्वेन सावयवनिरवयवोभयत्वेन चेति नवधाऽप्यनिर्वाच्यं वा विस्पष्टं भासमानत्वे सत्यनाद्यनिर्वाच्यं साक्षाज्ज्ञाननिरास्यं वा अज्ञानम् इदमेव जगतो मूलकारणं सत्त्वरजस्तमोगुणानां साम्यावस्थारूप-

---

१. शतभूषणी; वर्गाः–४०-४२ २. सं० शा० भाष्यम् १।२०

त्वाच्च मूलप्रकृतिः। प्रलयावस्था, अव्याकृतम् , अव्यक्तम्, ज्ञानेन विना न क्षरतीति अक्षरम्, अविद्या, तमः इति च व्यवह्रियते, तदेवाज्ञानं वनवदेकबुद्धिविषयत्वात्समष्टिः। प्रत्येकवृक्षवदनेकबुद्धिविषयत्वाच्च व्यष्टिरिति व्यवह्रियते। तत्र समष्ट्यज्ञानमीश्वरोपाधिविशुद्धसत्त्वप्रधानत्वात् माया अखिलकारणत्वात् समष्टिकारणशरीरम्। आनन्दप्रचुरत्वात्कोशवदखण्डात्मनः आच्छादकत्वाच्चानन्दमयः कोशः सर्वोपरमत्वात् सुषुप्तिरिति चोच्यते। व्यष्ट्यज्ञानं जीवोपाधिर्मलिनसत्त्वप्रधानत्वात् अविद्या, अहंकारादिकारणत्वात् व्यष्टिकारणशरीरम्, आनन्दप्रचुरत्वात् कोशवत्प्रत्यक्चेतनस्य आच्छादकत्वाच्चानन्दमयः कोशः सर्वनिजसृष्टिव्यष्टिप्रपञ्चोपरमत्वात् सुषुप्तिश्चोच्यते।

तच्च कार्यजननानुकूलं कारणनिष्ठं सामर्थ्यमावरणशक्तिः, स्वाश्रयात्माद्यावरणानुकूलमज्ञाननिष्ठं सामर्थ्यम्। आकाशादिविविधकार्यजननानुकूलमज्ञानसामर्थ्यं विक्षेपशक्तिरिति शक्तिद्वयम्। उक्तं चैतत्सर्वमित्थं वेदान्तसिद्धान्तादर्शे—

अध्यारोपस्त्वतस्मिन् स्यात् कल्पनं तस्य वस्तुनः।
शुक्तिकाशकले यद्वद्रूप्यादीनां प्रकल्पनम्॥
अध्यारोपस्य तस्यास्य चाज्ञानं हेतुरीरितम्।
समष्टिव्यष्टिभेदेन तद् द्विधा परिभाष्यते॥
विक्षेपावरणाख्ये द्वे शक्ती स्तः तस्य चैव हि।
आवृणोत्यन्ययाऽऽत्मानं वैविध्यं यात्यथाऽऽद्यया॥
द्विधाप्यावरणं प्रोक्तमभानावरणं तथा।
असदावरणं हेतुरसत्वाभानयोर्द्वयोः[1]।

इयं हि माया ईश्वराश्रिता, आवरणविक्षेपशक्तिद्वयवती आवरणांशेनाविद्या, विक्षेपांशेन च मायेति गीयते, इत्थमेकस्या एव मायायाः शक्तिभेदमात्रेण मायाऽविद्याविभागः इति केचित्।

श्रौत-यौक्तिक-लौकिकैश्चैषा अज्ञानापरपर्याया माया तुच्छानिर्वचनीया वास्तवी चेति भेदेन त्रिधा स्वीकृता। तथा हि—

तुच्छाऽनिर्वचनीया च वास्तवी चेति भेदतः।
माया ज्ञेया त्रिधा बोधैः श्रौतयौक्तिकलौकिकैः[2]।

अपरे तु आवरणशक्तिमती माया स्वतन्त्रा, विक्षेपशक्तिमती तु माया

---

१. वे० सिद्धान्तादर्शः पृ० ३–४ श्लो० ११–१४

२. तत्रैव पृ० १७ श्लो० ६०

अपरेति मायाऽविद्याविभागमाश्रयन्ति। तत्र श्रीभाष्यमते प्रथमः पक्षो न स्वीक्रियते, उत्तरस्तु पक्षः स्वीक्रियते-तत्र च जीवाश्रिता कर्मरूपा अविद्या, ईश्वराश्रिता च माया।

दृग्दृश्यविवेके च अयमेव भाव इत्थमभिव्यक्तः—

शक्तिद्वयं हि मायाया: विक्षेपावृतिरूपकम्।
विक्षेपशक्तिर्लिंगादि ब्रह्माण्डान्तं जगत्सृजेत्।
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः।
आवृणोत्यपरा शक्तिः सा संसारस्य [1]कारणम्॥

इदमत्राकूतम्—मायाया आवरणविक्षेपरूपा शक्तिद्वयी। एतत्साहाय्येनैव वस्तुभूतब्रह्मणो वास्तविकरूपमावृत्य तत्रावस्तुरूपा जागतिकप्रतीतिरुत्पाद्यते। लौकिकभ्रान्तिष्वपि सर्वः अपि जनः एतच्छक्तिसत्तामनुभवति अधिष्ठानस्य सत्यस्वरूपमावृत्य तत्र न यावन्नवीनपदार्थः संस्थाप्यते तावद् भ्रान्तिसमुत्पत्तिरसंभवा। भ्रमोत्पादकैन्द्रजालिकलीलात्र प्रत्यक्षं प्रमाणम्। तदनुरूपमेव भ्रान्तिस्वरूपायां मायायामेतच्छक्तिद्वयोपलब्धिः। आवरणशक्तिर्ब्रह्मणः शुद्धस्वरूपमावृणोतीव विक्षेपशक्तिश्च तस्मिन् ब्रह्मणि आकाशादिप्रपंचमुद्भावयति, यथा स्वल्पोऽपि मेघो दर्शकदृष्टिमावृत्यानेकयोजनविस्तृतमादित्यमण्डलमाच्छादितमिव करोति तथैव परिच्छिन्नमप्यज्ञानमनुभावकबुद्धिमाच्छाद्य असंसारिणमात्मानमाच्छन्नमिव करोति, एतच्छक्तिरेव आवरणशक्तिरुच्यते सैव च अन्तःशरीरम्। द्रष्टुर्दृश्ययोः, बहिःशरीरं च सृष्टिब्रह्मणोर्भेदमावृणोतीति रज्जोरज्ञानमज्ञानावृतरज्जौ स्वशक्त्या यथासर्पादिकमुद्भावयति तथैवाज्ञान (माया) मपि अज्ञानाच्छादितात्मनि एतच्छक्त्या आकाशादिजगत्प्रपंचमुद्भावयति। एषा शक्तिर्विक्षेपशक्तिरुच्यते। वेदान्तसारे सदानन्देनाप्ययमेव भावः 'अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम्........ इत्यादिना आरभ्य 'विक्षेपशक्तिर्लिंगादि ब्रह्माण्डान्तं जगत् सृजेत्,' इत्यन्तेन स्पष्टीकृतः।

श्रीभाष्ये रामानुजेनापि कर्मरूपाया अविद्यायाः भावरूपायाः, भावरूपायाश्च प्रकृतेः क्रमेणावरणशक्तिर्विक्षेपशक्तिश्च स्वीकृते।

अद्वैतवादिनो यद्यपि अभेदज्ञानमेव सत्यतां स्वीकुर्वन्ति तथापि अविद्यायाः सत्तामपि मन्यन्ते। अत्र रामानुजस्य अयं प्रश्नः यत् अविद्या (माया अज्ञानं वर्तते ? सा ब्रह्माश्रिता वर्तते जीवाश्रिता वा ? तत्र

---

१. दृग्दृश्यविवेकः (श्लो० १३, १५)

अविद्या जीवाश्रितेति वक्तुं न शक्यते यतो हि जीवात्मानः स्वयमविद्या जन्याः इति ते स्वयं न सत्याः। अविद्या ब्रह्माश्रिता इत्यपि वक्तुं न शक्यते यतो हि अभेदज्ञानमेव ब्रह्म तच्च सर्वाभ्यः अविद्याभ्यः पूर्णतया भिन्नम्। किंच, ब्रह्मणः अविद्यायाः आधारत्वे स्वीकृते तन्मुक्तेः सर्वे-प्रयासानां वैयर्थ्योपपत्तिरित्यद्वैतसिद्धान्तलक्ष्यमेव समाप्तिमियात् इत्थं न केवलमविद्यैव अपि तु तद्विनाशिनी विद्या अपि तथैव दुर्बोधा आलोचन-विषया च, यतो हि यद्येतद् ज्ञानमेव विद्या यत् विशुद्धं ज्ञानमेव ब्रह्म अर्थात् ब्रह्म, ज्ञानस्वरूपं, तदा ब्रह्मस्वरूपज्ञाने ( विद्यायाम् ) तच्च ब्रह्म 'एवं प्रकारम्' अस्मिन् ज्ञाने च भेदः स्वीकर्तव्यो भवेत्। अयं च एता-वाननन्तविवादास्पदविषयो यश्च रामानुजेन जिज्ञासाधिकरणे सविस्तरं विवेचितः, किन्तु तथेह तन्निरूपणं सर्वथा अप्रासंगिकं स्यात्।

अद्वैतविषयकरामानुजालोचनायाः अयं संक्षेपः यत् सर्वं ज्ञानम् , द्वैत-रहितैकत्वं निदिशदपि, यथा चाद्वैतवादिनः आमनन्ति, एतत्प्रकटयति यत् ज्ञानविषयकप्रत्येकप्रक्रियायाम् अनुभवकर्ता विषयात् पृथक् आत्मान-मवश्यं बोधयति। एतेनैतत्सिद्धं यत् ज्ञानविषययोर्भेदः अन्तर्निहितस्ति-ष्ठति। यानि वाक्यानि जीवब्रह्मणोरेकत्वप्रतिपादकानि तानि भेदरहितै-कत्वबोधकान्यपि भेदमेव सूचयन्ति। अद्वैतमते ब्रह्मजीवयोरेकत्वप्रति-पादकं प्रसिद्धं वाक्यं 'तत्त्वमसि' एतदपि रामानुजमते तद्भिन्नतासूचकमेकं प्रबलं प्रमाणम्। तत्त्वमित्यनयो हि नितरामेकत्वे तद्विशेषणविशेष्य-ताबोधकनिर्णयः पुनरुक्तिमात्रत्वेन निरर्थक एव स्यात्। एतदुक्तुं सम्भवति यदेतेन केवलमेतत्प्रमाणितं भवति यत्सत्यतायाः केवलं ज्ञानं न पर्याप्तम् प्रत्युत तस्य साक्षात्कारः केनाप्याध्यात्मिकेनानुभवेनैव भवति किन्तु रामानुजस्य स्पष्टो विरोधः अद्वैतवादिनः सत्यतायाः विचारेषु धार्मिकानुभवे वर्तते। अयं ह्येतस्य साक्षी यत्परमात्मजीवात्मनोर्भेदः। तथापि रामानुजमते ब्रह्मजीवयोर्भेदो न शाश्वतः प्रत्युत अनया रीत्या ब्रह्मसम्बद्धविभिन्नतां स्वीकुर्वतः अपि तस्य तत्र मौलिकैकताप्रदर्शने एव तात्पर्यम्।

अयं च मायावादो श्रीमच्छंकराचार्येण न अपूर्व एव स्वकपोल-कल्पनयोद्भावितः, अपितु सूत्रकारात्प्रागप्ययमासीदिति मायावादमसह-मानेन रामानुजाचार्येणापि स्वकीये श्रीभाष्ये स्वीकृतम्। तथाहि— 'सर्वत्र प्रसिद्धोपदेशात्' (१।२।१) इति सिद्धान्तसूत्रं प्रणयता सूत्रकारेणेत्थं मनस्यनुसंहितः पूर्वपक्षः प्रदर्शितः 'अयं जीवात्मा स्वतो-

ऽपरिच्छिन्नरूपत्वेन ब्रह्मभूतः सन्ननाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मना'वतिष्ठते इति'[1]। तथा तत्रैव श्रीभाष्ये 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (१।३।४२) इत्येतत्सूत्रनिरसनीयत्वेन सूत्रकृदभिमता आशंका प्रदर्शिता—'प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति, ऐक्योपदेशात्। द्वैतप्रतिषेधाच्च। शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परब्रह्म परमेश्वर इति व्यपदिश्यते'[2]। पंचमाध्यायपंचदशश्लोके गीताप्येतदेव प्रतिपादयति—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।' अतः सूत्रकारात्प्रागपि मायावाद आसीदिति सिद्धम्।

अयं च मायावादो ब्रह्मसूत्रकारस्याप्यभिमतः—सूत्रकारेण हि स्वकीये सिद्धान्तदर्शने[3] 'मायामायिनौ' (ब्र० सू० सि० द० १।१।२) इति सूत्रे मायावादः स्पष्टतया अभिहितः।

इत्थं चात्रायमत्र संक्षेप:—शंकरमते अज्ञानं भावरूपं ब्रह्माश्रयविषयम् अनिर्वचनीयम्, सर्वजगत्परिणामिकारणम्, दुःखमयप्रपंचप्रत्यनीकानंदावरणद्वारा दोषविधया ब्रह्मविवर्तोपादानतानियामकं च। प्रकृतिः माया अविद्येति पर्यायपदानि। तत्र प्रकृतेः मायाया वा शक्तिद्वयम्—आवरणशक्तिः विक्षेपशक्तिश्चेति। तत्र विक्षेपशक्त्या परिणमते, आवरणशक्त्या दुःखमयप्रपंचविरुद्धस्य कल्पितानन्दांशमावृणोति। ततश्च माया स्वयं परिणामिकारणम्। मायोपहितं, मायावृतं वा ब्रह्म विवर्तोपादानं स्वयं कर्तृत्वात् निमित्तकारणमपि। तत्र माया ब्रह्मण आवरणद्वारा विवर्तोपादानताहेतुत्वात् दोषविधया निमित्तकारणमपि। तथा च ब्रह्म, माया चोभयमपि अभिन्ननिमित्तोपादानकरणमिति विवरणप्रस्थानम्, भामतीप्रस्थाने तु माया निमित्तकारणमेव न तूपादानकारणम्।

रामानुजमते तु भावरूपमज्ञानम्। तच्च त्रिविधम् (१) स्वरूपाज्ञानम् (२) अन्यथाज्ञानम् (३) विपरीतज्ञानं च। तत्र वस्तुनः अप्रतिपत्तिः स्वरूपाज्ञानम्। वस्तुनो वस्त्वन्तरतया भानम् अन्यथा ज्ञानम्। यथावद्वस्तुनि भासमाने युक्तिभिस्तस्यान्यथोपपादनम् विपरीतज्ञानम्। यथा ज्ञातृतया भासमाने आत्मनि अहमिति प्रतीते-

---

१. रा० भा० पृ० १४८ २. तत्रैव पृ० १९२

३. साङ्ख्यवेदान्तोभयप्रामाण्योपस्थापकः अयं नवीनो ग्रन्थः काश्यां मुद्रितो बादरायणकृतः कैश्चिन्मन्यते किन्तु वेदान्तसूत्रकारः साङ्ख्यस्य विरोधीति तद्ग्रन्थस्य बादरायणकृतित्वे प्रमाणाभावः।

भ्रान्तित्वोपपादनम्। एतदेवाज्ञान (माया) त्रैविध्यं 'तुच्छानिर्वचनीया च—'इत्यादिना वेदान्तसिद्धान्तादर्शेऽपि प्रतिपादितम्।

माया प्रकृतिरविद्याचेति न पर्यायपदानि। तत्र मायाया विक्षेपशक्तिरेकैव नावरणशक्तिरपि। तथा माया साक्षादुपादानकारणमेव न तु निमित्तकारणमपि। ब्रह्म तु मायाया अपृथक्सिद्धत्वादुपचारादुपादानकारणम्, स्वयं तु साक्षान्निमित्तकारणमेव। मायाप्रकृत्योः सम्बन्धः शरीरशरीरिभावः अपृथक्सिद्धत्वं वा। मायाद्वारकोपादानत्वेन स्वयं निमित्तकारणत्वेन च ब्रह्ममात्रमभिन्ननिमित्तोपादानम्। माया उपादानकारणमेव न तु निमित्तकारणम्।

रामानुजमते—प्रकृतिस्तु सत्त्वरजस्तमोरूपगुणत्रयवती नित्या, प्रकृतिमहदहंकारमनःपंचज्ञानेन्द्रियपंचकर्मेन्द्रियपंचतन्मात्रपंचभूतमिलितचतुर्विंशतितत्त्वात्मिका। इयमेव विचित्रसृष्टिकरत्वान्मायाशब्देन व्यपदिश्यते, तथा ज्ञानविरोधित्वात् अविद्याशब्देन नित्यत्वात् चाक्षरशब्देन व्यपदिश्यते। इयमेव सर्वजगतो मूलप्रकृतिः।

निम्बार्कमते—च माया प्रधानं तमः अव्यक्तादिविविधाभिधं समुद्भूतं तस्याचित्तत्त्वस्य प्राकृतं रूपं यत् 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिश्रुतिषु प्रतिपादितं वर्तते। अनाद्यनन्तं सूक्ष्मं तत्सदसत्स्वरूपम्। प्रकृतेः समुद्भूतं सर्वं सत्त्वरजस्तमोगुणत्रयस्वरूपम्। एतेषु सत्त्वं ज्ञानस्य कारणं, रजो लोभस्य, तमश्च मोहप्रमादयोरज्ञानस्य चेति गीतायामुक्तम्—

> सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च।
> प्रमोदमोहौ तमसो भवतोऽज्ञानमेव च ॥[1]

सत्त्वं चैतद्रजस्तमसी अभिभूयोद्भूतं शमदमाभ्यासेन मुक्तौ सहायकं संजायते—यथा चोक्तं गीतायाम्—

> शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
> ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्[2] ॥'

इत्थं च सत्त्वं ज्ञानस्य, रजश्च लोभस्य तमश्च प्रमोदमोहयोः अज्ञानस्य च कारणम् इति स्वस्य अन्यस्य चान्तर्दर्शनं भवति।

एतेषां त्रयाणां सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रधानं वोच्यते, परमात्मन एषा शक्तिः, परिणामिनी च। अतः एषा तस्मात्परमात्मनो भिन्ना किन्तु क्रियादिवत्सा तदाश्रितापि न तस्मात्पृथग्[3] वर्तते। एते-

---

१. गीता १४।१७ २. गीता १८।४२ ३. वे० कौ० १।२।२१

नैव सा सांख्यप्रकृत्यपेक्षया भिन्ना। सांख्यप्रकृतिर्जडेति चैतन्याद्सम्बद्धा स्वयं किमपि लक्ष्यं साधयितुमसमर्था। यद्यपि निम्बार्कप्रकृतिरपि जडा, तथापि सा चिदाश्रितेति उपयुक्तप्रयोजनसाधनसमर्था[1]। 'देवात्मशक्तिं स्वगुणैर्निगूढाम्'[2] एषा श्रुतिरप्येतदेव प्रतिपादयति।

परमात्मवदेवैषा अव्यक्ता सूक्ष्मा अनाद्यनन्ता च वर्तते। एषैव जीवस्य बन्धमोक्षयोः कारणम्[3]। अजा, प्रलयसमये ब्रह्मणि कारणात्मना शक्तिरूपेण वर्तमाना नामरूपयोश्च विभाजयितुमशक्या। सृष्टिसमये यदा सत्त्वरजस्तमोधर्मान् नामरूपेषु पृथक् करोति स्वं च तेजोऽन्नेषु परिणमयति तदानीं सा ब्रह्मोत्पन्ना कथ्यते।

मध्वाचार्यः—एतत्प्रतिपादयति यत् अद्वैतमतावलम्बिनामेतन्मतं यद् ब्रह्मैव सत्यम्। तदतिरिक्तं च सर्वं जगन्मिथ्या। जीवोऽपि ब्रह्मैव, नान्यः। एतद्ब्रह्म अविद्यया युक्तम्। एषा अविद्या च अनिर्वचनीया–न सत् न असत् नापि च सदसदुभयम्। जीवः, यो वस्तुगत्या ब्रह्मण एवांशः, उपाधिना स्वं ब्रह्मणः पृथगवगच्छति। एष चोपाधिः अविद्यया उत्पद्यते। एतेनैवाभिभूतं सच्चिदानन्दस्वरूपं ब्रह्म असदचिद्दुःखस्वरूपं चावलोक्यते। इत्थमद्वैतवादिनामेष सिद्धान्तः यद् ब्रह्मजीवौ वस्तुगत्या एकौ किन्तु अविद्याकारणेन पृथक् प्रतिभासेते।

श्रीमध्वाचार्येण स्वकीयाभिः प्रबलयुक्तिभिः शंकरस्यैव सिद्धान्तं खण्डयित्वा ब्रह्मजीवयोर्वास्तविको भेदः प्रमाणीकृतः। तस्यैतत्कथनं यत् अद्वैतवादिनां ब्रह्म, यच्च सच्चिद्युक्तं, तदविद्यया कथं प्रभावितं भवितुं शक्नोति। यथा चान्धकारप्रकाशयोरेकत्र स्थितिः न सम्भवति तथैव सच्चिदानन्दस्वरूपब्रह्मणः अविद्यया प्रभावितत्वमसंगतम्। अतः अविद्याया कारणेन जगति भेदोत्पत्तिकथनं नितान्तं भ्रमपूर्णम्।

श्रीमध्वः प्रतिपादयति यद् यद्येषा अविद्या सत्या तदा अद्वैतसिद्धान्तः सर्वथा खण्डितो भवति यदि चासत्या तदा न तस्याः कश्चिदपि प्रभावः इति। एतेन स्पष्टमेतद् यत् अद्वैतवादिनां मायावादसिद्धान्तः असमीचीनः तद्द्वारा ब्रह्मजीवयोरभेदस्थापना च सर्वथा तर्करहिता। इत्थं शंकरस्वीकृतमायावादे मायायाः परमेश्वरस्य अविभाज्यशक्तिस्वीकारे ज्ञानोदये च तद्विनाशस्वीकारे अग्नेरविभाज्यशक्तेर्दाहकताया विना अग्नेर्विनाश इव ज्ञानोदये मायाविनाशे ब्रह्मणोऽपि विनाशापत्तिरिति न कथमपि मायावादः स्वीकार्यः।

---

१. तत्रैव १।४।३ २. श्वे० उ० ४ ३. वे० कौ० १।४।१०

वल्लभाचार्यस्य अविद्याविषये एष सिद्धान्तः—

अविद्यायाः पंच रूपाणि—जीवात्मा वस्तुतो ब्रह्मणः अंशः किन्तु अविद्यावशात् स आत्मानमन्यथैवाकलयति—स्वकीयस्थितिं वैयक्तिकतां च ततः पृथगवगच्छन् स्वकीयेच्छापरिश्रमसाफल्यादिकं च पृथगवबुध्यते। अविद्या जीवात्मनो दृष्टिमावृणोति; येन स दृश्यपदार्थस्य वास्तविकं रूपं न द्रष्टुं पारयति, किं बहुना, स आत्मनः अपि वास्तविकं रूपं न परिचेतुं शक्नोति इति स एव विषये, स्वकार्यविषये स्वकीयपार्श्ववर्तिवस्तुविषये च विभिन्नकाल्पनिकधारणाः व्यवसाययति। अत्र सर्वत्र संश्लेषणात्मकभ्रमे अविद्यापञ्चकं कारणमिति वल्लभमतम्। तच्च—

स्वरूपाज्ञानमेकं हि पर्व देहेन्द्रियासवः।
अन्तःकरणमेषां हि चतुर्धाऽध्यास उच्यते॥
पञ्चपर्वा त्वविद्येयं यद्बद्धो याति संसृतिम्[1]॥

एतेषु चतुर्द्धा अध्यासः, पञ्चमे च स्वरूपविस्मरणम्। तत्र अतस्मिंस्तद्बुद्धिरध्यासः, आरोप इति यावत्। यथा चोक्तमभियुक्तैः—

यदन्यदन्यत्र विभाव्यते भ्रमादध्यासमित्याहुरमुं विपश्चितः।
असर्पभूतेऽहिविभावनं यथा रज्ज्वादिके तद्वदपीश्वरे जगत्॥

अत्र वस्त्वन्तरं मुख्यवस्तुनः गुणानावृणोति येन तत्तेनावृतमिव प्रतीयते। इत्थं चैको भ्रमात्मकोऽनुभवः अध्यासः। स च निम्नांकितप्रकारेण चतुर्धा—

(१) देहाध्यासः (२) इन्द्रियाध्यासः (३) प्राणाध्यासः (४) अन्तःकरणाध्यासश्च। अविद्यायाः पंचमं स्वरूपं स्वरूपविस्मरणमस्ति, येन जीवात्मा निजवास्तविकस्वरूपं परिपूर्णतया विस्मरति इति स परब्रह्मणः एव अंश इति नावबुध्यते।

प्रथमेषु चतुर्ष्वध्यासेषु (१) देहाध्यासे जीवात्मा आत्मानं भौतिकशरीरमाकलयति, भ्रमवशात् अहं स्थूलः, अहं कृशः, अहं सुन्दरः, अहं कुरूपः बुभुक्षितः, सन्तुष्ट इत्यादि [2]चानुभवति। शरीरेण सह एतन्मिथ्यातादात्म्यवशात् स शरीरस्य जन्म-जरा-मरणादिकं स्वस्यैव जन्मजरामरणादिकमाम्नाति[3]।

(२) इन्द्रियाध्यासे च जीवात्मा इन्द्रियाणां सत्यत्वं तेषां वैयक्तिकशक्तित्वं चाकलयति।

---

१. त० दी० नि० १।३२, ३३ २–३. आवरणभंगः १।३१

( ३ ) प्राणाध्यासे च जीवात्मा आत्मानं ( स्वम् ) एवमाकलयति यत् सः परमात्मनो भिन्नः, तस्य च स्वतन्त्रसत्ता वर्तते।

( ४ ) अन्तःकरणाध्यासे च जीवात्मनः वास्तविकं स्वरूपमहंकारेणाम्रियते इति तस्येत्थं भ्रमः संजायते यत् अहं सत्यः स्वतंत्रश्च कर्ता अस्मि, स प्रत्येकं वस्तु 'अहम्, मम' एवं रूपेणात्मसम्बद्धं पश्यति।

अविद्यायाः प्रभावः—पूर्वोक्तचतुर्विधाविद्यावशात् जीवो वास्तविकतां नानुभवतीति प्रत्येकं वस्तु स अन्यथैवाकलयति। स 'सर्वं खल्विदं ब्रह्म' इति नानुभवति। इत्थं स आत्मन एकं पृथगेव जगद्रचयित्वा तस्मिन्नेव मनोरथेन संचरते, कार्यं करोति, सुखदुःखं चानुभवति। एषा च तस्य सर्वथा मानसिकसृष्टिः या तदविद्यापरिणामः[1] एतया मानसिकजगत्कल्पनया जीवात्मा सांसारिकबन्धनं प्राप्नोति, स्वकीयान् वास्तविकगुणानन्दान् विस्मरति, जन्ममरणादिसांसारिकजालावनद्धो विभिन्नदुःखानि चानुभवति। इमे अध्यासाः तावद्भिः कोषैः समानाः ये आत्मचैतन्यानन्दमाच्छाद्य जीवात्मानं सांसारिकजालेन बध्नन्ति।

विद्यया अविद्यापसारणम्—वास्तविकविद्यया अविद्याश्रृङ्खलासु भग्नासु जीवात्मा सांसारिकबन्धनेभ्यो मुक्तः संजायते 'विद्यया अविद्यानाशे तु जीवो मुक्तो भविष्यति'। विद्याया अपि निम्नलिखितानि पञ्च अंगानि—

> वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे।
> पंचपर्वेतिविद्येयं यया विद्वान् हरिं विशेत्[2]॥

तत्र (१) वैराग्यं विषयवैतृष्ण्यम्, (२) सांख्यं च नित्यानित्यवस्तुविवेकपूर्वकः परित्यागः, (३) योगश्च, अष्टांगयोगेन ( तत्प्रक्रियया ) देहमनोवशीकरणम्, (४) तपश्च परमात्मगुणानामेकान्तानुचिन्तनम्। (५) भक्तिश्च निरन्तरभावनया परमात्मनि परमं प्रेम[3]।

उन्नतिमार्गप्रगतावुक्तपंचविधा विद्या सहायिका, प्रथमस्थितौ जीवात्मने सांसारिकेन्द्रियानन्दनिःसारता अवभासते इति ततस्तस्य सर्वथा आकर्षणाभावे विवेकावस्थायां तस्य नित्यानित्यवस्तुविवेकपूर्वकं हेयोपादेयपरिज्ञानं संजायते यच्च तस्य तृतीयस्थितौ तदीयदेहमनोवशीकरणे सहायकं भवति। अस्यां स्थितौ जीवात्मनः परमात्मनि भक्तिः परमं प्रेम चोत्पद्यते तदैव च तस्य ज्ञानं शुद्धिश्च परिपूर्णतामेति एवं स परमात्मन्येकीभूतः सत्यस्थानमवाप्नोति।

---

१. त० दी० नि० २।३३ २. तत्रैव १।४५

३. तत्त्वदीपनिबन्धे प्रकाशटीका १।४५

**विद्याविद्ययोरुभयोः परमात्मनः शक्तित्वम्**—एतदिहावधारणीयं यत् विद्या अविद्या चैतद्द्वयम् अपि परमात्मनो मायया रचितं तत्परमात्मन एव शक्तिद्वयम्। एषा शक्तिद्वयी ईश्वरेच्छानुसारमेव कार्यं करोति। तदिच्छानुसारमेव तयोराविर्भावतिरोभावौ "भगवदिच्छयैव तयोराविर्भावतिरोभावः[1]।" अविद्या मनुष्यं संसारचक्रे पातयति विद्या च तं तस्मान् निर्गमयति। इत्थमेतत्संसारनाटकमनादिकालतः अभिनीयते।

अत्र शक्तित्रयं कार्यं करोति (१) अविद्या (२) प्रकृतिः (३) माया[2] च। तत्र अविद्या जीवेषु कार्यं कुर्वती संसारं सृजति। प्रकृतिः अक्षरब्रह्मणो नियंतृत्वे स्थिता जगद् रचयति। माया च साक्षाद्भगवतः कृष्णस्य नियन्त्रणे तद्दिव्यलीलाभ्यः, प्रत्येकवस्तुनिरीक्षणार्थं निर्देशार्थं च कार्यं करोति; एतेनैव आद्यद्वयी मायाभिव्यक्ति वक्तुं शक्यते[3]।

**मायाऽविद्ययोरन्तरम्**—शंकरेण मायाऽविद्ययोर्न किमप्यन्तरं स्वीकृतम्। वल्लभेन तु स्वीकृतमिति पूर्वोक्तविवेचनेनावगम्यते। रामानुजादिमते च माया-शब्दः एकं व्यापकमर्थं द्योतयति स चाविद्यामन्तर्निधत्ते।

**शंकरवल्लभयोर्विद्याविद्याविषयकतुलना**—अविद्याविषये शंकरवल्लभयोरतिशयेन साम्यं वर्तते। वल्लभस्य देहाध्यासः शंकरस्यान्नमयकोशेन समतामेति[4]। इन्द्रियाध्यासप्राणाध्यासौ च प्राणमयकोशेन समतामुपेतः[5]। अन्तःकरणाध्यासः मनोमयकोशेन,[6] स्वरूपज्ञानं च विज्ञानमयकोशेन साम्यमुपैति[7]।

किं च, वल्लभेन प्रयुक्तः अध्यासशब्दोऽपि महत्त्वपूर्णः, भ्रमादन्यत्रान्यावभास अध्यास इति तत्तात्पर्यम्। अध्यासस्यायमेव सिद्धान्तः शंकरसिद्धान्तस्य केन्द्रबिन्दुः। वल्लभेन अयमेव सिद्धान्तः आंशिकरूपेण परिगृहीतः, तदाधारेण च जीवो ब्रह्मणोंऽशः प्रतिपादितः, जीवस्य तथात्वास्वीकृतिरेव अविद्या।

वल्लभद्वारा निर्दिष्टं विद्यांगपंचकं शंकरस्य साधनचतुष्टयेन समतामेति। विद्यायाः द्वितीयं वैशिष्ट्यं सांख्यम् शंकरस्य नित्यानित्यवस्तु-

---

१. त० दी० नि० १।३१ ( प्रकाशटीका )

२. तत्रैव २।१२२ ( प्रकाशटीका )

३. एम्० एन० सिरकार 'कम्पेरेटिव स्टडीज आफ वेदान्त' पृ. ८७

४. वि० चू० १५६ ( गीताप्रेस सं० )

५. तत्रैव १६७ ६. तत्रैव १५७ ७. तत्रैव १८६

विवेकेन पूर्णतः साम्यमुपैति। प्रथमं चांगं वैराग्यं, शंकरस्य इहामुत्रफलभोगविरागेण तुलनामायाति[1]। तृतीयं चतुर्थं चांगं योगः तपश्च शंकरस्य समाधिना [2]समानम्, किन्तु वल्लभः सगुणपरमात्मनः गुणेषु विशेषेण सावहितचेता न च शंकरस्तथेत्येतावान् विशेषः। महत्तममन्तरं तूभयोरन्तिमदशायां वर्तते—वल्लभः परमात्मनः प्रेम्ण्येव सर्वथा सर्वस्वमर्पयितुमादिशति, शंकरस्तु निर्गुणनिराकारस्थितिमेव मोक्षं [3]निर्दिशति।

## मायाविषयिणी रामानुजीया विशेषालोचना—

वल्लभात्पूर्ववर्तिनो वैष्णवाचार्याः अस्य मायावादस्य तीव्रामालोचनां कृतवन्तः। तत्र रामानुजस्य श्रीभाष्ये मायाविरोधिनो निम्नाङ्किताः सप्त आक्षेपाः—

(१) मायायाः अज्ञानस्य कोत्पत्तिः? जीवे ब्रह्मणि वा? माया जीवाश्रिता ब्रह्माश्रिता वेति सन्देहः। तत्र रामानुजस्यैतत्कथनं यत् जीवो न कथमपि मायायाः आधारो वक्तुं शक्यते, तस्य स्वयं मायाजन्यत्वात्। ब्रह्म अपि मायाधारो न भवितुं शक्नोति, तद्धि स्वयं ज्ञानस्वरूपमिति अज्ञानस्य (अविद्यायाः) न कथमपि तदाश्रयत्वम्। अयमाक्षेपः आश्रयानुपपत्तिः उच्यते।

(२) मायावादिनः कथयन्ति यत् अविद्या ब्रह्मस्वरूपं तिरोधत्ते एतच्च सर्वथा तर्कासङ्गतम् ब्रह्मस्वरूपं हि प्रकाशात्मकं ज्ञानमात्रम् इति प्रकाशतिरोधानस्य कोऽर्थः? प्रकाशोत्पत्तेः अवरोधः विद्यमानप्रकाशस्य विनाशनं वा? मायावादिनां मते ज्ञानस्य-यद्धि ब्रह्मणः स्वरूपम्—न कदाप्युत्पत्तिविनाशौ; तद्धि सर्वदैकरसं निर्विकारञ्च। यदि तिरोधानम् प्रकाशनाशाभिप्रायकं तदा तु स्पष्टमेतद् यत् अविद्या ब्रह्मस्वरूपं ज्ञानं विनाशयतीत्यप्यविचारसहम्। इत्थं मायावादे तिरोधानानुपपत्तिरूपोऽयं द्वितीयो दोषः।

(३) जगन्मात्रस्य वस्तुजातं भावरूपे अभावरूपे चेत्थं भागद्वय एव विभक्तमिति माया किं भावरूपा अभावरूपा वेति? भावरूपाणि च वस्तूनि पारमार्थिकसत्तानि मायावादिनो हि मायां पारमार्थिकसत्तात्मिकां न स्वीकुर्वन्ति। तेषां मते हि एकमात्रं ब्रह्मैव शुद्धं निर्गुणं सत्यं तदतिरिक्तं

---

१-२. वि० चू० पृ० १९ ३. तत्रैव पृ० ४६८

च सर्वमसत्यं मिथ्यात्मकम् यदि च अविद्या न ब्रह्म अतिरिणक्ति तदा अविद्याया भ्रमोत्पादकदोषः ब्रह्मण्यप्यापतेत् इति तद्दोषस्यापि ब्रह्मस्वरूपतया, ब्रह्मणश्च नित्यत्वेन तद्दोषजनितप्रपञ्चभ्रमस्यापि नित्यत्वेन जीवस्य मोक्षासम्भव इति स्वरूपानुपपत्तिरूपस्तृतीयो दोषः ।

( ४ ) माया अनिर्वचनीया उक्ता—न सा सत् नापि चासत्; नैतदनुभवगम्यम् । प्रत्येकस्य वस्तुनः एकैव स्थितिः सम्भवति सत्यमेव तत्स्यात् मिथ्यैव वा तद्भवेत्, तदतिरिक्तश्च न कोऽपि पदार्थः कल्पितुमपि शक्यते । अतः मायायामनिर्वचनीयानुपपत्तिः ।

( ५ ) 'अहमज्ञः' एषोऽनुभवः न भावरूपस्य कस्य चिद् वस्तुनः सूचकः प्रत्युत आत्मनो ज्ञानस्य प्रागभावस्यैव । ब्रह्म हि भावरूपमज्ञानं न कदाप्यनुभवति । अनुमानमपि न किमपि भावरूपमज्ञानं साधयति । श्रुतिष्वपि न कुत्रापि शांकरमायावादः श्वेताश्वतरोपनिषद्यपि मायाशब्दः प्रकृत्यर्थे प्रयुक्तः । मायाशब्दश्च विचित्रसृष्टिकर्त्रर्थक इति विचित्रसृष्टिकर्त्रीत्वेन प्रकृतिरपि माया उच्यते । गीतायां पुराणेष्वपि च न कुत्रापि मायावादः सिद्ध्यति । अतस्तत्र प्रमाणानुपपत्तिः ।

( ६ ) निर्विशेषनिर्गुणब्रह्मणो ज्ञानेन न कदाप्यविद्याया निवृत्तिः । श्रुतेश्चायं सिद्धान्तः यत् ब्रह्म सकलापादेयगुणविशिष्टमिति सविशेषब्रह्मणः उपासनात्मकज्ञानेनैव मोक्षः । 'तत्त्वमसि' इत्यादि महावाक्यानामयमभिप्रायो यत् तच्छब्दार्थकं सर्वज्ञसत्संकल्पजगत्कारणं, त्वंशब्दार्थकं चिदचिद्विशिष्टजीवशरीरात्मकं चेत्येकमेव ब्रह्म प्रकारद्वयेन वर्तते । समस्तं चैतज्जगत् ईश्वरस्य शरीरम् इतीश्वरः सर्वान्तर्यामी । यतो हीश्वरः सविशेष इति निर्विशेषेश्वरज्ञानं न कथमपि मोक्षसाधकम् निर्विशेषनीरूपसत्तायाः न कथमपि परिज्ञानमिति तदभावे मोक्षस्यापि सर्वथा असम्भवः । एषा च निवर्तकानुपपत्तिरुच्यते ।

( ७ ) मायावादिनां मते ज्ञाता, ज्ञानं, ज्ञेयञ्चेति सर्वमेव मिथ्येति ज्ञानस्यापि मिथ्यात्वे मिथ्याज्ञानेन कथम् मायानिवृत्तिः सम्भवति ? इदं च मिथ्याज्ञानं केनाप्यन्येन ज्ञानेन दूरीभवतिव्यम् तदपि चान्येनेत्यनवस्था । एषा च निवृत्त्यनुपपत्तिः ।

वल्लभसम्बन्धिविशेषालोचना—

मायावादविरुद्धाः वल्लभेन संक्षिप्त्या निम्नाङ्कितर्काः उपस्थापिताः—

(१) माया उत्पद्यते अथ च सा अनुत्पन्नैव ? यद्युत्पद्यते तदा कस्तस्या उत्पादकः ? सृष्टिप्रारम्भे हि ब्रह्मातिरिक्तं नान्यत् किंचिदासीत्। अतो यदि कश्चित्तस्या उत्पादकः तदा ब्रह्मणा एव तदुत्पादकेन भवितव्यम्। अस्यां परिस्थितौ च ब्रह्मणः निर्गुणता निष्क्रियता च समाप्नुयाताम्।

किंच, जन्या त्वजन्या वा माया, आद्ये जनको हि कः ?
द्वितीये त्वद्वैतभंगः............ ...... .......... ॥

यदि च मायोत्पत्तिहीना तदा शंकरस्य अद्वैतता हीयते। ब्रह्मणा सहैव तस्या अपि शाश्वतस्थितेः [1]सम्भवात्।

(२) यदि चेत्थं मन्येत यत् माया अनादिः किन्तु नानन्ता, तदा नैतद्युक्तिसंगतम् अनादेरवश्यमेवानन्तत्वात्[2]।

## उपसंहारः

यद्यपि मायावादस्य खण्डनं सर्वैर्वैष्णवाचार्यैः कृतं तथापि तैर्मायाशब्दः सर्वथा न अस्वीकृतः, अपि तु तैः स्पष्टतया तस्य शब्दस्य प्रयोगः कृतः।

तत्र रामानुजस्यैतत्कथनं यत् माया परमात्मनः शक्तिषु अन्यतमा शक्तिरिति सा भावस्वरूपा शाश्वतिकी च न तु शंकरस्येव नश्वरी अभावस्वरूपा च। सा रचयित्रीति यदा कदा प्रकृतिरव्यक्तं वोच्यते। माया परमात्मनः आश्चर्यात्मिका शक्तिः, यया परमात्मनः चिदचिदंशाः असंख्यचेतनजीवेषु अचेतनपदार्थेषु च परिणताः संजायन्ते। परिणामो न मिथ्या अपि तु सत्य इति जगदपि सत्यम्।

रामानुजेन मायाशब्दः जीवात्मनः अविद्यार्थेऽपि प्रयुक्तः। यत्कारणेन जीवात्मा परमात्मनो वास्तविकस्वरूपं नावगच्छति। एषा माया अहं त्वम्, तथा, मम तव चैतद्विषयकमज्ञानं वर्धयति जीवेश्वरयोर्वास्तविकस्वरूपं च विस्मारयति, येन जीवात्मा जीवनस्य लघीयोऽतिलघीयस्सु तुच्छातितुच्छेषु च वस्तुषु एव लिप्तस्तिष्ठति।

---

१. शुद्धाद्वैतमार्तण्डः २३, २४ २. शुद्धाद्वैतमार्तण्ड २५

इत्थं माया परमात्मनः आश्चर्यजनकशक्तिः। वास्तविकरूपेण न कश्चित्तामवगन्तुं शक्नोति। सा संसारं रचयति जीवेष्वहंभावनां चोत्पादयति। सा सर्वथा परमात्मनः अधीना, यतो हि सा तस्यैव शक्तिः। यदा कदा माया प्रकृतिरप्युच्यते। सा सत्त्वरजस्तमोगुणयुक्ता, सांख्यप्रकृतेर्भिन्ना परमात्मनः शक्त्यर्थे एका नितरामतिरिक्ता वर्तते।

निम्बार्कमध्वाचार्यावप्यनेनैव सर्वथा सहमतौ। मध्वाचार्येणैतद् विशेषेण दृढीकृतं यत् समुचितरूपेण माया न केनापि ज्ञातुं शक्या; सा हि परमात्मनः अघटितघटनापटीयसी अचिन्त्या शक्तिः।

यत्किंचित्परिवर्तनपूर्वको वल्लभस्याप्ययमेव विचारः–यत् माया परमात्मनः शक्तिस्तत्रैव च तिष्ठति। सा प्रत्येकवस्तुभवने क्षमते— 'माया हि भगवतः शक्तिः सर्वभवनसामर्थ्यरूपा'[1]तत्रैव स्थिता। इयं हि आविर्भावतिरोभावप्रक्रियाद्वारा ब्रह्मणो यत्किंचिद्रूपं प्रकटयन्ती यत्किंचिच्च तिरोधापयन्ती जगतः सृष्टिं करोति।

वल्लभाचार्यः मायाऽविद्याप्रकृतिषु अन्तरं स्वीकरोति। तन्मते मायायाः सम्बन्धः परमात्मना, अविद्याया जीवेन, प्रकृतेश्चाक्षरेण वर्तते— 'अविद्या जीवस्य, प्रकृतिरक्षरस्य, माया 'कृष्णस्य'[2]। प्रकृतिरित्थं सांसारिकप्रक्रियाया रूपं धारयति; जीवार्थं संसारं च सृजति। माया परमात्मनो महत्तमशक्तिरित्यविद्याप्रकृतिनामकशेषशक्तिद्वयस्य पर्यवेक्षणं करोति, यतोहि अक्षरजीवावपि ब्रह्मणः स्वरूपौ। अतः मायाशब्दः त्रयाणामपि शब्दानामर्थद्योतनार्थं व्यापके अर्थे ग्रहीतुं शक्यते। अविद्या मायाया एका अभिव्यक्तिरिति वल्लभाचार्येण यत्र कुत्र अविद्यार्थे मायाशब्दः प्रयुक्तः।

## जगतो विषये आचार्यपञ्चकविभिन्नधारणाः

दृश्यमानमेतज्जगद् भागद्वयेन विभाजयितुं शक्यते (१) रूपप्रपञ्चम् (२) नामप्रपञ्चं च। [3]तत्रास्माभिर्विभिन्नरूपाणां दृश्यान्यवलोक्यन्ते, यथा आकाशे अगणिततारा:, पृथिव्यां च विशालपर्वता:, गभीरतमसमुद्रा:, नद्यो विभिन्नवृक्षलतादयो विचित्रपशुपक्षिणश्च। एतदतिरिच्य ध्वनिजगदेतस्मात् पृथक्, यद्रूपराहित्येन अदृश्यमानमित्यस्माभिः

---

१. शुद्धाद्वैतमार्तण्डः २३,२४ २. त० दी० नि० २।२३ (प्रकाशटीका)
३. तत्रैव २।१२२ ( प्रकाशटीका )

केवलमुच्चारयितुं श्रोतुं वा शक्यते। परमात्मा स्वमेताभ्यामेव नामरूपाभ्यामभिव्यक्तं करोति—'नामरूपभेदाद् द्विविधैव सृष्टिः'।

'रूपनामविभेदेन जगत्क्रीडति यो यतः'[1]।

एतस्मिन्नपि भागद्वये अनेकविधा सृष्टिः। परमात्मनः शक्तिरनन्तेति तत्सृष्टिरप्यनेकप्रकारा। सा च प्रतिकल्पं परिवर्तते—

अचिन्त्यानन्त्यशक्तेस्तद् यदेतदुपपद्यते।
अत एव श्रुतौ भेदाः सृष्टेरुक्ता ह्यनेकधा[2]॥

तदेतदुभयविधसृष्ट्यपरनामकभौतिकजगतः किमुपादानं किं वा निमित्तमिति विचिकित्सायामित्थं शंकरमते समाधानम्—

## निमित्तोपादानकारणताविचारः

ब्रह्मसूत्राणां द्वितीयेन सूत्रेण 'जन्माद्यस्य यतः' (१।१।२) इत्यनेन भगवतो बादरायणेन ब्रह्मणो लक्षणं प्रतिपादितम्। येनैतज्जगद् ब्रह्मणः परिणाम इति सिध्यति। ब्रह्मणो हि जगतो निमित्तोपादानोभयकारणत्वम्। एतच्चेहावधारणीयं वर्तते यद् बादरायणेनात्र तस्यैवाद्वितीयस्य शुद्धस्यैकस्य ब्रह्मणः परिभाषा प्रदत्ता यस्य च ब्रह्मणस्तेन आद्ये सूत्रे 'अथातो ब्रह्मजिज्ञासा' (१।१।१) इत्यत्र जिज्ञासा समारब्धा आसीत्। अयमेव प्रश्नो बादरायणेन 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (१।४।२३) इत्यतः अग्रे 'अभिध्योपदेशाच्च' (१।४।२४) 'साक्षाच्चोभयाम्नानात्' (१।४।२५) 'आत्मकृतेः' (१।४।२६) तथा 'परिणामात्' (१।४।२७) इति सूत्रेषु पुनरपि गृहीतः। सांख्याभिमतं प्रकृतेरुपादानत्वं खण्डयता च तेन पूर्वमेव संक्षेपेण प्रतिपादितः अप्ययं विषयः पुनरपि विस्तरं नीतः। 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति'[3] इत्युद्दालकस्य श्वेतकेतुं प्रति प्रतिज्ञावाक्ये 'यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्'[4] इति दृष्टान्तवाक्येन चाप्येतदेव सिध्यति। ब्रह्मण एव कर्तृत्वं प्रकृतित्वं चोभयं साधयितुमेव बादरायणेन 'अभिध्योपदेशाच्च' (१।४।२४) इत्यस्मिन् सूत्रे ब्रह्मणः अभिध्या (चिन्तन) पूर्विका सृष्टि-

---

१. प्रस्थानरत्नाकरः पृ० १६३ २. तत्त्वदीपनिबन्धः १।४०
३. छां० उ० ६।१।२–३ ४. तत्रैव ६।१।४

रचनोक्ता। अर्थात् 'सः अकामयत, बहु स्यां प्रजायेय'[1] तथा 'तदैक्षत बहु स्यां प्रजायेय'[2] एताभ्यामप्येतदेव सिध्यति यत्स्वयं ब्रह्मैव जगतः कारणम्। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत'[3] एतेनाप्युपर्युक्तमेव ब्रह्मणः उभयविधकारणत्वं सिध्यति। 'आत्मकृतेः परिणामात्' इत्येतत् सूत्रं तु स्पष्टमेव बादरायणस्य मतं साधयति। एतच्च सूत्रं तैत्तिरीयोपनिषदः 'तदात्मानं स्वयमकुरुत'[4] इति श्रुत्याधारम्। एतद्धि वाक्यं ब्रह्मणः कर्तृत्वं कर्मत्वं चोभयं प्रतिपादयति—'स्वयमकुरुत' इति कर्तृत्वम्; 'आत्मानमिति च' कर्मत्वम्। कथं च पूर्वसिद्धं ( सत् ) ब्रह्मणः कर्तृत्वं कर्मत्वं चोभयमित्यस्य प्रश्नस्योत्तरं तु 'परिणामात्' इत्येव। सदपि ब्रह्म जगद्रूपेणात्मानं परिणमयतीति तत्तात्पर्यम्। ब्रह्म एव हि सर्वयोनिः इति 'योनिश्च गीयते' ( १।४।२८ ) इति सूत्रं प्रतिपादयति। श्रुतिरप्येतदेवोद्बोधयति—'कर्तारमीशं पुरुषं ब्रह्मयोनिम्';[5] 'भूतयोनिं परिपश्यन्ति[6] धीराः' इति। तत्र योनिपदोपादानम्। इत्थं तस्य सर्वप्रकृतित्वं प्रसिद्धमेव।

यद्यपि लोके इत्थं दृश्यते यन्निमित्तमुपादानं चोभयं भिन्नं कारणं घटोत्पत्तौ कुलालो निमित्तं मृत्तिका चोपादानम्। कुलाल एव चेच्छति। स्वेच्छापूर्वकं च मृत्पिण्डेन यद् यद् इच्छति तत्तन्निमिमीते। न हि तत्रोपादानं मृत्पिण्डः, इच्छतीतीह ब्रह्मणः उपादानकारणत्वे तत्रेच्छासंकल्पयोविरोधः इति शंका तु शंकरेण 'योनिश्च हि गीयते' इति सूत्रे स्वतः इत्थमपाहृता—

'यत्पुनरिदमुक्तमीक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु लोके दृष्टं नोपादानेष्वित्यादि—तत्प्रत्युच्यते, न लोकवदिह भवितव्यम्। न ह्ययमनुमानगम्यः अर्थः। शब्दगम्यत्वात् त्वस्यार्थस्य यथाशब्दमिह भवितव्यम्, शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयति। इत्थं शंकरोऽपि बादरायणमनुसरति। एतेनैतत्सिध्यति यद्ब्रह्म स्वेक्षयैवात्मानं जगद्रूपेण परिणमयदप्यविकृतं तिष्ठति।

पूर्वोक्तसूत्राणां (१।४।२३-२७) शंकरेण प्रतिपादितः अर्थः समीचीनः बादरायणानुसारी च वर्तते किन्तु ब्रह्मणः स्थाने तदीयः ईश्वरशब्दप्रयोगः युक्तियुक्तो न वर्तते—बादरायणेन ब्रह्मेश्वरयोर्भेदस्याप्रतिपादनात्, तथा भेदस्य च शंकरेण स्वतर्कबलेनोत्पादितत्वादिति भावः। ब्रह्मणश्चावि-

---

१. तै० उ० २।६    २. छा० ६।२।३
३. तत्रैव ३।१४।१    ४. तै० २।७
५. मु० उ० ३।१।३    ६. तत्रैव १।१।६

कृतत्वं स्थापयितुं रामानुजश्चिदचिद्विशिष्टं ब्रह्म जगदुपादानं मन्यते। निम्बार्कश्च ब्रह्मणः शक्तिं जगदुपादानं, मध्वाचार्यश्च प्रकृतिं जगदुपादानं स्वीकरोति। अत्र स्पष्टमेतद्वर्तते यत् सर्वे इमे आचार्याः शुद्धब्रह्मणो जगदुपादानतां, यत्किंचित्परिवर्तनेन स्वीकुर्वन्तः अपि न सर्वथा तत्परित्यजन्ति। शंकरवल्लभयोश्च सिद्धान्तः सर्वथा भिन्नः, शंकरो हि ब्रह्मण उपादानतां स्वीकुर्वन्नपि अविद्याक्षेत्रे (अविद्यांशे) तन्न स्वीकरोति। वल्लभश्च श्रुतिवचनमक्षरशः अनुसरंस्तत्तथैव स्वीकरोति। ब्रह्मण उपादानतामस्वीकुर्वन् शंकरः सर्वमेव ब्रह्मसूत्रमन्यथार्थं करोति। श्रुतिश्च ब्रह्मणः परिणामं, तदैव, तस्य अविकृतत्वं च प्रतिपादयति। बादरायणो हि सर्वथाभावेन श्रुतिवाक्यमनुसर्तुं तर्कमुपेक्षते। एतच्चैव वल्लभेनाप्यनुसृतम् इति श्रुतितर्कयोः परस्परं विरोधे श्रुतिवाक्यस्यैव प्रामाण्यमधिगतम्। अन्ये आचार्याश्च यत्किंचित्परिवर्तनेन तर्कमनुगत्य बादरायणमेवानुसन्नः। केवलं शंकर एव 'शब्दबलेन विरोधपरिहारः' इत्येतदनादृत्य तर्कमुपचक्रमे। इत्थं च स्पष्टमेतत्संजातं यत्कथं बादरायणः ब्रह्मजगतोर्मध्ये जायमानाम् (आत्मनो जगद्रूपेण स्वयं करणस्य तथाप्यपरिवर्तनशीलस्य शुद्धचैतन्यमात्रैकभागस्य) असंगतिं दूरीकृतवान्। पूर्वं शंकरः सम्यगेव बादरायणमतं प्रतिपादयति किन्तु पश्चात् स स्वकीयं कल्पितं मतं तत्र सन्निवेश्य 'ब्रह्मणो जगद्रूपेणैतद्वि-परिणमनम् अविद्यया तथा प्रतिभासमानमिति ब्रह्मणो विवर्त एष सर्गो मिथ्येति' प्रतिपादयति।

अयं भावः—ब्रह्मजगतोः सम्बन्धसूचकं मतद्वयं वर्तते (१) परिणामवादः (२) विवर्तवादश्च। तत्र तात्त्विकोऽन्यथा प्रथा परिणामः, अतात्त्विकश्चान्यथा प्रथा विवर्तः, तत्राद्यः सूत्रकारसम्मतो द्वितीयश्च शंकराभिप्रेतः। एतच्च 'जन्माद्यस्य यतः' इति सूत्रेण 'तज्जलानिति शान्त उपासीत' इति श्रुत्या सूचितया ब्रह्मपरिभाषया, द्वितीयाध्यायप्रथम-पादे कथं चेतनं ब्रह्म अचेतनजडात्मकजगद्रूपे आत्मानं विपरिणमयतीत्थमुत्थापितस्य विरोधस्य युक्त्यापहारेण च प्रमाणितम्। द्वितीया-ध्यायप्रथमपादस्थचतुर्दश (तदनन्यत्वमारम्भणशब्दादिभ्यः (२।१।१४) सूत्रव्याख्यानावसाने स्वयं शंकरेणापि सूत्रकारस्य परिणामवादितेत्थं स्पष्टं स्वीकृता—'सूत्रकारोऽपि...अप्रत्याख्यायैव कार्यप्रपञ्चं परिणाम-प्रक्रियां चाश्रयति''[1]।

---

१. शां भा० पृ० १०२५ (अ० प्र० भा० सं०)

तथापि स्वसिद्धान्तं संरक्षितुं तेनैवमप्याधारमन्तरेणैव—परिकल्पितं यत्सूत्रकारः इत्थं परिणामवादं स्वीकुर्वन्नपि जगतो मिथ्यात्वं परिलक्षयत्येव। अयं च शंकरस्य विवर्तवादस्वीकारपूर्वकैकत्ववादः परकालिकवैष्णवैः खण्डितः। तस्य स्वीकारे हि सर्वस्यैव जगतो मिथ्यात्वेन सेव्यसेवकयोरपि च तदन्तर्गतत्वेन तयोरपि मिथ्यात्वे भक्तभगवतोश्चापि तथात्वेनैकत्वे तत्सम्बन्धस्यैवोच्छेदापत्तिः स्यात्। बहवो वैष्णवाचार्याः शंकरस्येमं परिणामवादं स्वीकुर्वन्तः अपि निजभक्तिपूजासिद्धान्तप्रामाण्यार्थं ब्रह्मजीवजगत्सु भेदस्यावश्यकतां मन्वानाः 'आत्मनि चैवं विचित्राश्च हि' (२।१।२८) इत्यादिभ्यः तत्सर्जनप्रकारे वैशिष्ट्यं स्वीकृत्य 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (२।१।२६) इत्याद्यसंगतिं विवव्रुरिति शंकरस्य विवर्तवादो न तेषां कृते सन्तोषावहः। एतेन बादरायणस्य ब्रह्मपरिणामवादमस्वीकुर्वन् शंकरो ब्रह्मणो जगतः उपादानत्वस्वरूपं स्वीकर्तुर्बादरायणस्य वास्तविकमतं प्रकटयितुं नाशक्नोदिति स्पष्टम्।

इत्थं च बादरायणानुसारेण अयं संसारः ब्रह्मण आत्मकृतिरात्मपरिणतिश्च। ब्रह्मशब्दे वा आत्मशब्दस्थाने प्रयुक्ते ब्रह्मकृतिः ब्रह्मपरिणतिर्वा इत्थं प्रतिपादयितुं शक्यते। तदेव 'अथातो ब्रह्मजिज्ञासा' इत्यत्र जिज्ञास्यं ब्रह्मोपादानं निमित्तं च कारणं जगतः।

मध्वाचार्योऽपि चेत्थमस्वीकुर्वन् न ब्रह्मसूत्राणां वास्तविकमर्थमवगन्तुमशक्नोत्। भण्डारकरमहोदयस्तद्विषये सत्यमेव ब्रवीति यत् 'मध्वाचार्यः ब्रह्मणो जगदुपादानत्वं, यच्च बादरायणेन सूत्रेषु स्वयमेव च स्वीकृतं, न स्वीकरोति अपि तु स स सर्वथैव तेषामन्यथैवार्थं करोति' इत्यादि'[1]।

इदमत्राकूतम्—सर्वे आचार्याः बादरायणसम्मतं ब्रह्मण उपादानत्वमेतदर्थं स्वीकुर्वन्ति यत् तथा स्वीकारे ब्रह्मणः परिवर्तनशीलत्वे तदनित्यत्वापत्तौ तस्य नित्यशुद्धबुद्धमुक्तत्वहानिः। एतदेव दूरीकर्तुं शंकराचार्यः तत्कारणतामविद्यानिमित्तां परिकल्पयति। स्पष्टं चैतत् 'श्रुतेस्तु शब्दमूलत्वात्' इति सूत्रे शांकरभाष्ये तथाहि—'नहि अविद्याकल्पितेन रूपभेदेन सावयवं वस्तु सम्पद्यते।········वाचारम्भणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्येति न निरवयवत्वं ब्रह्मणः कुप्यति'[2]।

---

1. आर० जी० भण्डारकरः—चतुर्थसंचिका पृ० ८१
2. शां० भा० पृ० १०८१

रामानुजाचार्यः अपि च, अत एव, ब्रह्मस्वरूपपरिणामं न स्वीकरोति अपि तु शुद्धब्रह्मणः स्थाने चिदचिद्विशिष्टशरीरं जगदाकलयति—'मृत्सुवर्णादिवत् ब्रह्मस्वरूपपरिणामस्तु नैवाभ्युपगम्यते, अविकारत्वनिर्दोषत्वादिश्रुतेः'[1]।

अत एव निम्बार्काचार्यः ब्रह्मणः स्थाने ब्रह्मशक्ति कारणत्वेन स्वीकृतवान्। 'ब्रह्म स्वशक्तिविक्षेपेण जगदाकारमात्मानं परिणम्य अव्याकृतेन स्वरूपेण शक्तिमता कृतिमता परिणतमेव भवति'[2]। इत्थं च निम्बार्कानुसारेण परिणामो न ब्रह्मणः अपि तु ब्रह्मशक्तेः।

अनेनैव च कारणेन मध्वाचार्योऽपि ब्रह्मण उपादानकारणतां निषेधति। वल्लभ एव केवलं बादरायणवद् ब्रह्मणो जगत्कारणतां स्वीकुर्वन् जगदिदं ब्रह्मपरिणामस्वरूपमाकलयति—'तस्माद् ब्रह्म परिणामलक्षणं कार्यमिति जगत्समवायिकारणत्वं ब्रह्मण एवेति सिद्धम्'[3]। अस्मिन् विषये स बादरायणमेवानुकरोति इति [4]भण्डारकरः।

एतदुपरिष्टात्प्रदर्शितं यत् बादरायणानुसारेण ब्रह्म जगतो निमित्तकारणमुपादानकारणं चेति जगतो ब्रह्मकृतित्वे ब्रह्मपरिणतित्वे च सांख्येन 'कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपो वा' (२।१।२६) इति समुपस्थापितस्य दोषस्य परिहारः सूत्रकारेण 'श्रुतेस्तु शब्दमूलत्वात्' (२।१।२७) इत्यनेन कृतः। श्रुतिर्हि ब्रह्मण उभयात्मकत्वं प्रतिपादयति इत्यस्माभिरपि तस्योभयात्मकत्वम्—उपादानकारणत्वमविकृतत्वं च स्वीकर्तव्यम्। यतो हि ब्रह्मणः स्वरूपं श्रुतिवाक्यैरेवावगन्तुं शक्यम्। तानि च ब्रह्मणो निरवयत्वं कृत्स्नप्रसक्तिमन्तरेणापि उपादानकारणत्वं च प्रतिपादयन्ति। अतः अस्माभिरपि तदुभयं स्वीकर्तव्यम्। ब्रह्मणः शब्दमूलत्वेन विकारस्य निरवयवत्वस्य वा सर्वथा प्रसक्त्यभावात्। तर्कस्तु सूत्रकारस्य सर्वथा असम्मतः। एतेन स्पष्टमेतत्प्रतीयते यद् वल्लभमतिरिच्य येऽप्यन्ये आचार्याः ब्रह्मकारणतां परिवव्रुतिरे ते श्रुत्यनुसारं बादरायणस्य ब्रह्मविषयकमभिप्रायं ज्ञातुं न समर्था अभवन्। किन्तु शंकरमितिरिच्य नान्यः कश्चिद् बादरायणस्य परिणामवादमपोहितुमसाहसयत्।'

---

१. रा० भा० पृ० २२६ २. नि० भा० पृ० २३९

३. अणुभाष्यम् पृ० १३८ (कलकत्ता सं०)।

४. आर० जी० भण्डारकरः वैष्णविज्म पृ० ६०–६१

'श्रुतेस्तु शब्दमूलत्वात्' ( २।१।२७ ) इत्यस्य शांकरभाष्यं मुख्यमस्य प्रमाणं यत् शंकराचार्यो महता काल्पनिककाठिन्येन स्वकीयसिद्धान्तं सूत्रकारस्य सिद्धान्तस्योपरि समारोपयितुं प्रयतते स्म, यथैव हि ब्रह्मणो जगदुत्पत्तिः......इत्यादिना आरभ्य सूत्रकारस्य तात्पर्यानुसारं सूत्रं व्याचक्षाणः शंकर इत्थमुपसंहरते—'तस्मात् शब्दमूल एवातीन्द्रियार्थयाथात्म्याधिगमः'[1] । किन्त्वेतेन असंतुष्यन् स पुनरभिधत्ते—'ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुम् । निरवयवं च ब्रह्म परिणमते, न च कृत्स्नमिति । यदि निरवयवं ब्रह्म स्यात् नैव परिणमेत । कृत्स्नमेव वा परिणमेत'[2] इत्यादि । अतः एतदिह अनुमिमीमहे यच्छंकरः सर्वतोभावेन सूत्रकारस्य लक्ष्यतः परिच्यवते । जगदेतदविद्याकल्पितमिति प्रतिपादयतस्तस्योपसंहारो निजनिर्मितकृत्स्नप्रसक्तिविकारनिमित्तो यश्च सूत्रकारस्येव श्रुतेः प्रामाण्यानधिगममूलरूपः इति दार्शनिकदृष्ट्या शंकरस्य गुणवैशिष्ट्याभ्युपगमेनापि निर्विचिकित्समेतत् यत्स सूत्रकारमक्षरशः अनुकरोति इति ।

इत्थं सूत्रकाराभिमतां ब्रह्मण उपादानकारणतां निराकुर्वाणस्य शंकरस्याभिप्रायं प्रतिपाद्येदानीं तदभिमतब्रह्मनिमित्तकारणतां निराकुर्वतस्तस्य याथातथ्यं समीक्ष्यते—

रामानुज-निम्बार्क-मध्व-वल्लभाः ऐकमत्येन सूत्रकारानुकूलं ब्रह्मणो निमित्तकारणतां स्वीकुर्वन्ति । शंकरस्य चैतदभिमतं यद् ब्रह्मणो जगतो निमित्तकारणत्वे ( कर्तृत्वे ) पशुपक्षितिर्यगादिविभिन्नरूपाकारादिसुखदुःखित्वादिसम्पन्नतया अस्य विश्वस्य ब्रह्मणोऽपि क्रौर्यादिविशिष्टत्वं पक्षपातित्वादिविशिष्टत्वं च जायेतेत्येतद्दोषनिवारणार्थं स अविद्यानिमित्तं सकलभौतिककार्यकलापमाकलयति, किन्तु नैतत्सूत्रकाराभिमतम् । सूत्रकारानुसारं हि ब्रह्मणो धर्मसापेक्षतया न तत्र पक्षपातित्वं नापि वा क्रौर्यादिविशिष्टत्वम् इति जगत्प्रवाहस्यानाद्यनन्तत्वाद् ब्रह्मणोऽखिलधर्मविशिष्टत्वम् इति 'वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति' ( २।१।३४ ) 'न कर्माविभागादिति चेन्न, अनादित्वात् ( २।१।३५ ), सर्वधर्मोपपत्तेश्च' ( २।१।३७ ) इत्यादिभिश्चापि तथैव प्रमाणीकृतम् । यद्यपि अविद्यानिमित्तं ब्रह्मणः कर्तृत्वं प्रतिपादयन् शंकरो ब्रह्मणो वैषम्यनैर्घृण्यमपाकुर्वाणस्तस्य कर्तृत्वं व्यपोहितवान् तथापि अन्ये आचार्याः एतदर्थमेतन्मतं तिरस्कुर्वन्ति यद् ब्रह्मणः कर्तृत्वास्वीकृतेर्नास्तिक्यभ्रान्तिक्षेत्रतया भगवद्भक्त्युपासनादीनां च समूलोऽच्छेदापत्तिः स्यात् ।

१. शा० भा० (ब्र० सू० २।१।२७) पृ० १०७९ २. तत्रैव

द्वितीयाध्यायस्य प्रथमः पादो विशेषेण सूत्रकाराभिमतजगत्यन्त-दृष्टिं निक्षिपति। प्रथमाध्याये बादरायणेन श्रुतिवाक्यनिबन्धना ब्रह्मणो जगतो निमित्तोपादानोभयकारणता उद्घोषिता। द्वितीयाध्याये च सांख्यानुयायिनः सांख्यसिद्धान्तप्रतिपादकस्मृत्याधारेण सूत्रकारमतं विरुन्धन्ति, तान् प्रति सूत्रकारस्यैतदुत्तरं यद् वेदानुगन्त्रगन्तृप्रकारद्वय-स्मृत्युपलब्धौ वेदानुगन्तृस्मृतेरेव प्रामाण्यात् तथाभूतानां मनुस्मृत्या-दीनां च ब्रह्मकारणताप्रतिपादनपरत्वात्तासामेव वेदानुगन्त्रीत्वेन प्रामा-ण्यम्; नेतरासां सांख्ययोगादिस्मृतीनाम्। एतदेव जैमिनिना अपि 'विरोधे तु अनपेक्ष्यं स्यादसति हि अनुमानम्' (१।३।३) इति सूत्रे प्रतिपादितम्। इत्थं श्रुति-स्मृत्याधारेण पराहतः सांख्यवादः तर्काधा-रेण सूत्रकारं विरुणद्धि। सूत्रकारश्च यद्यपि तर्कस्योत्तरं विशुद्धतर्केणैव ददाति तथापि 'तर्काप्रतिष्ठानात्'......(२।१।११) इति सूत्रेणेत्थं स्पष्टतया सूचयति यत् तत्सिद्धान्ते तर्कस्य सर्वथा स्थानाभावः इति वेदानुमततर्का-णामेव प्रामाण्यं नान्येषाम्। शंकरश्चाप्येतदभिप्रायं मनसि निदधानः वास्त-विकार्थतया सूत्राणां व्याख्यानानन्तरं न स पुनः सूत्राणां विशिष्टार्थमवि-द्याकल्पनया कर्त्तुमग्रेऽसरत्। यत्र च शंकरः सूत्राणां विशिष्टार्थं न सूचित-वान् तत्र तट्टीकाकारस्तथा कृतवानिति प्रकृत्यधिकरणे 'इयं चोपादान-परिणामादिभाषा न विकाराभिप्रायेण अपितु यथा सर्पस्योपादानं रज्जुरेवं ब्रह्म जगदुपादानं द्रष्टव्यम्' इत्यादिना भामत्यां वाचस्पतिना प्रतिपादितम्। रत्नप्रभायामपि च 'अत्र सूत्रे परिणामशब्दः कार्यमात्रपरः न तु सत्यकार्यात्मकपरिणामपरः' 'तदनन्यत्वम्' इति विवर्तवादस्य विवक्ष्य-माणत्वात्' इत्येवाभिहितम्।

सांख्यकारः एतत्प्रतिपादयति यत् 'जन्माद्यस्य यतः' (१।१।२) इत्यनेन ब्रह्मणो जगतो निमित्तोपादानोभयकारणत्वं समुद्घोषितम्। तच्च अस्य जगतो विलक्षणत्वात्, अर्थात् अस्य कार्यरूपस्य जडस्य जगतः, तत्कारणरूपाच्चेतनब्रह्मणो विलक्षणत्वात् (जडत्वात्) न युक्तम् 'कारण-गुणाः कार्यगुणान् आरभन्ते' इति हि कारणकार्यनियमः। तथात्वे च चेतनकारणेन जगतापि चेतनेन भवितव्यमिति भावः। अस्योत्तरं बादरायणः, 'यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्'[1] इत्याधारेण निर्मितेन 'दृश्यते तु' (२।१।६।) इति सूत्रेण ददाति यत्कारणादपि भिन्नस्य कार्यस्य उत्पत्तिः दृश्यते इति न कोऽपि

---

१. मुं० १।१।७

विरोधः। अत्रापि सूत्रकारेण तर्कमपाकृत्य श्रुत्याधारेणैव सर्वसामञ्जस्य-मुत्पादितम्। तच्च 'तर्काप्रतिष्ठानात्' इति सूत्रेण स्पष्टम्।

'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' (२।१।१३।) इति सूत्रमपि महत्त्वपूर्णम्। यतो हि एतस्मात्पूर्वं प्रधानकारणवादो निराकृतः। अनेन च सूत्रेण इयं शंका निवार्यते यत् ब्रह्मणो निमित्तोपादानोभयकारणतास्वीकारे भोक्तृभोग्ययोर्ब्रह्मणोऽनन्यत्वेन तदन्योन्यापत्तिसन्देहे स्वयं ब्रह्मणो जीवरूपेण कर्मफलरूपसुखदुःखादिभोक्तृत्वसिद्धौ ईश्वरजीवविभागा-सम्भव इति भोक्तुर्भोग्यत्वं भोग्यस्य वा जडवर्गस्य भोक्तृत्वं स्यात्। किंच, जडवर्गस्यापि भोक्तृत्वेन भोक्तृ (जीवात्म) भोग्य (जडवर्ग)योरपि विभागासम्भवो भवेत्। एतच्च दोषनिवारणं दैनिकलोकोदाहरणेनेत्थं कृतं यत्फेनवीचीतरंगाणां समुद्रानन्यत्वेऽपि न तेषामितरेतरभावा-पत्तिः। एवं कटककुण्डलादीनां सुवर्णानन्यत्वेऽपि घटपटकपाटादीनां च पृथिव्यनन्यत्वेन न तेषामितरेतरत्वापत्तिरपि तु विभाग एव। एवमिहापि ब्रह्मणोऽनन्यत्वेऽपि न भोक्तृभोग्ययोरितरेतरभावापत्तिः।

शंकरश्चैवं तात्त्विकरूपेण सूत्रं व्याख्यायैतत्सन्निवेशयति—'यद्यपि भोक्ता न ब्रह्मणो विकारः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति स्रष्टुरेवाविकृतस्य कार्यानु प्रवेशेन भोक्तृत्वश्रवणात्, तथापि कार्यमनुप्रविष्टस्यास्त्युपाधिनिमित्तो वि-भाग आकाशस्येव घटाद्युपाधिनिमित्त इत्यतः परमकारणाद् ब्रह्मणोऽनन्यत्वे-ऽपि उपपद्यते भोक्तृभोग्यलक्षणो विभागः समुद्रतरंगादिन्यायेनेत्युक्तम्'।[1]

समुद्रतरंगन्यायस्यान्याचार्यसम्मतत्वेऽपि औपाधिकभेदो रामानुजेन इत्थं प्रत्याख्यातः—'यत्तु परैर्ब्रह्मकारणवादे·········स्वरूपपरिणामे च ब्रह्मण एव भोक्तृभोग्यत्वापात्तिरिति पुनरप्यसामंजस्यमेव"[2]।

सूत्राक्षराण्यपि च न शंकरगृह्माणि, किंच शंकरानुसारेण एतत्सूत्रं व्यवहारपरम्। अतः परं द्वितीयं सूत्रं 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (२।१।१४) च परमार्थपरम्। एतच्चैतत्सूत्रभाष्येणावगम्यते, तथाहि—'अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं, स्याल्लोकवदिति परिहारोऽभिहितः। न त्वयं विभागः परमार्थतः[3]अस्ति'। अयं च व्यवहार-परमार्थविभागो नान्यैराचार्यैः स्वीकृतो नापि च सूत्रकाराभिमतः इति सूत्राक्षरैरयं भेदो न कथमपि सूचयितुं शक्यते। 'स्याल्लोकवदेषः अंशो हि केवलं दैनिकानुभवं निर्दिशति। अनुभवश्चापि स एतावत्साधारणो

१. शां० भा० पृ० ९९७–९८ २. रा० भा० पृ० २२६

३. शां० भा० पृ० ५६६–६७

यत्सूत्रकारः स्वपक्षं पोषयितुं कस्याप्युदाहरणविशेषनिर्देशस्य आवश्यकत्वमेव न अनुभवति। शंकरस्य च ब्रह्मजीवयोरेकत्वपूर्वकौपाधिकभेदप्रतिपादनं न बादरायणाभिमतसूत्रार्थतात्पर्यकम्। जीवात्मा हि न ब्रह्मणो विकारः, अपि तु तदीयः अंशः, किन्तु सूत्रकारः अत्र केवलमेतन्निर्दिदिक्षति यज्जडस्य जगतश्चेतनस्य च जीवात्मनः उभयोर्ब्रह्मप्रभवत्वेऽपि जडचेतनयोर्नैतरेतरभावापत्तिरिति ब्रह्मण उभयोः कारणत्वे न कश्चिद् विरोधः।

इत्थं ब्रह्मणो जगदुपादानत्वेऽपि शंकरमतेन जगतश्चेतनत्वं परिहृत्यैतद्विषयसम्बद्धे जगतो विषये 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (२।१।१४) इति सूत्रार्थानुशीलनपूर्वकमन्याचार्याणां धारणा विविच्यन्ते—

एतत्सूत्रं ब्रह्ममीमांसायां महत्त्वपूर्णसूत्रेष्वन्यतमम्। मध्वमतिरिच्यान्येषां सर्वेषामाचार्याणामत्रैकमत्यं यदेतत्सूत्रम् 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव तु 'सत्यम्'[1] एतां श्रुतिं निर्दिशति। बादरायणसूत्रेषु दृष्टिनिक्षेपश्चैतत्सूचयति यदिमानि सूत्राणि औपनिषदमुख्योपदेशानां संक्षेप्तृणि विभिन्नवैदिकविद्वत्प्रातिभसन्देहनिराकरणात्मकानि चेत्थमुभयार्थानि। इत्थं च 'तदनन्यत्वम्…' एतत्सूत्रम् आरम्भणनामधेयेत्यादिशब्देभ्यः समुत्पन्नं सन्देहमपाकर्तुं विरचितम् इति सूत्रकारोऽभिधत्ते यत् एतैः शब्दैः कार्यकारणयोरनन्यत्वं सूच्यते। एतच्चेहावधारणीयं यत्सूत्रकारस्यात्र नैतत्तात्पर्यं यत् कार्यं कारणं चैकमेव अपि तु तयोरनन्यत्वमेवेति तात्पर्यम्। अनन्यत्वशब्देन च नहि कोऽपि एवमर्थं निष्कासयितुं शक्नोति यद् विकारस्य सत्ता न वर्तते। यथा च विकारो घटः, शरावः उदञ्चनं चेति। न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति नामधेयमात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यम्[2] इति। न श्रुतिवाक्येनेत्थं प्रतिपाद्यते नापि च सूत्राक्षरैः शंकराभिमतोऽयमर्थः सह योज्यते यश्च तेन निम्नाङ्कितभाष्ये प्रतिपादितः—

'तस्माद्यथा घटकरकाद्याकाशानां महाकाशानन्यत्वम्, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वम्, दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात्। एवमस्य भोग्यभोक्त्रादिप्रपंचजातस्य ब्रह्मव्यतिरेकेणाभाव इति [3]द्रष्टव्यम्। एवं रूपेणायं सर्वथा प्रपंचनिषेधो रामानुजवल्लभाद्याचार्यैः सर्वथा समालोचितः—यथा सौम्यैकेन…। सर्वं मृण्मयम्

---

१. छा० ६।१।४ २. शा० भा० पृ० १००२

३. तत्रैव पृ० १००३–४

इत्यादि हि छान्दोग्योपनिषदो निर्दिष्टमिहत्यं वाक्यं नामरूपयोर्भिन्नत्वेऽपि ज्ञातेन चैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवति इति हि तदर्थः। एवं च मृण्मयत्वेन सर्वेषां तेषां सत्यत्वेन मरुमरीचिकावत् घटादिरूपकार्याणामभावो वक्तुं न शक्यते। तेषां स्वतन्त्रसत्ताभावेऽपि स्वकारणे मृदादौ स्थितेः वर्तमानत्वात् नाममात्रस्य भिन्नत्वेन स्वातन्त्र्येण वस्तुभिन्नत्वम्। अत एवाणुभाष्ये वल्लभेनेत्थं प्रतिपादितम्—

'वाचारम्भणं विकारो नामधेयम्......न 'मिथ्यात्वम्'।

उद्दालकोऽऋषिः स्वपुत्रं श्वेतकेतुमेकस्य ज्ञापनेन सर्वं ज्ञापयितुमिच्छति। सर्वस्य ज्ञानं चैकेन तदैव सम्भवति यदा सर्वस्य सत्त्वे सत्येकेनानन्यत्वं स्यात्। तदेव हि एकं, सर्वस्य ज्ञानमुत्पादयितुं शक्नोति। एतद् व्याख्यातुं ऋषिरुद्दालकः उदाहरणत्रयमुपस्थापयति। सर्वैश्च तैस्त्रिभिरुदाहरणैः कार्यकारणयोः सम्बन्धो निर्दिश्यते। उद्दालकस्य च तैरेतत्तात्पर्यं यद् ब्रह्मजगतोः सम्बन्धो मृन्मयपात्रयोरिव कार्यकारणसम्बन्धः। ब्रह्म कारणम्, जगच्च कार्यम् इति कार्यकारणयोरनन्यत्वेन ब्रह्मजगतोरनन्यत्वम्। एतेन कारणस्य ब्रह्मणः सत्त्वं कार्यस्य जगतश्च मरीचिकावन्मिथ्यात्वं वक्तुमशक्यम्। अयं भावः, उपनिषत्सु ब्रह्मजगतोः कारणकार्यसम्बन्धज्ञापनाय मृत्तिकासुवर्णलौहानां त्रयाणामुदाहरणानि निर्दिष्टानि। न च क्वापि तत्प्रसंगे शंकरेणेव प्रतिपदं कारणकार्यवाचकशब्दैः सह छान्दोग्यभाष्येऽत्र च प्रतिपादितः रज्जुसर्पयोः शुक्तिरजतयोर्वा समुल्लेखः समुपलभ्यते। एतदिदं दार्ढ्येनानुमापयति यत् शंकराभिमतो विवर्तसिद्धान्तो न सूत्रकारसम्मतः अपि तु केवलं ब्रह्मणः परिणामवादः। किंच, जगदिदं न मायाजन्यम्। किन्तु ब्रह्मकार्यमिति न स्वप्नमात्रमपि तु ब्रह्मण्येव तदुत्पत्तिस्थितिलयाः। यद्यप्येतत्सत्यं यत् 'मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्' (३।२।३) इत्यस्मिन् सूत्रे सूत्रकारेण स्वप्नसृष्टेर्मायामात्रत्वं स्पष्टतया प्रतिपादितम्। मायायाश्च रामानुजनिम्बार्कानुसारेण आश्चर्यात्मकत्वं गृह्येत, वल्लभानुसारेण सर्वभवनसामर्थ्यं, शंकरानुसारेण दृष्टनष्टस्वरूपत्वम् अनिर्वचनीयत्वं वोपादीयेत। तथ्यं तु स्वप्नाज्जगतो विधर्मित्वमेव प्रतिपादयति। अत एव भास्कराचार्येणापि 'मायामात्रं तु'—इत्यस्मिन् सूत्रे 'ये पुनर्जागरितावस्थापि मायामात्रमिति आघोषयन्ति ते सूत्रकाराभिप्रायं नाशयन्तः श्रोत्रियजनं मोहयन्ति' इति प्रतिपादितम्। 'वैधर्म्याच्च न स्वप्नादिवत्' (२।२।२९)

---

१. अ० भा० (ब्र० सू० २।१।१४) पृ० १४४ (कलकत्ता सं०)

इत्यस्मिन् सूत्रेऽपि तेनैतत्तात्पर्यं स्पष्टीकृतम्—'ये तु बौद्धमतावलम्बिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः। यदि बाह्योऽर्थो नाभिप्रेतः स्यात् किमर्थमिदं यतते सूत्रकारः' इत्यादि। 'नाभाव उपलब्धेः' ( २।२।२८ ) इति सूत्रमपि एतदेव निर्दिशति यत् सूत्रकारानुसारेण न जगतो मिथ्यात्वम्। इत्थं यद्यपि जगतो मिथ्यात्वं नास्ति तथापि नैतेनैतदायाति यत्तस्य ब्रह्मणः पृथक्स्वतंत्रसत्ता वर्तते। एतदनुकूलैव तत्प्रवृत्तिः आरम्भणाधिकरणे समवलोक्यते। श्रुतिवाक्यमपि च 'मृत्तिकेत्येव सत्यम्' इति प्रतिपादयति न तु मृत्तिकैव सत्येति सूत्रकारोऽपि च तदनन्यत्वमिति प्रतिपादयति न तु तन्मिथ्यात्वं तदेकत्वं वेति।

एतेन शंकरस्य जगन्मिथ्यात्वसिद्धान्तो जगन्मायिकत्वसिद्धान्तो वा निरस्यते।

एतेनैतदवगम्यते यत्सूत्रकारस्य प्रायः स एव सिद्धान्तो यः शंकरेण 'तदनन्यत्वम्—( २।१।१४ ) इति सूत्रे—नन्वनेकात्मकं ब्रह्म, यथा वृक्षोऽनेकशाखः एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म इत्यारभ्य''''''मृदादयोऽर्थाः लोके समधिगताः'' इत्यन्तेन खण्डयितुं चेष्टितः। किन्त्वासु पंक्तिषु शंकरेण व्यक्तो भावो न सूत्रकारसिद्धान्तविरोधी, अपि तु तत्सिद्धान्तेनाधिकं समुपलभ्यमानसामंजस्यः। तस्य 'न हि एकस्य ब्रह्मणः परिणामधर्मत्वं तद्रहितत्वं च शक्यं प्रतिपत्तुम्' इत्ययमपि विरोधः 'श्रुतेस्तु शब्दमूलत्वात्' ( २।१।२७ ) इति सूत्रस्य जागरूकत्वेन निर्मूल एव। तस्य अन्येऽप्याक्षेपाः रामानुजनिम्बार्काद्याचार्यैर्यथास्थानं निरूपणपूर्वकं निरस्ताः, किन्तु ग्रन्थगौरवभीरिह तेषामुल्लेखाद् विरमयति।

'यत्र तु अस्य सर्वमात्मा एवाभूत् तत् केन किं पश्येत्' इत्येषा श्रुतिरपि न सर्वाभावमभिव्यनक्त्यपि तु आत्मनः सर्वभावमेव। ब्रह्मभूयंगतेऽपि सर्वस्मिन् न सर्वं सत्तारहितं संजायते अपि तु ब्रह्म–तदतिरिक्तवस्तुभिन्नत्वबुद्धिराहित्यपूर्वकं 'सर्वं खल्विदं ब्रह्म' इति बुद्धिरुत्पद्यते।

वेदान्तसूत्रस्यान्ये सर्वे वृत्तिभाष्यादिलेखकाः येन केनचिद्रूपेण परिणामवादं जगतः सत्यत्वं च येन केनचिद्रूपेण अवश्यमेव स्वीचक्रुः इत्येतदेव सुदृढतया इदं प्रमाणयति यद्विवर्तो जगन्मिथ्यात्वसिद्धान्तो वा सूत्रकाराभिमतो नासीत्। मायावादव्यग्रः शंकरः 'तदेवमविद्या-

१. शां० भा० ( ब्र० सू० २।१।१४ )

त्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्त्वं च न परमार्थतो विद्यया अपास्तसर्वोपाधिस्वरूपे आत्मनि ईशित्रीशितव्य-सर्वज्ञत्वादिव्यवहार 'उपपद्यते' एवं प्रतिपादयन् कस्मिन् भावप्रवाहे स प्रवहन् आस्ते इति सर्वं विस्मरति। एतदधिकरणीयान्यन्यान्यपि सूत्राणि पूर्वोक्तमेव भावं द्रढयन्ति। 'भावाच्चोपलब्धेः' (२।१।१५) इत्यस्य शंकरानुसारिणी एव व्याख्या एतत्तात्पर्यिका यत् जगदेतत्तन्तूनां पट इव ब्रह्मणः अवस्थान्तरम्। तथाहि 'इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणभावे एव कारणस्य कार्यमुपलभ्यते, नाऽभावे। तद्यथा सत्यां मृदि घट उपलभ्यते, सत्सु च तन्तुषु पटः'। इत्थं च पटस्य तन्त्वनन्यत्वमिव जगतो ब्रह्मणोऽनन्यत्वम्। एतेन सर्वथा स्पष्टमेतद् यत् शंकरस्य व्याख्यानुसारमेवात्र जगतोऽनन्यत्वस्य न मिथ्यात्वमर्थः अपि त्ववस्थान्तरत्वम्। अग्रिमं सूत्रम् 'सत्वाच्चावरस्य' (२।१।१६) इत्येतदपि जगतः सद्रूपत्वं प्रतिपादयत् कार्यकारणयोरनन्यत्वं द्रढयति। 'पटवच्च' (२।१।१९) 'यथा च प्राणादिः' (२।१।२०) एतत्सूत्र-द्वयमपि पूर्वोक्तमनन्यत्वं प्रमाणयति। रूपक्रिययोर्भेदो हि न किंचिदपि नवीनमुत्पादयति इति पटाकारसूत्राकारभिन्नत्वे प्राणादीनां च भिन्न-क्रियात्वेऽपि पटस्य तन्त्वनन्यत्वम्। उदानादीनां च प्राणवाय्वनन्यत्वम् इति सर्वं सूपपादम्। तथा च वल्लभः—'ज्ञानक्रियाभेदाच्चैतत्सूत्र-द्वयम्'।

'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (२।१।२४) तथा 'देवादिव-दपि लोके' (२।१।२५) इदं सूत्रद्वयमेतत्प्रतिपादयति यच्चेतनमेकम-द्वितीयं ब्रह्म क्षीरादिवद् देवादिवच्च अनपेक्ष्य बाह्यं साधनं, स्वयं परिणममानं जगतः कारणम् इति तन्नैसर्गिकशक्त्यैव जगदेतद्रचयति।

एवम्—'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (२।१।२६) तथा 'श्रुतेस्तु शब्दमूलत्वात्' (२।१।२७) एतत्सूत्रद्वयमेतत्प्रतिपादयति यत् यतो हि अविकृतब्रह्मणोऽस्तित्वं ब्रह्मपरिणामं च प्रतिपादयति, अतो न कृत्स्नप्रसक्तिर्नापि च निरवयवत्वशब्दकोपः। यतो हि ब्रह्मणि विचित्राः शक्तयो वर्तन्ते एतत् 'आत्मनि चैवं विचित्राश्च हि' (२।१।२८) इत्यनेन सूच्यते 'सर्वोपेता च तद्दर्शनात्' (२।१।३०) 'विकरणत्वान्नेति चेत्तदुक्तम्'

१. तत्रैव पृ० १०२२–२३

२. तत्रैव (ब्र० सू० २।१।१५) पृ० १०२५–२६

३. अणुभाष्यम् (ब्र० सू० २।१।२०)

( २।१।३१ ) एतत्सूत्रद्वयमेतत्प्रतिपादयति यत्तस्य ब्रह्मणः निरवयवत्वेऽपि सर्वशक्तिमत्त्वं प्रतिपदं प्रतिपादितं वर्तते । तथाहि—'अपाणिपादो जवनो 'ग्रहीता' एवम् 'सत्यसंकल्पः, आकाशात्मा, सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः'[2] । तस्मादेव ब्रह्मणः अस्य जगतः उत्पत्तिः तथा हि—

'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' ।
'तस्मादेतद् ब्रह्म' नामरूपमन्नं च [3]जायते ॥

अतः, 'विकरणत्वान्नेति चेन्न तदुक्तम्' ( २।१।३१ ) इत्यस्मिन् सूत्रे शंकरस्य 'प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणः सर्वशक्तियोगः सम्भवतीत्येतत् अविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव'[4] इत्येतत्प्रतिपादनं न कथमपि संगच्छते । श्रुतिप्रामाण्येन ब्रह्मणः सर्वशक्तिमत्त्वे प्रसाधिते शांकराभिमताविद्याकल्पितरूपभेदोपन्यासस्य सर्वथा सूत्रकारानभिमतत्वात् ।

निरीहं निष्कामं च ब्रह्म कुत एतन्निष्प्रयोजनतया जगदुत्पादयतीत्येतस्य प्रश्नस्योत्तरम् 'लोकवत्तु लीलाकैवल्यम्' ( २।१।३३ ) इत्यनेन प्रदत्तम् । शंकरेणेत्थं तत्सूत्रं व्याख्यातम्—'यद्यप्यस्माकमियं जगद्बिम्बरचना गुरुतरसंरम्भेवाभाति तथापि परमेश्वरस्य लीलैव केवलेयम् अपरिमितशक्तित्वात्' यदि नाम लोके लीलास्वपि किंचित्सूक्ष्मं प्रयोजनमुत्प्रेक्षेत तथापि नैवात्र किंचित्प्रयोजनमुत्प्रेक्षितुं शक्यते, आप्तकामश्रुतेः। नाप्यप्रवृत्तिरुन्मत्तप्रवृत्तिर्वा, सृष्टिश्रुतेः सर्वज्ञश्रुतेश्च ।'

व्याख्यानं चैतत्सर्वथा सूत्रकाराभिमतं किन्तु नैतद्विद्मो यदेवं समीचीनतया व्याख्यायापि तत्सूत्रं कथं स एव शंकरः एवं प्रतिपादितवान्—'न चेयं परमार्थविषया सृष्टिश्रुतिः अविद्याकल्पितनामरूपव्यवहारगोचरत्वात्, ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि नैव विस्मर्तव्यम् ।'[5]

एवं वेदाभिमतवाक्यैर्जगत उपादानकारणत्वप्रतिपादनपूर्वकं तद्वाक्यविश्वासेनैव ब्रह्मणो विकारत्वविरोधं निरस्यतेदानीम्—

'वैषम्यनैर्घृण्येन, सापेक्षत्वात्तथाहि दर्शयति ( २।१।३४ )
'न कर्माविभागादिति चेन्नानादित्वात्' ( २।१।३५ )

---

१. श्वे० उ० ३।१९ २. छा० ३।१४।२
३. मुं० १।१।९ ४. शां० भा० पृ० १०९१ (अ० प्र० मा० सं०)
५. शां० भा० पृ० १०९७

'उपपद्यते चाप्युपलभ्यते च' ( २।१।३६ )

एभिः सूत्रैरेतत्प्रतिपादयति यद् ब्रह्मणो निमित्तिकारणत्वेऽपि जगतः कर्तृत्वम् तत्र च धर्माधर्मावपेक्ष्य सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते। सृष्टौ केषांचिदत्यन्तसुखभाक्त्वे केषांचिच्चात्यन्तदुःखभाक्त्वेऽपि सृज्यमानप्राणिधर्माधर्मापेक्षया सृष्टेर्वैषम्येणेश्वरे वैषम्यनैर्घृण्ययोर्दुरुपपादत्वम। 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्[1] ;' तथा—

'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा[2]" इत्यादिश्रुतिस्मृतिभिः बीजांकुरन्यायेन जगत्प्रवाहस्यानादित्वोपलम्भात् सर्वसम्भवोपपत्तेः।

अन्तिमे सूत्रे 'सर्वधर्मोपपत्तेश्च' ( २।१।३७ ) इत्यत्र सूत्रकारेण ब्रह्मणः सर्वधर्मयुक्तत्वं प्रतिपाद्य सर्वधर्मविरोधपरिहारो विहितः। पूर्वस्मिन्नधिकरणे तेन जगत्प्रवाहस्यानादित्वं प्रतिपादितम् इति प्राणिनां धर्माधर्मापेक्षया जीवात्मनां सुखदुःखान्यतरविशिष्टत्वं न व्याहन्यते। किं त्वेतत्, 'सदेव सोम्य इदमग्र आसीत्[3] इत्येतस्या ब्रह्मणः एकत्वाद्वितीयत्वप्रतिपादकश्रुतेः साक्षाद् विरुद्धम्। सृष्टेः प्रागनया श्रुत्या अविभागावधारणात्। कर्मणोऽभाव इति तदपेक्ष्य सृष्टिवैषम्यस्य सर्वथा असम्भवः। इत्थं च सृष्ट्युत्तरकालं शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभागः इतीतरेतराश्रयत्वं प्रसज्येत् एतद्दोषापहाराय सूत्रकारस्य 'श्रुतेस्तु शब्दमूलत्वात्' ( २।१।२७ ) इत्यत्र प्रतिपादित एव मार्गोऽभिमतः, अर्थात् जगत्प्रवाहस्य अनादित्वेऽपि ब्रह्मणाऽद्वितीयत्वे नैकत्वे न च तस्य सर्वतंत्रस्वतंत्रत्वम्, स हि सर्वधर्मोपेत इति तस्मिंस्तथाभूतो न कश्चिद्विरोधः इति संक्षेपः।

शंकरस्य तर्कानुसारेण च सूत्रकारस्य ब्रह्मणि वैषम्यनैर्घृण्यनिराकरणं सर्वथा अनुपपन्नम्। तदनुसारं च वैषम्यनैर्घृण्ये परमात्मजीवात्मनोश्च कर्तृत्वमेतत्सर्वमविद्याजन्यम्। अविद्याविनाशे च सर्वं शून्यं सम्पद्यते। सविस्तरमेवं शंकरसूत्रकारयोर्मतानुशीलनेनेत्थं तदभिप्रायः संक्षेप्तुं शक्यते—

( १ ) सूत्रकारस्य मतमेतद्यत् एतज्जगत् ब्रह्मणः कार्यम्, सत्यं च।

( २ ) एतज्जगद्रचनायां ब्रह्मणो न किंचिदन्यत्प्रयोजनमपि तु केवलं लीलार्थमेव एतस्य सृष्टिः।

---

१. ऋ. सं० १०।१९०।३ २. गीता १५।३

३. छा० उ० ६।२।१

( ३ ) निरवयवमपि ब्रह्म बाह्यसाधनमनपेक्ष्यैव निजस्वाभाविकशक्त्या विश्वरूपेणात्मानं विपरिणमयन्न कांचिद् अपि विकृतिमापद्यते ।

( ४ ) उत्पत्तिस्थितिप्रलयाभिधासु तिसृष्वप्यवस्थासु जगतो ब्रह्मणोऽनन्यत्वम् ।

( ५ ) तस्य न ब्रह्मापेक्षया स्वतन्त्रा स्थितिस्तथापि न तदसत् नापि च मिथ्या ।

( ६ ) नायं संसारो ब्रह्मणो विवर्तः अपि तु स्वेच्छया लीलापूर्णस्तत्परिणामः ।

( ७ ) जगतो मूलान्वेषणे कस्यापि शरीरस्य कस्याश्चिदपि शक्तेः, प्रकृतेः, परमाणोः अविद्यायाः, मायायाः एतदपरस्य वा न कस्यापि कर्तृत्वम् ।

## सत्यत्वमिथ्यात्व-विचारः

किन्तु शंकरस्य मते जगदेतद् ब्रह्मणो विवर्तः, व्यावहारिकतयैव चैतस्य सत्यत्वम् । ईश्वर-सगुणब्रह्म-कार्यब्रह्मान्यतमशब्दव्यवहृतब्रह्मणश्चास्य निमित्तोपादानोभयकारणत्वम् । यथा चोक्तं वेदान्तसिद्धान्तमुक्तावल्याम् ।

> रज्जुर्यथा भ्रान्तदृष्ट्या सर्परूपा प्रकाशते ।
> आत्मा तथा मूढबुद्ध्या जगद्रूपः प्रकाशते ।।
> आत्मन्येव जगत्सर्वं दृष्टिमात्रमतात्त्विकम् ।
> उद्भूय स्थितिमादाय विनश्यति मुहुर्मुहुः'[1] ।।

विवेकचूडामणौ तु शंकरेण—'सद् ब्रह्म कार्यं सकलं सदेव,'[2] तथा, 'मृत्कार्यं सकलं घटादि',[3] तद्वा सज्जनितं सदात्मकमिदं सन्मात्रमेवाखिलम्[4] एवं कथमसतः, सज्जायेत इत्यादिना सतो ब्रह्मणः सर्वं कार्यं सदेवेति प्रतिपादितम् किन्तु[5] इयमिदानीमनुयुयुक्षा सम्पद्यते अपि कस्य चिन्मते जगन्मिथ्या वर्तते ? एतस्य चोत्तरं स्वीकारप्रतिषेधोभयात्मकत्वेन दातुं शक्यते । प्रष्टुश्च 'मिथ्या' शब्देन कः अभिप्रायः अत्रैवास्य अभिसन्धिः । तत्र जगतः सत्तैव न वर्तते अस्मिन्नर्थे न जगतो मिथ्यात्वम्, जगतो व्यावहारिकी सत्ता वर्तते नैतत्केनापि वेदा-

---

१. वे० सि० मु० पूर्वार्द्धे २१।२२ २. वि० चू० श्लो० २३२

३-४. तत्रैव श्लो० २५३

५. विवेकचूडामणिः सत्यशंकराचार्यरचित इत्यत्र सर्वथा सन्देहः ।

न्तिना स्वप्नेऽपि अस्वीकर्त्तुं शक्यते । शशशृङ्गवदाकाशकुसुमवच्च नैतज्जगदसत् शून्यं वा वर्तते । शंकरानुसारेण तु भ्रमस्वप्नपदार्थानामपि प्रातिभासिकसत्ता वर्तते—भ्रमज्ञानस्यापि वस्तुशून्यनिर्विषयत्वाभावात् । किन्तु मिथ्याशब्दस्य पारिभाषिकार्थग्रहणे अयं संसारो मिथ्या' इति कथनेन कोऽपि दोषः। सदसद्भिन्नत्वं (अनिर्वचनीयत्वं) हि मिथ्यात्वम् इति मिथ्याशब्दस्य पारिभाषिकः अर्थः। सत्त्वं च त्रिकालाबाधित्वम्। तच्च न वर्तते जगतः इत्यस्मिन्नर्थेऽवश्यं तन्मिथ्यात्वम्।

विज्ञानवादं खण्डयता शंकरेण 'वैधर्म्याच्च न स्वप्नादिवत्' (२।२।२९) इत्यस्मिन् सूत्रे भाष्ये स्पष्टमेतत्प्रतिपादितं यन्नैतज्जगत्स्वप्नवद्वर्तते—'वैधर्म्यं हि भवति स्वप्नजागरितयोः। किं पुनर्वैधर्म्यम् ? बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य......अपि च स्मृतिरेषा यत्स्वप्नदर्शनम् । उपलब्धिस्तु जागरितदर्शनम् । तत्रैवं सति न शक्यते वक्तुं मिथ्या, जागरितोपलब्धित्वात्; स्वप्नोपलब्धिवदित्युभयोरन्तरं स्वयमनुभवता"[1]... । इत्यादि ।

## जगद्विषये रामानुजाचार्यस्य धारणा

रामानुजमते ब्रह्मणा सह जगतोऽपि नितरां सत्यत्वम् । न च तस्य मायायाः व्यावहारिकविजृम्भणमात्रत्वम्; इति नित्यपारमार्थिकसत्ताकम् । किन्तु सदपि तत्परमेश्वराधीनं न स्वतन्त्रम्। अंशिनः परमेश्वरस्य[2] संसारोऽयमंशः । शरीरिणश्च तस्य जगच्छरीरम् इति शरीरं यथा आत्माधीनं तथैव जगदिदं परमेश्वराधीनम्। इत्थं चैकपरमेश्वर एव पूर्णस्वतंत्रः। एवं रामानुजसिद्धान्तोऽप्यद्वैतवाद एव किन्तु तस्य ब्रह्म न शंकरस्येव निर्गुणं, निर्विशेषं चिन्मात्रमपि तु सविशेषं सगुणमितीयान् भेदः। एतद्विशिष्टतायुक्तत्वेनैव हि स विशिष्टाद्वैतवाद उच्यते। यस्मिंश्च मते एतज्जगद् वास्तविकपरमेश्वरस्य वास्तविकी सृष्टिः।

जगतो मिथ्यात्वस्वीकृतिर्भ्रान्तिः । सतो ब्रह्मणो जायमानत्वात् अस्य जगतः सत्यत्वम्। प्रत्यक्षस्य ह्यस्य मिथ्यावादनं न कथमपि

---

१. शां० भा० ( ब्र० सू० २।२।२९ )

२. द्रष्टव्यम् 'अंशो नानाव्यपदेशात्'...इति सूत्रीयं श्रीभाष्यम्।
तथा 'सेक्रेड बुक्स आफ् दि ईस्ट (अष्टचत्वारिंशत्तमसंचिका) पृ० ५६०

शक्यते वक्तुम् । ब्रह्मपरिणामत्वेनास्य जलहिमशिलावत् व्यवहारः । जलस्य हिमरूपेणावस्थितिरिव ब्रह्मणो जगद्रूपेणावस्थितिः । काल-क्रमानुसारं च तस्यैव स्वकारणे विलीने तदस्तित्वाभावः । कारणस्य भगवतो नित्यत्वे हि तत्कार्येणापि अवश्यं नित्येन भाव्यम् । राजसम्पत्ति-विरहितो हि को नाम जनो राजा मन्येत ? इत्थमैश्वर्यमन्तरेण ( जग-द्रूपतदैश्वर्यस्य विनाशशालित्वेन विनाशे तदवस्थायां तद्राहित्येन ) कथमीश्वरस्य नित्यैश्वर्यसम्पन्नत्वं सम्भवेत् ? परमेश्वरो हि जगतो रक्षकः पालकश्चेति जगतो मिथ्यात्वे स मिथ्याजगतः पालको रक्षकश्च स्यात्, व्याप्याभावे च परमेश्वरस्य व्यापकत्वमपि व्याहन्येत ।

जगति स्थिता वयं स्वयमपि जगद्रूपा एवेति रात्रिदिवं दर्शनभक्षण-पानघ्राणस्पर्शनश्रवणेत्यादिक्रियाकलापव्यवहारव्याप्तस्यास्य जगतो मिथ्या त्वस्वीकारो जीवतोऽपि कस्य चित्पुरुषस्य 'मृतोऽहम्' इति व्यवहारवदसत्यः ।

संसारस्य मिथ्यात्ववादिनः पुरुषाः स्वप्नवदिदं जगन्मिथ्या आकल-यन्ति किन्तु स्वप्नस्य मिथ्याकलनमपि मिथ्यैव । स्वप्नो हि स्वप्न-दशायां न मिथ्या तदवस्थायाः सुखदुःखे हि तस्मिन् काले भुज्येते इति तदानीं तयोः सत्यत्वम् एवमेव जाग्रदवस्थायाः सुखदुःखे जाग्रद-वस्थायां भुज्येते इति तयोः सत्यत्वम् । उत्पन्नस्य हि सुतस्यानन्दस्य च पितुर्दुःखस्य एवमेवान्येषामपि लौकिकागणित सुखदुःखादीना-मनुभवः प्रतिदिनं क्रियते इति कथमेकपदे एवैतेषां मिथ्यात्वं कल्प्येत । एतासां व्यवस्थानां वैषम्यपरिपूर्णत्वेन परिवर्तनशीलत्वात् स्थायित्वा-भावेनापि मिथ्यात्वं वक्तुं न समीचीनम् । कार्यप्रपंचश्चैव ब्रह्मणः परिणामः इति परिवर्तनस्वभाव एवैषः । 'सूर्याचन्द्रमसौ धाता यथा-पूर्वमकल्पयत्' इति नियमेन दिवस्पृथिव्योः, सूर्याचन्द्रमसोरपि च सर्वदैकरूपावस्थितेरभावात् । इत्थं व्यष्टि-समष्टि सर्वरूपेणास्य जगतः सत्यत्वम्[1] इत्यत्र न कश्चित्सन्देहः । अयमेव भावः पाश्चात्येन दार्शनि-केन मैक्सहंटरहैरिसनमहोदयेनैकेन महता दार्शनिकतत्त्वविदुषा स्वकीये 'मॉनिज्म एण्ड प्लूरैलिज्म' इति ग्रन्थे इत्थं प्रतिपादितः—चिदचितो-रुभयोः सत्यत्वं ब्रह्माश्रितत्वं चेति न 'मिथ्यात्वम्'[2] ।

रामानुजसिद्धान्तः अधिकांशतः भेदाभेदसिद्धान्तं संवदते इति 'अंशो नानाव्यपदेशात्—इत्यादिसूत्रस्य श्रीभाष्यतः स्पष्टं प्रतीयते ।

---

१. रामानुजभक्तिदर्शनम् पृ० ३०

२. 'मॉनिज्म एण्डप्लूरेलिज्म' पृ० २१९

तथाहि—उभयथा हि व्यपदेशो दृश्यते। नानात्वव्यपदेशस्तावत्स्रष्टृत्व सृज्यत्व-नियन्तृत्व-नियाम्यत्व-सर्वज्ञत्वाज्ञत्व-स्वाधीनत्व-शुद्धत्वाशुद्धत्व-कल्याणगुणाकरत्वतद्विपरीत-त्वपतित्व-शेषत्वादिभिर्दृश्यते। अन्यथा चाभेदेन व्यपदेशोऽपि—'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिभिर्दृश्यते[1]।

किन्तु इत्थं नियम्यत्वेन, जगतो ब्रह्मणः शरीरत्वेऽपि, शरीरिणो ब्रह्मणो जागतिकदोषराहित्यम्, सशरीरत्वे कर्मपारवश्यस्य अनैकान्तिकतया सत्यसंकल्पस्य ईश्वरस्येच्छामात्रेणैव तदिच्छानुरूपशरीरसम्बन्धसम्भवात्। स्पष्टीकृतश्चायमेव भावः 'अन्तस्तद्धर्मोपदेशात्' (१।१।२०) इति सूत्रे श्रीभाष्ये रामानुजेन—'परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकान्तज्ञानानन्दैकस्वरूपेत्यादिना आरभ्य—नारायण[2] इति पर्यन्तम्।

एवं च शरीरिणो जीवात्मनो दोषयुक्तत्वेऽपि न ब्रह्मणोऽपि सशरीरत्वे सदोषत्वम्। एतदेव रामानुजाचार्येण 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (१।२।८) इति सूत्रे श्रीभाष्ये इत्थं समाहितम्—'जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्तित्वमभ्युपगतं चेत्, तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्तन्न हेतुवैशेष्यात्—......तथा च श्रुतिः 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यः[3] अभिचाकशीति'। न हि ब्रह्मजीववत्कर्म करोति। जीवो हि कर्म करोतीति तत्फलभाग् भवति। ब्रह्मणस्तु कर्म केवलं लीलैव न तत्कर्मणस्तत्र कश्चित्प्रभावः। तत्कर्म च केवलं सर्गस्थितिनाशार्थमेवेति ब्रह्मणः शरीरमपि संसारः कारणतया ब्रह्मसम्बद्ध एव तत्परिणामः। स्पष्टं चैतत् 'परिणामात्' इति सूत्रे श्रीभाष्ये—'एवं स्वस्मात् विभागानर्हतया परमात्मनैकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरात्—जगदाकारेण परिणामः[4] श्रूयते।

रामानुजमतेनेत्थं जगतः परिणामे स्वीकृतेऽपि नात्रोपदिश्यमानस्य परिणामस्य परस्मिन् ब्रह्मणि दोषावहत्वम् प्रत्युत निरंकुशैश्वर्यावहत्वमेवेत्यभिप्रायः। एवमेव हि परिणामः उपदिश्यते—'अशेषहेयप्रत्यनीककल्याणैकतानं स्वेतरसमस्तवस्तुविलक्षणं सर्वज्ञं सत्यसंकल्पम्...... यं पृथिवी[5] न वेद'।

---

१. रा० भा० पृ० २८३ २. रा० भा० पृ० १३८
३. तत्रैव पृ० १५१ ४. तत्रैव पृ० २१५
५. तत्रैव पृ० २१४

ब्रह्मपरिणामत्वेनेदं जगत् ब्रह्मव्याप्तमिति स्वीकृत्य ब्रह्मण एकत्व-स्वीकृतावपि नैतस्यैषोऽभिप्रायो यज्जगतः सत्तैव न वर्तते। वेदवाक्यानां प्रत्यक्षरप्रमाणत्वेन तत्रैवैकत्वानेकत्वोभयवाक्योपलम्भेऽपि शंकरमते-ऽभेदप्रतिपादकश्रुतीनामेव प्रामाण्यात् भेदकल्पनायाः असत्यत्वात्।

रामानुजाचार्यमते च भेदाभेदप्रतिपादकोभयश्रुतीनां प्रामाण्यम्। तयोरेकतरभावप्रतिपादकवाक्यानां प्रामाण्यमितरेषां चाप्रामाण्यमित्य-स्यासमीचीनत्वात्। व्यक्तेः (देवदत्तादेः) एकत्वे अपि शरीरशरीरित्वेन तत्रापि भेदस्य स्पष्टत्वमिति भेदाभेदोभयप्रतिपादकश्रुतिषु न परस्परं भेदः। अभेदप्रतिपादकवाक्यानि हि एकस्मिन् त्रीणि प्रतिपादयन्ति, भेदप्रतिपादकानि च पार्थक्येन तानीतीयान् विशेषः। इति जगतो मिथ्यात्वकल्पना भ्रान्तिः। अत एव निम्बार्काचार्येण 'परिवर्तन शीलत्वेऽपि न जगतो मिथ्यात्वमपि तु सत्यत्वम्'' इत्युक्तम्।

## जगद्विषये निम्बार्कस्य धारणा

एतद् दृश्यमानं जगत्कस्मादुदपद्यत, कश्चास्योत्पादकेन सहास्य-सम्बन्ध इति विचारशीलस्य मानवमस्तिष्कस्य साधारणः प्रश्नः, तत्रान्य-भाष्यकाराणां सतीष्वपि प्रातिस्विकधारणासु निम्बार्कस्यैतत्कथनं यत् दृश्यमानमेतज्जगत् नाकस्मादुदपद्यत—उत्पन्नस्य हि वस्तुनः पूर्ववर्ति-यत्किंचित्स्वोपादानावलम्बनपूर्वकत्वनियमात्। कारणं विना च कार्य-स्योत्पत्त्यसम्भवात्। सुतरां नैतदनुमानेनापि सिध्यति यत् एतज्जगदे-कान्तासदवस्थातः अकस्मादुदपद्यतेति।

'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्। तद्धैक आहुरसदेवैक-मग्र आसीत् एकमेवाद्वितीयम्, (१) तस्मादसतः[2] सज्जायत'। (२) कुतस्तत्सौम्यैवं स्यादिति हो वाच कथमसतः सज्जायेतेति। सत्त्वेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्। (३) ब्रह्म वा इदमग्र[3] आसीत्, (४) 'आत्मा वा इदमग्र आसीत्। नान्यत्किंचन मिषत्' इत्याद्यनेकश्रुतयः ब्रह्मणो जगदुपादानत्वमुपदिशन्ति इति तदेव ब्रह्म जगद्रूपेण प्राकाशतेति निश्चीयते। तैत्तिरीयोपनिषदो भृगुवल्ल्यां 'भृगुर्वै-वारुणिः ब्रह्मज्ञानार्थं वरुणं पितरमुपससार, तस्मा एतत्प्रोवाच अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम् इति। तं होवाच 'यतो वा इमानि भूतानि

---

१. निं० भा० ६७० २. छा० ६।२।१

३. बृ० १।४।१०

जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति। क्रमशः स तपस्तप्त्वा अन्ते आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसम्वि-शन्तीति निश्चितवान्। इत्थं चाभिरन्याभिरपि श्रुतिभिरानन्दस्वरूपं ब्रह्मैव जगतो मूलमुपादानं सिध्यति। किन्तु यदुपादानं वस्तु न तत्स्वोपादानतो भिद्यते अपि तु तत् स्वोपादानवस्तुरूपान्तरमात्रम्। सुवर्णनिर्मित-वलयकुण्डलादीनां सुवर्णस्यैव रूपविशेषवत् नामरूपमात्रस्यैव तत्र वैशिष्ट्यात्। इत्थं च कार्यस्थानीयवस्तुनः स्वोपादानकारणस्वरूप-त्वेन रूपान्तरनामान्तरमात्रत्वात् तदुपादानवस्तुनः स्वरूपे गुण-समूहे च सम्यग्ज्ञाते सति तदुपादानीयसर्ववस्तुज्ञानं सम्भवति। एतत्त-थ्यमिथ्यं श्रुत्या दृष्टान्तेन स्वयं प्रकाशितम्—यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव तु सत्यम्[1]।

इत्थं च कार्यस्थानीय-वस्तुनस्तदुपादानकारणवस्तुनश्च वस्तुगत्या अभिन्नत्वम्। भगवता वेदव्यासेनापि च पूर्वोक्तश्रुत्याधारेण 'तदनन्यत्व-मारम्भणशब्दादिभ्यः' (२।१।१४) इति सूत्रं विरचय्य पूर्वोक्तमेव दृढी-कृतम् द्वितीयाध्यायप्रथमपादे पूर्वोक्तसूत्रपरवर्तिसूत्रपंचके एषैव मीमांसा पुष्टीकृता 'यथा च प्राणादिः' (२।१।१९) इति सूत्रे श्रीमच्छंकराचार्येणा-प्येतदेवोक्तम्—'अतश्च कृत्स्नस्य जगतो ब्रह्मकार्यत्वात् तदनन्यत्वाच्च सिद्धैषा श्रौती प्रतिज्ञा—'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञा-तमिति'[2]।

इत्थं च जगदुपादानकारणत्वेऽपि जगदपेक्षया ब्रह्मणो व्यापकत्वेन जगतस्तदंशमात्रत्वम्। वस्तुगत्या तु ग्रन्थारम्भ एव भगवता सूत्रकारेण ब्रह्मणो जगदुपादाननिमित्तोभयकारणत्वं प्रतिपादितमिति तस्य व्याप-कत्वं जगतश्च व्याप्यत्वेन तदंशमात्रत्वम्। यथा च घटोपादानकरण-मृत्तिकाव्यापकं वस्तु घटश्च मृत्तिकाया व्याप्यम् इति तस्या अंशमात्रम्; एवं जगदपि स्वकारणस्थानीयब्रह्मणोंऽशमात्रम्।

एतदवश्यमेव वक्तुं शक्यते यत् कारणस्थानीयं वस्तु यथा सर्वात्मना परिवर्तितं कार्यवस्तुरूपे परिणतं संजायते तथैव रीत्या ब्रह्मापि सर्वा-त्मना परिवर्तितं जगद्रूपेण आत्मानं पर्यणमयत्, किन्तु नैतत्संगतम्—

---

1. ऐ० उ० प्र० खण्ड  2. छा० ६।१।४

यतो हि श्रुतिभिः सूत्रकारेण वा न क्वापीत्थं निर्दिष्टं यत् ब्रह्म जगतः केवलं सृष्टिमेव करोति अर्थात् जगद्रूपेण तत्प्रकाशितमात्रं करोति अपि तु तज्जगत्प्रकाश्य, परिचालयत्, नियमयत् चान्ते तल्लयसाधनमपि करोति इति। वस्तुगत्या प्रतिमुहूर्तं परिवर्तमानं जगत् नूतनाकारेण प्रकाशमानं संजायते इति ब्रह्मणो लयकारिणी शक्तिरपि सदा तत्र वर्तमाना विनाशकार्यं सर्वदा सम्पादयति। एतौ च सृष्टिप्रलयौ तस्य ब्रह्मणः स्वरूपगतस्थितिसाधिकया नियन्तृत्वशक्त्या पुनः नित्यं नियम्येते इति जगन्मात्रे एव ब्रह्मसत्ता न पर्याप्नोति अपि तु जगत् प्रकाशितं कृत्वा तत् जगदतीतरूपे वर्तते। एतच्च तत् जगदतीतरूपं नैतत्स्थूलसूक्ष्मरूपेण प्रकाशितमेतज्जगत्, 'पादोऽस्य विश्वाभूतानि', 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यादि श्रुतिस्मृतिषु स्पष्टतया तदुक्तेत्वात् तदितरदपि इति निश्चीयते, बृहदारण्यकोपनिषदः द्वितीयाध्यायस्य तृतीयो ब्राह्मणः सर्व एतद्विषयकः। तत्र गार्ग्येण बालाकिना पृष्टोऽजातशत्रू राजा शरीरस्थाधिकरणादि समुपवर्ण्य तृतीयब्राह्मणे ब्रह्मणः सम्पूर्णस्वरूपं वर्णयितुं प्रावर्तत। तत्र च तृतीयब्राह्मणस्य प्रथमवाक्ये उक्तम्।

'द्वे बाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च। मर्त्यं चामृतं च स्थितं च, यच्च सच्च त्यच्च।'

अयं भावः—ब्रह्मणः स्वरूपद्वयम्—मूर्तं ( मूर्तिमत् ) अमूर्तम् ( मूर्तिहीनं ) सूक्ष्मं च; एकं मर्त्यं दृष्टतो मरणधर्मम ( परिवर्तनशीलम् ) द्वितीयं च अमर्त्यम् ( दृष्टतः अपरिवर्तनशीलम् ), एकं स्थितम्, स्थिरम् दृष्टिगोचरयोग्यम्, द्वितीयं च यद्गमनशीलम्, एकं सत् विशेषवस्तुरूपावस्थितम्, द्वितीयं च त्यत् अनिर्देश्यम् अप्रत्यक्षयोग्यम्।

ब्रह्मणः स्वरूपस्येदं वर्णनं तस्य जगद्रूपवर्णनम्। अतः परं द्वितीयतः पंचमवाक्यपर्यन्तमेतद्विशेषेण स्पष्टीकृतं वर्तते। तथाहि तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यम् ( क्षित्यप्तेजांसि ) एतत्स्थितम् एतत् सत्।

तृतीयस्मिन् वाक्ये चोक्तम् अथामूर्तं वायुश्चान्तरिक्षं चेत्यादि।

चतुर्थवाक्ये च—अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्चेत्यादि। अतः परं पंचमवाक्ये—अथामूर्तं प्राणश्चेत्यादि।

वस्तुतः क्षित्यप्तेजोरूपस्यैव स्थूलभूतत्रयस्यास्तित्वं स्पष्टतो दृश्यते। आकाशश्चातिसूक्ष्मं निरवयवं सर्वव्यापकं वस्तु इति केनापि विशेषवस्तुरूपेणेन्द्रियादिना नानुभवितुं शक्यते। सूक्ष्मत्वाच्च वायुरपि न कथमपि अवयवविशिष्टरूपेणानुभवविषयः इति पूर्वमेव पृथिव्यादिस्थूलभूतत्रयमेव

मुख्यरूपेण ब्रह्मणः स्थितिशीलं मूर्त्तरूपमुक्त्वा वायुराकाशश्च तस्यामूर्त-रूपं श्रुतिभिः प्रतिपादितम्। तदनन्तरम् पादस्यान्तिमे षष्ठवाक्यप्रथमांशे हरिद्रारञ्जितवस्त्रसदृशपीतवर्णनादिना तस्य पुरुषस्य रूपं वर्णयित्वापि नैतत्सर्वसन्तापहारकमोक्षप्रदं रूपमपि तु सुतरां परिच्छिन्नमितिमोक्ष-मुद्दिश्यैव ब्रह्मजिज्ञासायां पश्चाद्वर्तिन्यः। अथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत् परमस्त्यथ नामधेयं सत्यस्य सत्यमिति। प्राणा वै सत्यम्। तेषामेष 'सत्त्वम्' इत्यादिश्रुतयो ब्रह्मणो मोक्षप्रदं रूपं वर्णयितुं प्रवृत्ताः। एतस्य वाक्यस्यैतत्तात्पर्यं यत् मूर्तं चामूर्तं च (स्थूलं सूक्ष्मं च) एतदुभयम् उभयोरेतयोः सारभूतः पुरुषश्चै-तत्सर्वं ब्रह्मण एव स्वरूपम्। किंतु एतद् तिरिच्य 'सत्यस्य सत्यम्' एतन्नाम्ना प्रसिद्धं तस्य अपरमपि श्रेष्ठं रूपम्। सत्यपि जगद्रूपित्वे तदतीतरूपेऽपि ब्रह्म स्वयं वर्तते इति जगतो ब्रह्मांशत्वेन वर्णनं श्रुते-रभिप्राय एतन्निःसन्देहम्। पूर्वोक्तषष्ठवाक्यान्तिमांशमेवाभिलक्ष्य भगवान् सूत्रकारस्तत्सिद्धानुकूलमेव—

'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' (३।२।२२) इति सूत्रं विरचितवान्। अनेन च सूत्रेण एतत्प्रमाणितं यत् 'अथ नामधेयं सत्यस्य सत्यं, प्राणा वै सत्यम्, तेषामेष सत्यम्' एतस्याः श्रुतेः, जगतः मिथ्यात्ववर्णने, न तात्पर्यम् अपि तु जगतः अपि ब्रह्मण एव एकं रूपं स्पष्टतया उक्त्वा भगवता सूत्रकारेण एतत्प्रमाणितं यत् जगद् ब्रह्मणोंऽशमात्रमिति सुतरां तेन सह ब्रह्मणा भेदाभेदसम्बन्धः।

## जगद्विषये मध्वाचार्यस्य धारणा

मध्वमते प्रकृतिः जगतः उपादानकारणम् ईश्वरश्च निमित्तकारणम् इति तत्सृष्टिः सांख्यसमानैव वर्तते। एतन्मते एतज्जगत् शंकरसिद्धान्ते इव न मायिकमपि तु सत्यम्, परमात्मा च तन्नियामकः। कालदृष्ट्या च तदसीमसत्ताकम्। ज्ञानं हि यदा न निर्विकल्पं तदा तद्विषयस्य दृश्यस्य वा अवश्यमेव सत्यत्वम्। ज्ञेयस्य सत्यत्वमन्तरा न ज्ञानस्य स्फूर्तिः। तस्यैतत्कथनं यत् कार्यं क्षणिकमपि सत्यम्। सत्यस्य ज्ञानं विना नासत्यस्य ज्ञानम्। 'एतदस्ति' इति प्रामाणिकज्ञाने एव 'एत-न्नास्ति' एतज्ज्ञानं प्रतिष्ठते। एतन्नास्ति इति कथनेनैव यस्य कस्य चिदपि वस्तुनः सत्ता प्रमाणीक्रियते। यदसत्यं न तज्ज्ञानस्य विषयः

१. बृ० २।३।६

भवितुं शक्नोति । न तन्मिथ्याज्ञानस्यापि विषयो न चापि कार्यकारण-भावसम्बन्धेन सम्बद्धं भवितुं शक्नोति इति जगतो मिथ्याप्रतिपादकाः कार्यकारणनियमानुल्लंघयन्तः स्वप्रतिज्ञाविरोधं कुर्वन्ति ।

इत्थं मध्वमते एतत् जगद् रज्जौ सर्प इव न मिथ्या तथापि घट इव विनश्वरं वर्तते । किन्त्वेतदिहावधारणीयं यद् यद्यपि जगन्न मिथ्या तथापि तत्सत्यमपि नास्ति । त्रिकालाबाधितसत्ताकमेव हि सत्यम्, सत्यं च तदेव यन्न मिथ्या इत्येवंभूता सत्यता केवलम् ईश्वरे तदीय-शक्तौ चैव सम्भवति—'ततो विवर्तवादिनामिव रज्जुसर्पवन्न मिथ्यात्वम्, किन्तु घटवन्नश्वरत्वम् एव तस्य । ततो मिथ्यात्वाभावे अपि त्रिकाला-व्यभिचाराभावाज्जगतो न सत्यत्वम्, विवर्तपरिणामासिद्धत्वेन तद्दोष-द्वयाभाववत्येव हि वस्तुनि सत्त्वम् विधीयते यथा परमात्मनि 'तच्छक्तौ वा' ।

'सदेव सोम्येदमग्र आसीत्' इत्यत्र 'सत्' शब्दो ब्रह्मणः तत्सूक्ष्म-शक्तेश्च द्योतकः इति उपनिषदः प्रतिपादयन्ति । परमात्मनः सूक्ष्मशक्तिः विभिन्नरूपेषु आत्मानं प्रकटीकरोति इत्याधारेण सत्कार्यवादसिद्धान्तः उत्तमो वक्तुं शक्यते किन्तु प्रश्नः अयमुपतिष्ठते यद् यदि जगतः उपादानम् 'सत्' अस्ति तदा अनेन जगता अपि स्वकारणेन इव नित्येन भाव्यम् । यदि च तदनित्यं तदा कथं न शुक्तिरजतमिव प्रातिभासिकत्वेन मिथ्येति फलतः विवर्तसिद्धान्तः किमर्थं न प्रामाणिको मन्येत । एतस्यैतदुत्तरं यत् कार्यकारणगुणयोः समानत्वं न निश्चित-रूपेण वक्तुं शक्यते तद्धि व्यभिचरितम् । अग्निकिरणेषु हि न दाहकता-शक्तिरवलोक्यते एवमेव शुक्तौ प्रतीयमानमपि रजतं प्रातिभासिकतया रजतत्वेन प्रतीयमानमपि नालंकाराद्युपयोगीत्येवमगणितवस्तु कार्य-कारणत्वेन विशेषगुणवत्त्वेऽपि वस्तुगत्या विभिन्नकार्यत्वम् । एवमेवा-त्रापि एकस्य वस्तुनः मिथ्यात्वेन प्रतीयमानत्वेऽपि मिथ्यात्वगुणान-भिभूतत्वेन तन्नैसर्गिकगुणवत्त्वं सम्भवति ।

दृश्यमानमेतत्सत्यं जगद् यद्यपि निःसन्देहं परिवर्तनशक्तिसम्पन्नं तथापि नश्वरम् । किन्तु नश्वरशब्देनेह एतत्तात्पर्यं यत् एतज्जगत्स्व-प्रकृतौ—परमात्मशक्तौ, यतश्च तदुत्पद्यते, व्युत्क्रमेण पुनरपि लयं याति । एतज्जगदस्माकं प्रयोजनानि साधयति इति अनेन सहास्माकं दर्शन-

१. षट्सन्दर्भः पृ० २५५

स्पर्श-घ्राणादिव्यवहार एव केवलं नास्य सत्यत्वे प्रमाणम्। अस्माकं क्रियात्मकव्यवहारा हि जागतिकवस्तूनां सत्यतारहितान्धपरम्पराणामाधारेष्वपि प्रवर्तितुं शक्यन्ते। पारस्परिकविश्वासनिहितपरम्पराप्रवाहो जागतिकवस्तूनां सत्यत्वं तदीयं विषयचैतन्यत्वं वा विनैव केनाप्याधारेण प्रमाणयितुं न सम्भवति इति परम्पराप्रवाहस्तेषां प्रामाण्यमपि प्रमाणयितुमक्षमः। 'इत्थं चैतज्जगन्नासत्यं नापि च नित्यम् किं च, सत्यमपि न अनेनैव दृश्यमानरूपेण सर्वकालावस्थायि अपि तु अन्ते पुनरपि परमात्मनः शक्तौ लीयमानं स्वकीयाव्यक्तदशां परावर्तते। अस्मिन्नर्थे सत्कार्यपरिणामयोरुभयोः सिद्धान्तः प्रामाणिकः"।

एतत्प्रतिपादनं तु सर्वथा असंगतं यत् आदौ मुख्यतया न कथमपि सत्ता आसीत् तथा अन्तेऽप्येतत्सर्वथैव समाप्स्यति। शाश्वतसत्यं हि सर्वदैवैकात्म्यरूपेणैकविधमानन्दमयं तिष्ठति इति जगदेतच्छुक्तिरजतमिव प्रातिभासिकं वक्तुं न शक्यते। अतः कारणादेव संसारः ब्रह्मपरिणामो न तु सर्प इव तद्विवर्तो व्याख्यायते। स्वकीयालौकिकशक्तिसम्पन्नः परमात्मा एकाकी सन्नपि जगत् सृजति। स्वरूपसामर्थ्यादेव च तस्य सृष्टिः। साधनमन्तरेणापि च स्वेच्छयैव स सर्वं कर्तुं स्वतन्त्रः अत एव तदनन्यत्वमारम्भणशब्दादिभ्यः (२।१।१४) इति सूत्रे भाष्ये मध्वेनोक्तम्—

परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते।
साधनानां साधनत्वं यतः किं तस्य [2]साधनैः॥

षट्सन्दर्भे चायमेवभाव इत्थमभिव्यक्तः—'अतोऽचिन्त्यसंख्यास्वरूपादच्युतस्यैव तव परिणामस्वीकारेण द्रविणजातीनां द्रव्यमात्राणां मृल्लोहादीनां विकल्पा भेदा घटकुण्डलादयस्तेषां पन्थानो मार्गाः प्रकारास्तैरेवास्माभिरुपमीयते न तु कुत्रापि भ्रमरजतादिभिः" ।[3] इत्थं च परमात्मनः जगतो मूलकारणत्वस्वीकृतिरसंगता। यदि चैतज्जगत् शाश्वतम्—यथा च एतदस्त्येव–तदा कारणात्मकप्रक्रिया निरर्थैव; यदि च नितरामसत् तदा तथाभूतस्य जगतः उत्पादनविषयककारणप्रक्रियाविचारः अपि व्यर्थः अतश्च एतज्जगत् न सर्वथा सत् नापि च सर्वथाअसत् अपि त्वव्यक्तरूपेणासत्। मृत्पिण्डे अव्यक्तरूपेण घटस्तिष्ठति, परमात्मनो नैसर्गिकशक्त्याश्च विनिश्चितविधप्रक्रियया तद्वास्तविकं

---

१. तत्रैव पृ० २५९ २. म० भा० (ब्र० सू० २।१।१४)
३. षट्सन्दर्भः पृ० २६०

रूपं धारयति ( वास्तविकरूपेणाभिव्यक्तो भवति ) अतः सकलाज्ञानोत्पादिका जीवात्मनो माया परमात्मनः शक्तेः कारणमिति स्वीकृतिः सर्वथा असंगता । परमात्मा स्वतन्त्रः, सर्वशक्ति सम्पन्नः सर्वस्रष्टा, सर्वसांसारिकवस्तूनामाश्रयश्च वर्तते इति जीवात्मनः स्वशक्त्या अज्ञानेन वा अस्य जगतो रचनाकल्पना सर्वथा असमुचिता। परमात्मा वस्तुतः सत्यः इति स न किमपि मिथ्या वस्तु समुत्पादयति—'सत्यस्वाभाविकाचिन्त्यशक्तिः परमेश्वरः तुच्छमायिकमपि न कुर्यात्'

## जगद्विषये वल्लभाचार्यस्य धारणा

जगतो विषये वल्लभः अविकृतपरिणामवादी वर्तते । जगद् वस्तुतः ब्रह्मात्मकमेव । चिदानन्दयोस्तिरोधाने केवलेन सद्रूपेणैव ब्रह्मणोऽभिव्यक्तिर्जगदुच्यते । तद्रूपेण ब्रह्मणः आविर्भावतिरोभावावेव सृष्टिप्रलयौ ब्रह्मरूपेण च जगत् नित्यं सत्यं च वर्तते न मायामिथ्या स्वरूपम् । सृष्टिः प्रलयश्च ब्रह्मण एव शक्तिः । शक्तेश्च शक्तिमता सहाभेदसम्बन्धः इति जगन्न मिथ्या नापि च ब्रह्मणः नितरां भिन्नम् । अहिकुण्डलवच्च ब्रह्मणा सह जगतोऽभेदसम्बन्धः । कुण्डलादिरूपेषु परिणतेऽपि सुवर्णे विकारोत्पत्त्यसंभवादिव जगद्रूपे परिणतेऽपि ब्रह्मणि न कोऽपि विकारः । इत्थं च जीवजगदादिसर्वं ब्रह्मस्वरूपमेवेत्येकमद्वैतं सच्चिदानन्दस्वरूपं ब्रह्मैव परमं तत्त्वम् । समस्ता सृष्टिश्च तल्लीलाविलासः। भगवान् श्रीकृष्णश्च परब्रह्म । अनन्तालौकिकगुणसम्पन्नत्वेन च स पुरुषोत्तमः इति तद्धारणासंक्षेपः ।

इत्थं पूर्वोक्तरीत्या सर्वाचार्याणां जगद्विषयकधारणासु दृष्टिपातेनैतत्समायातं यत्तेषु शंकरः—विवर्तवादस्य पक्षपाती वर्तते । अस्य मते कारणं प्रातीतिकरूपेण स्वं कार्यरूपे परिणमयति । अज्ञानस्य ( मायायाः ) आवरण-विक्षेपनामकशक्तिद्वये आवरणशक्तिः कारणस्वरूपं ब्रह्म तथैव रीत्या स्वशक्त्या प्रमातुर्दृष्टिमवष्टभ्य तद्दृष्टिः सच्चिदानन्दरूपं पिधत्ते यथा स्वल्पोऽपि पयोदखण्डः समक्षमागत्यानेकयोजनमायतमप्यादित्यमण्डलमालोकयितृनेत्रपथतः अवरुणद्धि । अज्ञानस्य (मायायाः) विक्षेपनामकद्वितीयशक्तिकारणेन तदेवैकं ब्रह्म जगद्रूपेण तथैवावभासते यथा अन्धकारे पतिता सर्पाकारा रज्जुः साक्षात्सर्परूपेणैवावभासते, इत्थं कारणकार्ययोर्वस्तुगत्यैकत्वेऽपि तयोः परिणतिः प्रातिभासिकी, शंकरानुसा-

---

१. तत्रैव पृ० २६२

रेणास्य सिद्धान्तस्यैषा विशेषता यत् अयमेतत्प्रतिपादयति यत् एकमेव ब्रह्म अस्य जगतो निमित्तमुपादानं चोभयं कारणं सदपि तदन्तर्यामि तद्बहिर्भूतं च कथं भवितुं शक्नोति। शंकरस्यैतत्कथनं यदयं विवर्तवाद एव। सगुणनिर्गुणोभयप्रतिपादकश्रुतिषु सामञ्जस्यं संस्थापयन् सांसारिकतां विस्तरेण व्याख्याय नित्यशुद्धबुद्धनिष्कलंकमखण्डं च ब्रह्म निर्दिशति।

## आलोचना—

सूक्ष्मरीत्या आलोचनेनेत्थं ज्ञायते यदयं सिद्धान्तः अत्यन्तदोषपूर्णः वर्तते। विवर्तवादो हि कारणतास्वीकारापेक्षया तदस्वीकार एव, अयं हि विश्वस्य स्थिरीभूतं स्वरूपं मुख्यतः प्रदर्श्य तदीयप्रगतिशीलं स्वरूपं नितान्तमप्रधानयति। स च मायावादं शिक्षयमाणः एतत्प्रमाणयति यत् एतद्विश्वं पटचित्रमात्रं तदपेक्षया निर्गुणं निर्विशेषब्रह्ममात्रं चैवैकं नित्यसत्ताकम् यस्य वर्णनं केवलं 'नेति नेति' इत्यादिनैव कर्त्तुं शक्यते। ब्रह्मजीवनिरूपणावसरे वल्लभेनास्य सिद्धान्तस्य पुनः पुनः आलोचना कृता। मायावादस्य खण्डनं हि तस्यैकमात्रमुद्देश्यमासीत्। निम्बार्केणापि अस्य एवमुक्त्वा तीव्रालोचना कृता यदयं नास्तिकताप्रवर्तकः[1] सिद्धान्तः।

## कारणसिद्धान्ते वैष्णवाचार्याः—

सम्पूर्णवैष्णवानां कारणसिद्धान्तः शंकरकारणसिद्धान्तापेक्षया नितरां भिन्नः। तेषामेतत्कथनं यत्कारणं स्वयमेव आत्मानं कार्यरूपे परिणतं करोति, परिणामश्चायश्च सत्य इति परमात्मरचितोऽयं संसारः, एतस्य वस्तूनि, अत्रत्यक्रियाप्रतिक्रियाश्चैतत्सर्वं सत्यम्। अयं च परिणामवादः सांख्याभिमतपरिणामवादापेक्षया अस्मिन्नंशे नितरां भिन्नो यत्सांख्यमते जडा प्रकृतिरात्मानं विश्वरूपे अभिव्यक्तीकरोति किन्तु वैष्णवाचार्यमते चेतनं ब्रह्मस्वकीयमेकमंशं जगद्रूपे परिणतं करोति इत्ययं सिद्धान्तो ब्रह्मपरिणामवादो वक्तुं शक्यते।

## रामानुजः—

रामानुजस्यैतत्कथनं यत् चित् (जीवः) अचित् (जगत् च) सूक्ष्मरूपेण ब्रह्मणि वर्तेते। विश्वरचनाकाले एतत्तत्वद्वयं चेतनजीवात्मनां

---

१. उमेशमिश्रः—निम्बार्कफिलासफी पृ० १८–१९

जडजगतश्च रूपे परिणमयति। परिणामस्य च सत्यत्वादेतज्जगदपि सत्यम्। कारणसिद्धान्तस्यैतत्तात्पर्यं यत्कारणं स्वयमेव आत्मानं परिवर्त्य अन्तर्निहितशक्तीः कार्यरूपेण अभिव्यंजयति[1]।

## आलोचना—

अस्मिन् विचारे अयं दोषो यदत्र ब्रह्मणो जडचेतनस्य च सम्बन्धो न स्पष्टः। अपि तत् चित् अचित् च ब्रह्मणा समाने ? यद्येवं तदा एतत्कथनं व्यर्थमेव यत् प्रलयावस्थायामपि ते सूक्ष्मरूपेण वर्त्तेते। यदि च ते ब्रह्मणः पृथक्, तदा स्पष्टतया तयोः द्वित्वभावनाया विचित्र-दोषदुष्टत्वात् ते 'सर्वं खल्विदं ब्रह्म' एतदौपनिषदभावनाविरुद्धे इति नितरामेकत्वहानिः।

## निम्बार्कः—

निम्बार्कस्य एतत्कथनं यत् चित् अचिच्चैतत्तत्त्वद्वयमपि परमात्मनः शक्तिद्वयम्। ब्रह्मणो बह्वीषु शक्तिषु उक्तमपि शक्तिद्वयम्। एषा सम्पूर्ण-सृष्टिरस्यैव शक्तिद्वयस्याभिव्यक्तिरिति कारणसिद्धान्त एकस्याः शक्तेरभि-व्यक्तिः। कार्यस्य सत्ता कारणसत्तायामन्तर्निहिता वर्त्तते तच्छक्तेरभि-व्यक्तौ च कार्यरूपं धारयति। निम्बार्कस्यैतदपि कथनं यत् एतज्जीव-जगत् भौतिकं च जगत् ब्रह्मणा सम्बद्धं यच्च भेदाभेदरूपेण तन्निदा-नम्। एकस्मिन् रूपे तज्जगत् ब्रह्मणैव समानम्। एकस्मिंश्च रूपे तद्भि-न्नम्। एतदेव जगति दृश्यमानयोः साधारणकार्यकारणयोरपि संग-च्छते—कस्मिंश्चिदंशे कार्यं कारणेन समानं कस्मिंश्चांशे तत्तस्मात् सर्वथा भिन्नम्।

## आलोचना—

किन्तु शक्तिः ब्रह्मणः पृथक् तदतिरिक्ता न काचित् सत्ता स्वीकर्त्तुं शक्यते। शक्त्या अत्र केवलमेतत्तात्पर्यं यद् ब्रह्मणि सा शक्तिः वर्त्तते या स्वकीयमेकमंशं जीवजगतोः रूपे परिवर्तितं कर्त्तुं शक्नोति, परमात्मनः शक्तिरूपेण वर्तमाने अपि जीवो जगच्च ब्रह्मणा सह वर्तमाने न केचि-न्नित्यशाश्वतसत्ते। अन्यथा प्रकारान्तरेणैषा द्वैतभावनैव स्यात्। अद्वैतस्य भावना वस्तुगत्या एषा वर्त्तते यत् ब्रह्म नितरां शुद्धम्, विभुचेतनं चास्ते

---

1. रा० भा० (ब्र० सू० २।१।१५)

तथापि तस्मिन् एवंभूता शक्तिर्वर्तते यत्तदात्मानं चेतनजीवस्य जड-जगतो रूपे वा परिवर्तयितुं शक्नोति।

## मध्वाचार्यः—

अस्य कार्यकारणसिद्धान्तः प्रायः सांख्यसिद्धान्ततुल्य एव। स च सर्वैरेवाचार्यैरालोचित इति तन्निर्देशोऽत्र व्यर्थः।

## वल्लभः—

वल्लभस्य सिद्धान्तः अविकृतपरिणामो वर्तते। ब्रह्मातिरिक्तं न किम-प्यन्यत्कुत्रापि वर्तते। तदेव च शुद्धं चेतनमानन्दस्वरूपं च वर्तते। सैवैका सर्वत्र व्यापिनी सत्ता सर्वासां क्रियाणां चाश्रयः। यदा तद् जीवजगतोः रचनां कर्तुमिच्छति तदा तत्स्वकीयाः काश्चिच्छक्तीराविर्भाव्य काश्चिच्चान्तर्निधाप्य आत्मानं सीमितं करोति। आविर्भावतिरोभाव-योरस्याः प्रक्रियायाः कश्चिदपि प्रभावः तस्य प्रकृतौ न भवति इति संसारे सत्स्वपि विभिन्नजागतिकदोषेषु ब्रह्म तद्दोषैर्निर्लिप्तं शुद्धं चाव-तिष्ठते। इत्थं ब्रह्म अन्तर्यामि परात्परं च वर्तते। तत् संसारस्य स्वरूपं धारयति किन्तु तत्र लिप्तं सत्तन्मयं न जायते प्रत्युत सृष्ट-वस्तूनाम-पूर्णताभ्यः अपवित्रताभ्यश्च सर्वथा पृथक् संतिष्ठते। ब्रह्म न कश्चिदेवंभूतः अवयवी पदार्थः अपि अस्ति, यस्य कियांश्चिदंशस्तु संसाररूपेण परिण-मेत् कियांश्चिच्च ततः सर्वथा पृथक् अवशिष्यात्। कस्यचिदपि प्रकारस्य वास्तविकपरिवर्तनमन्तरेणैवाविकृतं ब्रह्म संसारतामवाप्नोति इति पूर्वोक्तै-र्दोषैस्तन्न कथमपि संयुज्यते।

## आलोचना—

अस्य सिद्धान्तस्य साहाय्येन वल्लभेन ब्रह्मवादः शुद्धाद्वैतवादो वा स्थापितः। अयं सिद्धान्तः एतत्स्पष्टीकरोति यत् व्यापकं चेतनं च ब्रह्म, ससीमं जडं च प्रतीयमानमपि न कस्यापि प्रकारस्य परिवर्तनेन युज्यते अन्यथा तत् कालिकप्रभावेण उपचयापचयादिना च युक्तं सत् स्वकीयेन ब्रह्मत्वेनैव हीयेत।

एतच्चातीव महत्त्वपूर्णं यत् वल्लभेन शंकरस्य तीव्रालोचना कृता, तथाप्यनयोः अविकृतपरिणामवादविवर्तवादयोरनेकमान्यतासु समानता अवलोक्यते—द्वावप्येतत्स्वीकुरुतो यद् ब्रह्मणि न किमपि परिवर्तनं जायते। तिरोभावस्य चैतत्तात्पर्यं यद् ब्रह्मणः आंशिकरूपं तिरोधत्ते।

आवरणस्याप्येतदेव तात्पर्यं यत् ब्रह्म प्रायः परिपूर्णतः तिरोहितं भवति। विक्षेपस्यैतत्तात्पर्यं यद् ब्रह्म एकस्मिन् अन्यस्मिन् रूपे अवलोक्यते। 'आविर्भावः' अयमेको व्यापकः शब्दः यस्य तात्पर्यम् अणोरणीयस्तः प्रारभ्य उच्चात्युच्चस्य सत्यातिसत्यस्य चाभिव्यक्तिर्वर्तते, किन्तु जीव-जगद्रूपसाधारणाविर्भावे ब्रह्म ब्रह्मरूपेण अप्रकटितं सत् (अप्रकटय्य) एकस्मिन्नन्यस्मिन्नेव रूपे प्रकटीभवति। इत्थं वल्लभसिद्धान्तेऽपि शंकरसिद्धान्ते इव जगन्न तदेव यथा च तदवलोक्यते; तथाऽप्युभयोर्मह-दन्तरमेव वर्तते यत् वल्लभानुसारेण तद् ब्रह्मण आंशिकाभिव्यक्तिः सदपि प्रतीतिसत्यं किन्तु शंकरानुसारेण तत् अनिर्वचनीयाया मायायाः परिणामः।

## जगद्रचनायां ब्रह्मणो बाह्यसाधनानपेक्षत्वम्—

जगद्रचनायां ब्रह्म घटनिर्माणे कुलालः चक्रचीवरादीनीव न कानिचि-दपि बाह्यसाधनान्यपेक्षते। तत् स्वयमेव, नितरां स्वसाहाय्येन च जगद्रचयति। ब्रह्मणः स्वकीया एवांशाः जगद्रूपे तथैव विपरिणमन्ति यथा दुग्धं स्वयं दधिरूपेण परिणमति। दुग्धं दधिरूपेण विपरिण-मयितुं किंचिदपि बाह्यं साधनं नापेक्षते। जगति हि ब्रह्मातिरिक्तो न कश्चिदपि पदार्थ इति साध्यं साधनं चैतदुभयं तदेव ब्रह्म वर्तते—'यथा क्षीरं कर्त्तारमनपेक्ष्य दधिभवनसमये दधि भवति एवमेव ब्रह्मापि कार्य-समये स्वयमेव सर्वं भवति'[1]।

शुद्धाद्वैतवादी वल्लभ एव एतत्प्रतिपादयति यद् ब्रह्मैव केवलं नितान्त-स्वतंत्र-सत्ता[2] वर्तते। शंकराचार्यः ब्रह्मापेक्षया मायामपि प्रतिपादयति। रामानुजः चिदचित्तत्वयोरपि ब्रह्मणि शाश्वतस्थितिं स्वीकरोति। निम्बार्कश्च चिदचिदुभयं परमात्मनः शाश्वतशक्तिमाकलयति किन्तु तदुभयसम्बन्धसमस्यां न सुस्पष्टीकृतवान्।

## जगद्रचनोद्देश्यम्—

दर्शनशास्त्रस्य एषा एका महती समस्या यन्निरीहः परमात्मा किमर्थ-मेतज्जगद्रचनां करोति। परमात्मा हि सर्वथा परिपूर्णः, सर्वशक्तिमान् सर्वथा सन्तुष्टश्चेति तस्य न काप्येवंभूता आवश्यकता वर्तते यत्स स्वकीयां कांचिदावश्यकतां परिपूरयितुमस्य व्यावहारिकविश्वस्य रचनां

---

१. अणुभाष्यम् (ब्र० सू० २।१।२४)     २. शुद्धाद्वैतमार्तण्डः ४२—४९

कर्तुम् उद्युञ्जीत। यदि च स कस्याश्चित्कामनायाः परिपूर्तये अस्य जगतो रचनां करोति तदा न स सर्वथा परिपूर्ण इति नेश्वर इति नाम तदर्थमुपयुज्यते।

प्राच्यपाश्चात्त्ययोरुभयोर्दार्शनिकयोः समक्षं वर्तमानाया अस्या जटिलसमस्यायाः समाधानं वेदान्त इत्थं करोति यदेषा सृष्टिः परमात्मनो लीलेति तद्रचनायां न तस्य किमपि विशेषोद्देश्यम्। लीलार्थमेव हि स एतद् जगद्रचयति[1]। लोकेऽप्येतदवलोक्यते यद् यदा कदा कश्चिन्मनुष्यः क्रीडार्थमेव केवलं किंचित् कौतुकमारचयति। तत्र च तस्य तदतिरिक्तं न किमपि विशेषोद्देश्यं समवलोक्यते। एतदेव सृष्टिरचनायां परमात्मनो रहस्यम्। स तस्य रचनां न कस्यचिदपि विशेषोद्देश्यस्य पूर्तये करोति प्रत्युत स्वशक्तिप्रसारस्वरूपां सृष्टिरचनां प्रारभते। तत्र तस्य प्रयोजनसिद्धेः न कश्चित्प्रश्नः—'नहि लीलायाः किंचित्प्रयोजनमस्ति। लीलाया एव प्रयोजनत्वात्'। स कदाचिदेकाकी क्रीडति कदाचिच्च स्वकीयांशान्[2] विश्वस्य अगणितपदार्थरूपेषु विपरिणमय्य तैः सह तेष्वेव रूपेषु वा लीलां करोति। 'कदाचिद्रमते स्वस्मिन्, प्रपंचेऽपि क्वचित्सुखम्[3]'।

## जगत्सत्यं न मायिकम्—

शंकरस्यैतत्कथनं यत् एतज्जगत् मायिकं न वास्तविकम्। ब्रह्मैव केवलं सत्यम्। जगच्चेतदैन्द्रजालिककौतुकसमानं यस्य क्षणानन्तरमेव विनष्टस्य न चिह्नमप्यवलोक्यते। एतत्सर्वं जगत्प्रातिभासिकम्।

माया हि परमात्मनः अनाद्यनन्तशक्तिः सत्त्वरजस्तमोभिर्युक्ता। ब्रह्मणः स्वरूपमाच्छादयति येन च निर्गुणं निष्कलं निश्चलं च तद् ब्रह्म अगणितपदार्थपूर्णस्य चंचलस्य जगतः रूपे प्रतिभासितं संजायते।

किन्तु वैष्णवाचार्यैः शंकरस्यैतस्य मायावादस्य ऐकमत्येन आलोचना कृता। सा च मायाप्रकरणे सविस्तरं प्रदर्शिता पुनरपीहेदानीं काश्चिद् युक्तयस्तत्सम्बन्धिन्य उपस्थाप्यन्ते—

(१) रज्जौ सर्प इव जगद् ब्रह्मणो विवर्त इति न तर्कसंगतम्। रज्जुर्यदि सर्परूपेणावभासते तदा न कश्चिद् विशेषः। तत्र हि

१. लोकवत्तुलीलाकैवल्यम् ( ब्र० सू० २।१।३३ )
२. अ० भा० ( ब्र० सू० २।१।३३ ) ३. त० दी० नि० १।६८

यत्किंचिदसमानतायां वर्तमानायामपि यत्किंचित्साम्यमस्त्येव किन्तु ब्रह्मजगतोः ब्रह्म सर्वथा निर्गुणं निष्क्रियम्, जगच्च साकारमसंख्य-रूपयुक्तमित्थमनयोरत्यन्तभिन्नयोर्न समानताभ्रमस्य कथमपि सम्भवः। उभयोर्हि न किञ्चिदपि साम्यं यदा अवलोक्यते तदा कथं तयोरन्योन्य-भ्रान्तिः सम्भवति। घटं दृष्ट्वा न कस्यापि पटस्य भ्रान्तिः। उभयोरनयोः साम्यमेव कथं येन भ्रान्तेः प्रश्नः समुत्पद्यते। अतः ब्रह्मजगतोरुभयोः परस्परं नितान्तभिन्नत्वेन कथं जगद् ब्रह्मणो विवर्तो मन्येत।

किंच, यस्यापि रज्जौ सर्पभ्रमो जायते तेन ततः पूर्वमवश्यं तदुभयं दृष्टं भवति; तदैव च पुरः पतितां रज्जुं दृष्ट्वा तस्य सर्पभ्रमो भवति। किन्तु ब्रह्मणि जगतो भ्रमे, सृष्टेः पूर्वं जगतो रचना न केनापि दृष्टा आसीत्, ब्रह्म च निराकारमेवेति कथं तत्र तद्भ्रान्तिसम्भावना?

(२) अन्यदपीदमेतदवधारणीयं यत् यत्र कुत्रापि ब्रह्मजगतोः सम्बन्धः सूचितः तत्र सर्वत्रापि मृत्तिकायाः मृन्मयपात्रेषु सुवर्णस्य च कटककुण्डलादिषु परिवर्तनस्योदाहरणं प्रदत्तं वर्तते। न च कुत्राप्ययं सम्बन्धः रज्जुसर्पयोरिव शुक्तिरजतयोरिव वा समानः उक्तो लभ्यते।

(३) जगदेतद्ब्रह्मणः प्रतिबिम्बं किन्तु कथं तत्सम्भवतीति सन्देहः; बिम्बप्रतिबिम्बभावो हि साकारवस्तुषु एव सम्भवति इति नीरूपस्य ब्रह्मणः प्रतिबिम्बं कथम्।

(४) 'वाचारम्भणं विकारः' इति छान्दोग्यश्रुतेर्नायमर्थो यदिदं जगत् नामरूपयोर्व्यावहारिकपार्थक्यमात्रम्। प्रत्युतास्या अयं वास्तविकः अर्थो यत् संसारस्य विभिन्नाः पदार्थाः नामरूपेण विभिन्नाः। अस्य नेदं तात्पर्यं यदेतज्जगदेका प्रातिभासिकी सत्तैव, अन्यथा ब्रह्म कारण-मेव कस्य भवेत्?—'ये पुनर्मिथ्यात्वं तामसबुद्धयः प्रतिपादयन्ति तैर्ब्रह्मवादाः सूत्रश्रुतिनाशनेन तिलापः कृता वेदितव्याः'।[1]

(५) 'वैधर्म्याच्च न स्वप्नादिवत्' (२।२।२९) एतत्सूत्रं स्पष्टतया प्रतिपादयति यत् संसारो न स्वप्नवन्मिथ्या वर्तते—'स्वप्नादिषु तदानी-मेव स्वप्नान्ते वा वस्तुनः अन्यथाभावोपलम्भात्। न तथा जागरिते, वर्षोनन्तरमपि दृश्यमानः स्तम्भः स्तम्भ एव'[2]।

## जगत्संसारयोरन्तरम्—

माया जगद्रचयति अविद्या च संसारम्। अत एव जगत् सत्यं संसारश्च मिथ्या। जगत् स्वयं ब्रह्मण आंशिकपरिवर्तनम्। ब्रह्म हि

१. भ० भा० (ब्र० सू० २।१।१४) २. तत्रैव (२।२।२९)

यदा स्वकीयाः अधिकांशशक्तीस्तिरोधाप्य स्वल्पाः कतिचिच्छक्तीः प्रकटयति तदा संसार उत्पद्यते—लीलार्थं एव केवलं तदेकमप्यनेकं भवति। जगतः अनेके पदार्थाः—यद्यपि आंशिकरूपेण—ब्रह्मण एवाभिव्यक्तिः। ते च ब्रह्मण स्तावन्त आविर्भावाः, किं बहुना, एकं मृल्लोष्टमपि[1] ब्रह्मैव। यद्यपि तद् ब्रह्मणः स्वल्पाभिव्यक्तिः यतो हि ब्रह्मणो बहवो गुणास्तत्र अन्तर्निहितास्तिष्ठन्ति तथापि वल्लभकथनानुसारेण महत्त्वपूर्णं स्मरणीयं चैतद्वर्तते यत् मृल्लोष्टं ब्रह्मेति शाश्वत-सत्यम्। जडचेतनयोरगणितविशेषतास्तस्यैव ब्रह्मणः अभिव्यक्तिरिति सकल एव प्रपंचः परमात्मस्वरूपः।

अनेन कारणेन जगतः सर्वे पदार्थाः सत्याः। ते ब्रह्मणोंऽशाः नान्यत् किंचिदिति न कदापि तेषां नाशसम्भवः। परमात्मन इच्छानुकूलं तेषामाविर्भावतिरोभावौ। तेषामाविर्भावः सृष्टिः तिरोभावश्च प्रलयः, किन्तु वस्तुगत्या न तेषां रचना भवति नापि च विनाशः। अपि तु परमात्मनः अंशत्वात्तेषां केवलमाविर्भावतिरोभावावेव भवतः। इत्थमयं प्रपंचो न कदापि विनश्यति—'संसारस्य लयो मुक्तौ न प्रपञ्चस्य कर्हिचित'[2]।

एतद्विरुद्धं संसारः सर्वथा भ्रान्तानां जीवानां मानसिकसृष्टिः। अविद्याजालनिपतितो जीवात्मा नैतदवगच्छति यत् लघीयोऽतिलघीयो वस्तुतः महीयोऽतिमहीयो वस्तुजातं तस्यैव ब्रह्मणः स्वरूपम्, प्रत्येकक्रियाश्च तस्यैव प्रेरणाः। सर्वान्धंकरण्याः अहंकृतेः कारणेन स आत्मानमेकं स्वतंत्रकर्त्तारमवबुध्यते एतच्चाभिमन्यते यदहमेतत्कार्यं पूरयामि, एतच्चावशिष्टमेव परिजहामि इत्यादि। एतेन तदन्तःकरणे युष्मदस्मदोर्भेदभावनाया अहंकृतिः प्रवर्धते सांसारिकपदार्थैः सह निकृष्टसम्बन्धोत्पत्तिश्च जायते—'अहं ममेतिरूपे संसार एव प्रवर्तते न तु प्रपंचः, अहमेतत्कर्मकर्त्ता एतज्जनितं च फलं मम'...... । स चाहंताममतात्मकोऽविद्यया[3] क्रियते'। किन्त्वेतत् सर्वं तदीया मानसिकसृष्टिः। सर्वं चैतत्तदज्ञानेन भवति यत्स स्वकीयकाल्पनिकसंसाररचनां करोति, तत्रैव च चलति, भ्रमति अन्यकार्याणि च कुर्वाणः कष्टमनुभवति। सत्ये हि जगति ब्रह्मैवैकमात्रं सत्यम्, सर्वे पदार्थाः, सर्वाश्च क्रियाः ब्रह्मण एवाभिव्यक्तिरित्यहंकृतेः, साफल्यासाफल्येत्यादीनां वा

---

१. प्रकाश ( २।१४२ ) २. त० दी० नि० १।२४
३. प्रकाशः १।२३

किमपि कारणान्तरमेव न वर्तते। परमात्मैव कर्ता स एव च कर्म, फलमपि च स एव। एतैरेव च त्रिभी रूपैः स क्रीडति—

'पुरुषरूपेण तत्कृतसाधनरूपेणाविर्भूय तत्फलरूपेण चाविर्भवन् क्रीडति भगवान्'[1]।

जीवस्य स्वयंकर्तृत्वाभिमानो भ्रम एव केवलम्। अयमेव च भ्रमः तदर्थं शाश्वतसंघर्षपूर्णजन्ममरणचक्रजालनिपातिनं भ्रमात्मकसंसारं रचयति। किन्तु विद्यया अविद्याविनाशे जीवात्मा एतज्जानाति यदहं ब्रह्मणः अंशस्तथा संसारस्य सर्वे पदार्थाः सर्वाश्च क्रियास्तस्यैवाभिव्यक्तिः। एषा अन्तर्दृष्टिस्तं काल्पनिकसंघर्षान्मोचयति, स तदानीं परिजानाति 'ब्रह्मैवेदं सर्वम्' इति तस्य स्वकीयः संसारः सर्वथा लुप्तो जायते।

वल्लभानुसारेण एतदन्तरमतिमहत्त्वपूर्णम्। तस्यैतत्कथनं यत् शंकरो जगत्संसारयोर्मध्ये भ्रान्त इति सर्वमेव जगत् तदर्थं मिथ्या संजातं किन्तु नैतत्, जगतः सर्वे पदार्थाः सत्याः, यतो हि ते ब्रह्मणः अभिव्यक्तिस्वरूपाः इति तत्र ब्रह्मातिरिक्तबुद्धिभ्रमो येन वस्तूनां सत्यत्वपरिज्ञानं न जायते।

---

## आचार्याणां जगतः सदसद्विषयकधारणाः

गम् धातोः गच्छति उत्पत्तिस्थितिलयान् प्राप्नोति इति विग्रहे 'द्युतिगमिजुहोतीनां द्वे च' इति वार्तिकेन क्विपि नियतपरिवर्तनशीलार्थकस्य परिणम्यमानभावार्थकस्य वा जगतो निष्पत्तिरित्याविर्भावादिविकारः परिणामो वा जगतः स्वभावः—तस्याव्यभिचारिधर्मः। क्षणमात्रमपि न जगत् प्रवृत्तिशून्यम्, क्षणार्धमपि नहि कश्चित् जागतिकपदार्थः एकस्मिन् भावे परिवर्तनं विनैव स्वस्मिन् रूपे स्थातुं शक्नोति इत्येतत् पतंजलिनापि 'ङ्याप्प्रातिपदिकात्' इति सूत्रे भाष्ये उक्तम्—

'प्रवृत्तिः खल्वपि नित्या। नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते'[2] एवं जगतः परिभाषया तत्परिचयप्रदानानन्तरमाचार्याणां सदीसदसद्विषयकधारणानाम् आलुलोचयिषया कुड्यचित्रन्यायेनादौ सदसच्छब्दयोरर्थविचारोऽपि नाप्रासंगिकः।

---

१. अणुभाष्यप्रकाशः, १।२१ २. पातंजलमहाभाष्यम् ४।१।१

इत्थं प्रतीयते यत् प्राचीनकाले सदसच्छब्दौ विपरीतार्थकौ आस्ताम्। किन्तु अधुना इमौ अर्थान्तरे गृह्येते । सच्छब्दस्य कश्चित्सम्बन्धः शाश्वतसत्तयापि वर्तते न वेत्यस्य परिज्ञानमेव तत्र निर्बिभर्ति यत् एतद् अन्विष्येत यत्तदानीमेवंभूतायां सत्तायां जनानां विश्वास आसीन्न वेति ।

ऋग्वेदे कानिचिदेवंभूतस्थलानि समुपलभ्यन्ते यैरेतत्प्रमाणीक्रियते यल्लोकविश्वास एकस्यां सार्वभौमसत्तायामासीत् । तथा हि—

'अदितिर्द्यौरदितिरन्तरिक्षम् अदितिर्माता स पिता स पुत्रः ।
विश्वेदेवा अदितिः पंचजना अदितिर्जातमदितिर्जनित्वम्'[1] ॥

अत्र अदितिरेव स्वर्गाकाशादिरुक्ता । यच्चैकेश्वरवादस्य सत्तायाः धारणां द्योतयति । एतदतिरिच्य, 'महद् देवानामसुरत्वमेकम्',[2] तथा अचिकित्वान् चिकितुषः चित् अत्र कवीन्, पृच्छामि विद्मने न विद्वान् । वियः तस्तम्भ षड् इमा रजांसि अजस्य रूपे किमपि स्वित् [3]एकम् । एषा ऋक् सायणाचार्यानुसारेण वेदान्तदर्शनस्य ब्रह्मविश्वैक्यभावनां द्योतयति । अग्रे अयमत्र प्रश्नः कुतो वर्तते यदेतद् दिव्यं मनः कुत उदपद्यत—

'देवं मनः कुतोऽधिप्रजातम्'[4]

पुनरेतदग्रे पक्षिद्वयरूपकेण ब्रह्मजीवयोर्वर्णनम्—

'द्वा सुपर्णा सयुजा सखाया'[5]......

एवम्—'एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ।'

एतत्सर्वं ब्रह्म-विश्वैक्यभावनाया एव प्रतीकम् ।

ऋग्वेदीयपुरुषसूक्तस्य 'सहस्रशीर्षापुरुषः'...एषा ऋक् तथा नासदीयसूक्तस्य 'नासदासीन्नो सदासीत्तदानीम्' इत्यादयो ऋचः अद्वैतभावनां द्योतयन्ति । अतो नात्र कश्चित्सन्देहः यत्तदानीमेकैव सार्वभौमसत्ता स्वीक्रियते स्म ।

अत्र पुरुषसूक्तं याज्ञिकभावनां द्रढयति । सा च याज्ञिकभावना परार्थभावनायाः एकमात्रसिद्धान्तः । तथा वेदान्तिकाधारो विश्वमात्राय प्राज्ञः सिद्धीकृतः । तत्र च सर्वः सृष्टि-यज्ञः पुरुषस्य (परमात्मनः) यज्ञः प्रतिपादितः—

---

१. ऋ० १।८९।१० २. तत्रैव ३।५५।१
३. तत्रैव १।१६४।६ ४. तत्रैव १।१६४।१८
५. तत्रैव १।१६४।२०

'ब्रह्म वै स्वयंभूः तपोऽतप्यत। तदैक्षत न वै तपस्यानन्त्यमस्ति हंत अहं भूतेषु आत्मानं जुहवानि भूतानि च आत्मनि इति। तत्सर्वेषु भूतेषु आत्मानं हुत्वा भूतानि चात्मनि सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यम् आधिपत्यं[1] पर्यैत्'।

मनुस्मृतावपि[2] एतदुल्लिखितं यद्वेदरचनायाः पूर्वं ब्रह्मणा सनातनो यज्ञो विहितः। भगवद्गीतायास्तृतीयाध्याये सप्तमे श्लोकेऽपि 'सहयज्ञाः प्रजाः सृष्ट्वा'...एतदुक्तम्।

द्वितीयं नासदीयं सूक्तं स्पष्टतयैतत्प्रतिपादयति यद् यत्रैतत्प्रतिपादनमसंभवं यत् आदौ अयं विश्व आसीन्न वेति तत्र एतत्कथने न कश्चित्सन्देहः यत्तदानीमेकैव ब्रह्मसत्ता आसीत् यस्यां चादिकालतः समागच्छन्त्यामस्माकं सत्ता अन्तर्निहिता वर्तते।

'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किंचन मिषत्।
स ऐक्षत लोकान्नु सृजा[3] इति'॥

अत्र न कश्चित्सन्देहो यत्स एक आसीत्, बहुत्वं च कामयमानः सृष्टिरूपेण एकस्मादनेकः समजायत किन्तु कथमेतत् स कृतवानित्येतज्ज्ञातुं तस्य मनुष्यस्य कृते यद्यपि रहस्यमेव येनात्मसाक्षात्कारो न कृतः तथापि स्थूलरूपेणोक्तपर्यालोचनायाः तात्पर्यं सामान्योऽपि जनो ज्ञातुं शक्नोति यत्तदानीमेकैव सत्ता आसीत्।

प्रकृते च सदसच्छब्दयोर्विचारे इत्थं ज्ञायते यदत्यन्तप्राचीनकाले सच्छब्दः परब्रह्मवाचको नासीत्। सम्भवतः, सः, असत्परब्रह्मैतदुभयातिरिक्तेतरः अधिकांशतः असच्छब्दवर्गीयः आसीत्। अनिर्वचनीयार्थात् परोक्षसत्तार्थाच्च तस्माद् विश्वस्य उत्पत्तिरजायत—

'सदेव सोम्य इदमग्र आसीत् एकमेवाद्वितीयम्। तस्मादसतः सत् जायत'[4]। नासदीयसूक्तस्य सर्वप्राचीनव्याख्यास्वरूपे शतपथब्राह्मणे प्राप्यते—

"न इव वै इदमग्रे असत् आसीत् न इव सत् आसीत्। आसीत् इव वै इदं अग्रे न इव आसीत्। तद् ह तद् मनः एव आस। तस्माद् एतद् ऋषिणाऽभ्यनूनं' 'न असत् आसीत् नो सत् आसीत् तदानीम् इति। न इव हि सत् मनो न इव असत्। तद् इदं मनः सृष्टं आविरबुभूषत्। निरुक्ततरं मूर्ततरं। तद् आत्मानमन्वैच्छत्। तत्तपोऽतप्यत। तत्प्रामूर्च्छत्"[5]।

---

१. श० ब्रा० १३।७।१  २. मनुस्मृति १।२२
३. ऐ० १।१  ४. छा० ६।१।१
५. श० ब्रा० १०।५।३।१

एवंभूताज्ञेयधारणया, या चैतत्प्रकटीकरोति यत् प्रारम्भे न सत् आसीत् नापि चासत्, एतदवगम्यते यत् तात्कालिकजनानां काचिदेवंभूता धारणा आसीत् या आधुनिकज्ञानतान्त्रिक (यथार्थवादि) जनानां धारणया समाना वक्तुमुपयुज्यते।

मनुष्यः स्वकीयसंस्कृतेः प्रारम्भिकावस्थायां स्वकीयेन्द्रियजन्यज्ञाना-नुभवेनैतद्विश्वसमस्यां समाधातुं प्रायसत्। यश्च विषयस्तेनेन्द्रियजन्य-ज्ञानेन अनुभूतः स स्वभावतस्तेन सत् उक्तः। यस्य च तस्य अनुभवो न जातः स तेन असत् उक्तः।

किन्तु एतत्सत्यं, यदेवंभूतेन असच्छब्देन तस्य तात्पर्यं नितान्तं शून्यं नासीत् 'कारणतासिद्धान्तस्य स्वाभाविकपरिज्ञानं तं प्रकृत्या एतदबोधयत् यत् यत्किंचिदपि तस्य प्रत्यक्षमायाति तस्य कारणं नूनं काचित्प्रकाचित्परोक्षसत्ता वर्तते।

विचारस्य एतदादिमपरिस्थित्यां सच्छब्दः स्वभावतः व्यावहारिकसत्तां द्योतते स्म, यस्माच्चास्योत्पत्तिरासीत्स असत् अकथ्यत।

अत एव अस्माभिरेवंभूतानि श्रुतिवाक्यान्युपलभ्यन्ते यानि प्रारंभे असत्स्थितिम् असतः सदुत्पत्तिं च प्रतिपादयन्ति। इत्थं च ऋग्वेदे देवतानां सर्वप्रथमयुगे असतः सदुत्पत्तिः प्रतिपादिता वर्तते—

'देवतानां पूर्व्ये युगे असतः सत् अजायत'[1]

तैत्तिरीयब्राह्मणे उक्तम्—

इदं वै अग्रे नैव किंचन आसीत् न द्युः आसीत् न पृथिवी न अन्त-रिक्षम् तत् असत् एव मनोऽकुरुत स्यामिति'।[2]

तैत्तिरीयच्छान्दोग्योपनिषदोरप्येवमेव वाक्यान्युपलभ्यन्ते—

'असद्वा इदमग्र आसीत् ततः वै सत् अजायत'[3]।

'असत् एव इदमग्र आसीत् तत् सत्आसीत् तत् समभवत्'[4]॥

एतदेव व्यावहारिकं सत् यदा कदा सत्यमकथ्यत तथा शाश्वतम् एवं परमसत्यम्, अपि नाम तदापः, प्राणाः, विश्वकर्मा, प्रजापतिः, हिरण्यगर्भः, आत्मा परब्रह्म वा तत् सत्यस्य सत्यमकथ्यत। बृहदारण्य-कोपनिषदि अयं भावो निम्नाङ्कितरूपेणाभिव्यक्तः—

---

१. ऋ० १०।७२ २. तै० ब्रा० २।२।९
३. तै० उ० २।७।१ ४. छा० ३।१९।१

'स यथोर्णनाभिः तन्तुनोच्चरेत् यथा अग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यम् तेषामेष 'सत्यम्' ।

पूर्वोक्तोद्धरणेषु यः असच्छब्दः समायातः तस्य तात्पर्यं निरात्मकतत्त्वं नितरां शून्यं वा न वर्तते किन्तु तस्य तात्पर्यम् असत् इव वर्तते ।

वेदान्तसूत्रेषु शंकरेण असच्छब्द इत्थं व्याख्यातः—

'नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्धः इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्म असदिवासीत् 'इत्युपचर्यते' ( नामरूपव्याकृतेः प्राक् सदेव ब्रह्म लक्षणया असदुच्यते इत्यर्थः )

एतच्चास्य व्यक्त( प्रत्यक्ष )विषयस्य उत्पत्तेः अव्यक्तं ( परोक्षम् ) कारणमस्ति । दर्शने अस्यैव व्यक्तविश्वस्य, पारिभाषिकी संज्ञा 'इदं' वर्तते ।

इदं नामरूपात्मकं 'सत्' एव अस्ति नान्यत् किंचित् । तस्यैव च 'सर्वं खल्विदं ब्रह्म' अनेनैव इदमा निर्देशः तथा कारणकार्ययोः ब्रह्मतदुत्पन्नजगतोः तात्त्विकैकतायां 'तत्त्वमसि' इत्यनेनापि सैव भावाभिव्यक्तिः । एतदेव कौषीतकिब्राह्मणोपनिषदि 'सर्वमिदं [3]सर्वमसि' इत्थं प्रतिपादितम् । एवमेव छान्दोग्येऽपि, 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा 'तत् [4]त्वमसि' इत्युक्तम् । गीतायाम् अयमेव भाव इत्थं समर्थ्यते—

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा[5] ( अ ) ॥

अस्माभिरिह भारतीयविचाराणां सोच्चतरसीमा समुपलभ्यते या जगतः तदीयपदार्थानां च नश्वरताया अनुभवेन तथा स्वकीयस्थित्यर्थमेकस्मिन् शाश्वते, अपरिवर्तनशीले, सत्तात्मकसर्ववस्तुषु व्याप्ते परब्रह्मणि च तन्निर्भरत्वेन 'सर्वं खल्विदं ब्रह्म न तदतिरिक्तं तद्भिन्नं वा किमपि वर्तते' इतिभावनया यथार्थवादतः आदर्शवादं प्रति प्रवृत्तेः परिचायिका वर्तते ।

---

१. बृ० उ० २।१।२०

२. शां० भा० ( ब्र० सू० १।४।१५ ) पृ० ४८९ ( बे० प्रे० सं० )

३. कौ० उ० १।६ ४. छा० उ० ६।९।४

५. ( अ ) गीता १३।३०

न्यूरमहोदयस्य एतत्कथनं यत् परब्रह्मणः सत्स्वीकृतेः सर्वप्रथम-प्रवृत्तिः छान्दोग्ये समुपलभ्यते–असतो हि सदुत्पत्तिर्न सम्भवति[1] 'असत् एव इदमग्र आसीत् एकमेवाद्वितीयम् । तस्मादसतः सत् जायत । कुतः नु खलु सौम्य एवं स्यात् इति ह उवाच कथमसतः सज्जायत इति सत्तु सौम्य इदम् अग्र आसीत् एकमेवाद्वितीयम्'[2] ।

गीतायामेषैव भावना इत्थमुपलभ्यते—

नासतो विद्यते भावो नाभावो विद्यते सतः[3] ।

इदानीं यावत् सत् एष शब्दः परमसत्यताया बोधकः समजायत । कान्यपि तस्य नामान्तराणि स्युः स क्षणिकस्य नश्वरस्य च जगतो विपरीत आसीत् । जगतस्तत्पदार्थानां च हि स्वतन्त्रसत्ता न वर्तते इति ते स्वकीयसत्तार्थं पराश्रितत्वेन असत् ( असत्यम् ) उच्यन्ते स्म—

'सोऽकामयत बहु स्यां प्रजायेय' ।

'तदनुप्रविश्य सच्च त्यच्च अभवत्' ।

'सत्यं चानृतं च सत्यमभवत् । यदिदं किंच तत्सत्यमित्याचक्षते'[4] । किन्तु विश्वस्मिन् न कोऽप्येवंभूतः पदार्थो यत्र 'सत्' न स्यात् । अनेनैव च कारणेन अयं विश्वः सदसत्संयोगः ( चिदचिद्ग्रन्थिः ) उच्यते । सतो व्यापकताम् इत्थं गीता प्रतिपादयति—

'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति[5]' ॥'

अथर्ववेदे इदमेवेत्थं प्रतिपादितं वर्तते—

'यत्र लोकांश्च कोशांश्चापो ब्रह्म जना विदुः[6] ।
असच्च यत्र सच्चान्तः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥'

सदसतोरैक्यं निम्नाङ्कितस्थलेषु इत्थमुक्तम्—

'अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन'[7] ।

'एष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत्'[8] ।

---

१. ( ब ) जे० कीर्तिकरः 'स्टडीज़ इन वेदान्त' पृ० १९०
२. छा० ६।२।१
३. गीता० २।१६
४. तै० उ० २।६
५. गीता १३।२७
६. अथर्ववेद ( १०।७।१० )
७. गीता ९।१९
८. प्र० उ० २।५

'एतत्प्राणन् निमिषच्च यदेतद् जानथ सदसद्वरेण्यं परं विज्ञानाद् यद् वरिष्ठम् प्रजानाम्'[1]।

एतदवधातव्यं यद् ब्रह्म यद्यपि सदसद्व्यापकं तथापि तत् ततोऽपि परं वर्तते। यथा च पुरुषसूक्तम्—

'स भूमिं सर्वतः स्पृत्वा अत्यतिष्ठद् दशांगुलम्'।

गीता एतदेवेत्थं प्रतिपादयति—

अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत्[2]।

तथा—

'सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति[3]॥'

ईशावास्येऽपि—

'तदन्तरस्य सर्वस्य तदु सर्वस्यास्य [4]बाह्यतः'।

इत्थं तद् ब्रह्म सर्वान्तर्यामि लोकातीतं च वर्तते। शब्दान्तरैरेतदेवं प्रतिपादयितुं शक्यते यदिदं विश्वं ब्रह्मपरिच्छिन्नं किन्तु ब्रह्म न क्वापि परिच्छिन्नं वर्तते तच्च परिधिरहितेन प्रत्येकस्थलसत्केन्द्रबिन्दुना केनचिद् वृत्तेन तुलयितुं शक्यते।

पूर्वोक्तं सर्वं संक्षिप्तरूपेणेत्थं वक्तुं शक्यते यद् दार्शनिकविचाराणां प्रारम्भिकावस्थायां सतः तात्पर्यं व्यक्तं जगदासीत्। असच्छब्दश्च तस्याव्यक्त-(परोक्ष)कारणस्य वाचक आसीत्। एतन्नैतेन असदुच्यते स्म यद्वस्तु-गत्या तस्य सत्तैव नावर्तत, प्रत्युत एतेनोच्यते स्म यत्तत् असदिवासीत्। इदं दृश्यमानं जगत् 'सत्' कदाचिच्च सत्यमप्यकथ्यत। सतः सत्योक्ति-दशायां सर्वोत्पादकमूलभूतसत्तास्वरूपं ब्रह्म 'सत्यस्य [5]सत्यम्' प्रत्यपाद्यत।

कालान्तरे सच्छब्दः शाश्वतस्य परमार्थसत्यस्य च द्योतकः सम-जायत। अपि नाम तस्य नामान्तराणि पार्थक्येन स्युः। असच्छब्दार्थश्च तस्मिन् परमार्थसत्ये समारोपितमिथ्याभिव्यक्तिरभवत्। मिथ्यात्वं च तत्रैतदर्थमकल्प्यत यत्तत्स्वसत्तार्थमस्वतन्त्रमिति तत्सत्यार्थभिन्नं नश्वरं

---

१. मुं० उ० २।२।१ २. गीता ११।३७

३. गीता १३।१३ ४. ई० उ० ५

५. सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये।
सत्यस्य सत्यं ऋतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः॥'

श्री० भा० १०।२।२६

परिवर्तनशीलं मायामयं ( भ्रमात्मकं ) च वर्तते । श्रीमद्भागवते अनयोरुभयोरित्थं निर्देशः—

'तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतयावनन्ते मायात उद्यदपि यत् सदिवावभाति'[1] ॥

सदसतोरयमेवार्थः प्राचीनसमयात्प्रयुज्यमानः प्रचलन्नास्ते । सतः अर्थः सत्यता असतश्च तत्रारोपिताऽसत्यता वर्तते । परमार्थतः केवलं ब्रह्मैव सत् तदतिरिक्तं च सर्वं, ततः पृथक् स्वतन्त्रसत्तारूपेणावलोक्यमानं चेत्, असद्वर्तते ।

अस्मिन्नेव चार्थे जगदसत् नापि चास्मिन्नर्थे यत् तत् सर्वथा शून्यं वर्तते । अस्माभिस्तत्सत्यता स्वीक्रियते किन्तु व्यावहारिकरूपे एव केवलम् ।

इत्थं सदसच्छब्दयोरर्थविचारानन्तरं धारणावैचित्र्येण जगतः असत्त्वं सत्त्वं च संस्थाप्य तस्य सदसदात्मकत्वमिदानीं निरूप्यते—

## जगतः सदसदात्मकत्वम्

सत्तार्थकात् ( विद्यमानार्थवाचिनः ) अस् धातोः शतरि सत्-पदसिद्धिः इति विद्यमानार्थकः सच्छब्दः । असतः ( अभावस्य ) विरोधि अविद्यमानतायाः प्रतिपक्षि यत् अविनाशि, अपरिणामि नामदेशकालादिनाशेऽप्यविनाशि, यस्य न कदापि ध्वंसः, यत्स्थिरं तत्त्वम्, तत्सत् । यच्च सत्, अव्यभिचारि तदेव सत्यम्—

'सत्यमविनाशि नामदेशकालवस्तुनिमित्तेषु विनश्यत्सु यन्न विनश्यति तदविनाशि'[2] ।

सत्यस्यार्थं बोधयता भगवता शंकरेणापि 'सत्यं ज्ञानमनन्तं ब्रह्म' इतिवाक्यस्य तैत्तिरीयोपनिषद्भाष्ये एतदेव प्रतिपादितम्—

'यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्'[3]—
सत्यस्य एतच्छास्त्रीयलक्षणानुसारेण न किमपि वस्त्वस्य प्रतिक्षणपरिणामिनः चिरचंचलस्य नियतपरिवर्तनशीलस्य संसारस्य वाचकं भवितुमर्हति । परिवर्तनस्वभावस्य, अवस्थान्तरगामिस्वरूपस्य, अविनाश्यपरिणामिस्वरूपाभावात् । इत्थं चागत्या सत्यविरुद्धस्यास्य जगतः असत्यत्वम् आयाति ।

---

१. श्रीमद्भागवते १०।१४।२२ २. सर्वोपनिषत्सारः
३. तै० उ० भाष्यम्

किन्तु जगतः साक्षात्प्रतीयमानत्वेन कथमसतः ( असत्यस्य ) तस्य उपलब्धिरिति सन्देहः । किञ्च, जगतः असत्यत्वेऽपि असत्यरूपेण तस्य सत्यत्वं परिवर्तनशीलत्वं वा ह्यव्यभिचारि, जगद्धि जगत्—सदापरिणामि, इति तद्रूपाव्यभिचारितया 'यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्-सत्यम्' इति लक्षणसंगत्या जगतः सत्यत्वं सिध्यति ।

इत्थं जगतः सत्यत्वासत्यत्वविचिकित्सायां किमात्मकमेतदिति प्रश्नस्य 'सदसदात्मकं जगत् अर्थात् नित्यानित्योभयात्मकं तत् 'इत्युत्तरम् । तच्चेत्थम्—'कारणभावे सन्मात्रावस्थायाम् , जगत्सत्यं नित्यं वा, कार्यभावे च जगत् असत् अनित्यं वा । यद्विकारात्मकं तदनित्यम् 'इति भावविकाररूपे जगदनित्यम् । आत्मभावे, अपरिच्छिन्नाखण्डैकरससच्चिदानन्दब्रह्मस्वरूपे तन्नित्यत्वम् । जगतो मूले हि अनन्तसत्ता निहिता वर्तते । मूले चापरिच्छिन्नभावाभावे परिच्छिन्नभावस्थितेः सर्वथा असम्भवात् ।

इदमत्राकूतम्—कारणात्मकार्यात्मभेदेन भावः ( सत्ता ) द्विविधः । अनयोर्द्वयोर्भावयोः कारणात्मभावस्यैव नित्यत्वम् । स एव च सत् । कार्यात्मभावस्य चानित्यत्वम् स एव चासत् , परिवर्तनशील इति भावः । अयमेव कार्यात्मभावः संसारो जगद्वोच्यते ।

( १ ) कारणात्मभावस्वरूपम्—यो भावः अदृश्यः, बुद्धीन्द्रियागम्यः, आन्तरबाह्योभयावस्थारहितः इन्द्रियाग्राह्यः, अगोत्रः ( स्वरूपनिर्णायकमूलरहितः ), अवर्णः ( द्रव्यस्य स्थूलत्वसूक्ष्मत्वशुक्लत्वादिधर्मो वर्णस्तद्रहितोऽवर्णः ), चक्षुःकर्णादीन्द्रियरहितः, अपाणिपादः, नित्योऽविनाशी विभुः—ब्रह्मादिस्थावरान्तचेतनाचेतनविविधपदार्थरूपे प्रकाशितः, यश्चाकाशवत्सर्वव्यापी, सूक्ष्मः, अव्ययः, सर्वदैकरूपः, यश्च सर्वभूतयोनिः, सर्वकार्यकारणस्वरूपः स कारणात्मभावः ( यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रम् ) ।'[1]

( २ ) कार्यात्मभावस्वरूपम्—कार्यात्मभावः त्रिगुणमयमायाया भावः । कारणात्मभावश्च मर्य्यादितः परिच्छिन्नः—'पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम् ।'[2]

कार्यात्मभावमर्यादानिर्देश :—तत्र ब्रह्मादिस्थावरान्तो भावः कार्यात्मभावः । यश्च भावः सृष्टिस्थितिलयात्मकः, यश्च वर्तमानातीतानागतावस्थात्रयविशिष्टः स कार्यात्मभावः—'पुरुष एवेदं सर्वम्'—इत्यादि-

१. मु० उ०  २. पु० सू० ( ऋ० १०।९०। )

श्रुतिवचनस्येदमेव तात्पर्यं यद्वर्तमानातीतानागतैतज्जागतिकावस्थात्रैविध्यमेव पुरुषस्य अपरिच्छिन्न-सच्चिदानन्दस्य वा मायापरिच्छिन्नो भाव इति परमपुरुषात् कारणात्मभावात् कार्यात्मभावः स्वरूपतो न स्वतन्त्रः पदार्थः।

'एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः'[1]।'

इत्थं चातीतानागतवर्तमानकालत्रयात्मकं निखिलं जगत् परब्रह्मण एवैकं सामर्थ्यम्—तच्छक्तिविशेष इति भावः। किं तर्हि त्रिकालमयस्य जगतः स्वरूपमेव ब्रह्मणो वास्तविकं रूपम्? किमेतदनित्यं जगदेव तत्? नैवम्, न तत्तस्य वास्तविकं स्वरूपम्। परमः पुरुषः परमात्मा स्वस्यैतस्य जगद्रूपमहिम्नो ज्यायान्–अतिशयेन महान् वर्तते। समस्तं चैतद्भूतं कालत्रयवर्ति चेतनाचेतनजातं परमपुरुषस्य चतुर्थांशमात्रम्। शेषं चास्य त्रिपाद् विनाशरहितं सनातनं नित्यम्, द्योतनात्मकं स्वप्रकाशस्वरूपे समवस्थितम्। पुरुष एवेदमिति मन्त्रे त्रिकालवर्त्ति जगत् पुरुष एवेति प्रतिपादितमित्येतेनैतत्प्रत्येतुं शक्यते यत् जगदेव पुरुषस्वरूपम्, तदर्थमेवोपर्युक्तमंत्रद्वारा (एतावानस्य महिमा इत्यनेन) एतद् बोधितं यत् जगदेतत् सत्यज्ञानानन्तब्रह्मस्वरूपापेक्षया अल्पीयो वर्तते।

किन्तु अयमत्र सन्देहो यदनन्तस्य परब्रह्मणः कथं चतुर्धा विभागः? किमन्तस्य ब्रह्मणः इयत्तया परिच्छिदा शक्या? भगवता सायणचार्येणैतां संशीतिमपाकर्त्तुमुक्तम्—'नास्मिन् सन्देहो यत्र परब्रह्मण इयत्ता कथमपि शक्या' किन्त्वेवं कथनस्य अयमभिप्रायो यत् जगदेतत् परब्रह्मस्वरूपापेक्षया क्षोदिष्ठं तथैकांशमात्रम् इति—

'त्रिपादूर्ध्वं उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ् व्यक्रामत् साशनानशने[2] अभि॥'

सृष्टिसंहारात्मकजगद्बहिर्भूतसंसारस्पर्शरहितजागतिकगुणदोषास्पृष्टस्य चतुष्पदः पुरुषस्यैकपादमात्रमेतज्जगदिति भावः। यथा चोक्तं गीतायाम्—

'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।'[3]

परमपुरुषपरमात्मनः एकमेवैतत्पादम् मायया पुनः पुनरव्यक्तावस्थातो व्यक्तावस्थायां व्यक्तावस्थातश्च पुनरव्यक्तावस्थायां गमनागमने विधत्ते। यथाह सायणः—

---

१. ऋ० वे० पु० सू० २. तत्रैव ३. गीता.

'सोऽयमिह मायायां पुनरभवत्सृष्टिसंहाराभ्यां पुनः पुनरागच्छति ।'[1]

परमपुरुषस्यायमेकपादो मायायुक्तः । शेषं च पादत्रयं मायाविनिर्मुक्तम् । सृष्टिकाले परमेश्वरो मायया देवतिर्यगादिविविधरूपेषु अभिव्यक्तो भवति । साशने—भोजनादिव्यवहारोपेतचेतनप्राणिजाते, अनशने—तद्रहिते अचेतनगिरिनदीसागरादौ चेत्थमुभयस्मिन् रूपे स्वयमेव विविधो भूत्वा विश्वब्रह्माण्डमारचयति । एतेनैतदवगतं यत् अखण्डैकरससच्चिदानन्दपरमपुरुषस्य नित्यकार्यभेदेन भावद्वयं वर्तते । तत्र च नित्यभावः सनातनावस्था—परिदृश्यमानजन्मादिविकारमयसंसारादूर्ध्वमवस्थिता वर्तते । जननमरणाधिव्याधिशोकतापादिसांसारिकदोषाः इमं भावं न स्प्रष्टुं शक्नुवन्ति । अत्र कालस्य नाधिकारः । एतद्धि सच्चिदानन्दभवनम् । एतदेवाधिगन्तुमाब्रह्मस्तम्बपर्यन्तं कामयते । परमविश्रामाभिलाषिणो जीवजगतः इदमेव लक्ष्यस्थानम् ।

कार्यात्मभावश्च क्रियामयस्य परिवर्तनस्य भावः, मायिकावस्था वोच्यते । यस्मिन् भावे वयं स्मः, यं च भावमुपलब्धुं शक्नुमः स एव कार्यात्मभावः । कारणात्मभावश्च परब्रह्मणः स्वरूपम् , कार्यात्मभावश्च परब्रह्मणः स्वरूपम् , कार्यात्मभावश्च ब्रह्मणोऽपरावस्थेति तदपरं ब्रह्मेत्यभिधातुं शक्यते ।

इत्थं चैतदुपसंहार्यं यत् कारणात्मभावः कार्यात्मभावश्चैतद्द्विविधः भाव एव 'भावः' 'सत्' वा वर्तते । अत्र कारणात्मभावो नित्यः, कार्यात्मभावश्चानित्यो विकारात्मकः । जगतश्च तदन्तर्वर्तित्वेनोभयात्मकत्वात् सदसदात्मकत्वम् ।

## जगतो मिथ्यात्वसत्यत्वम्—

शंकरवेदान्तानुसारेण जगतः सत्ता न पारमार्थिकी अपि तु व्यावहारिकी प्रातिभासिकी चेति सिद्धान्ततः 'ब्रह्म सत्यं जगन्मिथ्या' इत्युच्यते, भाष्यकारेण भगवता शंकराचार्येण सामान्यतया सम्पूर्णे शारीरकभाष्ये विशेषतया चारम्भणाधिकरणे एतद्विवेचितम् । तस्य अयमभिप्रायः यत् अज्ञानम् ( माया, अविद्या वा ) भावस्वरूपम् इति तदुत्पन्नं जगदपि, यस्य चाज्ञानं कारणम् , भावस्वरूपम् अर्थात् तस्य सत्ता वर्तते, किन्त्वज्ञानम् ( माया ) स्वयं मिथ्येति तज्जन्यं जगदपि साधारणानुभवे

---

१. सायणभाष्यम्

मिथ्यैव। भगवता व्यासेनैतदधिकरणमेतदर्थमेव विरचितमिति प्रतीयते। यच्चापि भवेत्, अद्वैतसिद्धिं कुर्वते जनाय जगतो मिथ्यात्वप्रतिपादनमनिवार्यं संजायते। अद्वैतसिद्धिकारेण मधुसूदनेन ग्रन्थारम्भ एव जगतो मिथ्यात्वं प्रसाधितम्, अध्यासभाष्यप्रारम्भे अपीयमेवापूर्वता परिलक्ष्यते। श्रीमता व्यासेनापि श्रीमद्भागवतपुराणप्रारम्भे–

'तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा' एतदुक्त्वा ब्रह्मस्तुतौ अपि, 'रज्ज्वामहेर्भोगभवाभवौ यथा' इत्याद्युपयुज्य विवर्तवादं समर्थयता जगतो मिथ्यात्वं प्रदर्शितम्। जगतो नश्वरता तु सर्वैरेव स्वीक्रियते। साधनदृष्ट्या तु सर्व एव सिद्धान्तवादिनो जगतो मिथ्यात्वमाकलयन्ति। स्वतंत्रसत्ताराहित्ये सतीतरसत्तासत्तावत्त्वं हि मिथ्यात्वम् इति वेदान्तदृष्ट्या ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वात् जगतः, तत्सत्तासत्तावत्त्वेन मिथ्यात्वमेव।

इत्थमद्वैतप्रचारकः शंकराचार्यः कर्मप्रधानं जगत् यदा मिथ्या प्रतिपादयति तदा द्वैतवादिन आचार्याः जीवनस्य वास्तविकतां न विस्मरन्ति। ते हि असंख्यमहापुरुषकर्मस्थलमेतत् जगत्सत्यं प्रतिपादयन्ति। फलतः, यदि शंकरस्य अद्वैतवादः अस्मान् प्रत्यक्षदृश्यमानसत्तात्मकवस्तून्यपि मिथ्यावबोधयितुं विवशयति तदा द्वैतवादः यथार्थव्यावहारिकतामाश्रित्य जगत् सत्यमाकलयति। शंकरस्य अद्वैतवादापेक्षया अस्य मतस्य नितरां प्रतिकूलतैवास्य सिद्धान्तस्य सर्वोत्कृष्टविशेषता वर्तते। अत एव द्वैतवादिना मध्वाचार्येण शंकरस्य मायावादं खण्डयित्वा स्पष्टमेतत्प्रमाणितं यत् इदं जगन्न मायामात्रमपि तु सत्यम् अस्ति। दार्शनिकदृष्ट्या अयं सिद्धान्तः सदोषः प्रतीयान्नाम किन्तु व्यावहारिकदृष्ट्या अयं सिद्धान्तः अत्यन्ततर्कयुक्तो बुद्धिसम्मतश्च प्रतिभाति—यस्मिन् हि जगति वयं निवसामः, क्रीडामः, स्त्रीपुत्रादिदर्शनस्पर्शाद्यानन्दाननुभवन्तोऽनेकदयावीरतादिकार्याणि कुर्मः, वायुयानादिविविधसाधनैरन्तरिक्षादिषु चोत्पतामः, तस्मिन् जगति एतत्सर्वं कथं सहसा मिथ्यावबुध्येतेति व्यावहारिकनिकषे कषणे द्वैतमतमत्यन्ततर्कयुक्तं बुद्धिसंगतं च प्रतीयते। अत एव अद्वैतवादिनाम्—

'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः'

इत्युक्तिविरुद्धं द्वैतवादी मध्वाचार्यो भागवततात्पर्यनिर्णये—

जगत्प्रवाहः सत्योऽयं नैव मिथ्या कदाचन।<br>
ये त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते॥

इति प्रतिपादयति।

जगतः सत्यत्वं सूत्रकारस्याप्यभिमतमिति ब्रह्मसूत्राणां निम्नाङ्कित-स्थलैरप्यवगम्यते—

( १ ) जन्माद्यस्य यतः ( ब्र० सू० १।१।२ ) इत्यत्र जगतो जन्मादि-कारणं ब्रह्मोक्तं वर्तते। अन्तिमे जगद्व्यापाराधिकरणे चापीश्वर एव तद्व्यापारस्याधिष्ठातोक्तः किन्तु नैतदुक्तं यत्स व्यापारो मिथ्या जगतो व्यापारः.

( २ ) सूत्रकारेण सृष्टिविषये सांख्यसिद्धान्तो विवेचनपूर्वकं खण्डितः। तन्मते च जगतो मिथ्यात्वे स न कथमप्येवमकरिष्यत्। तत्परिस्थितौ च ब्रह्मणो जगदुत्पत्तेः प्रश्न[1] एव नोपतिष्ठते।

( ३ ) बौद्धानां शून्यवादं खण्डयता सूत्रकारेण स्वकीययथार्थवाद-स्थापनस्य महान् प्रयत्नो विहितः। तेन च क्षणभंगवादः खण्डितः, यत्र च व्यावहारिकसृष्टिः ( जगत् ) नित्या, तथापि स्वयं निरर्थिका ऐक्येन स्थैर्येण च रहिता एका क्षणिकप्रक्रिया मन्यते। तेन योगाचारः अपि खण्डितः, यस्य 'ज्ञानाभिन्नं ज्ञेयम्' इति सिद्धान्तः। बौद्धानामेतत्सम्प्र-दायचतुष्टयस्य खण्डनमेतस्य प्रमाणं यत् सूत्रकारः एतज्जगत् सत्यं स्थिरं च अवगच्छति।

( ४ ) वैधर्म्याच्च न स्वप्नादिवत् ( २।२।२९ ) एतत्सूत्रं स्पष्टतया एतत्सूचयति यत् सूत्रकारस्यैतदभिमतं यदेतज्जगत् केवलं स्वप्नादि-वन्न वर्तते। अद्वैतवादिना शंकरेणापि स्वयमत्रोक्तम्—'नैवं जागरितोप-लब्धं वस्तु कस्यांचिदप्यवस्थायां बाध्यते।

## जगतो व्यावहारिकमहत्त्वम्—

इत्थं जगतः सत्यत्वे सिद्धेऽपि यद्यपि वेदान्तदृष्ट्या तद्विषये तदीय-पदार्थानां वा विषये काचिदपि विचारणा अविद्यैव तथापि सीमितो-द्देश्यलक्ष्याणामस्माकं कृते तेषामत्यन्तोपयोगित्वम्।

एतदिहावश्यं स्मर्तव्यं यदाध्यात्मिकज्ञानार्जनाधिकारित्वावाप्तये प्रारम्भत एव इन्द्रियानुभवसाहाय्यमावश्यकम् इत्याध्यात्मिकज्ञानोच्च-तमकोटिस्वरूपपरविद्यामवाप्तुमविद्यारूपसाधनस्यावश्यकत्वम्; द्वैतसाहा-य्यमन्तरेणाद्वैतावाप्तिर्हि सर्वथा असम्भवा।

साधारण्येनाप्येतदवलोक्यते यत् कश्चिदपि मनुष्यो निम्नक्षेत्रे अभ्यासकरणमन्तरेण आध्यात्मिकशिखरं नावाप्तुं शक्नोति। आध्या-

---

१. राधाकृष्णन् महोदयस्य 'इण्डियन फिलासफी' द्वितीयो भागः पृ० ४४३

त्मिकोच्चशिखरस्याधस्तात्स्थलं जगदेवेति एवंभूतेन जनेन तदुच्चशिखरावाप्तिविषयिणी कदापि विचारणापि न कर्तव्या, यः स्वकीयसाधनायाः प्रारम्भिकदशायामेतन्न विश्वसेद् यदिदं जगत्सत्यम् तथा तत्र अन्तर्यामिरूपेण तद् ब्रह्म वर्तमानमपि ततः परं वर्तते। एवं भूतायाः एकात्मतायाः एकतायाश्च परिपूर्णानुभवस्यैकमात्रं साधनं भक्तिरस्ति या शेषशेषिणोः ( भक्तस्य परमात्मनश्च ) मध्ये, अभेदभावस्य पूर्वधारणामुपस्थापयति। भेदभावनया च भक्तो न सम्यगेतदवधारयितुं शक्नोति यन्मम स्वं प्रति अन्यांश्च प्रति किं कर्तव्यं वर्तते नापि च स परार्थवृत्त्या किमपि कार्यं कर्तुं शक्नोति। एतत्तु तस्यैव कृते सम्भवति यः इन्द्रियानुभूतजगति वर्तमानः अपि, 'वसुधैव कुटुम्बकम्' इति भावनया आत्मानं जगद्रूपिकुटुम्बस्यैकव्यक्तिमवगच्छेत्। एतदेव चाध्यात्मिकोच्चतमकोटेरवाप्तेश्चरमं चिह्नम् यच्च जागतिकसर्वशोकमोहादिपरित्यागपूर्वकसकलैकत्वानुभवेन लक्ष्यते। एषैव स्थितिः ईशावास्ये इत्थं निर्दिष्टा—

> यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।
> तत्र को मोहः कः शोकः एकत्वमनुपश्यतः[1]॥

किन्तु एवंभूतां स्थितिं प्राप्तुं सतताभ्यासस्य आवश्यकता वर्तते। यं विना मनुष्यः शाश्वतसत्येन ( परमात्मना ) सह स्वकीयमात्मिकसम्बन्धं स्थापयितुं सर्वथा असमर्थः।

एवंभूतस्य अभ्यासस्य समुचितं स्थलमेतद् दृश्यमानं जगत्तस्य व्यावहारिकसत्यत्वाकलनं च वर्तते। अभ्यासस्य परिपूर्णावस्थायाः प्रागेव संसारासत्यतादिज्ञानस्य व्यर्थाडम्बरप्रदर्शनं विनाशस्य मूलमेव—ज्ञानदृष्ट्या अवलोकनेनैतच्छरीरं मलमूत्रमांसमज्जादिघृणास्पदपदार्थानां विकारमात्रं तथाप्यस्माभिस्तत्प्रीतिपात्रमवबुध्य तद्दर्शनस्पर्शादिभिरानन्दोऽनुभूयते।

विचारदृष्टिनिक्षिप्त्या सर्वेष्वेतद्धनजनादिषु न कस्यापि स्वत्वम्, अस्मिन् क्षणे अस्माकं चेत्क्षणानन्तरमेव न ज्ञायते कस्यां दशायां निपतिता अस्माकं पक्षे कथं वर्तेरन् आमरणं तेषाम् अस्माभिः सह स्थितेः सम्भावनायामपि—'सम्मीलने नयनयोर्नहि किंचिदस्ति'। किन्तु एतदवगत्य यदि वयं सर्वेभ्यः सम्बन्धविच्छेदं कुर्याम, 'कस्यापि नाहं न च

---

१. ई० उ० ७

कोऽपि मेऽत्र' इति भावनया गृहसमेतानि सर्वाणि च भोगविलासादि-साधनानि द्रव्यादीनि वा इतस्ततः प्रक्षिप्य अन्येभ्यो वा वितीर्य मल-मल्लकं धारयेम तदा स्त्रीपुत्रादीनपि दुःखगर्तेषु निपातयन्तो निजाश्रित-दुःखदानपापभागिनश्च भवन्तः सर्वप्रकारसुखसौविध्येभ्यो वंचिताः भवेम।

विद्यालयेषु, शैशवादारभ्याद्यावधि समस्तभूगोल-खगोलाध्ययना-नन्तरमपि स्वर्गनरकयोः स्थितिर्नाद्यापि कुत्राप्युपलब्धा किन्तु तत्प्राप्ति-लोभतन्निपतनभये उपेक्ष्य यदि सत्कर्मस्वभिरुचिमसत्कर्मसु च घृणां न कुर्मस्तदा स्वेषामन्येषां च अनिष्टमेव निश्चयेन कुर्याम। अतश्च विनश्वरत्वेन संसारस्य तदीयपदार्थानां च मिथ्यात्वेऽपि यत्किंचिदवधि अस्य सत्यत्वस्वीकृतिरेव श्रेयस्करी।

## जगतः आध्यात्मिकमहत्त्वम्

अस्य जगतः अस्मदादिशरीराणां च व्यावहारिकसत्यत्वस्वीकारे एव पूर्वोक्ताभ्यासादीनां सम्भवः। तदानीमेव चोत्पन्नेन वास्तविकज्ञानेन जागतिकवास्तविकताविश्लेषणपूर्वकं तदीयमहत्त्वपरिज्ञानम्।

अनयैव भावनया वेदान्तस्यैतत्करणं समुचितमेवासीत् यत् तेन जगतः आध्यात्मिकमहत्त्वम् दृश्यमानसत्यतां परमसत्याद् ब्रह्मणोऽपृथ-क्कृत्य तदीयव्यावहारिकमहत्त्वमुपेक्षितम्। तयोर्हि तत्पृथक्त्वे अस्य जगतः सत्ता कुत्रचित्तु अवश्यं स्यात्, किन्तु ब्रह्मणि न सा[1]सम्भवेत्। इत्थं च ब्रह्मणः सर्वान्तर्यामिता अनन्तता च व्याहन्येत। महतामपि अद्वैतवादिवेदान्तिनां सिद्धान्तानुसारेणापि ब्रह्मणः पृथग् जगतः स्वकीया न काचित् स्वतन्त्रसत्ता वर्तते। अयमेव परिपूर्णैकात्म्यानुभवः परम-शान्तेः एकमात्रं साधनम्।

किन्तु यावदाध्यात्मिकताया इयमुच्चतमस्थितिर्न प्राप्येत यावच्च अहंता-ममता-भेदो न समाप्नुयात्तावन्मनुष्यो जगतः सत्यतामस्वीकर्तुं न अधिकरोति। यावच्च स ब्रह्म-जीव-जगतां भेदमाकलयितुं विवशः सन् धार्मिक-सामाजिक-नैतिक-राजनैतिककर्तव्यानां परिपालनार्थं बाधितः न तावदवधि तस्य कृते जगतः तत्सम्बन्धस्य, तदीयवस्तूनां वा मिथ्या-त्वम् ( मायामयत्वम् ), किन्तु यस्मिन् समये व्यक्तिगताहंकृतिः परिपूर्ण-तया समाप्नोति, स्वानुभवेन 'तत्त्वमसि' स्वरूपसत्यस्य साक्षात्कृत्या ब्रह्मजीवयोस्तादात्म्यप्रतीतिः, बहिर्जगदस्तित्वस्य मायामयता च बोध-

१. बेल्वल्करः—हिस्ट्री आफ इण्डियन फिलासफी पृ० ४१—४३

गम्या संजायते तदानीं स जगत् मिथ्या आकलयितुमधिकरोति[1]। किन्त्वहंकृतिपूर्णसाधारणमनुष्यैरियं स्थितिः प्राप्तुमशक्या। इयं हि विचाराणामन्यस्यैव क्षेत्रस्य स्थितिरिति तत्क्षेत्रं यावद् गन्तुं यदि वयं नोद्योगं कुर्मस्तदा तदवाप्तेरस्माभिः कदापि विचारणापि न कर्त्तव्या, किन्तु यस्मिन् संसारे वयं निवसामस्तस्मात्तस्य क्षेत्रस्य निन्दाकरणमपि मौर्ख्यमेव। यैर्हि सा दशा स्वयमनुभूता तेषामेतत्कथनं यत् तस्य सर्वोच्चकोटेराध्यात्मिकसत्यस्य साक्षात्कारः एभिश्चर्मचक्षुर्भिः सर्वथा असम्भवः। यथा च भगवती श्रुतिः—

> अन्यदेवाहुः सम्भवादन्यदाहुरसंभवात्।
> इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥[2]

---

## उपसंहारः

इत्थं पूर्वोक्तसमीक्षयेदमायातं यज्जगतो विषये विभिन्नाचार्याणां यथासिद्धान्तमनेके मतभेदाः। तत्र जगद्विषयकधारणाभेदश्चाद्वैतविशिष्टाद्वैतमतयोर्विरोधस्य वैशिष्ट्यम्। विरोधश्चायं न जगतोऽनुभवगतसत्ताविषये तद्व्यावहारिकसत्यताविषये च वर्तते, अपि तु जगतः पारमार्थिकसत्ताविषये तस्य चरमसत्यताविषये च वर्तते। जगतः प्रत्यक्षानुभवः एतच्च साधारणलौकिकज्ञानस्यासंदिग्धं सामान्यं सत्यमेतावच्छंकरस्याप्यभिप्रेतम्। किन्तु तदनुसारेण त्रिकालाबाधितवस्तुन एव चरमसत्यत्वमिति नित्यवर्तमानस्यैव पदार्थस्य पारमार्थिकसत्यत्वे केवलस्यात्मन एव पारमार्थिकसत्यत्वम्। जगच्चानादि, व्यवहारकाले वर्तमानमपि च अनन्तम्। लौकिकप्रत्यक्षेणोपलभ्यमानमपि जगत् आत्मानुभूतिपारमार्थिकावस्थायां तद् बाध्यते इति व्यावहारिकदृष्ट्या सत्यमपि जगत् पारमार्थिकदृष्ट्या असत्यम्। तद्दृष्ट्या तु एकमात्रं ब्रह्मैव परमं सत्यम्। सर्वमन्यत्तु मिथ्या। अविद्या च जीवजगतोरुभयोः प्रतीतिकारणम्। तन्नाशानन्तरमात्मानुभवावस्थायां ब्रह्मजीवयोस्तादात्म्ये जगतो विलयः।

---

1. जगतः सत्यत्वासत्यत्वे योगवाशिष्ठे इत्थमुक्ते—

   यथास्थितमिदं विश्वं निजभावक्रमोदितम्।
   न तत्सत्यं न चासत्यं रज्जुसर्पभ्रमो यथा ॥
   मिथ्यानुभूतितः सत्यमसत्यं सत्परीक्षितम्। ( यो. वा. ४०—४१ )

2. ई० उ० १३।

जगतो व्यावहारिकसत्ता तु अद्वैतमते स्पष्टतया स्वीकृता वर्तते। आत्मानुभूतौ जगतो बाधेऽपि ततः पूर्वं तत्सत्यत्वमवश्यमाकलनीयम् इत्यात्मानुभूतेः ब्रह्मतादात्म्यावाप्तेश्च प्राक् प्रत्यक्षमुपलभ्यमानस्य जगतो निराकृतिः साहसमात्रम्। मुक्तेरव्यवहितपूर्वकालं यावत् व्यावहारिक-दृष्टिकोण एव वरीयान्। तस्यैव च व्यावहारिकावस्थायाः अनुकूलत्वात्। पारमार्थिकदृष्टिकोणस्तु परमार्थज्ञानावस्थायामेव सम्भवति उचितश्च वर्तते इति मोक्षपर्यन्तं व्यवहारस्य सत्यतया जगतो व्यावहारिकसत्ता अद्वैतवादे अभिमता वर्तते, आत्मानुभूतौ च परमार्थदृष्टिप्राप्तेरनन्तरमेव जगतो मिथ्यात्वज्ञानोदयः।

इत्थं च शंकरमते एतज्जगन्न विज्ञानवादवत् मानसिक-मात्रं स्वप्नमात्रं वा, न चापि शशशृंगवदाकाशकुसुमवद्वा असत् शून्यं वा वर्तते। विज्ञानवादं खण्डयन् शंकरो जगतो व्यावहारिकसत्तायाः स्वाप्नसृष्टेश्च भेदं स्पष्टीकृतवान्—अस्मिँश्च प्रसंगे स व्यवहारकोटेः पृथक् एकां तृतीयां प्रातिभासिकसत्ताकोटिमपि च निरदिशत्।

जाग्रतो व्यावहारिकानुभवस्य च पदार्थानां बाह्यसत्ता अनुभव-सिद्धा। व्यवहारे अर्थज्ञानयोर्भेदः स्पष्ट इति व्यावहारिकविषयो न विज्ञानमात्रम्। स्वाप्नविषयाणामिव जाग्रद्व्यावहारिकविषयाणां शशशृंगयोराकाशकुसुमस्य तु न स्वाप्नी अप्युपलब्धिरिति प्रत्यक्षव्य-वहारे समुपलब्धेः कारणात् जगतः सत्ता स्वप्नात्, विज्ञानात्, असतः शून्याद्वा सर्वथा भिन्नेति जगदसतः प्रतिभासिकसत्याच्च भिन्नमेकं व्यावहारिकं सत्यं न, किन्तु तन्नितान्तं निर्बाधम् इति त्रिकालाबाधितनि-त्यसत्यार्थे न तस्य सत्यत्वम्। स्वप्नवत्सहसा तद्बाधाभावेऽपि अन्ततः परमार्थज्ञाने मोक्षावस्थायां वा तद्बाधसिद्धेः।

इत्थं च व्यावहारिकदृष्ट्या प्रातिभासिकस्वप्नसत्ता मिथ्या। पारमा-र्थिकदृष्ट्या च व्यावहारिकजाग्रज्जगत्सत्ता मिथ्येत्यन्ततः तर्कदृष्ट्या उभयोः मिथ्यात्वकोटौ किमन्तरमित्येतत्प्रतिपादनस्याशक्यतया केनापि तर्काग्रहग्रहिलेन जीवनं जगच्चैको जाग्रत् चिरस्थायिस्वप्नः प्रति-पादयितुं शक्यते। अतः सत्यस्यायं कोटिभेदो लोकजीवनस्य व्यावहा-रिक दृष्ट्यैव मान्य इत्यधिकतया मोक्षात्पूर्वमनिवार्यरूपेणापेक्षितत्वात् च व्यवहार एव कोटिविभागस्य समुचितो मानदण्डः।[1]

---

१. जगद्विषयकमन्यदपि विस्तृतं विवेचनं 'परतत्वं जीवो जगच्चेति' शीर्षके द्रष्टव्यम्।

# पंचमः अध्यायः

## ( सूक्ष्मं जगत् )

### भाष्यकाराणां सूक्ष्मजगद्विचाराः

पूर्वस्मिन्नध्याये सामान्येन स्थूलजगतो विषये शंकराद्याचार्याणां विभिन्ना धारणास्तत्तत्सम्प्रदायानुसारं तेषां मतभेदाश्च प्रदर्शिताः। सूक्ष्मजगतः अपि सृष्ट्यन्तर्गतत्वेन तद्विवेचनमपि नितरामावश्यकमिति तदिह विधीयते।

तत्र चिदचिन्मिश्रे अस्मिन् जगति मुमुक्षूणां तत्त्वजिज्ञासायां स्वाभाविकी प्रवृत्तिर्जायते। तत्त्वं च सामान्यतो द्विविधम्—जडवस्तुनो मूलस्वरूपम्, चेतनवस्तुनो मूलस्वरूपं च। तस्य, जडस्य चेतनस्य वा वस्तुनो भावः अर्थात् मूलस्वरूपं तत्त्वम् इतीह तत्त्वशब्दार्थः।

तानि च तत्त्वानि प्रतिदर्शनं तत्तद्दर्शनकाराणां स्वस्वप्रतिपत्त्यनुसारेण भिन्नभिन्नानि। तथापि श्रुतिप्रतिपादिततत्त्वविषये सर्वदार्शनिकानां प्रायः ऐकमत्यम्। तत्त्वान्वेषणकुशलाः प्रेक्षावन्तो हि स्थूलमर्थमालोच्य तत्कारणीभूतं सूक्ष्मं वस्तु कीदृशं स्यात्, तथा विशेषमर्थमालोच्य तत्कारणीभूतं सामान्यरूपं कीदृशं स्यात्, एवमेव च मूर्तमर्थमालोच्य तत्कारणीभूतममूर्तं वस्तु कीदृशं स्यात् इति विचारणायां प्रकृत्यैव प्रवर्तन्ते। कार्यकारणभावे ज्ञापिते च इयमालोचना प्रेक्षावतां सुलभा भवेदित्यभिप्रायेण परमात्मानमारभ्य शरीरादिस्थूलार्थजातपर्यन्तं कार्यकारणभावज्ञापनाय श्रुत्या सृष्टिक्रमो वर्णितः। अयं च सृष्टिक्रमो वस्तुत एकविध एव। केवलं श्रुतिवाक्यैः बहुषु स्थलेषु भिन्नभिन्नप्रकारेण वर्णितः। तेषां सर्वेषां चैकवाक्यता श्रीमद्बादरायणाचार्येण द्वितीयाध्यायस्य उत्तरार्द्धे प्रदर्शिता।

### शंकरस्य—

वर्णितसृष्टिक्रमानुसारेण च इमानि तत्त्वानि सम्भवन्ति—पृथिवी, जलं, तेजः, वायुराकाशश्चेति पंचभूतानि। तन्मात्राः, गन्धः, रसः, रूपं, स्पर्शः शब्दश्च, एवं तद्ग्राहकाणि पञ्च श्रोत्रादीनि ज्ञानेन्द्रियाणि, तत्प्रेरकं मनः;तथा पञ्च कर्मेन्द्रियाणि। तदधिष्ठाता प्राणः। बुद्धिर्महान आत्मा अव्यक्तं पुरुषश्चेति। एषु च तत्त्वेषु कार्यकारणभावः श्रुत्या प्रतिपादितः।

तस्याशयस्तु कार्यं कारणदृष्ट्या समालोचनीयमित्येवं सर्वमूलकारणभूतः परमात्मा साक्षात्कृतो भवेदिति । तथा बाह्ये वस्तुनि ज्ञाते तदन्तस्थं वस्तु ज्ञातुं शक्यते इत्याशयेन परमात्मनः सर्वान्तरत्वं श्रुत्या प्रतिपादितम् । एवं स्थूले वस्तुनि ज्ञाते तदपेक्षया सूक्ष्मं ज्ञातं भवति, तस्मिंश्च ज्ञाते तद-पेक्षया सूक्ष्मतरं ज्ञातं भवति ।

तत्रास्मिन् दृश्यमाने जगति यथा शरीरात्मनोरुभयोः संयुक्तसमूहो जीवनम्, उभयोर्विमुक्तिश्च मरणम् । शरीरेण विना आत्मा शक्तिरहितः, आत्मविरहितं च शरीरं शवरूपं चैतन्यहीनम् (जडम्) पार्थक्येन किमपि शरीरं नापि चात्मा जीवननाम्ना वक्तुं शक्यते । इत्थमुभयोः समष्टिरेव यथा जीवनं तथैव विस्तृताया अस्याः सृष्टेरपि एवमेवैकं शरीरम्, एकश्चात्मा । सृष्ट्यवस्थायां तदुभयं संयुक्तं प्रलयावस्थायां चोभयं वियुक्तम् । तत्र प्रकृतिः सृष्टेः शरीरम् । परब्रह्मपरमात्मा च तदात्मा । एतदेव चिदचित्तत्त्वद्वयं पुरुषः । प्रकृतिः, ब्रह्म, माया, आत्मा, शरीरम् एवमन्यान्यभिन्नभिन्ननामभिरुच्यन्ते । एतत्तत्त्वद्वयसमष्टिः संसारः । इन्द्रियग्राह्यं जगद्वोच्यते । सृष्ट्यवस्थायां तदुभयं स्वकीये स्थूलरूपे, प्रलयावस्थायां च सूक्ष्मरूपे समुपलभ्यते ।

आत्मशरीरयोरुभयोः समूहरूपेण वर्तमानायां जीवनरूपसमष्टौ शुद्धात्मतत्त्वं निर्विकारं सच्चिदानन्दस्वरूपं किन्तु शरीरावरणाच्छन्नं तत् जीवात्मरूपेण अस्माभिरुपलक्ष्यते । अयम् आत्मा, स्थूलसूक्ष्मलिंग-नामकैः त्रिभिः शरीरैः अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमय-नामकैः पञ्चभिश्च कोशैः समावृतः । स्थूलं शरीरमेव अस्माकमन्नमयः कोशः । स्थूलशरीरस्य निर्माणं वृद्धिश्च भुक्तपदार्थैः संजायते । अस्माकं सूक्ष्मशरीरे प्राणमय-मनोमय-विज्ञानमय कोशानां स्थितिः । अस्माकं कारणशरीरे आनन्दमयः कोशः । मृत्योः समये स्थूलशरीरमात्मना वियुज्यते किन्तु सूक्ष्मशरीरं मृत्योरनन्तरं स्वर्गनरकजन्मान्तरावस्थास्वपि आत्मना सहैव तिष्ठति । जीवात्मनः कर्मसंस्काराः अस्मिन् सूक्ष्मशरीरे एव अङ्क्यन्ते । तदेव च सूक्ष्मं शरीरं स्वर्गनरकपुनर्जन्मभवबन्धनादीनां कारणम्; तथाहि—

> पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
> अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्[1] ॥

१. वं० शारीरकम् ।

अस्मादेव सूक्ष्मशरीरान्मुक्तिर्मोक्षः । अज्ञानोपाधि, सुषुप्तावपि च वर्तमानं, सूक्ष्मशरीरकारणीभूतं कारणशरीरमुच्यते । तत्त्वज्ञानेन तु तस्य मोक्षावस्थायां नाशः । न तु ततः पूर्वं कथमपि तत् जीवात्मना परित्यज्यते अपि तु तावत्कालपर्यन्तं तेनैव सह तिष्ठति । प्रकृतेरष्टाभिरवयवैः सृष्टेः रचना गीतायामित्थं प्रतिपादिता वर्तते—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा[1] ॥

तत्र आद्यस्थूलतत्त्वपंचकेन स्थूलशरीरनिर्माणम् । मनोबुद्ध्यहंकारैरेभिः सूक्ष्मतत्त्वैः सूक्ष्मशरीरनिर्माणम् । तदेव च सूक्ष्मशरीरं जीवात्मनः असंख्यपुनर्जन्मनाम्, योनिपरिवर्तनानां च कारणम्, 'मुख्यं तु सप्तदशकं प्रथितं हि लिंगम्' इति संक्षिप्तशारीरकभाष्यानुसारेण तथा 'सप्तदशः प्रजापतिः' इति शतपथब्राह्मणानुसारेण इदमेव लिंगशरीरमप्युच्यते । तत्र ज्ञानेन्द्रियपंचकं बुद्धिमनसी कर्मेन्द्रियपंचकं वायुपंचकं च इत्येतेषां संकलनेन सप्तदशावयवत्वम् । तेषु च श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि ज्ञानेन्द्रियाणि । तानि चाकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते । तत्र 'अहं ब्रह्मास्मि' 'इदमित्थम्' एतन्निश्चयात्मिकान्तःकरणवृत्तिर्बुद्धिः । इदमित्थं न वा । अहं चेतनस्वरूपं शरीरं वा । इतिसंशयात्मिकान्तःकरणवृत्तिर्मनः । स्मरणात्मकचित्तस्य बुद्धौ, गर्वात्मकाहंकारस्य च मनस्येवान्तर्भाव इति न पार्थक्येन तल्लक्षणस्यावश्यकत्वम् ।

मनोबुद्धिचित्ताहंकाराणां चतुर्णामेकं मिलितमन्तःकरणं नाम । तदुक्तं वार्तिके—

मनोबुद्धिरहंकारश्चित्तं चेति चतुर्विधम् ।
संकल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ॥
अभिमानात्मकस्तद्वत् अहंकारः प्रकीर्तितः ।
अनुसंधानरूपं च चित्तमित्यभिधीयते[2] ॥

तस्यैकत्वेऽपि संशयनिश्चयस्मरणगर्वरूपविभिन्नकार्यपरतया भिन्नकार्यपरत्वेन पाठक-पाचक-याचकवद् व्यवहारः । एतानि च सर्वाणि व्योमादिगतसात्त्विकांशेभ्यो मिलितेभ्यः समुत्पद्यन्ते । तत्र मनोबुद्धि-

---

१. गीता ७।४ २. अद्वैतामोदः पृ० १२

चित्ताहंकाराः प्रकाशात्मकाः । एतदेवैतेषां महाभूतसात्त्विकांशकार्यत्वे प्रमाणम् ।

ज्ञानेन्द्रियैः सहिता बुद्धिर्विज्ञानमयः कोशः उच्यते । तद्युक्तं चैतन्यं कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभिमानित्वेन स्वर्गादिलोकगामि भवति । व्यावहारिकदशायां चैतदेव विज्ञानमयकोशयुक्तं चैतन्यं जीवसंज्ञां लभते ।

सत्त्वगुणांशोत्पन्नत्वेन सत्त्वगुणप्रधानम् । चक्षुःश्रोत्रादिज्ञानेन्द्रियसहितं च मनो मनोमयकोशः कथ्यते । मनसः सत्त्वगुणांशकार्यत्वेऽपि रजोविकारेच्छारूपित्वेन संकल्पविकल्पात्मकत्वात् बुद्ध्यपेक्षया अधिकजडत्वाच्चास्मिन्नेष व्यवहारः । बुद्धेश्च निश्चयान्तःकरणवृत्तित्वेन तत्र संकल्पविकल्पाभावात् । आत्मनश्च कोशवदाच्छादकत्वात् अस्मिन् कोशत्वव्यवहारः ।

वागादिकर्मेन्द्रियपंचकमाकाशादिरजोगुणांशेभ्यः क्रमशः पार्थक्येन उत्पद्यते । आकाशादिषु सत्त्वरजसामेषां त्रयाणामपि गुणानां वर्तमानत्वेऽपि वागादिष्वाकाशादिरजोंऽशाधिक्यमिति रजोगुणप्रधानाकाशाद् वागिन्द्रियम्, रजोगुणप्रधानवायोः पाणीन्द्रियम्, रजोगुणप्रधानाग्नेः पादेन्द्रियम्, तथा रजोगुणप्रधानाज्जलान्मलविसर्जनेन्द्रियम् । एवं रजोगुणप्रधानपृथिव्याः मूत्रविसर्जनेन्द्रियं चोत्पद्यते ।

प्राणाद्यः पंच वायवः । एतेषां चोत्पत्ती रजोगुणप्रधानाकाशादिमिलितांशेभ्यो भवति । कर्मेन्द्रियसहितं तत्प्राणपंचकं प्राणमयकोशः कथ्यते । एतच्च क्रियात्मकमित्यस्य रजोगुणांशकार्यत्वम् । पूर्वोक्तविज्ञानमय-मनोमय-प्राणमयकोशेषु विज्ञानमयकोशो ज्ञानशक्तिसम्पन्न इति कर्ता कथ्यते । मनोमयः कोशः इच्छाशक्तिसम्पन्नः इति कार्यमुच्यते । ज्ञानेन्द्रियसहितो बुद्धिरूपकर्ता मनोज्ञानेन्द्रियरूपकारणसाहाय्येन प्राणादिपंचकद्वारा च गमनादिकार्यं कारयतीति तत्त्वम् । तत्तत्क्षमतानुसारेणैवैते स्वकार्ययोग्यतानुसारं कर्तृकरणकार्यनामभाजः । एतत्त्रयं मिलित्वा सूक्ष्मशरीरमुच्यते ।

इदमेव सूक्ष्मशरीरं जीवात्मकृतकर्मभिः संस्क्रियते इत्यस्मद्वर्तमानजीवनमेवातीतानागतजीवनबीजम् । वटवृक्षलघिष्ठबीजे विस्तृतारोहपरिणाहि वटवृक्षवदस्मत्सूक्ष्मशरीरे सम्पूर्णस्य स्थूलशरीरस्य विस्तारो विकासश्चान्तर्निहितस्तिष्ठति । अनुकूलपरिस्थितौ चायं विस्तारो विकसितः सन् प्रत्यक्षतामापद्यते ।

तच्चेत्थं साधारण्येन कर्म अस्माभिः स्थूलशरीरेण क्रियते। एतच्च स्वतो न सत् नापि चासत्। तत्कृतिलब्धमेव केवलं भिन्नम्। तत्रैव च कर्मणः स्वरूपं निर्बिभर्ति। कृतिकाले ज्ञानेन्द्रियाणि स्नायुजालस्य ज्ञानतन्तवश्च तत्सूचनया मन उपयन्तीति मनोजगति किञ्चित् कम्पनमुत्पद्यते तथा सूक्ष्मशरीरे तत्कर्मसंस्कारः अंकितः संजायते। अयमेव संस्कारः अस्माकं प्रारब्धतां सम्पद्यते। मृत्योरनन्तरं स्थूलशरीरनाशेऽपि जीवेन सह वर्तमानमेतदेव सूक्ष्मशरीरं निजपूर्वजन्मकर्मसंस्कारं प्रवृत्तिरूपेणानयतीति प्रवृत्तिरज्ञातरूपेणास्मज्जीवनपथप्रदर्शनं करोति। इत्थं च कृतेऽपि कर्मण्यस्मत्सूक्ष्मशरीरे तरंगोत्पत्तिर्न स्यात्, कोऽपि क्षोभो नोत्पद्येत तदा कृतमपि कर्म न बन्धकारणं नापि च पापपुण्योत्पादकं भवेत्। एतेन कृतकर्मानुकूलपुण्यपापयोर्मानसिकभावनानामेव हेतुत्वम्। यथा च श्रुतिः—

> मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च।
> अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम्॥
> मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
> बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्[1]॥

तथा—'एतदेव मनःशब्दादिविषयासक्त्यवस्थायां बन्धकारणम्। यदा तु बाह्यविषयान् शब्दादीन् विमुच्यात्मरूपविषयासक्तं भवति तदा तदेवापवर्गकारणं भवति"[2]।

सूक्ष्मशरीरं मनोबुद्ध्यहंकृतितत्त्वत्रयनिर्मितमिति प्रतिपादितचरम्। पुनर्जन्मनः सर्वोऽपि विषयः एतेषामेव (मनोबुद्ध्यहंकाराणाम्) न्यूनाधिकमात्रासु निर्बिभर्त्ति। अहंकृतिराद्यं तत्त्वम्। एतेनैव सर्वतः पूर्वं स्वार्थस्वत्वाहंताभावना समुत्पाद्यते। जडेऽहंताभावनाऽभावः चेतने च तत्स्थितिरयमेव भेदः। एतेनैव भोजनार्थं, विकासार्थं वृद्ध्यर्थं च प्रेरणा समुपलभ्यते। वृक्षयोनौ केवलमहंकृतितत्त्वस्य प्राधान्यम्।

सूक्ष्मशरीराणां द्वितीयं तत्त्वं मनस्तत्त्वम्। एतेन सुखदुःखानुभवस्य, स्मृतेः, विचारस्य कल्पनायाश्च कृते प्रेरणोपलभ्यते। पशुयोनौ अहंकृतिमनोरूपतत्त्वद्वयस्य प्राधान्यम्। भोजनं विकासश्च यच्चाहंकृतितत्त्वस्य प्रधानं कार्यं, वृक्षयोनौ पशुयोनौ च समानरूपेणोपलभ्यते, किन्तु मनस्तत्त्वस्य यत्कार्यम्, इच्छानुभूतिः स्मृतिरित्यादि तत्तु प्राधान्येन पशुषु एवोपलभ्यते न वृक्षेषु।

---

१. ब्र० वि० उ० १–२  २. अद्वैतामोदः पृ० २८

बुद्धिः सूक्ष्मशरीराणां तृतीयं तत्त्वम् । बुद्धिर्विवेकस्य जननी, कर्तव्याकर्तव्ये निर्णयते । मानवयोनिसूक्ष्मशरीरेषु च मनोबुद्ध्यहंकृतीनामेतेषां त्रयाणामपि तत्त्वानां विकसितरूपमुपलभ्यते । पशवो हि कार्यप्रेरणां प्रवृत्त्या प्राप्नुवन्ति मनुष्याश्च बुद्धितत्त्वेन विवेकेन चेति, पशवो हि नैवमेवमवगच्छन्ति यत् सामाजिककल्याणाय जीवनमुन्नेतुं सेवायाः, स्नेहस्य, प्रेम्णः, त्यागस्य वा कियती आवश्यकता वर्तते । मानवता एतत्सर्वमपेक्षते । पशुता तु प्रवृत्तेरेव नामान्तरम् । प्रवृत्तिमेव केवलामनुसृत्य कार्यं कुर्वाणेषु अस्मासु पशुतायाः प्राधान्यम् । विवेकपूर्वककर्तव्यप्रेरणया कर्म कुर्वाणेषु चास्मासु मानवतायाः प्राधान्यम् इत्ययमेव पशुतायां मानवताया विजयः ।

वृक्षयोनिमारभ्य देवयोनिं यावत् सूक्ष्मशरीरस्य क्षेत्रम्—मायायाः साम्राज्यं सूक्ष्मशरीरे बुद्धेः प्राधान्यमस्तु अहंकृतेर्वा वृक्षयोनिरस्तु देवयोनिर्वा किन्तु यावदयमात्मा सूक्ष्मशरीरे तिष्ठति तावत्कर्मसंस्काराधीनप्रारब्धाधीनो बद्ध इति परित्यक्तसूक्ष्मशरीरदशायां मनोबुद्ध्यहंकृतिसत्त्वरजस्तमोभिः पूर्णतया स्वतन्त्र एव मुक्तोऽभिधीयते । गीताया निम्नाङ्कितश्लोकांशयोरिदमेवाभिव्यक्तम्—

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन[1] ।

× × ×

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मृत्युलोकं विशन्ति[2] ।

× × ×

सूक्ष्मशरीरस्य विकासो हि कर्मसंस्कारैः संजायते । कृतानि च सदसत्कर्माणि सूक्ष्मशरीरं प्रभवन्तीत्येषैवासक्तिरुच्यते । अनासक्त्या निर्लिप्त्या च केवलं कर्तव्यभावनयैव कृतानि न सूक्ष्मशरीरं क्षोभयन्तीति न तत्कर्मसंस्कारैः कथमपि प्रवृत्तेः सम्भवः । इत्थञ्चावरुद्धे सूक्ष्मशरीरविकासे प्रारब्धभोगानन्तरमेव मनोजगतो नाशो भौतिकजगतो मुक्तिसम्भवः । इममेव भावं गीतेत्थमभिधत्ते—

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।[3]

× × ×

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमान् लोकान् न हन्ति न निबध्यते ॥[4]

---

१. गीता ८।१६ २. तत्रैव ९।२१
३. तत्रैव ४।१४ ४. गीता १८।१७

अत्रापि चैषामखिलचराचरानन्तसूक्ष्मशरीराणामेकत्वविवक्षायाः भेदबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः। पार्थक्येन चानेक-जीवानां प्रत्येकं स्व-स्वसूक्ष्मशरीरस्य स्व-स्व-बुद्धिविषयतया वृक्षवज्जला-दिवद् वा व्यष्टिः। एतत्सूक्ष्मशरीरसमष्ट्युपहितं चैतन्यं स्रक्सूत्रमिव सर्वत्रानुस्यूतत्वात् पूर्वोक्तज्ञानेच्छाक्रियाशक्तितदुपहितत्वाच्च सूत्रात्मा हिरण्यगर्भः प्राणश्चोच्यते। अस्य सूत्रात्मकहिरण्यगर्भस्यैषा समष्टिः स्थूल-प्रपंचापेक्षया सूक्ष्मत्वात्। सूक्ष्मशरीरम, विज्ञानमयादिकोशत्रयं तथा विराड्रूपेणानुभूतस्थूलप्रपंचविषयकवासनामयत्वात्स्वप्नः। अत एव (सूक्ष्मत्वात् स्वप्नत्वाच्च) स्थूलप्रपंचलयस्थानमुच्यते।

एतत्सूक्ष्मशरीरव्यष्ट्युपहितं चैतन्यं तेजोमयान्तःकरणोपहितत्वात् तैजसम् उच्यते। अस्यापीयं व्यष्टिः, स्थूलशरीरापेक्षया सूक्ष्मत्वात् सूक्ष्मशरीरम्, विज्ञानमयादिकोशत्रयम् तथा विश्वचैतन्येनानुभूत-स्थूलशरीरादिविषयकवासनामयत्वात्स्वप्नः। अत एव (सूक्ष्मत्वात्स्वप्न-त्वाच्च) स्थूलप्रपंचलयस्थानं चोच्यते।

एतौ च सूत्रात्मतैजसौ स्वप्नकाले सूक्ष्माभिर्मनोवृत्तिभिर्वासनाम-यान् सूक्ष्मशब्दादिविषयान् सुषुप्तिकाले सूक्ष्माभिरज्ञानवृत्तिभिरीश्वर-प्राज्ञावानन्दमिवानुभवतः। तथा च श्रुतिः—'स्वप्नस्थानोऽन्तः-प्रज्ञः.......' इत्यादि।

अत्रापि विज्ञानमयादिकोशत्रयसमष्टिव्यष्ट्योः तदुपहितसूत्रात्मतैजस-चैतन्ययोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्चैवं जलजलाशयप्रतिबिम्बि-ताकाशवच्चैक्यम्। एवमपंचीकृतपंचमहाभूतेभ्यः सूक्ष्मप्रपञ्चोत्पत्तिः सा चापि स्थूलप्रपंचवद्ब्रह्मण एव जायते एतत् सर्वं ब्रह्मसूत्रभाष्ये तथा—'अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्' (२।३।१५) 'तथा प्राणाः' (२।४।१) 'तत्प्राक्श्रुतेश्च' (२।४।३) 'तत्पू-र्वकत्वाद् वाचः' (२।४।४), 'सप्तगतेर्विशेषितत्वात्' (२।४।५) 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्' (२।४।१७) इत्यादिभिर्मनः-सहितेन्द्रियाणामुत्पत्तिर्वर्णिता। प्रश्नोपनिषद्यपि एष एव विषयः—

'पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च'[1].....इत्यादिना प्राणाश्च विधारयितव्यं च' इत्यन्तेन तथा 'स प्राणमसृजत प्राणाच्छ्रद्धाम्...'[2] इत्यादिना चापि प्रतिपादितः। यतो ह्यत्रैतेषां सर्वेषां स्थितिः परमेश्वरे एव प्रतिपादिता—

---

१. प्र० उ० ४।८ २. तत्रैव ६।४

'एवं ह वै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते' ।[1]

मुण्डकोपनिषद्यपि—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारणी ॥[2]

इत्यनेन स एव विषय उक्तः ।

## रामानुजस्य—

रामानुजमते तु तद्भाष्ये ब्रह्मसूत्राणां द्वितीयाध्यायस्योत्तरार्द्धे 'न वियदश्रुतेः' ( २।३।१ ) इत्यारभ्य अग्रे आकाशादीनां तथा 'तथा प्राणाः' ( २।४।१ ) इत्यारभ्याग्रे प्राणादीनामुत्पत्तेः अन्याचार्यवदेव निर्देशोऽपि तदीयप्रकरणग्रन्थेषु भूताद्युत्पत्तिक्रमविस्तारः यत्किंचिद् अन्यथैवोपलभ्यते । तत्र भूतानां तन्मात्राणां चोत्पत्तावनेकं दर्शनम्, तथाहि—तामसाहंकारात् पंचापि तन्मात्राणि उत्पद्यन्ते, तेभ्यश्च क्रमेण पंचभूतान्युत्पद्यन्ते इत्येकम् । तामसाहंकारात् शब्दतन्मात्रमुत्पद्यते ।

शब्दतन्मात्रादाकाशः आकाशात्स्पर्शतन्मात्रम्, स्पर्शतन्मात्राद्वायुः । वायो रूपतन्मात्रम् । रूपतन्मात्रात्तेजः, तेजसो रसतन्मात्रम्, रसतन्मात्राज्जलम् । जलाद् गन्धतन्मात्रम् । गन्धतन्मात्रात् पृथिवीति द्वितीयम् । तामसाहंकारात्[3] शब्दतन्मात्रमुत्पद्यते । शब्दतन्मात्रादाकाशः स्पर्शतन्मात्रं चेति द्वयमुत्पद्यते । तथा स्पर्शतन्मात्राद् वायू रूपतन्मात्रं चेत्युत्पद्यते । रूपतन्मात्रात्तेजो रसतन्मात्रं चोत्पद्यते । रसतन्मात्राज्जलं गन्धतन्मात्रं चोत्पद्यते । गन्धतन्मात्रात्पृथिवी उत्पद्यते इति तृतीयम् । आकाशादिषु पंचसु भूतेषु शब्दादीनां पंचानां गुणानामुत्तरोत्तरमेकैकाधिक्यमस्ति । तथा चाकाशे शब्दो, वायौ शब्दस्पर्शौ, तेजसि शब्दस्पर्शरूपाणि, जले शब्दस्पर्शरूपरसाः, पृथिव्यां शब्दस्पर्शरूपरसगन्धाः इति ।

पञ्चमहाभूतानां पञ्चीकरणप्रक्रिया तु शंकरवदेवास्मिन् मतेऽपि बोध्या । किंच, एतन्मते सत्त्वरजस्तमोरूपगुणत्रयवती प्रकृतिर्महदादिचतुर्विंशतितत्त्वात्मिका मूलप्रकृतिरेव सर्वोत्पत्तिहेतुः[4] । तत्र त्रिगुणायां तस्यां भगवत्संकल्पाधीनगुणवैषम्यात्कार्योन्मुखावस्था अव्यक्तशब्देनोच्यते । तस्माद्-

---

१. तत्रैव ४।७ २. मु० उ० २।१।३

३. यतीन्द्रमतदीपिका

४. 'मदीया प्रकृतिः सत्यसंकल्पेन मयाध्यक्षेणेक्षिता सचराचरं जगत्सूयते' ( गीतायां रामानुजभाष्यम् ९।१० )

व्यक्तात् महत्तत्त्वमुत्पद्यते—बुद्धिसामान्यस्य महत्तत्वमिति पारिभाषिकी संज्ञा। तच्च सात्त्विकं राजसं तामसं चेति त्रिविधम्। महत्तत्वादहंकारः उत्पद्यते, अयमेव देहात्माभिधानादिजनकः। अयमपि सात्त्विकराजसतामसभेदेन त्रिविधः। राजसाहंकारसहकृतात्[1] सात्त्विकाहंकारात ज्ञानेन्द्रियषट्कं कर्मेन्द्रियपंचकं च इत्येकादश इन्द्रियाणि[2] जायन्ते। मनःश्रोत्रचक्षुर्घ्राणरसनात्वग्भेदेन ज्ञानेन्द्रियं षड्विधम्। एषु षट्सु अन्तरिन्द्रियं मनः, श्रोत्रादीनि च पंच बाह्येन्द्रियाणि। तत्र मनः संकल्पस्मृत्यादौ कारणं भवति। बाह्येन्द्रियाणां विषयप्रवृत्तौ सहकारि च सम्पद्यते। एतदेव मनः शब्दादिविषयासक्त्यवस्थायां बन्धकारणम्। यदा तु बाह्यविषयान् शब्दादीन् विमुच्य आत्मरूपविषयासक्तं भवति तदा तदेव अपवर्गकारणम्।

## निम्बार्कस्य—

जीवानामदृष्टस्य अनादितया प्रलयकालान्तरे परमात्मेच्छानुसारं सात्त्विकादिगुणानां साम्यावस्थायां (प्रकृतौ) क्षोभः संजायते। तेनैव च तदा तत्त्वानामुत्पत्तिः। यथा चोक्तम्—'सृष्टिसमये परमात्मा स्वेच्छया पुरुषप्रधानयोः प्रविशति क्षोभं चोत्पादयति[3]। एष क्षोभः प्रकृतौ उत्पद्यते तथा च श्रुतिः—'तदैक्षत बहु स्यां प्रजायेय तत्तेजोऽसृजत'[4]।

'सोऽकामत बहु स्याम् प्रजायेय'[5]। "प्रकृतेः परिणामः व्यक्तमुच्यते तच्चानित्यम्"[6]। स च परिणामः विविधप्रकारः। तत्प्रक्रिया चेत्थम्-यदा परमात्माश्रिता प्रकृतिः त्रयाणां गुणानां साम्यावस्थायां क्षोभकारणेन फलोत्पादनोन्मुखी संजायते तदा तस्मात् सत्त्वरजस्तमोगुणप्रकृतिकनिश्चयात्मकस्य महतः उत्पत्तिः संजायते तदा तस्मात् सत्त्वरजस्तमोगुणप्रकृतिकनिश्चयात्मकस्य महतः उत्पत्तिः संजायते। ततोऽहंकारस्योत्पत्तिः, अयमपि च गुणानां भेदात् त्रिविधः। सात्त्विकधर्मादुत्पन्नः अहंकारः वैकारिकः। राजसिकधर्मादुत्पन्नः तैजसः। तामसिकधर्माच्चोत्पन्नः अहंकारः भूतादिरुच्यते।

तत्र वैकारिकादहंकाराद् इन्द्रियाद्यधिष्ठातृदेवतानां मनसश्च उत्पत्तिः। मनश्च निजक्रियायाः स्थितेश्चानुसारं मनोबुद्ध्यहंकारचित्तनामकं संज्ञा-

---

१. यतीन्द्रमतदीपिका

२. 'न सप्तैवेन्द्रियाणि अपि तु एकादश' (रा० भा० २।४।५ तथा ४।५।५)

३. वे० र० म० पृ० २३–२४ ४. छा. ६।२।३

५. तै० २।६ ६. कौस्तुभे (१।१।१)

यते । एतेषु मननादिकारणं मनः । एतदेव च शब्दस्पर्शरूपरसगन्धादिविषयाननुभवद् बन्धकारणम् । परित्यक्ततत्सम्बन्धं च परमात्मोन्मुखं मुक्तिकारणं संजायते । यथा चोक्तं ब्रह्मबिन्दूपनिषदि—

> मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
> बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥[1]

शुद्धाशुद्धभेदेनैतद् द्विविधम् । कामनादिरहितं शुद्धं कामनादियुक्तं चाशुद्धम् ।

बोधनसाधनं बुद्धिः । तत्र शरीरादिविषयकाहंबुद्धिरहंकारः । चिन्तनसाधनं च चित्तम् । चन्द्रो ब्रह्मा रुद्रः क्षेत्रज्ञश्चैतेषां क्रमशोऽधिष्ठातृदेवताः । व्यूहदेवाः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाः तेषामधिष्ठातृदेवा इत्यन्ये । गलान्तं मनसः स्थानम्, वदनं बुद्धेः, हृदयमहंकारस्य । नाभिर्हृदयस्य[2] ।

तैजसाहंकाराच्च दशानां ज्ञानकर्मेन्द्रियाणामुत्पत्तिः । शब्दस्पर्शरूपरसगन्धाश्च ज्ञानेन्द्रियाणां विषयाः । दिग्वायुः, अर्कः, वरुणः, अश्विनौ च क्रमशः तदधिष्ठातृदेवताः । महाभूतेभ्यो वर्द्धनेनैव एतानि भौतिकान्यप्युच्यन्ते ।

वाग्हस्तपादपायूपस्थाभिधानि पञ्चकर्मेन्द्रियाणि । वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयश्चैतेषामधिष्ठातृदेवताः । दशानामेतेषामिन्द्रियाणां शारीरकोपनिषद्येवं संग्रहः—

> श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् ।
> पायूपस्थौ करौ पादौ वाक् चैव दशमी मता[3] ॥

भौतिकाहंकारात् पञ्चानां तन्मात्राणां ताभ्यश्च पञ्चानां महाभूतानामुत्पत्तिः । इत्थं च भूताद्यहंकारादुत्पन्नायाः शब्दतन्मात्रायाः आकाशोत्पत्तिः । आकाशाच्चोत्पन्नायाः स्पर्शतन्मात्रायाः वायोरुत्पत्तिः । वायोरुत्पन्नायाश्च रूपतन्मात्रायास्तेजस उत्पत्तिः । तेजसश्चोत्पन्नायाः रसतन्मात्रायाः जलोत्पत्तिः । जलादुत्पन्नायाश्च गन्धतन्मात्रायाः पृथिव्युत्पत्तिरित्युत्पत्तिक्रमेण तत्र तत्र स्वेषां स्वेषामुपादानानां स्थितिः । पृथिव्यां सर्वेषां पञ्चानाम्—शब्दस्पर्शरूपरसगन्धानाम्, जले चतुर्णाम्—शब्दस्पर्शरूपरसानाम्; तेजसि त्रयाणाम्—शब्दस्पर्शरूपाणाम्; वायौ द्वयोः—शब्दस्पर्शयोः, आकाशे चैकस्यैव—शब्दस्य ।

---

१. ब्र० बि० उ० २ २. शारीरकोपनिषत्

३. शारीरकोपनिषत्

वायुरपि च शरीरस्थितिसाधनम्। स च प्राणापानसमानोदाना-भिधः पञ्चप्रकारः। नागादीनां च शंकरवदेषु पञ्चस्वेवान्तर्भाव इति निम्बार्कः।

इत्थं निम्बार्कमते भौतिकजगतो निष्पादकानि चतुर्विंशतितत्त्वानि। गोपालोपनिषदादौ त्वन्योऽपि सृष्टेरुत्पत्तिप्रकारोऽभिहितः। स चाना-वश्यकतया त्यज्यते।

तत्र पञ्च तन्मात्राः, मनः ज्ञानकर्मेन्द्रियदशकम्, प्राणश्च[1] इत्ये-तत्—सप्तदशकं सूक्ष्माङ्गमुच्यते।

स्थूलशरीरं द्विविधम्। नित्यमनित्यं च। तत्र नित्यं परमात्मनः। सर्वपुरुषार्थकारणम्। ध्यानेच्छूनां ध्यानसाधनम्, सर्वमंगलाधारभूतं च। नित्यमुक्तात्मनां विष्वक्सेन-नन्द-सुनन्द-गरुडादीनामपि च शरीरं नित्यम्।

अनित्यशरीरं द्विविधं, कर्मजमकर्मजं च। तत्र कर्मजं जरायुज-मण्डजं स्वेदजमुद्भिज्जचेति चतुर्विधम्। अकर्मजं च परमात्मनो विराड्रूपम्।

एतेषु महदारभ्य भूतपञ्चकं यावत् कारणकार्यरूपेण सम्बद्धमिति नामरूपभिन्नत्वेऽपि मृद्घटवन्नान्योन्याभिन्नम्।

मध्वमते यत्किञ्चिद्भेदेन महत्तत्त्वाद्यन्यद्रव्यसृष्ट्यादिकल्पना प्रायः सांख्यसम्प्रदायानुकूलैव।

## वल्लभस्य

वल्लभाचार्यमते सृष्टेः आदौ परमतत्त्वस्य परिणामात्प्रादुर्भूतानाम् अष्टाविंशतिसृष्टितत्त्वानामित्थं प्रादुर्भावः तत्त्वदीपनिबन्धस्य सर्वनिर्णय-प्रकरणे समुपलभ्यते—

सत्त्वं रजस्तमश्चैव पुरुषः प्रकृतिर्महान्।
अहंकारः पञ्चमात्राः शब्दस्पर्शाकृती रसः॥
गन्धो भूतानि पंचैव खं वायुर्ज्योतिरपः क्षितिः।
क्रियामयानीन्द्रियाणि वाग्दोर्मेढ्राङ्घ्रिपायवः॥
श्रोत्रं त्वग्घ्राणदृग्जिह्वा मनः षडिति भेदतः[2]।

× × × ×

---

१. अद्वैतमते पञ्चतन्मात्राणां न ग्रहणमपि तु बुद्धेः। प्राणेषु च पंचानामपि ग्रहणम्। निम्बार्कमते तद्भेदरहितस्यैकस्यैवेति भेदः।

२. सर्वनिर्णय प्र० पृ० ९४–९५

प्रकृतिः पुरुषश्चोभौ परमात्मा अभवत्पुरा ।
यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते ॥
आनन्दांशतिरोभावः सत्वमात्रेण तत्र हि ।
मुख्यजीवस्ततः प्रोक्तः सृष्टीच्छात्रशगो हरिः ॥
इच्छामात्रात्तिरोभावः तस्यायमुपचर्यते ।
ब्रह्म कूटस्थाव्यक्तादि-शब्दैर्वाच्यो निरन्तरम् ॥
सर्वावरणयुक्तानि तस्मिन्नण्डानि कोटिशः ।
मूलाविच्छेदरूपेण तदाधारतया स्थितः[१] ॥

तत्त्वदीपनिबन्धे वल्लभेन एष जगत्प्रपंचः भगवत्कार्यः उक्तः[२] । एष हि भगवतो मायानामकशक्त्या विनिर्मितः । संसारश्च मायाया अविद्यानामकशक्त्या जीवेन विरचितः । इत्थं वल्लभेन जगद् ईश्वरकृतं संसारश्च जीवकृत इति प्रतिपादितम् ।

पूर्वोक्तेषु अष्टाविंशतितत्त्वेषु परिणामो न विकारी । सांख्यं तु विकृत-परिणामवादमाश्रित्य सृष्टेरुत्पत्तिं प्रतिपादयति । तत्र प्रकृतिस्त्रिगुणा-त्मिका किन्तु वल्लभेन सत्त्वं रजस्तमश्चेति त्रयं पृथक् स्वतन्त्रं तत्त्वं स्वीकृतम् । एतन्मते सृष्टेः विकासः सच्चिदानन्दपूर्णपुरुषोत्तमस्य इच्छामात्रेणैव भवति । अक्षरम् , कालः, कर्म, स्वभावश्चेत्येतत् सृष्टि-कारिणो ब्रह्मणः स्वरूपम् । एतेषां गणना वल्लभेन सृष्टेरष्टाविंशतितत्त्वेषु न कृता । तन्मते जगतः उपादानकारणं प्रकृतिः या च वस्तुतः ब्रह्मण एव अविकारिपरिणतिः ।

इत्थं पूर्वोक्तालोचनेनेदं ज्ञायते यत् वल्लभमतिरिच्यान्यभाष्य-कारैः परतत्त्वेन स्वरूपतो भिन्नमूलजडतत्त्वमेव स्वीकृतम् । तच्चै-तत्संशोधनेन सांख्याभिमतप्रधानमेवावगतं यत्तद्ब्रह्मात्मकम् । किन्तु वल्लभेन परतत्त्वात् स्वरूपतो भिन्नं किमपि अन्यत् जडतत्त्वं न स्वी-कृतम् तदनुसारं जडतत्त्व परतत्त्वस्यैवांशः ।

एतेषु वल्लभस्य पक्षः सूत्रानुकूलो न वर्तते । अन्यभाष्यकाराणा-मेतावान् पक्षस्तु सूत्रानुकूलो वर्तते यज्जडतत्त्वं परतत्त्वात्स्वरूपतो भिन्नं किन्तु एतस्मिन्नंशे न सूत्रानुकूलं प्रतिभाति यत्तत्सांख्याभिमतं प्रधान-

---

१. तत्रैव ८९–१०१

२. प्रपञ्चो भगवत्कार्यः तद्रूपो माययाऽभवत् ।
तच्छक्त्याऽविद्यया त्वस्य जीवसंसार उच्यते ॥
(त० दी० नि० शा० प्र० २६ )

मेव। यतो हि सूत्रकारेण सर्वत्रैव सूत्रे तत्खण्डनं कृतम्। स्वयं चापि महदहंकारादीनां कस्मिन्नपि सूत्रे चर्चा न कृता वर्तते।

सूत्रकारेण यद्यपि मूलजडतत्त्वस्वरूपसम्बन्धे स्पष्टतया न कापि चर्चा कृता तथापि 'सूक्ष्मं तु तदर्हत्वात्' (१।४।२) अस्मिन् सूत्रे समायातम् 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः'[1] इति श्रुतिवाक्यीयमव्यक्तं सांख्याभिमतं प्रधानमस्वीकृत्य सूक्ष्ममुक्तम्। एतेन स्पष्टमेतद्यत् सः येन केनापि रूपेण जडतत्त्वमवश्यं स्वीकरोति किन्तु न तत्सांख्याभिमतं प्रधानम्।

तेन 'न वियदश्रुतेः' इत्यादिसूत्रेषु (२।३।१-१७) आकाशादिजडतत्त्वानामुत्पत्तिः स्वीकृता किन्तु सूत्रेषु स्पष्टमुल्लेखाभावात् सूत्रकाराभिमतसूक्ष्मजडस्वरूपसम्बन्धे न किमपि विशेषेण वक्तुं पार्यते। आम्, तदस्तित्वमवश्यं तन्मान्यम्; तच्च जीववत् परतत्त्वेन सह अपृथक्सिद्धरूपेण स्थितं सत् सर्वतोभावेन तदायत्तम्।

मध्वमतिरिच्य अन्ये सर्वे भाष्यकाराः सूत्रानुसारम् आकाशादिभूतानि उत्पन्नान्येव स्वीकुर्वन्ति। मध्वाचार्यश्च, किन्तु, आकाश वायुं चोत्पन्नौ मन्यमानोऽपि भागशः अनुत्पन्नावाकालयति[2]। तथापि मध्वस्यैतन्मतं सूत्रैर्न समर्थ्यते। सूत्रकारेण आकाशस्य वायोश्चोत्पत्तौ पर्याप्तो विचारो विहितः, श्रुतिवाक्यपरस्परसमन्वयफलस्वरूपमेकस्मिन् सिद्धान्तस्वरूपे उभयोरुत्पत्तिरेव 'न वियदश्रुतेः' (२।३।१) इति सूत्रमारभ्य 'एतेन मातरिश्वा व्याख्यातः' (२।३।८) इति सूत्रं यावत् प्रतिपादिता।

सूत्रकारानुसारं भूतानां सूक्ष्मांशानामेव प्रथमतः उत्पत्तिः प्रतीयते। तेन हि तेषां त्र्यात्मकत्वं 'त्र्यात्मकत्वात्तु भूयस्त्वात्' (३।१।२) इत्यस्मिन् सूत्रे निर्दिष्टम्। तथापि सूत्रकारस्य त्रिवृत्करणमभिप्रेतं पञ्चीकरणं वेत्यस्मिन् सम्बन्धे न कश्चिन्निश्चयः। तेन पंचीकरणस्य चर्चामविधाय त्रिवृत्करणस्य (त्र्यात्मकत्वस्य) एव निर्देशो विहितः, यश्च छान्दोग्यानुसारेण प्रतीयते किन्तु यदा तेन तैत्तिरीयश्रुतिवाक्यानुसारम् आकाशस्य वायोश्चापि उत्पत्तिः स्वीकृता तदा पञ्चीकरणमापाततः समायाति। इत्थं सूत्रानुसारं सत्स्वरूपब्रह्मणः सर्वप्रथमं सूक्ष्माकाशस्यैवोत्पत्तिर्जायते।

---

१. कठ० उ० १।३।११

२. द्रष्टव्य—मध्वभाष्यम् (ब्र० सू० २।३।४–८)

तदनन्तरं सूक्ष्मवाय्वादिक्रमेणेतरसूक्ष्मभूतेषूत्पन्नेषु तन्मिश्रणेन जगतो भौतिकपदार्थानां शरीराणां चोपादानकारणानां महाभूतानां स्वरूपस्य निष्पत्तिर्जायते। सामान्यतया सर्वेषां भाष्यकाराणामुक्ता प्रक्रिया मान्या वर्तते या च 'न वियदश्रुतेः' 'अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ( २।३।१५ ) एवं 'तथा प्राणाः ( २।४।१ ) इत्यादिषु' ब्रह्म-सूत्रेषु तद्भाष्येषु च सविस्तरमभिव्यक्तीकृता वर्तते।

तदेवं स्थूलसूक्ष्मभूतैरुत्पन्नस्य जगतो बाह्यान्तः करणसाहाय्येन तद्विषयानुभवो जीवेन क्रियते। तत्र प्रत्यक्षं दृश्यमानमेतत्सन्नामरूपादिकं भौतिकजगतः स्वरूपम्। मनोजगतः स्वरूपं तु सन्ध्ये सृष्टं प्रतिजीवं प्रतिस्वप्नं च भिन्न-भिन्नं विचित्रं च भवति। अनयोर्द्वयोर्जगतोर्मध्ये दृश्यमानजगतः सत्यत्वमिथ्यात्वयोः यथा शंकरवैष्णवाचार्येषु मतभेदः तथैव स्वाप्नमनोजगद्विषयेऽपि तेषु मतभेदः इति 'मायामात्रं तु कार्त्स्न्ये-नानभिव्यक्तस्वरूपत्वात्' ( ३।२।३ ) इति सूत्रीयविभिन्नभाष्यैः प्रमाणी-क्रियते। तत्र शंकरः 'सन्ध्ये सृष्टिराह हि' (३।२।१) तथा 'निर्मातारं चैके पुत्रादयश्च' ( ३।२।२ ) इति सूत्रद्वयं पूर्वपक्षरूपेणोपक्रम्य मायामात्रमित्या-दिसूत्रे व्यावहारिकजगत इव स्वाप्नजगतोऽपि मायामात्रत्वं ( मिथ्या-त्वम् ) प्रदर्शितवान्[1]। तथाहि—'मायैव सन्ध्ये सृष्टिर्न तत्र परमार्थ-गन्धोऽप्यस्ति। कुतः ? कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। न हि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः……'न तत्र रथा न रथयोगाः, न पन्थानो भवन्ति[2]' तस्मान्मायामात्रं स्वप्नदर्शनम्'[3]। तथा 'न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति, प्रतिपादितं चैतत् 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र समस्तस्य प्रपंचस्य मायामात्र-त्वम्……। सन्ध्याश्रयस्तु प्रपंचः प्रतिदिनं बाध्यते। अतो वैशेषिकमिदं सन्ध्यस्य मायामात्रत्वम् उक्तम्……। तस्मादुपपन्नं स्वप्नस्य मायामात्र-त्वम्'[4]। इत्थं शंकरेण व्यावहारिकजगदिव स्वप्नसृष्टमनोजगतः अपि मायामात्रत्वम् (मिथ्यात्वम्) उपपाद्य 'ब्रह्मैवैकं सत्यम्' इति स्थिरीकृतम्।

रामानुजाचार्यस्तु 'किं स्वप्नसृष्टिरीश्वरकृता जीवकृता वा इत्याशंक्य आद्यं सूत्रद्वयं पूर्वपक्षत्वेन स्वीकृत्य मायामात्रमित्यत्रत्यमायाशब्दस्य आश्चर्यवाचकत्वं स्वीकुर्वाणः—'एवंविधाश्चर्यरूपा सृष्टिः सत्यसंकल्पस्य

---

१. वैधर्म्याच्च न स्वप्नादिवत् ( २।२।२९ ) इति सूत्रं तद्भाष्यमपि च स्वाप्नजगतो मिथ्यात्वे प्रमाणम्।

२. बृ० उ० ४।३।१०

३. शां० भा० ( ब्र० सू० ३।२।४ )

४. तत्रैव ( ३।२।३-४ )

परमपुरुषस्यैव उपपद्यते, न जीवस्य' इत्यर्थं करोति। तस्य सत्यसंकल्पत्वादियुक्तस्यापि संसारदशायां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते······इति जीवो न संकल्पमात्रेण रथादीन् स्रष्टुं शक्नोति······अतः स्वप्ने सृष्टिः ईश्वरेणैव[1] कृता, तत्कृतित्वेन च तस्याः सत्यत्वम् इति हि तस्याभिप्रायः। इत्थं रामानुजमते स्वप्नसृष्टेरीश्वरकृतित्वेन चिदचिद्विशिष्टं बाह्यजगदिव स्वाप्नजगदपि ( मनोजगदपि ) सत्यम्।

निम्बार्कस्याप्येतदेव तात्पर्यम् तथाहि, स्वप्ने सत्यसंकल्पसर्वज्ञपरमेश्वरनिर्मितमेव रथादिकार्यजातम्, यतो ह्याश्चर्यभूतं तत् न जीवकृतम् अतः परमात्मैव स्वप्नरथादिनिर्माता[2]।

मध्वाचार्येणापि स्वप्नसृष्टिरीश्वरकृता मन्यते इति तन्मते तस्याः सत्यत्वम्। मनोगतसंस्काराश्च तत्र कारणम्। तथाहि,

> मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः।
> प्रदर्शयति जीवाय स स्वप्न इति गीयते॥
> तदन्यथात्वं जाग्रत्वं सा भ्रान्तिस्तत्र तत्कृता।
> अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्॥[3]

वल्लभोऽपि स्वप्नप्रपञ्चं मायामात्रमाकलयति। तस्यायमभिप्रायः यत् यथा 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इत्यादयः श्रुतयः सृष्टिं तत्सत्यत्वं च प्रतिपादयन्ति तथा स्वप्नस्य सृष्ट्यतिरिक्तं न कयापि श्रुत्या सत्यत्वं प्रतिपाद्यते। किंच, स्वप्ने जनः जीवतो मृतानुभयविधान् जनान् पश्यति, मृतानां च जनानां कथमप्यस्तित्वं न सम्भवतीति स्वतंत्रसत्तायां तस्य प्रामाण्याभावान्मायामात्रमेव[4] स्वप्नः।

## निष्कर्षः

पूर्वोक्तपर्यालोचनया स्पष्टमेतत्संजातं यदिह व्यवहारिकजगतः सत्यत्वमिथ्यात्वमान्यताद्वयमिव स्वप्नजगतो विषयेऽपि मान्यताद्वयं वर्तते।

---

१. रा० भा० ३.२.३
२. नि० भा० ( ब्र० सू० ३।२।३–४ )
३. म० भा० ( ३।२।३ ) ब्र० पु० वचनम्।
४. अणुभाष्यम् ( ब्र० सू० ३।२।३ )

तत्र शंकरवल्लभानुसारं स्वप्नजगतो मायामात्रत्वम्। रामानुजनिम्बार्क-मध्वमते च स्वाप्नजगतोऽपि ईश्वरनिर्मितत्वेन सत्यत्वम्। किन्तु मृत-पुरुषादीनां कदाप्यदृष्टवस्तुनगरादीनामपि च स्वप्ने दर्शनात् तत्सत्यत्व-पक्षे प्रत्यक्षानुभवविरोधः। स्वप्ने सर्वथाऽदृष्टपदार्थानामपि च संस्कारं विनैव दृश्यमानत्वात् मध्वमतमपि न युक्तिसंगतम्। इत्थं च शंकरमते जागतिकस्वाप्नोभयप्रपञ्चमात्रस्य ( जगन्मात्रस्य ) मिथ्यात्वाद् ब्रह्ममात्र-स्य च सत्यत्वेन तन्मतस्योभयत्र सामञ्जस्यम्। वल्लभमते च व्यावहा-रिकजगतः सत्यत्वेऽपि स्वाप्नजगतः मायामात्रत्वमितीयान् भेदः।

---

# षष्ठः अध्यायः

## ( अध्यात्मम् )

### विभिन्नभाष्येष्वात्मतत्त्वनिरूपणम्

### द्वैतमद्वैतं च—

पूर्वाध्याययोराचार्याणां स्थूलसूक्ष्मजगतोर्विचाराः प्रदर्शिताः । तेषामाध्यात्मिकविचारा इह विविच्यन्ते ।

द्वैतम् :-भारतीयदर्शनस्य प्रस्थानत्रयीतः समुद्गताः द्वैताद्वैतविशिष्टाद्वैतनामकाः वेदान्तस्य मुख्यास्त्रयः सम्प्रदायाः । वेदान्तविचारपद्धतौ अद्यापीमे प्रचलिताः । एषु प्रत्येकमतस्य बहवः अनुसारिणः, मठाश्च वर्तन्ते तथा संस्कृतसाहित्यमेतेषां ग्रन्थैः पुष्कलतया परिपूर्णमुपलभ्यते । कन्नडतामिलभाषयोरपि द्वैतविशिष्टाद्वैतसम्प्रदाययोः प्रचुरं साहित्यम् ।

भारतीयदर्शनेतिहासे यद्यपि द्वैतसम्प्रदायः सर्वान्तिमकालिकः तदनुयायिनश्च अपि अद्वैतविशिष्टाद्वैतानुयायिनामपेक्षया स्वल्पा एव सन्ति तथापि द्वैतमतं शंकरस्याद्वैतविचाराणां सर्वदा प्राधान्येन प्रतिद्वन्द्वि अवर्तत । यद्यपि शंकराभिमताद्वैतस्य विरोधः सर्वतः पूर्वं रामानुजेनैव प्रारभ्यत तथापि परम्परानुगतप्राचीनवैदिकग्रन्थोद्धरणैः सह एकवाक्यतां स्थापयद्भिर्द्वैतमतस्य प्रामाणिकतापूर्वकपरिपूर्णन्यायसंगतिः मध्वाचार्येण तदनुयायिभिः अकाण्डविद्वद्भिश्च प्रदर्शिता । अस्मिन् विषये एकमेवोदाहरणं पर्याप्तम्—सर्वतः आदौ शंकरेण 'ईक्षतेर्नाशब्दम्' ( १।१।५ ) इत्यस्मिन् सूत्रे उपनिषद्भिरपि स्वीकृतां सांख्याभिमतप्रकृतिं समाप्तुमैच्छन् । रामानुजेनैतत्परिलक्षितमिति विश्वरचनायां परमेश्वरस्य सहायकमतिमहत्त्वपूर्णं च मुख्यतत्त्वं प्रकृतिमवबुध्य 'तदधीनत्वादर्थवत्' ( १।४।३ ) इति सूत्रस्य स्वकीये भाष्ये, 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च'···वेदान्तेषु च गीयते' । इत्यादिरूपेण सा स्वीकृता । तदनन्तरं मध्वाचार्येण 'ईक्षतेर्नाशब्दम्' इति सूत्रस्य परम्परानुगतस्य अर्थस्य पूर्णविरोधः कृतः तथा विश्वरचनार्थं परमात्मने भौतिकतत्त्वसामग्रीप्रदायिनीं परमात्माश्रितप्रकृतिं वेदान्ते समुचितस्थाने प्रतिष्ठापयता द्वैतमतं सुदृढीकृतम् । अनया स्पष्टया, सरलया वितण्डावादरहितया च प्रकृतिविषयकयथोचितव्याख्यया वेदान्तस्य 'सर्वं खल्विदं ब्रह्म' इति

भावनां मायावादं च पृथक्कृत्य शुद्धेश्वरवादः पुष्टीकृतः। समुद्घोषितं चैतत् यद् ब्रह्म अस्य जगतः केवलं निमित्तकारणं; यथा च ऋग्वेदे, ऐतरेयब्राह्मणे, श्वेताश्वतरोपनिषदि, महाभारते पुराणेषु च स्वीकृतं वर्तते। अत एव तत् ब्रह्म एका सर्वतन्त्रस्वतन्त्रा, सर्वसत्ताप्रतीतिप्रवृत्ति-निमित्ता च सत्ता वर्तते।

द्वैतविषये किमप्युल्लिख्येत एतत्पूर्वमस्य समुचितपरिभाषणम-त्यन्तावश्यकम्। द्वैतशब्दश्च द्वयोर्भावो द्विता सैव द्वैतम् इत्थं व्युत्पादितः इति प्रतिपादितचरम्। अतः एतदत्यन्तावश्यकं यन्मध्वसम्मते अस्य वास्तविकार्थे स्वल्पविचारपूर्वकमेतन्निर्णीयेत यत् तदीयदार्शनिकसिद्धान्ते एतल्लक्षणं कियत् समन्वेति येन परम्परानुगततदीयतात्पर्यतिमिरपट-लेन तदीयार्थभास्करावलोकनसमर्थं जिज्ञासुचक्षुर्नाच्छाद्येत।

संस्कृतद्वैतशब्दस्थाने आङ्ग्लभाषायां Dualism इत्येष शब्दः प्रयुक्तो लभ्यते। एतच्छब्दद्वयं मध्वसिद्धान्तार्थं कियदुपयुक्तमिति निम्ना-ङ्कितेन ज्ञातुं शक्यते।

पाश्चात्यदर्शने Dualism एवंभूतः सिद्धान्तः स्वीकृतो यः स्वतन्त्रं तथापि परस्परमपरिहेयं तत्वद्वयं[1] स्वीकरोति, भारतीयदर्शने एवंभूतं द्वैतलक्षणं सांख्याभिमतद्वैतेन सर्वथा संवदते, किन्तु मध्वसम्मतं द्वैतं परस्परापरिहार्यं तत्वद्वयं स्वीकुर्वदपि तयोरेकमीश्वरमेव स्वतंत्रं स्वी-करोति तदितरच्च तत्परतन्त्रं प्रतिपादयति। तन्मते परमात्मैवैकं स्वतन्त्रं तत्वम्। तच्चातिरिच्य प्रकृतिः, पुरुषः, कालः, कर्म तथा स्वभावः इत्यादि सर्वं परतन्त्रम्। स्वतन्त्रपरतन्त्रैतत्सत्ताद्वयमेव मध्वा-भिमतद्वैतसिद्धान्तस्याधारः, यथा चोक्तं तेन तत्वसंख्याने—

'स्वतन्त्रमस्वतंत्रं च द्विविधं तत्वमिष्यते'

भारतीयविचारजातानुसारं द्वैत एष शब्दो दर्शनस्य तत्सिद्धान्तं द्योतयति यः एकाधिकमौलिकमेवमाध्यात्मिकमेवभूतं तत्वद्वयं स्वीकरोति यस्मा-दस्य जगतो रचना संजायते स्म। एतदेव शंकराचार्येण 'एतेन योगः प्रत्युक्तः' (२।१।३) इति सूत्रे इत्थं प्रतिपादितम्—'द्वैतिनो हि ते सांख्या योगाश्च नात्मैकत्वदर्शिनः'।

अथ च जीवात्मपरमात्मनोः शाश्वतो भेदो द्वैतशब्देनाभिमतः। शंकरानुसारेण द्वैतवादिनस्ते कथ्यन्ते यन्मते आत्मनो बन्धमोक्षावस्थाः

---

१. डिक्शनरी ऑफ फिलासफी—डॉगबर्ट डी० रून्स; न्यूयार्क १९५५, पृ० ८५

सत्याः अथवा तद्विषयकदुःखसुखानुभूतयः आत्मना सम्बद्धाः अवगम्यन्ते। अद्वैतवादिनां कृते आसामवस्थानां सत्यता न मान्या यथा च गीतायां शांकरभाष्येण ज्ञायते—

"आत्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते मते सर्वेषां द्वैतवादिनाम्। अद्वैतवादिनां पुनः······अवस्थाभेदवत्त्वानुपपत्तेः"[1]।

एतेन द्वैतवादिनां विषये एतदपि ज्ञायते यत्ते जीवनस्य दुःखसुखानुभवान् यथार्थानाकलयन्ति। एतच्च मध्वतदनुयायिमतानुसारमैकमत्येन समानं यत् सीमितदुःखसुखानुभवार्थं बन्धमोक्षयोः साकल्यावाप्तये जीवात्मनः प्रयत्नाः सत्या महत्वपूर्णाश्च वर्तन्ते। तेषां स्वकीयं महत्त्वम्, न ते अविद्यामात्रम्—

'स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः'[2]।

द्वैतवादिनः चरमसत्यानां स्वातन्त्र्यपारतन्त्र्यसमस्यापेक्षया तेषां संख्यासु कल्पनासु चाधिक्येन विचारव्याप्रुताः प्रतीयन्ते। यथार्थवादिनो हि यथा एकस्मिन्ननेकस्मिन् वा शाश्वतसत्ये विश्वसन्ति, तदेव स्वयं ज्ञेयमज्ञेयं वा समाकलयन्ति तथैव द्वैतवादिनामपि तत्स्वीकृततत्वानां सत्ताविषये तदीयपारस्परिकस्वातंत्र्यास्वातन्त्र्यपूर्णस्वातन्त्र्येषु अन्यसम्बन्धेषु च विभिन्ना धारणा भवितुं शक्नुवन्ति, किन्तु मध्वाचार्येण एतद्विचारविश्लेषणद्वारा स्पष्टतया प्रदर्शितं यदेकविधस्यैव स्वतन्त्रचरमसत्यद्वयतत्त्वस्य स्वीकारो न तर्कसंगतः–'सर्वस्य स्वतन्त्रत्वे नित्यसुखादिप्रसंगः। अस्वातन्त्र्ये न कस्यापि प्रवृत्तिः। अन्धपंगुवत्स्यादिति चेन्न, प्रत्यासत्तेरेवानुपपत्तेः। यदि सर्वमेव स्वतन्त्रं स्यात् तदा पारतन्त्र्यादिप्रतीतिविरोधः नित्यसुखादिप्रसंगश्च। यदि वा परतन्त्रमेव तत्वं भवेत्तदा अनवस्थितेरसंभवाच्च न कस्यापि सत्तादिकं स्यात्। आगमविरोधाच्च"[3]।

राधाकृष्णनेनापि स्वकीये भारतीयेतिहासे एकस्या एव चरमसत्तायाः स्वीकृतिः तर्कसंगता प्रतिपादिता[4]।

अतः परमात्मा एव एकमात्रं स्वतन्त्रसत्ता तदतिरिच्य प्रकृतिः, पुरुषः, कालः, कर्म, स्वभावादि सर्वं परतन्त्रम्। ससीमतत्त्वानामेतदाध्यात्मिकं मौलिकं च पारतन्त्र्यं नितरां युक्तिसंगतमुपयुक्तं च वर्तते।

---

१. गीताभाष्यम—१२।२  २. गौडपादकारिका २।३१

३. जयतीर्थः—तत्वसंख्यानटीका

४. राधाकृष्णन महोदयः—इण्डियन फिलासफी, प्रथमो भाग. पृ० ६०

वेदान्ते परतन्त्रसत्यतत्वानां सत्ता शाश्वती वर्तते यद्यपि नात्र संदेहस्त-थापि तेषां तथात्वं नात्मशक्तेः कारणेन प्रत्युत परमात्मकारणेन वर्तते—

आभासश्च विरोधश्च यतश्चाध्यवसीयते ।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥

× × ×

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया[1] ॥

इत्थं तत्तत्वसत्ता, तदीयं ज्ञानं तदीयाः क्रियाश्चैतत्सर्वमेव परमात्म-निमित्तकम् । स्वतन्त्रपरतन्त्रेतत्सत्यद्वयस्यैवं स्पष्टस्थितेः कारणेनैव मध्वाचार्येण उपनिषदभिमततथाकथितरहस्यात्मकादर्शवादनामकाद्वैता-दर्शः सुतरां निराकृतः । 'एकमेवाद्वितीयं ब्रह्म' तथा एवंभूतानामन्येषामपि श्रुतिवाक्यानां तात्पर्यं शंकराभिमताद्वैतवन्न वर्तते, प्रत्युत तदीयं तात्पर्यं मध्वाचार्यानुसारेणतद्वर्तते यत् तदेवैकं सत्यमन्यसत्यतानां केन्द्रम्, तदेव सर्वसत्येषु सत्यं सर्वनित्येषु च नित्यम् । इत्थंभूतस्य सत्यस्यावबोधे संजाते एव जीवात्मा न पुनः किमप्यन्यत् कामयते । फलस्वरूपं तत्कृते अस्मिन् सीमितजीवने न किमप्याकर्षण लक्ष्यं वा अवशिनष्टि यदर्थं स प्रयस्येत् । इत्थमौपनिषदविचारक्रमे एतत्सीमितसत्यस्थितेः सहेतुकं महत्त्वम् । मध्वाचार्येण यश्चौपनिषदनवीनाध्यात्मिकादर्शः रूपरेखास्व-रूपेणाभिव्यक्तीकृतः स जयतीर्थेनेत्थं विस्तरं नीतः—

'सर्वाण्यपि हि वेदान्तवाक्यानि असंख्येयकल्याणगुणाकरं सकल-दोषगन्धविधुरं परं ब्रह्म·····प्रतिपादयन्ति । तत्र कानिचित्—

(१) सर्वेश्वरत्वसर्वज्ञत्वसर्वान्तर्यामित्वसौन्दर्यौदार्यादिगुणविशिष्टतया ।

(२) कानिचित् अपहतपाप्मत्वनिर्दुःखत्वप्राकृतभौतिकविग्रहराहि-तत्वादिदोषाभावविशिष्टतया ।

(३) कानिचिदतिगहनताज्ञापनाय वाङ्मनसागोचरत्वाकारेण ।

(४) कानिचित्सर्वपरित्यागेन तस्यैवोपादानाय अद्वितीयत्वेन ।

(५) कानिचित्सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्तताप्रतिपत्त्यर्थं सर्वात्म-कत्वेन, इत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति[2] ।

---

१. म० भा० ( श्रीमद्भा० २।१० ७—१२

२. अनुव्याख्याने न्यायसुधा पृ० १२४

इत्थमेतत्सिद्धं यत्तत्स्वतन्त्रसत्यं, यच्च श्रुतिषु स्थाने स्थाने निदिष्ट-मुपलभ्यते. अद्वितीयम् , प्रकृतीत्यादि सीमिततत्व च न ततः सर्वथा पृथगपि तु तदधीनं तदग्रे सर्वथा नगण्यं च, एतदेव च मध्वाचार्यस्य निम्नाङ्कितशब्दैः प्रतिध्वन्यते—'न हि तदधीनं पृथक् इत्येवोच्यते'; तथा—'जगतो नास्तिता सैव या पराधीनता मता'।

सत्यतानां मध्ये एतत्स्वतन्त्रपरतन्त्रविचारधारानुसारं द्वैतसिद्धान्तः सर्वथोपयुक्तः सम्भवश्च वर्तते। एवमभ्युपगमे हि सीमितसत्यमपि न कथंचिद् बाधते, दार्शनिकावश्यकतानुसारं श्रुतिषु स्वीकृतं सहेतुकं परमात्मैक्यं, सर्वश्रेष्ठत्वं, स्वातन्त्र्यं चापि सर्वथोपयुक्तं सिध्यति। शंकरस्य अद्वैतेन सह द्वैतस्येत्थ सामञ्जस्यस्थापनाय मध्वाचार्यस्य स्वकीयोऽचरमः स्तुत्यः प्रयासः।

[ अद्वैतम ] शंकरस्यैतन्मतं यदेकमेव परमार्थतः सत्यम। तदतिरिक्तं जगदादि न किमपि पदार्थजातं सत्यं प्रत्युत स्वाप्नप्रपञ्च इव मिथ्या वर्तते। जीवो ब्रह्म चैतदुभयमेकमेव न द्वयम एष एव श्रुतिसिद्धान्तः। स च—

'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः' इति श्लोकार्द्धेन प्रतिपादितः। अयमेव शंकरस्याद्वैतवादः।

तद्विरोधिनां वैष्णवाचार्याणामेतत्कथनं यत् द्वैतवाद एव प्राचीनः सिद्धान्तः। अद्वैतवादश्च शंकरोद्भावितो नवीनश्च; किन्तु नैतत्सत्यम्; ऋग्वेदे नासदीयसूक्ते अद्वैतवादस्य स्पष्टतः उल्लेखो वर्तते। एवमेव छान्दोग्योपनिषदि, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' तथा बृहदारण्यकोपनिषदि, 'नेह नानास्ति किंचन', इत्यत्र च अद्वैतवादस्य स्पष्टतः वर्णनमुपलभ्यते। सूतसंहितायोगवाशिष्ठसदृशा अपि च प्राचीनग्रन्था अद्वैतवादेन परिपूर्णाः। शान्तरक्षितस्य तत्वसंग्रहेऽप्यद्वैतवादस्य उल्लेखः। एवमद्वैतवादः अत्यन्तप्राचीनः अनेकाचार्यमतेन अनादिश्च सिद्धान्तः।

अद्वैतवादस्य विपक्षिणः कठस्य...'ऋतं पिबन्तौ सुकृतस्य लोके' तथा मुण्डकस्य, "द्वा सुपर्णा सयुजा सखाया' इति मन्त्राधारेण तद्विरोधं कुर्वन्ति। बाह्यतः अवश्यमेव एतत्प्रतिभाति यत् जीवात्मा परमात्मा च

---

१. बृ० उ० ४।४।१४ २. भागवततत्वम्—१।२८।२७

३. छा० उ० ३।२।१ ४. बृ० उ० ४।४।१९

परस्परं भिन्नौ। उक्तमंत्रेषु हि स्पष्टतया तयोर्निर्देशः किन्तु निम्नाङ्कित रूपेण गम्भीरतया विचारे कृते सति ज्ञायते यत् अनयोर्मन्त्रयोर्न द्वैतवादस्य समर्थनं नापि चाद्वैतवादस्य खण्डनं वर्तते।

अद्वैतवादिनः अपि द्वैतप्रपंचं सर्वांशतः नापलपन्ति—तेऽपि शास्त्राणि मन्यन्ते। गुरुशिष्यपरम्परया अध्यात्मविद्यायाः अनुशीलनं कुर्वन्ति। सत्वशुद्धये कर्माणि कुर्वन्ति चित्तस्य एकाग्रतार्थमुपासनां कुर्वन्ति। उपास्योपासकरूपेण ब्रह्मजीवयोरौपाधिकभेदं च स्वीकुर्वन्ति। आत्मसाक्षात्कारार्थं योगमार्गं चाश्रयन्ति। केवलं द्वैतप्रपंचस्य सत्यतां पारमार्थिकतां च ते न स्वीकुर्वन्ति। तेषामेतत्कथनं यत् द्वैतप्रपञ्चो व्यावहारिको मायामयश्च अद्वैत एव च पारमार्थिकतया सत्यः। अतः अद्वैतवादिनां मतेऽपि उपनिषत्सु द्वैतप्रपञ्चस्योल्लेखः सम्भवति किन्तु द्वैतप्रपञ्चस्य सत्यत्वं न क्वापि उपनिषत्सूपदिष्टम्। 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिभिः द्वैतप्रपञ्चस्य मायामयत्वं त्ववश्यमेवोपदिष्टं वर्तते।

कठोपनिषदः 'ऋतं पिबन्तौ' इति मंत्रे औपाधिकभेदेनात्मनः जीवात्मपरमात्मरूपे भेदः प्रतिपादितः। जीवात्मा परमात्मा च वस्तुतः भिन्नाविति न प्रतिपादितम्। मंत्रे हि भेदसत्यताबोधको न कश्चिदपि शब्दः, एतच्च मन्त्रप्रसंगेनैव पुष्टीभवति—नचिकतेसा जीवात्मनः विषये 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति' चैके'[1] एवं पृष्टस्य मृत्योरियमुक्तिः। एतेन स्पष्टमेतत् यत् मृत्युर्यदि जीवात्मनः प्रसंगं परित्यज्य परमात्मनः परिचयं दद्यात् तदा सर्वथा तदप्रासंगिकं भवेत्। अतः अत्र नचिकेतसो जीवात्मविषयकप्रश्नोत्तरे मृत्युना जीवात्मपरमात्मविषये यदुक्तं तस्यैतत्तात्पर्यं यत् जीवात्मनो यथार्थस्वरूपं परमात्मनो यथार्थस्वरूपतो भिन्नं न वर्तते—जीवात्मपरमात्मनोरैक्यम्। औपाधिकभेदेनैव केवलं घटाकाशमठाकाशवदुभयत्र भेदप्रतीतिः। जीवात्मनः सांसारिकता अविद्याजन्या तदभावादेव च परमात्मनि तदभावः।

मृत्युना येन प्रकारेणात्र उत्तरो दत्तस्तस्य सूक्ष्मविवेचनेनेदं स्पष्टं यन्मृत्योर्जीवात्मपरमात्मनोरैक्यमभीष्टम्।

एतदनन्तरं नचिकेताः परमात्मनो यथार्थस्वरूपमजिज्ञासत। तदा वक्ष्यमाणस्य उत्तरस्य आरम्भे मृत्युना उक्तम्—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।

---

१. कठ० १।१।२०

यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्[1]।

'ओम्' एतदेव ईश्वरस्य नाम प्रतीकं चेति भावः। याज्ञवल्क्येनापि एतदेव प्रतिपादितम्—

'वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः'।

पातंजलयोगसूत्रेऽपि 'तस्य वाचकः प्रणवः'[2] इत्युपलभ्यते। अग्रे मृत्युना जीवात्मपरमात्मनोरभिन्नता प्रदर्शिता। अतः उत्तरस्यौचित्ये न कापि बाधा समापतति।

अग्रे त्वस्यामेवोपनिषदि द्वैतवादस्य खण्डनमपि वर्तते—

मनसैवेदमाप्तव्यं नेह नानास्ति किंचन।
मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति[3]॥

एतेनैतत्स्पष्टं यद् यदि कठोपनिषदः द्वैतवादः अभीष्टो भवेत् तदा अत्र तं खण्डयित्वा श्रुत्योः पारस्परिकविरोधः किमर्थं मुपस्थाप्येत, अतः निश्चीयते यत्कठोपनिषदः प्रतिपाद्यविषयः अद्वैतवाद एव न द्वैतवादः।

इत्थं 'द्वा सुपर्णा—' एव मुण्डकोपनिषदो मंत्रोऽपि न द्वैतवादस्य प्रतिपादकः प्रत्युत अयं मंत्रो वस्तुतः अन्तःकरणस्य ( सत्वस्य ) जीवात्मनश्च प्रतिपादको वर्तते। पैंगिरहस्यब्राह्मणे अस्य इत्थं व्याख्या कृता उपलभ्यते [ तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वम् अनश्नन्नन्योऽभिचाकशीति इत्यनश्नन्नन्योऽभिपश्यति क्षेत्रज्ञः तावेतौ सत्वक्षेत्रज्ञौ' इति। अत्र 'तयोरन्यःपिप्पलं स्वाद्वत्ति' इत्यनेन सत्वस्य अन्तःकरणस्य वा फलभोक्तृत्वं प्रतिपादितं वर्तते। अनश्नन्नन्योऽभिचाकशीति इत्यनेन च जीवात्मनो द्रष्टृत्वम्। अतः एष मंत्रः जीवात्मपरमात्मनो न प्रत्युत अन्तःकरणजीवात्मनोः प्रतिपादको वर्तते। अस्मिन्नेव ब्राह्मणे अग्रे प्रतिपादितम्—'तदेतत्सत्वं येन स्वप्नं पश्यति। अथ योऽयं शरीरः उपद्रष्टा स क्षेत्रज्ञः तावेतौ सत्वक्षेत्रज्ञौ इति' अचेतनस्य अन्तःकरणस्य कथं भोक्तृत्वं सम्भवति अस्य उत्तरं शंकरेण इत्थं प्रदत्तम्—'नेयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता किं तर्हि चेतनस्य क्षेत्रज्ञस्याभोक्तृत्व ब्रह्मस्वभावतां च वक्ष्यामीति। तदर्थं सुखादिविक्रियावति सत्वे भोक्तृत्वमध्यारोपयति'।

---

१. तत्रैव १।२।१५ २. पा० यो० सू० १।२७

३. कठ० उ० २।१।११

इदमत्राकूतम्—अचेतनान्तःकरणस्य भोक्तृत्वप्रतिपादनमत्र मंत्रस्य नोद्देश्यम्। चेतनक्षेत्रज्ञस्याभोक्तृत्वस्य ब्रह्मस्वभावस्य च प्रतिपादनमेव मंत्रस्योद्देश्यम्। इदमेवाभोक्तृत्वं ब्रह्मस्वभावत्वं च बोधयितुं क्षेत्रज्ञोपाधिभूते सुखादिविकारयुक्ते चान्तःकरणे भोक्तृत्वमारोपितम्। क्षेत्रज्ञान्तःकरणयोरविवेकेनैव क्षेत्रज्ञे कर्तृत्वं च कल्प्यते। सुखादिविकारयुक्ते सत्त्वे ( अन्तःकरणे ) निपतितप्रतिबिम्बेन चितः भोक्तृत्वं प्रतीयते। फलतः तदविद्याजन्यम् न पारमार्थिकम्।

किंच, अद्वैतवादिनो द्वैतप्रपंचं गगनारविन्दवच्छशशृङ्गवद्वा अलीकं नाकलयन्ति। तेषामेतदेव केवलं कथनं यत् यथा मनुष्यस्य निद्रादोषेण स्वप्ने अवलोकितः पदार्थो मिथ्या तथैवाविद्यादोषेण जाग्रदवस्थायां दृष्टोऽपि पदार्थो मिथ्या, ब्रह्मैव च केवलं सत्यम्। किन्तु पारमार्थिकसत्ताया अभावेऽपि सांसारिकपदार्थानां व्यावहारिकसत्ता स्वप्नावलोकितपदार्थानां प्रातिभासिकसत्ता च वर्तते। स्वाप्निकपदार्था यथा स्वप्नावस्थायां यथार्थाः प्रतिभान्ति तथैव जागतिकपदार्थाः व्यवहारदशायां यथार्थाः प्रतीयन्ते। ब्रह्मवादिनां कथनमप्येतत्—

> देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
> लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्॥

शरीरे आत्मबुद्धिर्वस्तुतः मिथ्या तथापि यावत् देहभिन्नात्मनो ज्ञानं न जायते तावत्तत् सत्यं प्रतीयते। एवं सांसारिकसमस्तप्रपंचस्य मिथ्यात्वेऽपि यावदात्मनिश्चयो न भवति तावत्तस्य सत्यत्वं प्रतीयते। सञ्जाते तु ब्रह्मज्ञाने सर्वं द्वैतं दूरीभवति—'ज्ञाते द्वैतं न विद्यते'।

तात्पर्यं चेदं यद् व्यावहारिकदशायामद्वैतवादिनः अपि जीवेश्वरभेदं द्वैतप्रपंचं परमात्मजीवात्मनोरुपास्योपासकभावं च स्वीकुर्वन्ति। अत एव पंचदश्यां प्रतिपादितम्—

> मायाख्यायाः कामधेनोः वत्सौ जीवेश्वरावुभौ।
> यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि॥

पारमार्थिक-व्यावहारिकोदाहरणानि संसारेऽपि दृश्यन्ते—वस्तुगत्या यो न आत्मीयः तेनापि सह विवशतया आत्मीयवद् व्यवहारो दृश्यते। इयं व्यावहारिकात्मीयतैव केवलं न पारमार्थिकी। निम्नलिखितो मंत्रः एतदेव स्पष्टीकरोति—

'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्'।

## निष्कर्षः—

द्वैतसिद्धान्तो न चार्वाकमतवज्जडवादी नापि च भाग्यवादी अस्ति, नापि च शंकराद्वैतवादवत् आदर्शवादी ( ज्ञानतान्त्रिकः ) एव वर्तते। अत्र पूर्वोक्तयोः द्वयोरपि मतयोः सामंजस्यमुपलभ्यते इदमेवास्य सर्वाधिक-वैशिष्ट्यम्। ब्रह्मणः जगतश्चोभयोः सत्तां स्वीकृत्य एकतः अयमध्यात्म-वादमनुगच्छति द्वितीयतः व्यवहारवादं चाभिव्यनक्ति।

तथा अद्वैतवादो व्यावहारिकद्वैतवादश्चैतद्द्वयमपि वेदसम्मतम्। अनेनैव कारणेन शास्त्रे परमात्मजीवात्मनोरुपास्योपासकभावनिर्देशो न वैचित्र्यमावहति। व्यावहारिकद्वैतावस्थास्वीकारेण उपनिषदुपलब्धद्वैत-वादिवाक्यैः अद्वैतवादस्य खण्डनं न मानतुं शक्यते। फलतः अद्वैतवाद-सम्बन्धे द्वैतवादिनाम् उक्तयो निर्मूलाः। अद्वैतवाद एव श्रुतिसम्मत-पारमार्थिको यतो हि केनापि श्रुतिवाक्येन द्वैतस्य पारमार्थिकसत्यता न प्रमाणीक्रियते। उपनिषदां सारसर्वस्वब्रह्मसूत्रेषु प्रतिपादिता द्वैतसत्ता तदेकब्रह्माश्रिताद्वैतसत्ताया एव पारमार्थिकतेति शंकरस्य तात्पर्यम्।

---

## परतत्वं जगच्च

पूर्वत्र द्वैताद्वैतयोः विवेचनं कृतम्, तयोश्च स्वसिद्धान्तानुसारं पञ्चा-नामपि भाष्यकाराणां परतत्वेन जगता च सम्बद्धतया तयोर्विचार इह सानुषंगिकः प्रतिभाति।

ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत्[1]।

× × ×

यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः[2]॥

× × ×

ऐतदात्म्यमिदं सर्वम्[3]......स आत्मा तत्त्वमसि श्वेतकेतो[4], सर्वं ह्येतद्ब्रह्म[5] अयमात्मा ब्रह्म[6], सर्वं खल्विदं ब्रह्म[7], नेह नानास्ति किंचन[8],

× × ×

---

१. ई० उ० १ २. तत्रैव ७

३–४. छा० ६।१।१।३ तथा ६।१६।३

५. मां० २ + रामोत्तरतापिन्युपनिषत् ५ + नृ० पू० ४।२ नृ० उ० १।२

६. मां० २ नृ० पू० ४।२

७. छा० म० ना० १।३ + निरा० ११ + गान्धर्वोपनिषत् ६

८. कठ० ४।११

मृत्योः स मृत्युमाप्नोति य इह नानेव [1]पश्यति,

× × ×

एको देवः सर्वभूतेषु गूढः[2], द्वितीयाद्वै भयं [3]भवति; इत्यादिनिर्गुण-प्रतिपादकश्रुतिषु तथा—वासुदेवः सर्वमिदं, यो मां पश्यति सर्वत्र, सकलमिदमहं च वासुदेवः, एकः आत्मा पुरुषः पुराणः, इत्यादि सगुण-प्रतिपादकश्रुतिषु यस्य चरमतत्त्वस्य प्रतिपादनं कृतं वर्तते तदेव सर्व-वेदान्तप्रतिपाद्यं ब्रह्म, परतत्वं वा प्रतिपाद्यते, तस्यैव निर्देशः 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म, तथा, तमेवभान्तमनुभाति सर्वं तस्य भासा सर्व-मिदं विभाति ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्' ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्[4] ॥'

भीषास्माद्वातः पवते । भीषोदेति सूर्यः भीषास्मादग्निश्चन्द्रश्च मृत्युर्धावति [5]पंचमः' इत्यादिश्रुतिषु कृतो वर्तते ।

एतदेव यत्किंचिदन्तरेण मुण्डकोपनिषदो द्वितीयखण्डेऽपि उक्तम्, फलतस्तत्त्वजिज्ञासया यदि सम्पूर्णोपनिषदादिवेदान्तग्रन्थानामनुशीलनं श्रवणमननादिकं च क्रियते तदा सर्वत्र येन केनापि रूपेण एतदेव वर्णितमुपलभ्यते यत्सर्वं वेदान्तप्रतिपाद्यं ब्रह्मैवैकमात्रं सत्यम् एवं परतत्वं वर्तते । एतदेव निम्नाङ्कितश्लोके विशिष्टाद्वैतवादिना श्रीरामानन्देनेत्थं प्रतिपादितम्—

विश्वं जातं यतोऽद्धा यदवितमखिलं लीनमप्यस्ति यस्मिन् ।
सूर्यो यत्तेजसेन्दुः सकलमविरतं भासयत्येतदेषः ।
यद्भीत्या वाति वातोऽवनिरपि सुतलं याति नैवेश्वरो ज्ञः,
साक्षी कूटस्थ एको बहुशुभगुणवानव्ययो विश्वभर्त्ता ॥

अस्यैव तत्त्वस्य मीमांसा ब्रह्मसूत्रेषु बादरायणेन कृता तथा जगता सह तस्य सम्बन्धं सम्यग् विविच्य तत्साक्षात्कारसाधननिर्देशद्वारा सांसारिक-जीवानां कृते मोक्षस्य मार्गः प्रशस्तीकृतः । ब्रह्मसूत्रेषु बादरायणेन तस्य परतत्त्वस्य निर्देशो निम्नाङ्कित सूत्रेषु कृतः—

---

१. उत्रैव ४।१० २. श्वे० ६।११ + गी० ता० ३।१९
३. बृ० १।४।२ ४. गी० १५।१२
५. तै० २।८

'आनन्दमयोऽभ्यासात्' ( १।१।१२ ) इह तत्परतत्त्वमानन्दस्वरूप- मुक्तम् , अग्रे एतच्च स्पष्टीकृतं यत् तत् आनन्दस्य विकारो न, अपि तु अन्तर्बहिः प्रचुरानन्दपूर्णं वर्तते। किन्तु एवं ज्ञानानन्दस्वरूपं सदपि तन्न चिन्मात्रम् अपि तु प्रकृत्या चैतन्यगुणयुक्तमेकं, चेतनं, ज्ञातृ, परमात्मतत्त्वम्। एतदेव सूत्रकारेण 'ईक्षतेर्नाशब्दम्' ( १।१।५ ) तथा 'विवक्षितगुणोपपत्तेश्च' ( १।२।२ ) इत्यत्रापि प्रतिपादितम्।

'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' ( १।२।१८ ) इत्यस्मिन् सूत्रे तत् समस्तवस्तूनामन्तर्यामि उक्तं वर्तते।

'अदृश्यादिगुणको धर्मोक्तेः' (१।२।२१) इत्यत्र 'यत्तदद्रेश्यमग्राह्यम्'··· इत्यादिमुण्डकश्रुत्याधारेण तस्यातिसूक्ष्मातिसूक्ष्मत्वं सर्वव्यापकत्वमेव सर्वभूतयोनित्वं प्रतिपादितम्।

'द्युभ्वाद्यायतनं स्वशब्दात्' ( १।३।१ ) तथा 'अक्षरमम्बरान्तधृतेः' ( १।३।१० ) इत्यत्र तदेव परतत्त्वं स्वर्गपृथिव्यादेराधारः प्रतिपादितः।

'आत्मकृतेः परिणामात्' (१।४।२६) अत्र तदेव परतत्त्वं जगन्मात्रस्यो- पादानमुक्तम्। 'विपर्ययेण क्रमोऽत उपपद्यते च' ( २।३।१४ ) इत्यत्र उत्पत्तिक्रमविपर्ययद्वारा सर्वजगतः तत्रैव लयः उक्तः।

अविभागो वचनात् ( ४।२।१६ ) इत्यत्र मरणानन्तरं जीवात्मनस्त- स्मिन्नेव परतत्त्वे स्थितिरुक्ता।

'अनावृत्तिः शब्दादनावृत्तिः शब्दात् ( ४।४।२२ ) एतत्सूत्रमप्येतदेव पुष्टीकरोति एतदतिरिच्य अन्येष्वपि सूत्रेषु तत्परतत्त्वं श्रुतिनिर्देशानुसारेण परिमाणतः विभु अनन्तं, महत् , स्वरूपतः सत्यं नित्यं निर्विकारमित्यादि च प्रतिपादितम्। एतेन स्पष्टमेतद् यद् बादरायणसूत्राधारेण परतत्त्वं केनापि विशिष्टव्यक्तित्वेन सम्पन्नो देवविशेषो न स्वीकर्तुं शक्यते इति वैष्णवभाष्यकाराणां तत्परतत्त्वस्य एकस्मिन् विशिष्टशरीरधारिणि देव- स्वरूपे स्वीकृतिः सर्वथा असंगता। अत एव रामानुजनिम्बार्काभ्यां तत् तस्मिन् स्वरूपे सूत्रप्रतिपाद्यं न सूचितं तथा मध्ववल्लभाभ्यां यत्तत्पर- तत्त्वं स्वाभीष्टदेवस्वरूपे एव निर्देष्टुं प्रायत्यत तन्न कथमपि सूत्रकाराभिमतं वक्तुं शक्यते।

इत्थं चाद्य यावदुपलब्धं ब्रह्मसूत्रभाष्याचार्याणां मध्ये न कस्याप्यस्मिन् विषये विप्रतिपत्तिर्यत् जगतः मूलतत्त्वं ब्रह्मास्ति। किन्तु जगतः तत्का- रणस्य ब्रह्मणश्चैनयोः सम्बन्धे यास्तेषां धारणास्ता भिन्नाः। जगतो विषये सर्ववैष्णवभाष्यकाराणामत्रैकमत्यं यत्तस्य वास्तविकसत्ता सूत्रकाराभिमता

वर्तते, यतो हि 'जगतो वास्तविकास्तित्वं न वर्तते' एतां बौद्धमान्यतां निराकुर्वता तेन 'नाभाव उपलब्धेः' (२।२।२७) तथा 'वैधर्म्याच्च न स्वप्नादिवत्' (२।२।२८) एतयोः सूत्रयोरेतत्प्रतिपादितं यत् जगतः अभावो न वर्तते यतो हि तदुपलभ्यते। नापि च तत्स्वप्नादिवत् वर्तते यतो हि जागरणेन स्वाप्नज्ञानस्य बाधो दृश्यते किन्तु प्रत्यक्षज्ञानस्य बाधो नोपलभ्यते। निम्नलिखितसूत्राण्येतदेव तथ्यं समर्थयन्ति—

(१) 'जन्माद्यस्य यतः' (१।१।२) इत्यस्मिन् सूत्रे बादरायणेन ब्रह्म जगतः आदिकारणं प्रतिपादितम्। यदि जगतः सत्ता बादरायणस्याभिमता न भवेत् तदा ब्रह्मणः तदुत्पत्त्यादिकारणोक्तिः सर्वथा अनुचितैव स्यात्।

(२) 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (१।४।२३) अस्मिन् सूत्रे तेनैतत्प्रतिपादितं यत् जगतः प्रकृतिः ब्रह्म वर्तते। एतेन एतत्स्पष्टं संजातं यत् जगतः सत्तां स्वीकुर्वाणेनापि तेन तद् ब्रह्मणो विकृतिरभ्युपगम्यते। अत एव तेन 'यावद्विकारं तु विभागो लोकवत्' (२।३।७) इत्यस्मिन् सूत्रे जगतः समस्तपदार्थाः ब्रह्मविकाराः ब्रह्मणः पृथक् च स्वीकृताः।

(३) 'आत्मकृतेः' (१।४।२६) 'परिणामात्' (१।४।२७) तथा 'योनिश्च हि गीयते' (१।४।२८) इमानि सूत्राणि 'असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानं स्वयमकुरुत'[1] एवम्, यदिदं किं च तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्......यदिदं किं च तत्सत्यमित्याचक्षते'[2]। 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्'[3] 'भूतयोनिं परिपश्यन्ति धीराः'[4] एतासां श्रुतीनामाधारेण स्पष्टतः एतत्प्रतिपादयन्ति यदस्य जगतो निमित्तमुपादानं च कारणं ब्रह्मैवास्ति। 'यथोर्णनाभिः सृजते गृह्णते च' एषा मुण्डकश्रुतिः परतत्त्वमेव (परब्रह्मैव) जडचेतनात्मकसमस्तजगतो निमित्तोपादानोभयकारणं घोषयति। एतेन स्पष्टमेतद् यत् निर्विकारः परमात्मा स्वरूपेणाच्युतः अविकृतः सन्नपि स्वकीयाचिन्त्यशक्तिद्वारा जगतः स्वरूपे आत्मानमभिव्यनक्तीति स स्पष्टतया जगतो निमित्तमुपादानं च कारणम्।

(४) 'जन्माद्यस्य यतः' (१।१।२) तथा, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (१।४।२३) एताभ्यां सूत्राभ्यां स्पष्टमेतद् यत् वेदान्ताभिमतं

---

१. तै० उ० २।७ २. तत्रैव २।६
३. मु० ३।१।३ ४. तत्रैव १।१।६

जिज्ञास्यं परतत्त्वं ब्रह्मैव जगतो रचयितृ तदेव च 'अत्ता चराचरग्रहणात्' ( १।२।९ ) इत्यत्र सर्वेषां संहर्तृ, 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' ( १।२।१८ ) इत्यत्र तदेव परतत्त्वं पृथिव्यादिसर्वतत्त्वानामन्तर्यामि एवम् 'अक्षरमम्बरान्तधृतेः ( १।३।१० ) तथा च 'सा च प्रशासनात्' (१।३।११) अत्र सर्वतत्त्वानां शासनपूर्वकं धारयितृ च वर्तते। 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वतः उपदेशात्' ( २।४।२० ) इति सूत्रानुसारं त्रिवृत्करणपूर्वकमस्य नामरूपात्मकं जगतः सृष्टेः कर्तृ अपि तदेव।

जगतः अस्तित्वास्वीकारे सूत्रकाराभिमतानां परतत्त्वे प्रदर्शितानां चोक्तकार्याणां निरर्थकता स्पष्टैव संजायते। अतो निर्विवादरूपेणैतत्सिद्धं यत् यदा सूत्रकाराभिमतमुक्तं विशुद्धं परतत्त्वं जगत्स्वरूपे स्वकार्ये व्यापृतं तदा सूत्रकारानुसारं तन्मिथ्या कथं स्वीकर्तुं शक्यते।

( ५ ) मुण्डकोपनिषदि—

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाक् विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा'॥

एवं प्रकारेण परब्रह्मणः यस्य लोकमयविराट्स्वरूपस्य वर्णनमस्ति तत्प्रतिपादनस्यैव निर्देशकम् बादरायणस्य 'रूपोपन्यासाच्च' ( १।२।२३ ) इति सूत्रं वर्तते। 'द्युभ्वाद्यायतनं स्वशब्दात्' इति सूत्रे तदेव परतत्त्वम् आकाशादिपदार्थानामायतनमुक्तम्, एतत्सर्वैरिदं निर्विवादं यज्जगतः अस्तित्वं सूत्रकाराभिमतं वर्तते।

एवं जगदस्तित्वसिद्ध्यनन्तरमेव प्रश्नः समुत्तिष्ठते यदस्य जगतः परतत्त्वस्य च कः सम्बन्धः। जगदस्तित्वसाधनावस्थायां यद्यपि उभयोः कार्यकारणभावसम्बन्धो निर्दिष्टस्तथापि तद्विस्तृतविवेचनमिह क्रियते—

## परतत्त्वजगद्विषये मध्वाचार्यः—

वैष्णवभाष्यकारमध्वाचार्यस्यैतत्कथनं यत् ब्रह्म जगतः केवलं निमित्तं कारणं किन्त्वन्ये सर्वे भाष्यकाराः ऐकमत्येनैतत् स्वीकुर्वन्ति यत् ब्रह्म जगतः अभिन्ननिमित्तोपादानकारणम्। अतो मध्वमतिरिच्य अन्येषां सर्वेषां भाष्यकाराणामेष सर्वसम्मतः सिद्धान्तो यद्वेदान्ताभिमतं परतत्त्वं न केनाप्यौपाधिकरूपेण प्रत्युत स्वाभाविकरूपेण जगतो निमित्तकारणम्। एतच्च ब्रह्मसूत्राणां सर्वथानुकूलम्। सूत्रकारेण हि यस्य ब्रह्मणो जिज्ञासा

---

१. मु० २।१।४

प्रस्तुतीकृता तदेव ब्रह्म तेन 'जन्माद्यस्य यतः' (१।१।२) इति सूत्रे जगतो जन्मादिकारणरूपेणोक्तम्। अग्रे 'ईक्षतेर्नाशब्दम्' (१।१।५) इत्यत्र एतत्प्रतिपादितं यत्तत् ईक्षणं (संकल्पं) कृत्वा सृष्टिं करोति, तच्च चेतनम्। सूत्रकारेण ततः 'अस्मिन्नस्य च तद्योगं शास्ति' (१।१।१९) इति सूत्रे आनन्दमयेन सूत्रजिज्ञास्यं परतत्त्वं ब्रह्म गृह्णानेन सूत्रकारेण एतदेव स्पष्टीकृतं यत्, 'स य एवंविद् एतमानन्दमयमात्मानमुपसंक्रामति'[1] तथा 'ब्रह्मैव सन्[2] ब्रह्माप्येति' एतच्छ्रुतिवचनैरेतत्सिद्धं यत् जडप्रकृतिः जीवात्मा वा आनन्दमयो न वक्तुं शक्यते। चेतनस्य हि जीवात्मनो जडप्रकृतौ स्वसदृशे अन्यस्मिन् कस्मिन् परतन्त्रे जीवे वा लयो नोपपद्यते, अतः एकमात्रं ब्रह्मैव आनन्दमयशब्दस्य वाच्यार्थः तदेव च जगतः कारणम् जगतः अस्तित्वं प्रमाणीकुर्वता सूत्रकारेण परतत्त्वं ब्रह्मैव चराचरस्य संहारकम् आधिदैविकाधिभौतिकसमस्तवस्तूनामन्तर्यामि समस्तविश्वशासकं तन्नियन्त्रणपूर्वकं तद्धारकं तथा—

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्।
पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम्॥[3]

इत्यादिश्रुतीनामाधारेण, 'पत्यादिशब्देभ्यः' (१।३।४३) इति सूत्रे तदेव परतत्त्वमीश्वराणामपीश्वरो देवतानामपि परमदेवतोक्तम्। तदतिरिक्तं 'यथा च तक्षोभयथा' (२।३।४०) इति सूत्रे तदेव परतत्त्वं (ब्रह्म) जीवानां कर्तृत्वस्य नियामकमेवं 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' (४।४।१७) इति सूत्रे जगद्व्यापारः एकमात्रस्य परतत्त्वस्यैव कार्यमुक्तः[4]।

एवं यत्र यत्र जडचेतनात्मकसमस्तजगतः उत्पत्तेः संचालनस्य प्रलयस्य च प्रकरणं श्रुतिषु समायातं यथा—'यतो वा इमानि भूतानि जायन्ते…' 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किंचन मिषत्' 'स ऐक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत' तथा बृहदारण्यकोपनिषदः ३।७।१३ इति प्रकरणतः ३।७।२३ यावत् एवं शतपथब्राह्मणे १४।३।५।७ इत्यतः ३१ यावत् सर्वत्र एतत्कार्यं तस्यैव परब्रह्मणः प्रतिपादितम्। एतैः सर्वैः पूर्णतया एतत्स्पष्टं यत्सूत्रकारः परतत्त्वं (परब्रह्म) जगतो निमित्तकारणं स्वीकरोति।

---

१. तै० २।८ २. बृ० उ० ४।४।६
३. श्वे० उ० ६।७ ४. वै० भा० तु० अ० पृ० २१२

## परतत्त्वजगद्विषये अन्ये आचार्याः—

परतत्त्वविषये जगद्विषये च अन्येषामाचार्याणामेतत्कथनं यद् मध्वाचार्यानुसारेण परतत्त्वस्य केवलनिमित्तकारणत्वं न संगतम्। अयं सिद्धान्तो हि न सूत्रकाराभिमतः इति निम्नाङ्कितानेकसूत्रैः प्रमाणीभवति (१) 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (१।४।२३) अस्मिन् सूत्रे ब्रह्म जगतः प्रकृतिः, अभिन्ननिमित्तोपादानकारणमुक्तम्। इदमत्र तत्तात्पर्यं यत् श्वेतकेतोरुपाख्याने 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति'[1] इत्थमुद्दालके पृच्छति यदा श्वेतकेतुस्तत्तत्त्वजिज्ञासां निजपितुरकार्षीत्तदा तेन 'यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं[2] विज्ञातं स्यात्' एतद्दृष्टान्तेन यत्तत्त्वं निर्दिष्टं तस्योपपत्तिस्तदैव भवितुं शक्नोति यदा ब्रह्म जगतः प्रकृतिः (अभिन्ननिमित्तोपादानकारणम्) तथा जगत् तद्विकृतिः स्वीक्रियेत। एतदग्रे 'अभिध्योपदेशाच्च' (१।४।२४) इति सूत्रमारभ्य 'योनिश्च हि गीयते' (१।४।२८) इति यावत् सर्वेषु सूत्रेषु सूत्रकारेण क्रमशः एतत्पुष्टीकृतं यत्तदेवैकं ब्रह्म स्वयं नानारूपात्मकं जगत् संजायते। श्रुतिषु साक्षात् रूपेण ब्रह्म जगतो निमित्तोपादानोभयकारणमुक्तम्। अस्मिन् प्रकरणे समायातेन 'आत्मकृति' शब्देन स्पष्टमेतद् यत् ब्रह्म स्वयमेवात्मानमुपादाय (स्वमुपादानं कृत्वा) नानानामरूपात्मकजगद्रूपे पर्यणमयत्। अतएव श्रुतिषु तद् जगतो योनिरुच्यते।

उक्तब्रह्मोपादानत्वप्रतिपादकसूत्राणां यदर्थः मध्वेन कृतः स सूत्रैः किंचिन्मात्रमपि संगतिं न लभते। तेन तेषामर्थानां परिवर्तनाय समन्वयाध्यायस्य चतुर्थपादीयप्रथमसूत्रतः[3] एव समन्वयस्य एषा पद्धतिः स्वीकृता यत्सर्वे शब्दाः परमात्मवाचकाः[4]। तथाहि—'श्रुतिलिंगादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन् पादे'[5] इत्यादि। तेन सः, 'प्रकृतिश्च प्रतिज्ञा

---

१—२. छा० उ० ६।१।२-३ तथा ६।१।४

३. 'आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च (ब्र० सू० १।४।१)

४. 'सर्वे शब्दाः परमात्मन एव वाचकाः' (सर्वदर्शनसंग्रह पृ० १०४) अयमेव भावः तत्त्वमुक्तावल्यां चतुर्थे 'सरे ४।८२—८५ पद्येषु तथा नामरूपश्रुति-व्याकरणसमये 'वेदार्थसंग्रहे' रामानुजेनाप्यभिव्यक्तीकृतः।

५. म० भा० पृ० ४६

दृष्टान्तानुपरोधात्' ( १।४।२३ ) इति सूत्रे सरलतया एतत्प्रतिपादयितुं शक्नुयात् यत्प्रकृतिशब्दोऽपि परमात्मवाचक इति किन्तु एतत्करणेन सकलसम्पूर्णपादसूत्रार्थः पूर्णतया असम्बद्धः सूत्रप्रतिकूलश्च संजातः अस्ति। तथैव सूत्रकारेण स्थापिते ब्रह्मोपादानत्वे सांख्यकृताक्षेपनिराकारक-द्वितीयाध्यायप्रथमपादीयसूत्राणामप्यर्थो न कथमपि संगच्छते।

ब्रह्मसूत्रेषु ब्रह्मोपादानत्वमतिस्पष्टतया प्रतिपादितं वर्तते। केवल-निमित्तकारणवादस्तु सूत्रकारेण 'सम्बन्धानुपपत्तेश्च' ( २।२।३८ ) 'अधि-ष्ठानानुपपत्तेश्च' ( २।२।३९ ) तथा करणवच्चेन्न भोगादिभ्यः' ( २।२।४० ) एषु सूत्रेषु स्वयमेव निराकृत इति मध्वातिरिक्तान्यसर्वभाष्यकाराणां मते ब्रह्मणो जगदभिन्ननिमित्तोपादानकारणत्वं सर्वथा सूत्रानुकूलम्।

## ब्रह्मणः अभिन्ननिमित्तोपादानत्वोपपादनम्—

ब्रह्म हि एकं चेतनं सर्वशक्तिसम्पन्नं च परतत्त्वम् इति जगतः कर्तृत्वे तस्य सर्वथा सामर्थ्यमित्यत्र न कस्यापि विवादः, किन्तु तदात्मानमेवो-पादाय स्वं विविधविकारपूर्णे चेतनाचेतनात्मकजगत्स्वरूपे परिणमयती-त्यत्रेत्थं सन्देहः स्वाभाविकः 'अपि किं तत्परतत्त्वमपि सांख्याभिमत-प्रधानवदेव स्वरूपतो विकारशीलम्' इति। किन्तु चेतनपरतत्त्वस्य विका-रशीलत्वं यदा न सूत्रकारभाष्यकारान्यतराभिमतं तदा विकृतिरूपस्य ब्रह्मणो जगतः प्रकृतित्वं कथमुपपद्येत। सूत्रकारो हि जगतो वास्तविक-सत्तां स्वीकरोतीति प्रमाणितचरमतस्तन्मिथ्यात्वं तु प्रतिपादयितुम-शक्यम्। किं च, तन्मिथ्यात्वाभ्युपगमे परतत्त्वमभिन्ननिमित्तोपादान-मेव कस्य भवेत्? तात्पर्यं चेदं यद् जगतो वस्तुतः अस्तित्वं ब्रह्मणश्च तज्जगतोऽभिन्ननिमित्तकारणत्वं निर्विकारत्वं चैतत्त्रयं सूत्रकाराभिमतं किन्तु कथमेते सिद्धान्ताः सोपपन्नं संगच्छेरन् इत्येतदेव विभिन्नभाष्य-कारैर्विभिन्नरूपेण समाहितम्।

वैष्णवभाष्यकारेषु मध्वाचार्यः केवलनिमित्तकारणवादीति तत्समक्षं नैषा समस्योपतिष्ठते किन्तु तत्पक्षो न सूत्रकारसम्मतः। अन्यभाष्य-काराणामेतद्विषये निम्नाङ्कितप्रकारद्वयसमाधानम्—

( १ ) रामानुजनिम्बार्कावेतत्स्वीकुर्वाते यत्सूत्रकाराभिमतचेतनपर-तत्त्वस्य स्वरूपतः परिणामो न भवति अपि तु तदीयचिदचिन्मयशरीरस्य शक्तेर्वा परिणामो भवति यच्चघोक्तपरतत्त्वात् स्वरूपतो भिन्नं किन्तु स्वकीयस्वरूप-स्थिति-प्रवृत्त्यर्थं च परतत्त्वाश्रितं तन्नियम्यं च। एवंभूत-सूक्ष्मशरीरं ( तथाभूतां शक्तिं वा ) परतत्त्वं यथेच्छं परिणतं कृत्वा स्वयं

जगत्स्वरूपं संजायते। इत्थं परतत्त्वं स्वरूपतो निर्विकारमपि परिणामेन जगतः स्वरूपत्वात्तदभिन्ननिमित्तोपादानकारणम्।

(२) वल्लभस्यैतन्मतं यत् स्वरूपतः केवलपरतत्वं ब्रह्मैवैकमात्रं तत्वम्। तच्च सच्चिदानन्दस्वरूपम्। तदेवात्मानं जगद्रूपे परिणतं करोति, तत् स्वकीये एकस्मिन्नंशे आनन्दं तिरोधापयति यस्मादुक्तांशः (चिदंशः) जीवसमष्टिर्जायते। अंशान्तरे च तत् आनन्दांशं चिदंशं चेत्युभयं तिरोधापयति येन तदंशः (सदंशः) जडतत्वं संजायते। इत्थमेकं परतत्वमेव स्वयं चेतनाचेतनात्मकजगद्रूपे परिणतं सज्जगतः अभिन्ननिमित्तोपादानकारणम्।

पूर्वोक्तपक्षद्वये अयं भेदो यत् प्रथमस्मिन् परतत्वं निर्विकारमवतिष्ठते इति न स्वरूपतः तदुपादानत्वम्। द्वितीयपक्षे च परतत्वस्य स्वरूपतः उपादानत्वं सम्पद्यते किन्तु तन्निर्विकारत्वेन न हीयते। इत्थं प्रथमपक्षः परतत्वस्य उपादानत्वसिद्धये एतत्प्रतिपादयति यत् तत् स्वकीया पृथक्-सिद्धशक्तिशरीरान्यतरपरिणतेः कारणेनोपादानम्। द्वितीयपक्षश्च परत-त्वस्य निर्विकारत्वसिद्धये एतत्प्रतिपादयति यत् तत् परतत्वं जगद्रूपे परिणतमप्यविकृतं तिष्ठति'।

शंकरस्यैतन्मतं यत् 'सर्वं खल्विदं ब्रह्म' एषा औपनिषद्घोषणा इति ब्रह्मातिरिक्तान्यसत्ताया अभावात् अस्य जगतः उत्पत्तिः ब्रह्मण एव संजा-यते। मायाविशिष्टं ब्रह्म ईश्वरः स एव चास्य जगतो निमित्तोपादानो-भयकारणम्। यथोर्णनाभिर्निजनिर्मितजालस्य शरीरप्राधान्येन उपादान-कारणम्, चेतनप्राधान्येन च निमित्तकारणमित्यमुभयं वर्तते तथैव ब्रह्म अपि मायासम्बन्धेन स्वकीयेश्वरोपाधिना जगतः उपादानं कारणं तथा निजचैतन्यप्रधानतया चराचरजगतो निमित्तं कारणम्। ब्रह्मणः एतज्जगत्कारणतानिरूपणं शंकरेण ब्रह्मसूत्रेषु प्रकृतिश्च प्रतिज्ञा 'दृष्टान्ता-नुपरोधात्' (१।४।२३) इत्यतः 'परिणामात्' (१।४।२७) इत्येतत्प-र्यन्तं कृतम्।

तत्तूपादानत्वं शुद्धचैतन्यगतमुतेश्वरगतमिति विचारप्रसंगेन सिद्धान्त-लेशसंग्रहकारा एवं संगृह्णन्ति तद्यथा शुद्धचैतन्यमेवोपादानम्। तस्यैव लक्ष्यस्य जिज्ञास्यतया जिज्ञासासूत्रे प्रतिज्ञानादिति संक्षेपशारीरकमतम्। 'अन्तस्तद्धर्मोपदेशात्' (१।१।२०) 'सर्वत्र प्रसिद्धोपदेशात्' (१।२।१) 'अत्ता चराचरग्रहणात्' (१।२।६) इत्यादिषु सगुणब्रह्मलिंगतयैव जगत्का-रणत्वादीनामुल्लेखात् मायोपहितमीश्वरचैतन्यमेवोपादानकारणमिति

१. बं० भा० तु० अ० पृ० २१६

विवरणमतम्। वियदादिप्रपंचं प्रति ईश्वरः अन्तःकरणादिकं प्रति तु जीव उपादानकारणमितीतरे। तत्र जीवकारणत्वपक्षा अविद्यामायाभेदपक्षमाश्रित्यैव प्रवृत्ताः।

अजामेकां[1] लोहितशुक्लकृष्णाम्.........इति कुत्रचन मायाप्रपंचोपादानकारणमवगम्यते कुत्रचन 'यतो वा इमानि भूतानि' इत्यादौ ब्रह्म तादृशमवगम्यते तथा कुत्रचित् 'स कारणं कारणाधिपाधिपः' इति ब्रह्मण एव कारणत्वं न मायायाः क्वचन तु ब्रह्म निर्गुणं वस्तुगत्या अकारणमिति गम्यते।

सर्वमिदं कथमुपपद्यते इति शंकावारणार्थं सिद्धान्तलेशसंग्रहे मायाकारणताविचारः प्रस्तुतः। तत्र मायापरिणाम्युपादानम्, ब्रह्म विवर्तोपादानम् उभयसाधारणमुपादानत्वं स्वात्मनि कार्यजनितहेतुत्वम्, स्वाभिन्नकार्यजनकत्वं वा, सन् घटः जडो घटः इति चाभेदानुभव उभयोपादानत्वमपि गमयति, 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (२।१।१४) इति सूत्रे अनन्यत्वव्यतिरेकेणाभावः न खल्वनन्यत्वमित्यभेदं ब्रूमः" इति ब्रह्मणा साकं प्रपंचस्याभेदनिषेधः ब्रह्मसमसत्ताकाभेदपरः न तु प्रातिभासिकाभेदपरः इति पदार्थतत्त्वनिर्णयकारमतम्। ब्रह्मण एव कूटस्थस्य मायाद्वारकमुपादानत्वं न तु मायायाः इति संक्षेपशारीरिकमतम्। जीवाश्रिताऽविद्याविषयस्य ब्रह्मणः एवोपादानत्वम्, अविद्यायास्तु केवलं निमित्तत्त्वमात्रमिति भामतीमतम्। मायाशक्तिरेवोपादनकारणं ब्रह्म तूपचारादेव तत्—

अस्य द्वैतेन्द्रजालस्य यदुपादनकारणम्।
अज्ञानं, तदुपाश्रित्य ब्रह्म कारणमुच्यते॥

## अभिन्ननिमित्तकारणत्वे सूत्रकारमतम्—

सूत्रकारेण 'जन्माद्यस्य यतः' (१।१।२) इति सूत्रे जिज्ञास्यं ब्रह्म जगतो जन्मादिकारणमुक्तम्। ततः प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् (१।४।२३) इति सूत्रादग्रे आपादान्तं स्पष्टतया एतत्प्रतिपादितं यद् ब्रह्म जगतः प्रकृतिरस्ति, तस्य च जगद्रूपे परिणामो जायते—जगदिदं ब्रह्मणो विकृतिरिति भावः। 'यावद्विकारं तु विभागोलोकवत्' (२।३।७) इति सूत्रे बादरायणेन संसारः ब्रह्मणो विकार एवोक्तः—

'ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदम् वरिष्ठम्॥'[2]

---

१. श्वे० ४।५ २. मु० उ० २।२।११

तथा—

'स य एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो'[1]...'

एवं—

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासी'त ।[2]

इत्यादिश्रुतिवाक्यैरपीदमेव पुष्टीक्रियते। वस्तुस्थितिरियं यत् प्रकृति विकृतिशब्दौ सापेक्षाविति। कस्यचिदपि तत्त्वस्य 'प्रकृतिः' इति प्रतिपादने स्वतःसिद्धत्वेनैतदायाति यत्तस्य विकृतिरप्यस्ति। अतः यदि सूत्रकारः ब्रह्म जगतः प्रकृतिं स्वीकरोति तदा स्पष्टमेतद् यत् तन्मते जगद् ब्रह्मणो विकृतिः।

शंकरेण परिणामस्य भेदद्वयं स्वीकृतम् (१) विकारः (२) विवर्तश्च दधि दुग्धस्य विकारः; रज्जौ सर्पभानं तद्विवर्तः। तत्र—

सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदीरितः॥[3]

कारणापेक्षया कार्यं विलक्षणं भवति; नानयोः सालक्षण्यम्। अत एव जगतः अनित्यत्वादिदोषाः तत्कारणे ब्रह्मणि न सम्भवन्ति। प्रकृतेर्हि प्रकृतित्वमेवैतद् यत् यदा सा स्वप्रकृत्यवस्थायां स्यात् तदा तस्यां विकृतावस्थायाः दोषा न स्युः। अन्यथा सा प्रकृतिरभूत्वा विकृतिरेवोच्येत अत एव सूत्रकारेण अविकृते एव ब्रह्मणि न कापि तत्परिणाम उक्तः। इत्थं पूर्णतया एतत्स्पष्टं संजायते यत्सूत्रकारः निजस्वीकृतप्रकृतिब्रह्मणो जगद्रूपविकृतौ परिणतिं स्वीकरोति। अतो वल्लभस्य अविकृतपरिणामवादः सूत्रकारसिद्धान्तविरुद्धः।

एतदतिरिच्य सूत्रकाराभिमतब्रह्मकारणवादस्वरूपमवलोकयन् एतद्वक्तुमुचितं भवति यत् रामानुजनिम्बार्काभ्यां प्रस्तुतः कारणवादः आधिक्येन तत्सन्निकटति। द्वावपीमौ भाष्यकारौ परतत्वस्वरूपस्य परिणाममत्वा ततः स्वरूपतो भिन्नस्य किन्तु तन्नियम्यस्य जीवजडात्मकांशस्य परिणामं स्वीकुर्वाते। तौ जीवजडात्मकांशं परतत्वतः अपृथक् सिद्धं तत्स्वरूप-स्थिति-प्रवृत्तीश्च पूर्णतया परतत्वायत्ताः मन्येते। उक्तदृष्ट्यैव च परतत्वादभिन्नमाकलयन्ति यच्च सूत्रकाराभिमतं प्रति[4]भाति।

---

१. छा० ६।८।७ २. तत्रैव ३।१४।१
३. वे० सा० पृ० १२ ४. वै० भा० तु० अ० पृ० २२५

निम्बार्को जीवजडात्मकांशं परतत्त्वस्य शक्तिमाकलयति। रामानुजश्च तं शक्तिं स्वीकुर्वन्नपि प्रमुखतया परतत्त्वस्य शरीरमभिधत्ते किन्तु नात्र किंचिदन्तरम्।

शंकरेण तत्परतत्त्वस्य जगता सह सम्बन्धं कर्तुं मायाया आश्रयो गृहीतः। परतत्त्वं हि साक्षात् सर्वतः परा एका स्वतन्त्रसत्ता वर्तते, तदस्तित्वे च श्रुतय एव एकमात्रं प्रमाणम् इति तन्मतम्। तदेव च स्वशक्तेर्मायायाः आश्रयसमकालमेवेश्वरः कथ्यते। यस्येच्छामात्रेणैवास्याः सृष्टेः रचना संजायते। अयं संसारः तस्य परतत्त्वस्य परिणामः किन्तुविकारविवर्तरूपभेदद्वयमध्ये न विकाररूपः। अपितु विवर्तरूप इति व्यावहारिकरूपेण सत्या प्रतिभासमाना अप्यस्य सत्ता आध्यात्मिकदृष्ट्या मिथ्या वर्तते। शंकरस्यैषा धारणा आध्यात्मिकस्तरे उच्चैस्तमां भवतु नाम किन्तु तत्तत्सम्बद्धसूत्राणां दूराकृष्टार्थकल्पनया सूत्रकाराभिमतब्रह्मकारणवादस्वरूपात्अत्यन्तसन्निकृष्टा वक्तुं शक्यते।

---

## जीव ईश्वरो ब्रह्म च

### जीवोत्पत्तिः—( जीवः )

अतः पूर्वमेतदध्यायीये 'परतत्त्वं जगच्च' इति शीर्षके एतदनुशीलितं यद्ब्रह्मैवैकमद्वितीयं चरमं सत्यम्। लीलार्थं स आत्मानम् अगणितरूपेषु व्यक्तं करोति। इमे अगणितजीवा विचित्रं चैतज्जगत्तस्या एव चरमसत्ताया आंशिकाभिव्यक्तिः। स हि परमात्मा एकाकी क्रीडितुं न वाञ्छति 'एकाकी न रमते स द्वितीयमैच्छत्'[1] अतः स्वकीयान् कतिपयगुणान् अन्तर्निधाय आत्मानमगणितरूपेषु परिवर्तयति। समानतया च तस्य सर्वेषु गुणेषु अभिव्यक्तीभूतेषु तिष्ठत्सु एकाकी एव स तिष्ठेत् इति न स कदापि रूपान्तरे परिणमेत्। अनन्तशक्तौ हि न कदापि द्वित्वं समुत्पद्यते। अतः यदा स विभिन्नप्रकारेण विभिन्नेषु कालेषु स्थानेषु च आत्मानं परिसीमितं करोति कतिपयाँश्च गुणान् कस्मिन्नपि समये कस्मिन्नपि च स्थाने अभिव्यनक्ति तदैव स एकतः अनेकधा भवति नान्यथा। परमात्मनः एषा निजसीमिता तदाविर्भावतिरोभावयोः व्यापारं करोति इति स स्वगुणान् अनेकरूपेणाविर्भावयति तिरोभावयति चेत्थमेवास्य जगतो जीवानां चोत्पत्तिः।

---

१. बृ० उ० १।४।३

ब्रह्म सच्चिदानन्द (सत्-चित्-आनन्द) स्वरूपम् इति सन्मात्रे उद्भूते शेषयोश्च चिदानन्दयोस्तिरोहितयोः तद् जगद्रूपेणाविर्भवति। सच्चितोराविर्भूतयोरानन्दे च तिरोभूते तस्य जीवरूपेणोत्पत्तिः।'[1] इत्थं सृष्टिरचनानियमानुसारं परमाणुतः पर्वतपर्यन्तं जडेषु पिपीलिकातो विशालकायहस्तिपर्यन्तं च चेतनेषु परमात्मसृष्टिगोचरं पदार्थमात्रं ब्रह्म। एतच्च तस्यांशिकं रूपम्। यस्य कस्यचिदेकस्यावलोकनेन सृष्टिमात्रस्य ज्ञानं न भवितुं शक्नोति नापि चैतेषु एकं रूपं तस्य परिपूर्णाभिव्यक्तिः।

## जीवविषये भाष्यकारपंचकप्रातिस्विकमतसंक्षेपः

### जीवः सत्यो नाभासः—

असंख्यजीवात्मानः परमात्मवदेव सत्याः। ते हि तस्यैवांशाः इति सर्ववैष्णवाचार्यसिद्धान्तः। एकमेव ब्रह्म अनेकरूपाणि धारयति इति जडचेतनात्मकमेतज्जगत् सौन्दर्याकर्षणपरिपूर्णं परिलक्ष्यते। प्रत्येकजीवात्मा सत्यः। विश्वं चाप्येतत् न नीरसं शून्यं निर्जीवं वैचित्र्यविहीनमनन्तसत्तास्वरूपं यदादिकालत एव मनुष्यागम्यं मरुस्थलमिव तथापि सात्वतं स्यात्। प्रत्युत सजीवं विचित्रमगणितजीवात्मपरिपूर्णं च वर्तते। ब्रह्मसूत्रस्य 'आभासा एव च' (२।३।५०) इति सूत्रस्येदं तात्पर्यं यत् जीवो ब्रह्मण आभासः एव न तु ब्रह्म, आनंदांशस्य तत्र तिरोहितत्वात्। न तु प्रतिबिम्बवन्मिथ्यात्वम्, जलचन्द्रवदित्यस्यानेकत्वे दृष्टान्तः। अतो न जीवस्य मिथ्यात्वरूप आभासः अत्र विवक्षितः। इत्थं च जीवात्मनामनेकत्वे सत्यत्वे च वैष्णववेदान्तस्य सर्वे आचार्याः सहमताः।

### (१) जीवात्मा आभासः (प्रतिबिम्ब) एव—

शंकरो हि प्रतिबिम्बवादस्य पक्षपातीति सूर्यस्य चन्द्रस्य वा यथा जले अनेके प्रतिबिम्बास्तथैवैकमपि ब्रह्म मायायाः कारणेन अनेकेषां जीवात्मनां स्वरूपे परिलक्षितं भवति। वस्तुगत्या यथा सूर्यमात्रं सत्यं प्रतिबिम्बश्चासत्यः तथैव ब्रह्ममात्रं सत्यं जीवात्मकता चाविद्याजन्याध्यासः—

घटं जलं तद्गतमर्कबिम्बं विहाय सर्वं विनिरीक्ष्यतेऽर्कः।
तटस्थ एतत्त्रितयावभासकः स्वयं प्रकाशो विदुषा यथा तथा[2]॥

---

१. त० दी० नि० १।२७–२९ २. वि० चू० ११९

## ( २ ) जीवात्मा विभुः—

शंकरस्यैतत्कथनं यद् 'तत्त्वमसि' श्रुतिः ब्रह्मजीवयोरेकत्वं प्रतिपादयतीति जीवात्मा विभुः व्यावहारिकरूपेणौपाधिकमणुत्वं तत्र परिलक्ष्यते। बुद्धिगतदोषाः आत्मनः प्रतीयन्ते किन्त्वैतत्सर्वमविद्याजन्यम् वस्तुगत्या जीवात्मा अनन्तो विभुश्च। ब्रह्मजीवयोर्हि एकत्वमिति ब्रह्मणो विभुत्वमिव जीवस्यापि विभुत्वम्—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु'[1] किं च—

> घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम्।
> तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम्[2]॥

यद्यप्यत्रायं सन्देहो यत् 'श्वेताश्वतरोपनिषदि 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' ( २।३।२९ ) इत्यत्र शांकरभाष्ये चापि—

> बालाग्रशतभागस्य शतधा कल्पितस्य तु।
> भागो जीवः स विज्ञेयः स चानन्त्याय [3]कल्पते॥

इत्यादिरीत्या जीवात्मानं बालाग्रशतभागस्य रूपेण अणुं प्रतिपाद्य अन्ते तस्य आनन्त्यगुणसम्पन्नत्वप्रतिपादनमनुचितं तथाप्यस्य सामञ्जस्यं शंकरेणेत्थं प्रदर्शितम्—'यद्योपचारिकमणुत्वं जीवस्य भवेत् पारमार्थिकं चानन्त्यं तद्युभयं मुख्यमवक्लृप्येत'' ····बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रोह्यवरोऽपि [4]दृष्टः' इति च बुद्धिगुणसम्बन्धेनैवाराग्रमात्रतां शास्ति न स्वेनैवात्मना' इति।

'एषोऽणुरात्मा चेतसा [5]वेदितव्यः' इत्यत्रापि न जीवस्याणुपरिमाणत्वं शिष्यते। परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात्। जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः। तस्माद् दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं वा द्रष्टव्यम्।

## ( ३ ) जीवात्मा ज्ञानस्वरूपः—

शंकरस्यैतन्मतं यन्नित्यचैतन्यः अयमात्मा, अत एव यस्मादेव नोत्पद्यते; परमेव ब्रह्म अविकृतमुपाधिसम्पर्काज्जीवभावेन अवतिष्ठते। परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम्—'विज्ञानमानन्दं [6]ब्रह्म', 'सत्यं

---

१. बृ० उ० ( ४।४।२२ ) २. वि० चू० ५६५
३. श्वे० उ० ५।९ ४. तत्रैव ५।८
५. मु० उ० ३।१।९ ६. बृ० उ० ३।९।२८

ज्ञानमनन्तं ब्रह्म"[1], तदेव चेत् परं ब्रह्म जीवः तस्माज्जीवस्यापि नित्य-चैतन्यस्वरूप एवात्मेति निश्चिनुमः"[2] ।

## ( ४ ) जीवात्मनः कर्तृत्वभोक्तृत्वाभावः—

जीवात्मनः कर्तृत्वभोक्तृत्वविषये शंकरस्यैतत्कथनं यद् वस्तुगत्या जीवात्मा न कर्ता नापि च भोक्ता। स तु शाश्वतं कूटस्थं शुद्धं निश्चलं ब्रह्म। समस्तमेतद् विश्वं व्यावहारिकदृश्यम्। जडचेतनसमस्तवस्तूनि आकाशमेघवन्नैरन्तर्येण आयान्ति यान्ति च। समस्तं नामरूपात्मकं जगत् तदीयं कर्मजातं च मायाजन्यम्, औपाधिकं च[3]। जीवः आत्मानं बौद्धिकोपाधिना कर्तारं भोक्तारं चावगच्छति[4]। जीवात्मनः क्रियात्मकता अध्यासमात्रम्। स्वभावत आत्मा निष्कलो निष्क्रियो निर्विकारः—

आकाशवन्निर्मलनिर्विकल्पं निःसीम निःस्पन्दननिर्विकारम्।
अन्तर्बहिः शून्यमनन्यमद्वयं स्वयं परं ब्रह्म किमस्ति बोध्यम्[5] ॥

आत्मनः कर्तृत्वहीनता एतेनापि सिध्यति यद् यदि तस्य कर्तृत्वगुणः अग्नौ दाहकताशक्तिरिव स्वाभाविकस्तदा न स जीवः कदापि क्रियाभ्यो मोक्षं प्राप्नुयात् इति न कस्मिन्नपि समये तस्य मुक्तिर्भवेत्।

## वल्लभमते जीवे ब्रह्मत्वतिरोधानम्

जीवात्मनि ब्रह्मत्वं तिरोहितं तिष्ठतीति वल्लभः। तन्मते जीवो ब्रह्म अस्ति किन्तु तस्य सर्वाः विचित्रदिव्यशक्तयः तिरोहिताः तिष्ठन्ति। अनन्तब्रह्मणः स्वल्पातिस्वल्पाभिव्यक्तिः जीवात्मद्वारा भवति। सूक्ष्मातिसूक्ष्मविशेषगुणाः ब्रह्मणो महाशक्तयश्च जीवात्मनि तिरोहिता इति जीवात्मा एतावान् लघुर्दासस्वरूपश्च। 'ब्रह्मैश्वर्यस्य तिरोहितत्वात् स दुःखस्य भागी भवति। यशस्तिरोभावात् सर्वहीनत्वं श्रीतिरोभावा-

---

१. तै० २।१।१

२. शां० भा० ( ब्र० सू० २।३।१८ )

३. उपाधिरायाति स एव गच्छति स एव कर्माणि करोति भुङ्क्ते। स एव जीर्यन् म्रियते सदाहं कुलाद्रिवन्निश्चल एव संस्थितः ॥ [ वि० चू० ]

४. जीवो ह्यविद्यावेशवशाद् देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःखी अहं इत्यविद्यया कृतं दुःखोपभोगमभिमन्यते। मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभवः [ शां० भा० २।३।४६ ]

५. वि० चू० ३९३

जन्मादिसर्वोपद्विषयत्वं, ज्ञानतिरोभावाद् देहादिष्वहंबुद्धिः, वैराग्यतिरोभावाद्विषयासक्तिः[1] ।'

## शंकरवल्लभयोर्जीवविषयकसिद्धान्तसमालोचनम्

वल्लभाचार्येणोक्तस्वसिद्धान्तानुसारं निम्नाङ्कितप्रकारेण शंकरमतस्य खण्डनं कृतम्—

### शंकरस्य प्रतिबिम्बत्वखण्डनम्

(१) शंकरानुसारं ब्रह्म माययाऽऽच्छन्नमिति न तस्य प्रतिबिम्बः सम्भवति—'मायाजवनिकाच्छन्नं नान्यथा प्रतिबिम्बते'[2] ।

(२) यस्मिन् स्थाने यद्वस्तु भवति ततः पृथक् तत् प्रतिबिम्बते । तदविकृतस्थले च तत्प्रतिबिम्बस्य सर्वथा असम्भवः । ब्रह्म सर्वव्यापकमिति न किमपि स्थलं तद्रहितं यत्र तत्प्रतिबिम्बते । यदि चेत्थं प्रत्युच्येत यद् यथा आकाशस्य सर्वव्यापकत्वेऽपि स जले प्रतिबिम्बते तथैव ब्रह्मणोऽपि प्रतिबिम्बसम्भवस्तदैतस्यैतदुत्तरं यज्जले दृश्यमानः प्रतिबिम्बो नाकाशस्यापि तु प्रकाशवृत्तस्य वर्तते ।[3]

(३) 'द्वा सुपर्णा' इति श्रुतिः स्पष्टतया ब्रह्मजीवयोः पार्थक्यमभिव्यनक्तीति जीवो न ब्रह्मणः प्रतिबिम्बो भवितुमर्हति ।

(४) यद् वस्तु प्रतिबिम्बते तत् साकारं दृष्टिगोचरं च भवति किन्तु ब्रह्म निराकारम् इति न तस्य प्रतिबिम्बः[4] सम्भवति । किंच, क्व तत्प्रतिबिम्बते अन्तःकरणे अविद्यायां वा ? निर्मलमेव च वस्तु बिम्बग्रहे समर्थं भवति इति अनुभवप्रत्यक्षम्—स्वच्छदर्पणादावेव मुखादि परिलक्ष्यते न मलिने मृदां चयादौ वेत्यविद्यान्तःकरणयोरुभयोर्मलिनत्वेन नान्यतरत्रापि तत्प्रतिबिम्बसम्भवः ।

### तदीयजीवस्य विभुत्वखण्डनम्

श्रुतिवाक्यानि जीवात्मनः उत्क्रमणपूर्वकं स्वर्गारोहणं ततः तस्य पुनरागमनं च प्रतिपादयन्ति तच्च जीवस्याणुत्वे एव सम्भवति[5] । सर्वं

---

१. अणुभाष्यम् ( ३।२।५ ) २. त० दी० नि० १।५८

३. तत्रैव वल्लभकृतप्रकाशटीकायाम्

४. तत्रैव १।५७ इत्यत्र वल्लभकृतावरणभंगटीका

५. त० दी० नि० १।५९ इत्यत्र प्रकाशटीका

व्यापकस्य आत्मनः कृते एतदसम्भवम्—'श्रुत्युक्तानामुत्क्रान्तिगत्यागतीनां श्रवणात् यथायोग्यं तस्य परिमाणमङ्गीकर्तव्यम्' ।[1]

'एषोऽणुरात्मा चेतसा वेदितव्यः',[2] आराग्रमात्रो ह्यपरोऽपि[3] दृष्टः इत्याद्यनेकश्रुतयस्तस्याणुत्वं प्रतिपादयन्ति ।

अत्र यद्यपि एवं सन्देहः स्यात् यज्जीवस्याणुत्वे समस्तशरीरे सुखाद्यनुभवो विरुध्यते किं त्वस्य एतदुत्तरं यत् अत्यन्ताणुरपि स तथैव सर्वशरीरव्यापको यथा शरीरे एकदेशस्थितमपि चन्दनं सर्वशरीर व्यापकम्—'जीवस्त्वाराग्रमात्रोऽपि गन्धवद् व्यतिरेकवान् ।' इत्थं सामान्यरूपेण जीवात्मा अणुः किन्तु तस्य सव 'दोषावगमे स विभुः संजायते । जीवस्य स्थितिर्हृदि वर्तते 'हृदि जीवस्य स्थितिः' किन्तु स तथैव सर्वशरीरव्यापको यथा एकस्थाने स्थापितोऽपि दीपः सर्वत्र प्रकाशं प्रसारयति अतो न कश्चिद्विरोधः ।

अत्र यद्यपि एवं विरोधः कर्तुं शक्यते यत् प्रसिद्धा श्रुतिः, 'तत्त्वमसि' जीवात्मपरमात्मनोरेकत्वं प्रतिपादयति । यदा च जीवः परमात्मैव तदा सः कथमणुर्भवितुं शक्नोति । किन्तु तस्येदं समाधानं यत् सतीष्वपि जीवे परमात्मविशेषतासु यत्किंचिदंशेन जीवो हीनः । अत एव च स जीवात्मा ब्रह्मणि सच्चिदानन्दास्त्रयोऽप्युद्भूताः, जीवे तु केवलं सच्चिदेतदद्वयमेवोद्भूतम् आनन्दांशश्च तत्र तिरोहितः । येषु चांशेषु स ( जीवः ) ब्रह्म तेष्वंशेषु ब्रह्मणा समानः—'तस्य ब्रह्मणो गुणाः प्रज्ञाद्रष्टृत्वादयस्त एवात्र जीवे सारा इति जडवैलक्षण्यकारिण इत्यमात्ये राजपदप्रयोगवज्जीवे भगवद्व्यपदेशः'[4] ।

अर्थात् यथा बृहदारण्यके सुषुप्तिसाक्षी प्राज्ञः ब्रह्मणः असाधारणधर्मैः अपहतपाप्मत्वादिभिर्युक्तो वर्णितः तथैव जीवात्मन्यपि विभुत्वेन ब्रह्मत्वं प्रतिपादितम् । अयमेव पक्षः इतः पूर्ववर्तिना 'नाणुरतच्छ्रुतेरिति-नेतराधिकारात्' ( २ ३।२३ ) इति सूत्रेणापि समर्थ्यते ।

यद्यप्येतत्सत्यं यत्सांसारिकदशायां जीवात्मा यत्किंचिदंशेनानन्दहीनः किन्तु नैतस्यैतत्तात्पर्यं यत् स तेन सर्वथा रहितः । आनन्दस्तत्र वर्तते किन्त्वनुद्भूतावस्थायामेव[5] यथैकस्य पुरुषस्य शैशवावस्थायां

---

१. अणुभाष्यम् २।३।१९ 
२. मु० उ० ३।१।९
३. श्वे० उ० ५।८
४. अणुभाष्यम् ( २।३।२९ )
५. तत्रैव ( २।३।३० )

पौरुषमनुद्भूतं तिष्ठदपि यौवने उद्भवति तथैव जीवात्मन्यपि[1]। एतत्कथनमनुचितं यद् जीवात्मा ब्रह्म चैतद्द्वयमेकमेव। द्वयोरेकत्वे च संसारस्य सत्तैव न स्यात्। अतः आनन्दहीनं ब्रह्म[2] जीवः। एतन्न्यूनतापगमे एव स ब्रह्मावस्थामवाप्य विभुः सम्पद्यते। एतां स्थितिं सूचयितुमेव श्रुतिर्जीवब्रह्मणोरेकत्वं प्रतिपादयति[3]।

शंकराचार्येण 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' (२।३।२९) इत्यस्मिन् सूत्रे जीवात्मनोर्विभुत्वप्रतिपादकं कारणत्रयं निर्दिष्टम्—नैतदस्त्यणुरात्मेति (१) उत्पत्त्यश्रवणात् (२) परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् (३) तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम्, परमेव ब्रह्म चेज्जीवः तस्माद् यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति, परस्य च ब्रह्मणो विभुत्वमाम्नातं तस्माद् विभुर्जीवः। तथा च, 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु[4] इत्येवंजातीयकाः जीवविषयाः विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति। न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते······इत्यादि।

किन्तु वल्लभेन तेषामेवं क्रमशः आलोचना कृता—

(१) 'जीवात्मा नोत्पद्यते, स च शाश्वतः इति स विभुः' शंकरस्यायं तर्कः सर्वथा निर्बलः। अजन्मत्वं हि आत्मनो विषये केवलमेतदेव सूचयति यत् स शाश्वतः। शाश्वतं च वस्तु विभु अपि भवेत् नैतदावश्यकम्। शाश्वतमपि किमपि वस्तु न विभु भवेत्।

'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिश्रुतयः एतत्प्रतिपादयन्ति यत् परब्रह्मैव जगत् रचयित्वा तत्र प्रविशति अतः शंकरस्यैतत्कथनं यत् जीवात्मनोऽपि ब्रह्मत्वेन विभुत्वं किन्तु वल्लभस्यैतत्कथनं यदयं तर्कः अत्यन्तभ्रमपूर्णः। एतत्स्वीकारे हि संसारस्य प्रत्येकं वस्तु—जडं चेतनं च, विभु अवगम्येत, 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या दृश्यमानविश्वमात्रस्यापि ब्रह्मत्वात्। किन्तु नैवम्, जीवात्मा हि ब्रह्मणः अंशः; आंशिकत्वेन च स ब्रह्मणः सीमिताभिव्यक्तिः। किं च, श्रुत्युक्तानाम् उत्क्रान्तिगत्यागतीनां श्रवणात् यथायोग्यं तस्य परिमाणमंगीकर्तव्यम्। विभुत्वे च तन्न सम्भवेत्।

---

१. तत्रैव (२।३।२१) २. तत्रैव (२।३।२२)
३. तत्रैव (२।३।२० तथा त० दी० नि० १।५३)
४. बृ० उ० ४।४।२२

इत्थं च जीवः अणुः। तस्य तेजश्च प्रकाशवद् गन्धवद्वा शरीरमात्रे प्रसृतम्। जीवा असंख्याः नित्याः सनातनाश्च—'जीवस्य हि चैतन्यं गुणः सर्वशरीरव्यापी'[1]। आंशिकत्वेन जीवः स्वल्पसामर्थ्यवान् अल्पज्ञश्चेति सर्वज्ञस्य स्वांशिनः परमात्मनो वशीभूतः। अवस्थाविशेषे च अंशांशिनोरेकीकरणमपि जायते।

मुक्तोऽपि जीवो न स्वरूपतो विभुः, अपि तु परमात्मैव विभुः। जीवो यदि स्वरूपतो विभुः सर्वशक्तिमांश्च भवेत्तदा तस्य बद्धावस्थैव सर्वथा असम्भवा स्यात्—यश्च स्वभावतो विभुः तं न किमप्याच्छादयितुं शक्नोति सर्वव्यापी कदापि सीमाबद्धो न भवति। फलतः जीवस्य प्रकृत्या विभुत्वे तस्य बद्धावस्था न सम्भवेत् इति स्वरूपतस्तस्य विभुत्वाभावेन मुक्तावस्थायामपि तथात्वालाभे स ब्रह्मणोंऽश एव तिष्ठति।

## विभुत्वाणुत्वविषये शंकरवल्लभयोर्जीवभेदनिष्कर्षः—

शंकरमते जीवस्यानेकता तथा तत्सत्ता अविद्यया प्रतिभासते, वस्तुतो न जीवो नापि च जगत्। सर्वजीवभ्रमापगमे एकं ब्रह्मैवावतिष्ठते। शंकरमते च जीवो बुद्धिसम्बन्धेनाणुरूपो भासते परं वस्तुतः स विभुः।

वल्लभमते च जीवानामनेकता तेषामांशिकरूपेण स्थितिश्च सत्या। अवस्थाविशेषे च ब्रह्मजीवयोः पृथक्ता, अवस्थान्तरे चैकतापि वर्तते। किन्त्ववस्थाद्वयी अपि सत्या। स चाणुर्न विभुः।

बादरायणस्यापि अस्मिन् विषये इयमेव मान्यता। जीवसम्बन्धिनी सम्पूर्णमीमांसा हि द्वितीयाध्यायस्य तृतीयपादे 'चराचरव्यपाश्रयस्तु······' (२।३।१६) एतत्सूत्रतः अग्रे 'प्रवेशादिति चेन्नान्तर्भावात्' (२।३।५३) इति सूत्रं यावत् पादपर्यन्तं कृता वर्तते। तत्र 'चराचरव्यपाश्रयस्तु···'इत्यस्मिन् सूत्रे एतत्प्रतिपादितं यत् जन्ममरणादि जीवात्मनः शरीरं निर्दिशति। 'नात्मा श्रुतेः'······(२।३।१७) एतस्मिन् सूत्रे एतत्प्रतिपादितं यद् जीवात्मनः उत्पत्तिर्न जायते—वैदिकवाक्यानि हि जीवात्मनः उत्पत्तिं निषिध्य तस्य नित्यत्वं समर्थयन्ति। 'ज्ञोऽत एव' (२।३।१८) अत्र एतत्प्रतिपादितं यत् जीवः प्रकृत्या चेतनोऽपि श्रुतिवाक्याधारेण ज्ञाता वर्तते। अतः शंकरस्येयं मान्यता यद् जीवः केवलं चेतनस्वरूपो न ज्ञाता, एतत्सूत्रार्थस्य स्पष्टतया विरुद्धम्। 'उत्क्रान्तिगत्यागतीनाम्' (२।३।१९)

---

1. अणुभाष्यम (ब्र० सू० २।३।२५)

इत्यतः अग्रे 'पृथगुपदेशात्' ( २।३।२८ ) इति सूत्रं यावज्जीवात्मनः अणुत्वं प्रतिपादितं यतो हि श्रुतिषु तस्य उत्क्रान्तिगत्यागतयः समुपलभ्यन्ते इति येषु वाक्येषु तस्य अनणुप्रमाणत्वमुपलभ्यते तानि तं ब्रह्मस्वरूपं मत्वा तथा प्रतिपादयन्ति, वस्तुतो जीवः अणुरेव । ब्रह्मभावावस्थायां स विभुत्वाद्यनुभवतीति ।

## जीवात्मनो ज्ञानस्वरूपत्वखण्डनम्—

जीवात्मनो ज्ञानस्वरूपत्वे वल्लभस्यैतत्कथनं यज्जीवस्य शंकरानुसारिज्ञानस्वरूपत्वं ब्रह्मसूत्राक्षरैर्नाभिव्यज्यते 'ज्ञोऽत एव' ( २।३।१८ ) इति सूत्रे 'ज्ञः' एष शब्दः 'इगुपधज्ञाप्रीकिरः कः' इति पाणिनिसूत्रानुसारं कर्तृ-क-प्रत्ययान्तः इति जानातीति ज्ञः, इत्थं निष्पन्नो ज्ञशब्दः ज्ञातुर्बोधको न तु ज्ञानस्य । सूत्रकारस्य च तथात्वाभिमतत्वे 'ज्ञोऽत एव' इत्यस्य स्थाने तेन 'ज्ञानमत एव' इत्थं सूत्र्येत । न तु तथा कृतमिति जीवात्मा ज्ञानाश्रय एव न तु ज्ञानस्वरूपः । ज्ञानाश्रयित्वरूपगुणसम्पन्नत्वेन च स जडजगतो भिन्नः । रामानुजनिम्बार्कावपि जीवात्मनः विषये एतदेव प्रतिपादयतः—'अयमात्मा ज्ञातृस्वरूप एव न 'ज्ञानमात्रम्' तथा 'अहमर्थभूत आत्मा' ज्ञाता भवति' ।

## शंकरस्य कर्तृत्वभोक्तृत्वमतखण्डनम्—

जीवात्मनः कर्तृत्वभोक्तृत्वविषये वल्लभस्येदं कथनं यज्जीव एव प्रत्येककर्मकर्त्ता अतः तत्फलभोक्तापि स एवास्ति, एतच्च निम्नलिखितयुक्तिभिः प्रमाणीक्रियते—

'यजेत', 'जुहुयात्' 'विज्ञानं यज्ञं तनुते[3]' इत्यादौ जीवात्मनो यज्ञादिकरणं श्रूयते ब्रह्मणो यज्ञकरणस्य न काप्यावश्यकतेति जीवात्मनः कर्तृत्वम् । विज्ञानशब्दः यद्यपि बुद्धेरपि वाचकः तथापि तस्या जडत्वेन 'विज्ञानं यज्ञं तनुते' इत्यत्र विज्ञानशब्देन न तद्ग्रहणं, यत्र हि तद्ग्रहणं सर्वत्रैव स शब्दः तृतीयान्तः; यथा 'तदेषां प्राणानां विज्ञानेन [4]विज्ञानमादाय' इत्यादि । अत्र च कर्तृसामानाधिकरण्यनिर्देशात् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यते इति तस्यैव कर्तृत्वम्—'जीवमेवाधिकृत्य वेदे अभ्युदयनिःश्रेयसफलार्थं सर्वाणि कर्माणि विहितानि । ब्रह्मणोऽनुपयोगात् । जडस्याशक्यत्वात्[5]' ।

---

१. रा० भा० ( २।३।१९ ) २. नि० भा० (ब्र० सू० २।३।१८)
३. तै० उ० २।५।१ ४. बृ० उ० २।१।१७
५. अ० भा० २।३।३३

'स ईयते अमृतो[1] यत्र कामम्' तथा 'स्वे शरीरे यथाकामं [2]परिवर्तते' इत्यादिश्रुतय एवं प्रतिपादयन्ति यत् स यत्र कुत्रेच्छति तत्र गच्छति यथेच्छं शरीरं परिवर्तयति, एतच्च सर्वं जीवात्मन्येव सम्भवति। तस्याकर्तृत्वस्वीकारे शास्त्रोक्तं व्यर्थमेव स्यात्—'तस्यैव गान्धर्वादिलोकेषु यद्यत् कामयते तत्तद्भवतीति विहार उपदिष्टः······जीव एव [3]कर्त्ता'।

इतश्चाप्यस्य कर्तृत्वं यत् जीवप्रसंगे एव 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय[4]' तथा 'प्राणान् गृहीत्वा[5]' इत्यादौ करणानामुपादानं संकीर्तितम् 'तस्मात् इन्द्रियादीनां करणत्वमेव। स्वातन्त्र्याच्च जीवस्यैव कर्तृत्वम्[6]'।

यद्यपीहायं सन्देहो भवितुं शक्नोति यत् जीवात्मनः स्वतन्त्रकर्तृत्वे तेन साधून्येव कर्माणि कर्तव्यानि येन तस्य जगतश्च कल्याणं भूयात्, किन्तु तेन साध्वसाधूभयविधानि कार्याणि क्रियमाणानि दृश्यन्ते इति स कदाचिद्दुःखमपि स्वयमनुभवति। एतस्यैतत्समाधानं यत् चक्षुरादीन्द्रियाणि यथा सदसदुभयविधानि वस्तूनि पश्यन्ति तथैव जीवात्मा अपि सदसदुभयविधानि कार्याणि करोति इति सत्कर्माण्येव जीवात्मा कुर्यादित्यत्र न कश्चिन्नियमः—'यथा चक्षुषेष्टमनिष्टं चोपलभते एवमिन्द्रियैः कर्म कुर्वन् इष्टमनिष्टं वा प्राप्नोति'[7]। जीवो नेश्वर इति न एतावान् स्वतन्त्रो यत्स सत्कर्माण्येव कुर्यात् असत्कर्माणि च परिजह्यात्। नापि च स एवं शक्तिशालीति कदाचित् स एवंभूतानि कर्माणि करोति यानि तदर्थमहितकराणि भवन्ति—'तथा सामर्थ्याभावात् स दैवादहितमपि करोति[8]।'

केषांचिदेतदपि मतं यत् जीवः केवलं कर्ता न भोक्तेति किन्तु एष विचारः भ्रमपूर्णः। कर्त्ता भोक्ता च हि पृथक् पृथक् स्यातामिति नावश्यकम्, कश्चित्पाचकः स्वार्थमपि पचति कश्चिदन्यार्थमपि; कश्चिद्रथकारः स्वार्थं रथं निर्माय तत्र स्वयमारूढः आनन्दमनुभवति कश्चिच्चान्यार्थमपि निर्मिमीते। इत्थं च जीवस्य कर्तृत्वं भोक्तृत्वमुभयं संघटते—'यथा तक्षा रथं निर्माय तत्रारूढो विहरति, अन्यार्थमपि करोति

---

१. बृ० उ० ४।३।१२ २. तत्रैव २।१।१८
३. ब्र० भा० २।३।३४ ४. बृ० उ० २।१।१७
५. तत्रैव २।१।१८ ६. ब्र० भा० २।३।३५
७. ब्र० भा० (२।३।३७) ८. तत्रैव (२।३।३८)

तथा प्रकृतेऽपि। सर्वहितार्थं प्रयतमानत्वात् स्वार्थपरार्थकर्तृत्वं कारयितृत्वं च सिद्धम्"।

### जीवात्मा कर्तृत्वभोक्तृत्वे ब्रह्मणः प्राप्नोति—

जीवात्मा न सर्वथा स्वतन्त्रः प्रत्युत स परमात्माधीन इति स तस्मादेव कर्तृत्वं सर्वशक्तींश्च समवाप्नोति। परमात्मा एव हि सर्वकर्त्ता सर्वभोक्ता सर्वनियन्ता चेति तत्प्रेरणानुसारमेव जीवात्मा सदसत्कर्माणि करोति। यमेव हि स उन्निनीषति तेन साधु कर्म कारयति यं च अधोनिनीषति तमसाधुकार्याणि कारयति, तथा च श्रुतिः-'एष ह्येवैनं साधुकर्म कारयति तं यमेभ्यो लोकेभ्यः उन्निनीषते एष उ एवैनमसाधु कर्म कारयति तं यमधो निनीषते। एष लोकपालः एष लोकाधिपतिः एष[2] सर्वेशः' तथा 'कर्तृत्वं ब्रह्मगतमेव, तत्सम्बन्धादेव जीवे कर्तृत्वं तदंशत्वादैश्वर्यादिवत्[3]'।

अयमत्र सन्देहः समुत्पद्यते यद् यदि परमात्मा केनचित् जीवेन साधु कर्माणि कारयति केनचिच्चासाधूनि तदा स महान् पक्षपाती क्रूरश्च वर्तते। स हि तथा करणेन कांश्चिज्जीवान् तत्सत्कर्मानुसारेण उन्नयति इतरांश्च तदसत्कर्मानुसारेण अधो नयति, इत्थं स्वरचितायामेव सृष्टौ स वैषम्यनैर्घृण्यरूपद्वैविध्यं संस्थापयति। तेन च कश्चित्सुखी, अन्यो दुःखी इतरः सुन्दरः अपरः कुरूपो दृश्यते।

रामानुजस्यात्र एतत्कथनं यदेतत्सर्वं सृष्टिवैषम्यं जीवानां कर्मानुसारेण वर्तते। तथाहि 'सृज्यमानदेवादिक्षेत्रज्ञकर्मसापेक्षत्वाद् विषमसृष्टेः[4]' तथा, 'क्षेत्रज्ञकर्मानुगुण्येन विचित्रसृष्टियोगात्[5]' वल्लभस्यैतद्विषये इदमुत्तरं 'यदेष सर्वो भ्रमः। वस्तुगत्या सुखदुःखयोर्न काचिद्विशेषावस्था वर्तते, तद्रूपे चापितस्य परमात्मन एवाभिव्यक्तिः, सांसारिकसृष्टिर्ह्येषा परमात्मन एव नाटकम्। परमात्मैव स्वयमस्य विषयः, स एव पात्रम्, स एव द्रष्टा, स एव च दृश्यम्। एवं स एव चास्य सूत्रधारः। स्वेच्छानुसारमेव हि सः स्वं लघीयसो महीयसो वा सुखिनो दुःखिनो वा धनिनो निर्धनस्य वा सुन्दरस्य कुरूपस्य वा रूपे परिवर्तयति—

---

१. तत्रैव ( ब्र० सू० २।३।४० ) २. कौ० उ० ३।८

३. अ० भा० ( ब्र० सू० २।३।४१ )

४. रा० भा० ( ब्र० सू० २।१।३४ )

५ तत्रैव ( ब्र० सू०—२।१।३५ )

रमणार्थमिदं विश्वम् उत्पनीचादिभावतः ।
आत्मरूपं चकारातो हरिर्यस्मान्न दूषणम् ॥[1]'

इत्थं च जगति यदा न ब्रह्मातिरिक्तं किमपि वस्त्वन्तरं वर्तते तदा कः कं प्रति वैषम्यनैर्घृण्ययोर्भावनां प्रकटीकुर्यात । किंवा सुखं दुःखं वा किमिति पार्थक्येनानुभवेत्' श्रुतिरप्येतदेव प्रतिपादयति—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ- २।४।१४ ) एकस्मिन्नेव शरीरे मुखमपि तावदेव प्रियं यावन्न पदम् इति स्वशरीरे एव कः एकमवयवं प्रियमन्यं च घृणितमाकलयेत् ? एकदा एवं जागतिकसमस्यातिगाम्भीर्यमनुभवत्स्वस्मात्सु सुन्दरातिसुन्दरं घृणितातिघृणितमेतदुभयमपि वस्तु समानमेव प्रतीयते इति वैषम्यनैर्घृण्ययोर्भावनापि विनश्यति—

'आत्मसृष्टेर्न वैषम्यं नैर्घृण्यं चापि विद्यते[2] ।'

यच्चापि शंकरेणेत्थं प्रतिपादितं यत् यद्यात्मनः कर्तृत्वगुणः अग्नौ दाहकताशक्तिरिव स्वाभाविकस्तदा न स जीवः कदापि क्रियाभ्यो मुक्तो भवेदिति । तस्य खण्डनं वल्लभेनेत्थं कृतं यदयं विचारः सर्वथा भ्रमः; एतत्तु तदैव सम्भवेद् यदा जीवस्य कर्तृत्वं स्वाभाविकं न भवेत्प्रत्युत कस्मिंश्चिदन्यस्मिन् निर्भरेत्—यथा च कर्तृत्वस्याध्यस्तत्वम् इत्यादि । कर्तुर्मोक्षो न भवतीति सांख्यसिद्धान्तिनामभिप्रायः इत्यविचारसहः; शुकदेवसनत्कुमारादयो मुक्तात्मानः अपि परोपदेशमात्मकर्तव्यममन्यन्त । किंच, न सर्वाण्यपि कर्माणि दुःखप्रदान्येव भवन्ति—[3]दुग्धपानमिष्टान्नभोजनादि तु वस्तुतः अत्यन्तानन्दप्रदम् । जीवात्मा यदपि दुःखमनुभवति तन्न स्वकीयकर्तृत्वकारणेन, अपि तु स्वकीयाहंकृतिकारणेनेति तदपगमे सर्वाण्येव कर्माणि जीवन्मुक्तदशायामिव आनन्दप्रदानि [4]जायन्ते ।

## निष्कर्षः—

शंकरवल्लभयोर्मान्यतासु कतराः श्रेष्ठा इति विचारस्यायं निष्कर्षः यद् आध्यात्मिकदृष्ट्या युक्तीनामाधारेण वा शंकरसिद्धान्तवि-

---

१. वे० र० म० प्र० प्रकोष्ठ : पृ० १६

२. शु० मा० ४७–४८

३. त० दी० नि० १।७६ तथा शु० मा० ४६

४. अणुभाष्यम् ( ब्र० सू० २।३।४० )

यये वयं यत्किंचिदपि अवगच्छेम परमेतावन्निर्विवादं यत् स एकं स्वकीयं नवीनं मतं प्रावर्तयत् तथा अर्थदृष्ट्या ब्रह्मसूत्राक्षराणि अक्षरशः नान्वसरत्। बादरायणानुसारं जीवः कर्त्ता अस्ति किन्तु शंकरः एकमपि सूत्रमेवंभूतं न निर्देष्टुमशकत् यत्तस्य कर्तृत्व-निवारकं भवेत् , तत्कर्तृत्वमविद्याजन्यं वा प्रमाणीकुर्यात्। 'यथा च तक्षोभयथा ( २।३।४० ) इति सूत्रमेवैकमात्रं तस्याधारः। तद्व्याख्या-नार्थं त्रयस्त्रिंशत्तमसूत्रतः एकोनचत्वारिंशत्तमसूत्रं यावत् पूर्वपक्षं स्वीकृत्य जीवात्मनः कर्तृत्वं स्थापितम्। 'यथा च तक्षोभयथा' ( २।३।४० ) एतत्सूत्रं सिद्धान्तपक्षं सूचयति यद् वस्तुगत्या जीवो न कर्ता अपि तु अध्यासकारणेन केवलं कर्तृवत्प्रतिभाति यथा चैको रथकारो रथरचनया श्रान्तः संजायते' किन्तु तद्रचनानन्तरमानन्दितो भवति तथैव रीत्या बुद्ध्यादिसंयोगेनात्मा दुःखमनुभवति। स जागरित-स्वप्नावस्थयोः क्रियाशीलस्तिष्ठति, सुषुप्तावस्थायां च निष्क्रियो भूत्वा आनन्दमनुभवति।

शंकरस्यायमर्थो न सूत्रार्थसंगतः। 'यथा च तक्षोभयथा' एतत्सूत्रं रामानुजानुसारेण एतदर्थं सूचयति यत् जीवो यद्यपि कर्त्ता तथापि स कदाचित् कार्यं करोति कदाचिच्च न करोति यथा च रथकारः यथेच्छं कदाचित्कार्यं करोति कदाचिच्च विश्राम्यति। वल्लभस्यैत-त्कथनं यज्जीवः कर्त्ता भोक्ता चैतदुभयमस्ति यथा च रथकारो रथं रचयति तदारोहणस्य आनन्दमप्यनुभवति एतदर्थद्वयं शंकराभिमता-र्थापेक्षया अधिकं स्वाभाविकम्।

'परात्तु तच्छ्रुतेः' ( २।३।४१ ) इति सूत्रार्थावलोकनेन शंकराभि-मतोऽर्थः ततोऽप्यधिकं दूराकृष्टः प्रतिभाति यत्र तेनोक्तं यद् जीवात्मा ब्रह्मतः कर्तृत्वप्रेरणां प्राप्नोति। यद्येतन्निश्चितपरं यज्जीवात्मा न कस्या-मपि दशायां कर्त्ता प्रत्युत कर्तृत्वं तत्र अध्यस्तं तदा अयं प्रश्न एव नोपतिष्ठते—यदयं जीवः स्वतन्त्रः कर्ता वर्तते परतन्त्रो वा। अतश्च सामान्यतया अस्माकमयमेव निष्कर्षः यत् यद्यपि जीवात्मा परमात्मा-धीनः, तथापि सूत्रकारानुसारं स स्वभावतः कर्ता शंकरानुसारं च तस्याकर्तृत्वसाधनमस्वाभाविकमसन्तोषजनकं' च। अतः एवमुप-संहर्तुं न्यायसंगतं प्रतीयते यत् अस्मिन् विषये शंकरस्यार्थापेक्षया वल्लभस्यार्थः अधिकं संगतः श्रुत्यनुसारी च वर्तते।

---

१. थाटे—दि वेदान्त ( पृ० १००–१०१ )

## जीवविषये आचार्यपंचकप्रकीर्णकविचाराः

### [ स्वरूपविचारः ]

अन्तःकरणावच्छिन्नं चेतनं जीवः। तेन शरीरेन्द्रियशासिता कर्मफलभोक्ता आत्मा जीव उच्यते। 'न जीवो म्रियते'[1] भागो जीवः[2] स विज्ञेयः' इत्यादिश्रुतयस्तत्र प्रमाणम्।

ब्रह्मसूत्रेषु जीवस्य स्वरूपं प्रतिपादयता व्यासेनोक्तम्—'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्' ( ब्र० सू० २।३।१६ ) अत्र—

### शंकरः—

भाक्तस्त्वेष जन्ममरणव्यपदेशः···स्थावरजंगमविषयौ···जन्ममरणशब्दौ जीवात्मन्युपचर्येते···। शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतो नासतोः न हि शरीरसम्बन्धादन्यत्र जीवो जातो वा केनचिदुपलक्ष्यते···।

### निम्बार्कः—

'देवदत्तो जातो मृतः' इति व्यपदेशो गौणः अस्ति। यतो हि जीवात्मनो जन्ममृत्युव्यपदेशः स्थावरजंगमशरीरविषयः इति तद्भावे ( शरीरभावे ) जन्ममरणयोर्भावत्वम्।

इत्थमुभाभ्यामेतत्प्रतिपादितं यत् जन्म मरणं चैतद्द्वयं न जीवस्य प्रत्युत शरीरसम्बन्धेनैव तदुभयं जीवे व्यवह्रियते।

ततः अग्रे—"नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" ( २।३।१७ ) इत्यत्र—

### शंकरः—

अन्यान्याक्षेपाणां खण्डनानन्तरं जीवविषये एतत्प्रतिपादयति 'नात्मा जीव उत्पद्यते इति। कस्मात्? अश्रुतेः······नित्यत्वाच्च ताभ्यः चशब्दादजत्वादिभ्यश्च। नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते। तथा अजत्वमविकारित्वम् अविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मता चेति।'

---

1. छा० ६।११।३ 2. श्वे० ५।९

## रामानुजः—

अस्य मते सूत्रस्य 'नात्माश्रुतेर्नित्यत्वात्ताभ्यः' इति रूपम्। तस्य चेदं भाष्यम्—नात्मा उत्पद्यते। कुतः? श्रुतेः। 'न जायते [1]म्रियते', 'ज्ञाज्ञौ द्वावजावनीशौ[2]' इत्यादिश्रुतिभिर्जीवस्योत्पत्तिप्रतिषेधो हि श्रूयते आत्मनो नित्यत्वं च ताभ्यः श्रुतिभ्य एवावगम्यते—'नित्यो नित्यानाम्[3]', 'अजो [4]नित्यः' अतश्च नात्मोत्पद्यते।

## निम्बार्कः—

अस्यापि एतत्कथनं यत् जीवात्मा नोत्पद्यते, स्वरूपतस्तदुत्पत्ति-वचनाभावात् 'न जायते म्रियते वा विपश्चित्', 'नित्यो नित्यानाम्', 'अजो ह्येको जुषमाणोऽनुशेते' इत्यादिश्रुतिभ्यो जीवस्य नित्यत्वावगमाच्च, चित् ज्ञानस्वरूपम्। स चाहंताविशिष्टः। अयं भावस्तस्य मुक्तेः पश्चादपि न निवर्तते। स कर्त्ता। यानि च श्रुतिवाक्यानि तस्याकर्तृत्वं प्रतिपादयन्ति तेषामेतत्तात्पर्यं यत् स न सर्वथा स्वतंत्रः, प्रत्युत परमात्माधीनः नियम्यत्वमस्य गुणः। जीवोऽयमणुः किन्तु तस्य गुणो ज्ञानं विभुरिति स शरीरस्य सर्वस्मिन् भागे सुखदुःखयोरनुभवं करोति। जीवा अनन्ताः प्रतिशरीरं भिन्नाश्च, अज्ञानवशवर्तिनो जीवस्य कर्मवशगत्वेन वास्तविकं रूपमन्तर्निधीयते। तस्याज्ञानविनाशश्च परमात्मनः कृपया संजायते।

अत्र इदमवलोक्यते यद्रामानुजनिम्बार्कयोरेकं मतं किन्त्वेतदपि द्रष्टव्यमस्ति यदेकान्ताद्वैतवादिना शंकरेणाप्यत्र एतत्स्वीकृतं यत् अविकारित्वे सत्यपि ब्रह्मणः ब्रह्मजीवयोरुभयोरूपेणावस्थितिः श्रुतिभिः प्रतिपादिता वर्तते। किन्तु एतद् द्विरूपत्वं विद्याऽविद्यामूलकमिति वक्तुं न शक्यते। जीवस्य हि अविद्यामूलकत्वस्वीकारे अयं जीवो विनश्वरपदार्थो भवेत्। जीवत्वोत्पादिका अविद्या हि न नित्यं वस्तु; ज्ञानोत्पत्तौ (विद्योत्पत्तौ हि) सा विनश्यति इति तत्कल्पितजीवोऽपि विनश्येत्। किन्तु बहुविधश्रुतीनामाधारेण एतत्सिध्यति यत् जीवः नित्यः। फलस्वरूपं ब्रह्मजीवयोरेतद् द्विरूपत्वं स्वरूपगतं नित्यं च वर्तते।

अत्रैतदवश्यमवधारणीयं वर्तते यच्छंकरेणेह सूत्रकारमतानुकूलमेव भाष्यं कृतं न तु स्वकीयं स्वतन्त्रं मतं सन्निवेशितम्। निश्चितरूपेणैत-

---

१. कठ० (२।१८) २. श्वे० उ० (१।९)
३. तत्रैव ६।१३ ४. कठ २।१८

यदि स्वीक्रियेत यत् बादरायणस्यापि एतन्मतं तदा शंकरस्यानुमानिकः अर्थः स्वीकर्तुं न समुचितः।

ततः अष्टादशसूत्रम्, 'ज्ञोऽत एव' (२।३।१८)।

## अत्र शंकरः—

'ज्ञः नित्यचैतन्यः अयमात्मा, परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम् श्रुतिषु। तदेव चेत् परं ब्रह्म जीवस्तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वम् अग्न्यौष्ण्यप्रकाशवदिति गम्यते'।

## रामानुजः—

अस्येत्थमर्थं कृतवान्—'ज्ञः एव अयमात्मा ज्ञातृस्वरूप[१] एव न ज्ञानमात्रम्, नापि [२]जडस्वरूपः, कुतः? अत एव श्रुतेरेवेत्यर्थः। 'नात्मा श्रुतेः' इति प्रकृता श्रुतिः अत इत्यनेन परामृश्यते'।

## निम्बार्कः—

अस्य मते अयमस्यार्थः—अहमर्थभूत आत्मा ज्ञाता भवति (श्रुतिभिरित्थं प्रतिपाद्यते यत् अस्मत्पदार्थभूतो जीवात्मा नित्यो ज्ञः चैतन्यस्वरूप इत्यर्थः)।

पूर्वोक्तसूत्रभाष्यपर्यालोचनया इत्थं ज्ञायते यत् एतेषां त्रयाणामाचार्याणां सूत्रकारेण सह न विशेषवैमत्यम्। एतद्द्वारा एव जीवस्य नित्यत्वं ज्ञातृत्वं च भगवता सूत्रकारेण श्रुत्याधारेण स्थिरीकृतम्।

## अणुत्वविभुत्वविचारः—

ततः परम् एकोनविंशसूत्रतः अग्रे भगवता बादरायणेन जीवस्य स्वरूपतः अणुत्वं साधितं किन्तु तत्सूत्रव्याख्यासम्बन्धे आचार्याणां परस्परं मतभेदः। शंकरस्यैतत्कथनं यज्जीवः स्वरूपतो विभुस्वभावः, परमात्मनश्च सर्वथा अभिन्नः पूर्णब्रह्मस्वरूपश्च। अन्यभाष्यकाराणां, किन्तु, एतन्मतं यज्जीवः स्वरूपतो न विभुस्वभावः किन्त्वणुस्वभावः परमात्मनः अंशमात्रं च। एषु कतिपयसूत्राणि एवंभूतान्यपि सन्ति येषां व्याख्यायां न किमपि वैमत्यम्।

'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' (२।३।४३)।

---

१. द्रष्टव्यम्, रा० भा० 'अस्य ज्ञानस्वरूपस्यैव ज्ञानाश्रयत्वमविरुद्धम्'।

२. तत्रैव—'एवमात्मा चिद्रूप एव चैतन्यगुणकः'।

## अत्र शंकरः—

'जीव ईश्वरस्यांशो भवितुमर्हति···यथाग्नेर्विस्फुलिंगः···अतो भेदाभेदावगमाभ्यामंशत्वावगमः' ।

## रामानुजः—

अस्य भाष्ये अपि प्रायः अयमेवार्थः प्रदत्तो वर्तते—'उभयथा हि भेदो दृश्यते । नानात्वव्यपदेशस्तावत् सृष्टत्वस्रष्टृत्वनियन्तृत्वनियम्यत्व···पतित्वशेषत्वादिभिर्दृश्यते । अन्यथा चाभेदेन व्यपदेशः अपि 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिभिर्दृश्यते······ । एवमुभयव्यपदेशमुख्यत्वसिद्धये जीवः अयं ब्रह्मणः अंशः इत्यभ्युपगन्तव्यः ।

## निम्बार्कः—

एतत्सूत्रीयं निम्बार्कभाष्यमपि प्रायः एतदनुकूलमेव—'अंशांशिभावाज्जीवपरमात्मनोर्भेदाभेदौ दर्शयति—परमात्मनः जीवः अंशः ज्ञाज्ञौ द्वावजावनीशावित्यादिभेदव्यपदेशात् , तत्त्वमसीत्याद्यभेदव्यपदेशाच्च' ।

## मध्वाचार्यः—

अयमपि जीवात्मानं ब्रह्मणः अंशमेव प्रतिपादयति—'अंश एव हीमे जीवाश्च अंशी हि परमेश्वरः । 'स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः' इति गौपवनश्रुतौ अंशत्वं जीवस्योपलभ्यते' ।

## वल्लभः—

'जीवस्य ब्रह्मसम्बन्धिरूपमुच्यते । जीवो नाम ब्रह्मणः अंशः । कुतः ? नानाव्यपदेशात् । सर्व एवात्मानो व्युच्चरन्ति—कपूयचरणाः रमणीयचरणा इति च' । एवं वल्लभः अपि जीवं ब्रह्मांशमेव प्रतिपादयति, एवं 'मंत्रवर्णात्' (२।३।४३) 'अपि च स्मर्यते ( २।३।४४ ) 'प्रकाशादिवत्तु नैवं परः' (२।३।४५) एतत्सूत्रभाष्येष्वपि भाष्यकारपंचकं जीवस्य ब्रह्मांशतायां सहमतम् ।

एतत्सर्वसूत्रैः भगवान् सूत्रकारः जीवं स्पष्टरूपेण ब्रह्मणो नित्यांशमात्रमुक्त्वा श्रुत्याधारेण निजसिद्धान्तं सूचितवान् एतत्सर्वभाष्यकारसम्मतम् । अत्रापि न कस्यापि वैमत्यं यज्जीवरूपी अंशः कर्मफलभोक्ता सन्नपि तदतीतस्वकीयब्रह्मस्वरूपे स सदैव निर्मलो निर्लिप्तश्च वर्तते । अयमेव भावो इत्थमभिव्यक्तः—

> तत्र यः परमात्मासौ स नित्यो निर्गुणः स्मृतः ।
> न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥

कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते'।
स सप्तदशकेनापि राशिना युज्यते पुनः॥

'अधिकं तु भेदनिर्देशात्' ( २।१।२१ ) इत्यत्र अयं विषयः स्पष्टीकृतः—

## अत्र शंकरः—

अस्य भाष्यस्यायं फलितः अर्थः 'आत्मा वा अरे द्रष्टव्यः…… इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति। नन्वभेदनिर्देशः अपि दर्शितः 'तत्त्वमसि' इत्येवंजातीयकः, कथं भेदाभेदौ सम्भवेताम्? नैष दोषः महाकाशघटाकाशन्यायेनोभयसम्भवस्य तत्र तत्र प्रतिष्ठापितत्वात्'।

## रामानुजः—

अस्य भाष्ये अपि 'आध्यात्मिकादिदुःखभोगार्हात्प्रत्यगात्मनः अधिकमर्थान्तरभूतं ब्रह्म' इत्यादिद्वारा एतदेव मर्मोद्घाटितं वर्तते।

## निम्बार्कः—

अयमपि सुखदुःखभोक्तुः शारीरादधिकमुत्कृष्टं ब्रह्म जगत्कर्तृ भ्रमः। 'आत्मानमन्तरो यमयतीति भेदव्यपदेशान्न तयोरत्यन्ताभेदः अस्ति यतो हिताकरणादिदोषप्रसक्तिः स्यात्' इत्यादिना जीवापेक्षया ब्रह्मणः आधिक्यमुक्तवान्।

## मध्वाचार्यः—

अयमपि स्वभाष्ये 'न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः अधिकशक्तिमत्त्वात् श्रोता, मन्ता……मृत्युमत्येतीति निर्देशात्' इत्यादिना जीवात्मापेक्षया ब्रह्मणः अधिकशक्तिशालित्वं प्रकटीकृतवान्।

## वल्लभः—

अनेनापि 'तत्पुनर्जीवाज्जगतश्चाधिकम्' एतत्प्रतिपाद्य जीवापेक्षया ब्रह्मण आधिक्यं स्पष्टीकृतम्।

इत्थं जीवस्य ब्रह्मणः अंशमात्रप्रतिपादनेन तस्य विभुत्वं निषिद्धं तत्सावयवत्वस्य चापि प्रतिषेधः कृतः। तस्याणुत्वविषये वल्लभस्य शंकरेण सह तुलनात्मकविचारः पूर्वं कृतः।

तस्याणुत्वविभुत्वयोर्विषये शेषाचार्यत्रितयस्य शंकरेण सह तुलनात्मकविचारः सविस्तरमिह क्रियते।

---

१. शा० भा० उद्धृतम् ( ब्र० सू० २।३।४७ )

## शंकरः—

'उत्क्रान्तिगत्यागतीनाम्' (२।३।१९) अत्र शंकरस्येदं कथनम् यत् उत्क्रान्तिगत्यादीनां श्रवणात् परिच्छिन्नस्तावज्जीवः इति प्राप्नोति नहि विभोश्चलनमवकल्पते इति। सति च परिच्छेदे शारीरपरिमाणत्वस्यार्हतपरीक्षायां निरस्तत्वादणुरात्मेति गम्यते'।

## रामानुजः—

अस्याप्यस्मिन् विषये एतदेव मतम्—'नायं सर्वगतः अपि त्वणुरेव अयमात्मा। कुतः? उत्क्रान्तिगत्यादीनां श्रवणात्। उत्क्रान्तिस्तावच्छ्रूयते—'स यदा अस्माच्छरीरादुत्क्रामति स हैवैतैः सर्वैरुत्क्रामति' 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः[2]"। गतिरपि, "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति इति। आगतिरपि तस्माल्लोकात् पुनरेत्यस्मै लोकाय[3] कर्मणे इति"। विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन्। किन्त्वेवमस्याणुत्वेऽपि मणि-द्युमणि प्रकाशस्य विस्तृतदेशव्यापिवत् स्वगुणेन ज्ञानेन सकलदेहावस्थितिरिति देहपीडादीनां सर्वशरीरे अनुभवो न विरुध्यते। तथाहि श्रीभाष्ये—यथा मणि-द्युमणिप्रभृतीनामेकदेशवर्तिनामालोको नैकदेशव्यापी दृश्यते तथा आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः[4]"।

## निम्बार्कः—

अपि एतत्तात्पर्यकः। तथाहि—किंच, उत्क्रमणादिश्रवणात् जीवः अणुपरिमाणः। जीवः अणुः "तेन प्रद्योतेन एष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः। ये वै केचनास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इति।

## मध्वाचार्यः—

अनेनापि 'अविरोधश्चन्दनवत्' (२।३।२३) इति सूत्रे—'अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते। यथा एकदेशपतिताया अपि हरिचन्दनविप्रुषः सर्वशरीरव्याप्तिः। इत्थं भाष्येण तथा—

'अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति।
यथा व्याप्य शरीराणि हरिचन्दनविप्रुषः॥'

---

१. कौ० ३।४ २. तत्रैव १।२
३. बृ० उ० ४।४।६ ४. रा० भा० (ब्र० सू० २।३।२६)

एवम् उद्धृतेन ब्रह्माण्डपुराणवचनेन च अणोरपि जीवस्य सर्वशरीर-व्यापकत्वं प्रमाणितम् ।

किन्तु 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' (२।३।२८) एतत्सूत्रं व्याचक्षाणस्य शंकरस्य एतन्मतं यत् 'उत्क्रान्तिगत्यागतीनाम्' (२।३।१९) इत्यतः 'पृथगुपदेशात्' ( २।३।२८ ) इति सूत्रं यावत् सूत्रकारेण प्रतिपक्ष-मतमात्रं ज्ञापितम् । यतो हि 'पृथगुपदेशात्' इति सूत्रं व्याख्याय स कथ-यति, 'एवं प्राप्ते ब्रूमः; तथा 'तद् गुण सारत्वात्तु···' इति सूत्रस्य व्याख्या-प्रारम्भे प्रतिपादयति 'तु' शब्दः प्रतिपक्षं व्यावर्तयति इति एतेन स्पष्ट-मेतद् यत् 'पृथगुपदेशात्' इति सूत्रं यावत् स पूर्वपक्षं स्वीकरोति, अत-एवाग्रे कथयति—'नैतदस्त्यणुरात्मेति······परमेवं चेद्ब्रह्म जीवस्तर्हि यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति । परस्य च ब्रह्मणो विभुत्व-माम्नातं तस्माद् विभुर्जीवः······। तस्माद् तद्गुणसारत्वात् बुद्धि-परिमाणेन अस्य परिमाणव्यपदेशः । एवमुपाधिगुणसारत्वाज्जीवस्याणु-त्वादिव्यपदेशः प्राज्ञवत्' । इत्यादि ।

शंकरस्यात्रैतत्तात्पर्यं यत् यथा 'बृहन्तो गुणा अस्मिन्निति ब्रह्म' एतद्व्युत्पत्तितः महतः अपि महीयसः ब्रह्मणः, 'अणीयान् , व्रीहेर्वा यवाद्वा' इत्यादिवाक्यैः क्षुद्रत्वादि प्रतिपादितं तथैव विभुस्वभावस्यापि जीवस्य अणुस्वभावत्वं प्रतिपादितम् ।

निम्बार्कस्यात्र एतत्कथनं यत् 'नित्यं विभुम्···प्रभृतिश्रुतिषु जीवात्मनो विभुत्वं प्रतिपादितम्' तदेवाधृत्य 'उत्क्रान्तिगत्यागतीनाम्' इति सूत्रतः 'पृथगुपदेशात्' इति सूत्रं यावत्पूर्वपक्षः । तस्य चोत्तरं 'तु' शब्दद्वारा ज्ञापितम् । शंकरस्य चैतत्कथनं यत् पूर्वोक्तसूत्रेण यज्जीवात्मनः अणुत्वं प्रतिपादितं तत्सर्वं पूर्वपक्षवचनं न सूत्रकारस्य सिद्धान्तः । ग्रन्थकारेण चास्य पूर्वपक्षस्य उत्तरं 'तद्गुणसारत्वात्···'इत्यादिना प्रदत्तम् । एतत्पक्षव्यावर्तनज्ञापनार्थमेव तुशब्दो व्यवहृतः' इत्थं च यथा 'बृहन्तो गुणा अस्मिन्निति व्युत्पत्त्या बृहत्वगुणसम्पन्नत्वेन ब्रह्म ब्रह्मोच्यते तथैव जीवस्यापि गुणस्थानीयस्य ज्ञानस्य विभुत्वप्रतिपा-दनमेव 'नित्यं विभुम्···'इत्यादिश्रुतेरभिप्रायः न तु जीवात्मनः स्वरूपस्य विभुत्वप्रतिपादनं तदर्थः । तस्य गुणस्य ज्ञानस्य विभुत्वे अपि जीवस्तु स्वरूपतः अणुरेव ।

## कर्तृत्वभोक्तृत्वविचारः

अस्मिन् प्रकरणे 'यथा च तक्षोभयथा' ( २।३।४० ) इत्येतत्सूत्र-मत्यन्तमहत्त्वपूर्णम् । अस्य सूत्रस्य अर्थविषये आचार्याणां प्रातिस्वि-

कमतभेदः। तत्र शंकरस्येदं मतं यत् इतः पूर्वस्मिन् कर्तृत्वाधिकरणे 'कर्ता शास्त्रार्थवत्त्वात्' (२।३।३३) इत्यादिसूत्रेषु बादरायणेन स्थापितं जीवस्य कर्तृत्वं न स्वाभाविकम् प्रत्युत तदौपाधिकम्; न स्वाभाविकं कर्तृत्वं सम्भवति आत्मनः अनिर्मोक्षप्रसंगात्।' कर्तृस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः सम्भवति, अग्नेरिवौष्ण्यात्। तस्मादुपाधिधर्माध्यासेनैवात्मनः 'कर्तृत्वम्। जीवात्मनि हि कर्तृत्वमविद्याजन्यमिति तस्याकर्तृत्वम्।

रामानुजस्यैतत्कथनं यत् 'एतत्सूत्रं पूर्वप्रतिपादितविषयस्यैव पूरकं तथा अस्य आक्षेपस्य समाधानं करोति यत् 'यदि जीवः पूर्वप्रतिपादनानुसारं स्वाभाविकः कर्त्ता मन्येत तदा कर्मणो विरत्यभावान्न तस्य कदापि मुक्तिर्भवेत्' इति, अत्र रामानुजस्यैतत्समाधानं यदेतन्न स्यात् यतो हि वागादीन्द्रियसम्पन्नः अपि जीवः यदा इच्छति तदैव कार्यं करोति यदा च नेच्छति तदा विश्रामं करोति; यथा च तक्षा वास्यादिकरणसम्पन्नः अपि इच्छानुसारमेव कार्यं करोति, इत्थं चानिर्मोक्षस्य न कश्चित्प्रसंगः, 'वागादिकरणसम्पन्नः अपि आत्मा यदेच्छति तदा करोति यदा तु नेच्छति तदा न 'करोति'।

वल्लभस्यैतत्कथनं यदेतत्सूत्रं पूर्वप्रतिपादितजीवात्मकर्तृत्वसिद्धान्तस्यैव पूरकम्।

रामानुजवल्लभयोर्यस्य कस्यचिदपि मतस्य स्वीकारे अपि 'जीवस्य कर्तृत्वमविद्यानिमित्तकमौपाधिकं वेति न पारमार्थिकमतः परमार्थतः स न कर्त्तेति' शंकरसिद्धान्तः न कथमपि सिध्यति। 'न अन्यः अतः कर्त्ता न अन्यः अतो द्रष्टा' एतत् श्रुतिवाक्यं न जीवस्य कर्तृत्वाभावमभिव्यनक्ति प्रत्युत एतत्सूचयति यत् तस्य कर्तृत्वं ब्रह्महेतुकम् बादरायणेनैतदेव 'परात्तु तच्छ्रुतेः' इत्यस्मिन् सूत्रे स्पष्टीकृतम्। तेन च न क्वापि शंकरस्य मतं प्रकाशितमपि तु जीवात्मनः कर्तृत्वमेव विज्ञापितमिति जीवात्मनः कर्तृत्वं स्वाभाविकं नौपाधिकम्।

'परात्तु तच्छ्रुतेः' (२।३।४१) तथा 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' (२।३।४२) इति सूत्रद्वयमेतत्प्रतिपादयति यद् जीवात्मा यद्यपि कर्त्ता अस्ति तथापि स तत्कर्तृत्वं ब्रह्मणः समवाप्नोति—

---

१. शां० भा० (२।३।४०)  २. रा० भा० (पृ० २८१)

'अन्तः प्रविष्टः शास्ता जनानाम्'[1] तथा 'एष एव साधु कर्म कारयति'[2] एवं 'य आत्मनि तिष्ठन् आत्मनोऽन्तरोयमात्मा न वेद यस्य आत्मा शरीरं यमात्मानमन्तरो यमयति स न आत्मा[3] अन्तर्याम्यमृतः' इत्यादि-श्रुतयः अपि एतदेव प्रतिपादयन्ति। अतो जीवात्मनः कर्तृत्वं परमात्मा-धीनम्। ततः परं 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' (२।३।४२) एतत्सूत्रं 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' (२।१।३४) इत्यस्योत्तरे बादरायणेन निर्मितं प्रतीयते यस्यैतत्तात्पर्यं यत् यदि परमात्मा एव जीवात्मना सर्वं कर्म कारयति तदा सर्वजीवेषु सुखित्वदुःखित्वादिरूपं तत्कर्मफलवैषम्यं कथमुपलभ्यते, येन कस्य-चिदुपरि तस्य परमात्मनः अतिदयालुत्वं कस्यचिच्चोपरि अतिक्रूर-त्वमभिव्यज्यते। शंकराभिमतब्रह्मणि यदि कर्तृक्रियाहीनत्वरूपगूढार्थ-सिद्धान्तमस्वीकृत्य तस्य कर्तृत्वप्रेरकत्वान्यतरमात्रं स्वीक्रियेत तदा तत्तात्पर्यसामञ्जस्यं 'वैषम्यनैर्घृण्ये—' इति सूत्रेण संजायते। यतो हि सर्वे आचार्याः 'कृतप्रयत्नापेक्षः' इत्यस्य जीवकृतप्रयत्नापेक्ष इत्यर्थं मत्वा अनादिसंसारे जीवकृतकर्मप्रवाहमपि अनादिकालतः प्रवर्तमानं स्वीकु-र्वन्ति। अतः जीवानां पूर्वकर्मानुसारं फलं प्रदातरि परमात्मनि वैषम्य-नैर्घृण्यदोषाभावः। 'फलमुपपत्तेः' (३।२।३८) एतत्सूत्रमपि एतत्प्रति-पादयति यत् जीवानां कर्मफलं परब्रह्मणैव प्रदीयते। यतो हि 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः।' 'तदेव शुक्रं तद् ब्रह्म तदेवामृतमश्नुते।'[4] तथा 'नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान्'[5] इत्यादिश्रुतिषु परमात्मैव सर्वात्मनां कर्मफलदाता प्रतिपादितः। अत एव 'धर्मं जैमिनिरत एव' (३।२।४०) अस्मिन् सूत्रे जैमिनिना प्रतिपादितं कर्मणां स्वयं फलदातृत्वं (कृष्यादि कर्मणामन्नोत्पत्तिरूपफलवत्) 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' (३।२।४१) इत्यग्रिम एव सूत्रे सूत्रकारेण खण्डितम्। इत्थं च यदा परमात्मैव सर्वथा कर्त्ता तदा जीवात्मनां सुखदुःखादिपूर्णोत्तरदायित्व-मपि तत्रैवेति न कथमपि जीवात्मनां तत्फलभोक्तृत्वेन भवितव्यम्, यतो हि ते न तत्करणदोषिणः। जीवात्मा यदि किमपि कार्यं कर्तुं नाप्यभिकांक्षेत तदापि तेन विवशतया तत्करणीयं भवति। गीता अप्ये-तदेव समर्थयति—

---

१. तै० आ० ३।११ २. कौ० । ३८ ३. बृ० उ० ३।७।

४. कठ० २।२।८ ५. श्वे० ६

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥[1]
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥[2]
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥[3]

इत्थं नैतन्निश्चेतुं शक्यते यज्जीवात्मा स्वयमेव कर्मणां कर्त्ता भोक्ता चास्ति अथवा परमात्मप्रेरित एव जीवात्मनि तथात्वम् । एषा समस्या प्रकारद्वयेन समाधातुं शक्या—( १ ) परमात्मा अचिन्त्यैश्वर्यसम्पन्नो मन्येत । श्रुतिप्रमाणमेव चास्मिन् विषये निर्णायकत्वेन गृह्येत । श्रुतिः परमात्मानमेव सर्वफलदातारं प्रतिपादयति अपि नाम तत्कर्मानुसारं भवेत् तत्स्वतन्त्रं वेति निर्महत्त्वम् । ईश्वरो हि फलदानसमये न कर्म-परवशः । स्वेच्छानुसारमेव फलदातृत्वेऽपि न तत्र वैषम्यनैर्घृण्ययोः दोषारोपणं कर्तुं शक्यते । यतो हि तस्य फलदातृत्वं श्रुतिः प्रतिपादयति तत्र च विषये न कश्चिदपि विरोधः कर्तुं शक्यते ।

( २ ) 'कृतप्रयत्नापेक्षस्तु'''इत्यस्यार्थः—यथा च सर्वे आचार्याः स्वीकुर्वन्ति जीवकृतप्रयत्नापेक्ष इत्यस्वीकृत्य परब्रह्मकृतप्रयत्नापेक्ष इत्यभ्युपगम्यते । एवं सूत्रार्थस्वीकारे 'जीवः' अयं शब्दः प्रकरणार्थेन न ग्रहीतव्यो भवति प्रत्युत स पूर्वसूत्रादेव सम्बध्यते । इत्थं च समस्त-सृष्टिरेव ब्रह्मकृतप्रयत्नापेक्षा संजायते ।

'आत्मकृतेः परिणामात्' ( १।४।२६ ) इयं सृष्टिरात्मकृतिश्च प्रति-पादिता । 'लोकवत्तु लीलाकैवल्यम्' ( २।१।३३ ) इत्यत्र सैवात्मसृष्टिः परमात्मनो लीलामात्रमुक्ता । 'अंशो नाना व्यपदेशात्'''( २।३।४३ ) इत्यत्र जीवात्मा परमात्मनः अंश उक्तः । 'पराभिध्यानात्' ( ३।२।५ ) इत्यत्र परमात्मेच्छया जीवात्मनि परमात्मत्वं तिरोहितमिति प्रतिपा-दितं तद्बन्धमोक्षयोश्च ब्रह्मणः कारणत्वमुक्तम् । एतेनैतत्प्रतीयते यत् ब्रह्म केवलं स्वलीलार्थं, स्वेच्छयैवात्मानं जडचेतनरूपेण परिणमयति तथापि ततः परं तिष्ठति, एतच्च निश्चिनोति यत् अमुकजीवात्मा एतत्कार्यं करिष्यति तदर्थमेतत्फलं चावाप्स्यति । अतः फलदानेच्छानुसारं परमात्मा स्वकीयांशानां जीवात्मनामधिपतिः । अंशो भवन् जीवः ब्रह्म-

---

१. गीता—१८।६१ २. गीता. ३।५
३. तत्रैव १८।६०

नन्यः, किन्तु ब्रह्म स्वलीलार्थं जीवात्मना कर्म कारयति अन्यथा वेद-विहितानाम् 'स्वर्गकामो यजेत' तथा तत्प्रतिषिद्धानां 'ब्राह्मणो न हन्तव्यः' इत्यादीनां कर्मणां निरर्थकत्वमेव स्यात्, ब्रह्मणा जीवात्मने प्रदत्तं कार्यं चापि सन्देहास्पदं संजायेत। अनेन प्रकारेण एतज्जडजीवा-त्मकनामरूपात्मकसृष्टेः आत्मपरिणामस्य आत्मकृतेश्च कारणत्वात् पर-मात्मा वैषम्यनैर्घृण्ययोर्न दोषभाग् वक्तुं शक्यते। इत्थमपि जीवात्मनः कर्तृत्वाभिमानस्य निराकर्तुं शक्यतया एतदुक्तुं पार्यते यत् स प्रतिकार्ये ब्रह्मेच्छावशवर्तीति सर्वथा तदधीनो वर्तते।

## अंशांशिभावविचारः—

'अंशो नाना व्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' (२।३।४३) एतत्सूत्रमिदं प्रतिपादयति यत् जीवो ब्रह्मणः अंशः। अग्नेः स्फुलिंगानामिव जीवानां जगतश्चोत्पत्तिः—

'विस्फुलिंगा इवाग्नेर्हि जडजीवा विनिर्गताः'[1]।

प्रत्येकं वस्तु ब्रह्मणः समुत्पद्यते—'सर्व एवात्मनो व्युच्चरन्ति'[2]। ब्रह्मातिरिक्तं हि न कुत्रापि तदितरत् किमपि वस्तु वर्तते। अतः कारणात् यद्यपि जीवः ब्रह्मणः लघीयानंशः तथापि स ब्रह्मण एव अंशः अभि-धीयते।

शंकरेणात्र अंश इत्यस्य अंश इव इत्यर्थः स्वीकृतः—'निष्कलं निरवयवं हि ब्रह्मेति न तस्यांशः सम्भवति'। अतो न जीवो ब्रह्मणः अंशः। ब्रह्मणः पृथक् प्रतीयमानत्वात् जीवात्मा ब्रह्मणः अंशः प्रति-भाति। तत्पार्थक्यं केवलं व्यावहारिकम्। आध्यात्मिकदृष्ट्या च सत्ताद्वयमपि नितरामेकमेव। दाशकितवेत्यादिना ब्रह्मणः प्रतिपादन-मेतत्प्रदर्शयति यत् तुच्छातितुच्छा अपि जीवा वस्तुगत्या ब्रह्मैव[3]।

इत्थं शंकरेण पारस्परिकविरुद्धश्रुतीनां विरोधो निराकृतः। तन्मते ब्रह्मजीवयोः पार्थक्यं मिथ्या व्यावहारिकं च। समस्तद्वैतभावना भ्रमा-त्मिका। किं बहुना, विचित्रमेतज्जगत् जीवश्च एतत्सर्वमसत्यम्।

किन्तु ब्रह्मजीवयोः एवं भूतमैक्यं न ब्रह्मसूत्रसम्मतमिति सर्वथा काल्पनिकम्। सूत्रकारो यदि शंकरस्यार्थमभिप्रेयात् तदा स जीवं ब्रह्मणः अंशमुक्त्वा इव शब्दाध्याहारं पाठकेभ्यो नावशेषयेत्। एतदेवास्य प्रकरणस्य अन्यसूत्रैरप्यवगम्यते।

---

१. अ० भा० (ब्र० सू० २।३।४३)  २. तत्रैव

३. शां० भा० (ब्र० सू० २।३।४३)

रामानुजः स्पष्टमेतत्प्रतिपादयति यद् जीवोऽयं ब्रह्मणः[1] अंशः चिद्-विज्जगच्च ब्रह्मणः[2] शरीरम्' किन्तु अंशस्य वास्तविकः कः अर्थः, तस्य च अद्वितीयतत्त्वस्य जीवात्मस्वरूपाः कथमेते अंशा अत्र तेनोक्तं यदंशशब्दस्यार्थः 'विशिष्टवस्त्वेकदेशः' अस्ति । अर्थात् ब्रह्म-जीवयोः विशेष्यविशेषणभावसम्बन्धः—एकवस्त्वेकदेशत्वं हि अंशत्वम् विशिष्टस्य एकस्य वस्तुनः विशेषणमंश[3] एव ।

इत्थं च सर्वे जीवात्मानः स्वकीय शुद्धरूपे परमात्मवदेव मंगल-गुणयुक्ताः । केवलं विश्वरचनां तन्नियन्त्रणं च ते न कर्तुं शक्नुवन्ति इत्यत्र विषयद्वये ते परमात्मनो भिन्नाः । ते असंख्याः प्रतिशरीरं भिन्नाश्च । अज्ञानवशेन ते भूतादिभिः सम्बद्धाः इति सुखदुःखभागिनः । ब्रह्म-स्वरूपस्य सत्यज्ञानेन जीवात्मनो हृदये भक्तिरुत्पद्यते । भक्त्या[4] च स मुक्तिं प्राप्नोति । तदानीं स स्वकीयवास्तविकशुद्धतामानन्दं च प्राप्नोति । तथापि तद्वैयक्तिकता न नश्यति । 'तत्त्वमसि' इत्येतस्य इदं तात्पर्यं यज्जीवात्मा ब्रह्मसमानस्वभावो ब्रह्मण एवांशः । स चायमात्मा ज्ञानाश्रयो ज्ञानस्वरूपश्च[5] ।

किन्तु इयं धारणाऽत्यन्तस्पष्टा न वर्तते । ब्रह्मजीवयोः त्रय एव संबन्धाः तर्कसंमताः (१) अभेदः (२) भेदः (३) भेदाभेदश्च । रामानुजेन पशु त्रिष्वपि 'अथातो ब्रह्मजिज्ञासा' (१।१।१) तथा 'तत्तु समन्वयात्' (१।१।४) इति सूत्रयोराक्षेपः कृतः स्वमतं च स नैक-स्मिन्नपि वर्गे युक्तिपूर्वकं स्थापयितुमशक्नोत्[6] ।

निम्बार्कः ब्रह्मजीवयोर्भेदाभेदसम्बन्धं स्वीकरोति । जीवात्मा ब्रह्मणो भिन्नः अप्यभिन्नः । अंशस्य च नेदं तात्पर्यं यत् जीवो ब्रह्मणः एकः खण्डः ब्रह्मणश्च पृथक्त्वं नीतः । अस्यां परिस्थितौ 'तत्त्वमसि' इत्यादि-श्रुतीनां विरोधो भवेत् । अतः अंशस्य तात्पर्यं शक्तिः[7] । जडचेतन-सर्व-पदार्थाः ब्रह्मणः त्रिभिन्नशक्तयः । इत्थं च जीवब्रह्मणोः शक्ति-शक्ति-मत्सम्बन्धः ।

---

१. रा० भा० (ब्र० सू० २।३।४२)

२. कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वम् (रा० भा० पृ० ७९)

३. रा० भा० (ब्र० सू० २।३।४२) पृ० १८४

४. द्र० रामानुज भाष्यम् (ब्र० सू० ३।२।२४)

५. सिद्धान्तसिद्धाञ्जनम् पृ० ५६     ६. रा० भा० पृ० ११७

७. वे० कौ० (ब्र० सू० २।३।४२)

वल्लभाचार्यस्य जीवब्रह्मणोरंशांशिभावविषये एतन्मतं यदग्निस्फुलिङ्गन्यायानुसारं तयोः शक्तिशक्तिमत्सम्बन्धः अनुचितः। शक्तिर्हि न शक्तिमतः पृथगवगन्तुं शक्यते—यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशात् न भिन्नाः, पृथक् स्थित्यभावात् समवेतत्वाच्च मूलाविच्छेदरूपेण तदाधारतया स्थितत्वाच्च·········तादृशमेव तद् वस्तूत्पत्तिसिद्धमिति मन्तव्यम्[1]। इत्थं च शक्तिशब्दस्य अयं वास्तविकः अर्थः यद् ब्रह्मणि सा शक्तिर्वर्तते यया तद् आत्मानं जीवजगद्रूपिणि स्वकीयांशे परिणतं कर्तुं समर्थम्। जीवो जगद्वा ब्रह्मणा सह स्थायिनी न काचिदनन्तसत्ता। अनन्तचरमसत्ता तु ब्रह्मैव। तस्मिन्नेवंभूता शक्तिर्वर्तते यद् यथाकामं तदेकं तिष्ठेत्, स्वेच्छानुसारं चासंख्यजडचेतनरूपेषु आत्मानं परिणतं कृत्वा विश्वमेतद्वा प्रसारयेत्।

मध्वाचार्यो द्वैतवादस्य समर्थकः। एतन्मते ब्रह्मजीवजगतामेषां त्रयाणामपि पृथक् पृथक् सत्ता वर्तते। तन्मते अंशस्य तात्पर्यं 'तद्भिन्नत्वे सति तच्छेषत्वम्' अस्ति। जीवः ब्रह्मणः पृथक् सत्ता। अनेकश्रुतिवाक्यानि ब्रह्मजीवयोः पार्थक्यं सूचयन्ति। अभेदसूचकश्रुतीनां च तात्पर्यं 'ततो न्यूनत्वे सति किंचित्सदृशत्वम्' अस्तीति जीवो ब्रह्मसदृशो भवन्नपि ततो यत्किंचिन्न्यूनः।

अधिकारिनिरूपणे शुद्धाद्वैतमार्तण्डस्य—

तृतीये, भगवान् भिन्नो जगतः कर्तृतः स्फुटः।
इति द्वैतप्रतीतिस्तु श्रुतिबाधान्न गृह्यते[2]॥

एष श्लोको मध्वस्येमं सिद्धान्तं श्रुतिविरुद्धं प्रमाणयति।

अयमत्र प्रश्नः समुत्तिष्ठते यद् ब्रह्मणो निरवयवत्वेन कथं जीवाः ब्रह्मणः अंशाः? वल्लभेनास्येत्थं समाधानं कृतम्—एतन्नाद्यावधि लोके क्वचित् निर्णीतं यद् ब्रह्म निरवयवं[3] वर्तते सावयवं वा, किंच तस्य रूपाणि लौकिकरूपाणीव न वर्तन्ते अतः यल्लौकिकव्यक्तिभ्यः असम्भवं तत् ब्रह्मकृते सम्भवम्। तर्केण केवलं न किंचिदपि ब्रह्मविषये ज्ञातुं शक्यते। यत्किंचिदपि ज्ञातुं तद्विषये शास्त्रमेवाश्रयणीयं भवति। श्रुतयः स्मृतयश्च स्पष्टतया जीवं ब्रह्मणः अंशं प्रतिपादयन्ति—'पादोऽस्य विश्वा भूतानि' इत्यत्र भूतानां जीवानां पादत्वं पादेषु

१. अणुभाष्यम् ( ब्र० सू० ३।२।२८ ) २. शु० मा० ३२
३. छा० उ० ३।१२।६

स्थितत्वेन वा अंशत्वम्। तथा, 'ममैवांशो जीवलोके जीवभूतः सनातनः'[1] एतत्सर्वं जीवात्मनो ब्रह्मांशत्वे पर्याप्तं प्रमाणम्।

एको विरोधः अत्र अयमपि उपतिष्ठते यत् सर्वजीवानां ब्रह्मांशत्वे जीवेषु परस्परं न व्यक्तिगतभेदेन भवितव्यम् इति स्वामिसेवकयोः समानैव स्थितिः स्यात्। अस्य इदमुत्तरं यत् यद्यपि सर्वे जीवात्मानः समानास्तथापि तेषां सम्बन्धो भिन्न-भिन्न शरीरैः वर्तते, तेषां कार्याणि अपि च भिन्न-भिन्नानि अतः जीवेषु न किंचिदपि भ्रमात्मकं सम्भवति।

जीवात्मनां ब्रह्मांशत्वे अपरः अयमपि विरोधो यद् यस्मिन् कस्मिन् जीवे कष्टमनुभवति हस्तपाद्यवयवे पीडायां यथा तद्व्यक्तिः कष्टमनुभवति तथैव ब्रह्म अपि कष्टमनुभवेत्। किन्तु अयं विरोधो नोचितः, अग्निरन्यं दहति किन्तु स्वयमग्नौ तद्दाहकताशक्तेः न कश्चित्प्रभावः। किंच, यथा प्रकाशः यानि वस्तूनि प्रकाशयति न तेषां कश्चिदपि प्रभावः प्रकाशे संजायते तथैव जीवात्मदोषैः परमात्मापि न कथमपि सदोषो भवति। ब्रह्म हि न किमपि कर्म करोतीति न स दुःखाद्यनुभवति। 'नहि शरीरान्तर्वर्तित्वमेव सुखदुः-खोपभोगे हेतुरपि तु पुण्यपापरूपकर्मपरवशत्वमेव'[2]। एतदतिरिच्य जीवात्मानो ब्रह्मणः अंशा न पूर्णतया ब्रह्मैवेति तेषु आनन्दांशस्ति-रोहितस्तिष्ठतीति द्वित्वस्य मिथ्या भावनया ते दुःख्यन्ति। इमानि दुःखानि परमात्मानं स्प्रष्टुमपि न शक्नुवन्ति 'जीवस्यांशत्वे हस्तादि-वत्तद्दुःखेन परस्यापि दुःखित्वं स्यादिति चेत् न' एवं परो न भवति। नाग्नेर्हि तापो नापि च हिमस्य (जडिमा) स्वयमग्नौ हिमे वा प्रभवति। अतो द्वैतबुद्ध्या अंशस्यैव दुःखित्वं न परस्य। अथवा प्रकाशः प्रकाश्यदोषेण यथा न दुष्टः, पापस्यापि तदंशत्वादिति'[3]। श्रुतयः स्मृतयश्चाप्येतदेव प्रमाणीकुर्वन्ति। तथाहि—'एकस्तथा सर्वभू-तान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः'[4] तथा—'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यः अभिचाकशीति'[5] एवं—

तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा॥

---

१. गीता १५।७ २. रा० भा० ब्र० सू० १।२।८

३. अ० भा० (ब्र० सू० २।३।४६

४. क० उ० ५।११ ५. श्वे० ४।६

कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते[1]।
स सप्तदशकेनापि राशिना युज्यते पुनः ॥

'अधिकं तु भेदनिर्देशात्' (२।१।२२) इत्यत्रापि वल्लभेन स्वभाष्ये 'तत्पुनर्जीवाज्जगतश्चाधिकम्'[2] इत्यादिवाक्यैर्जीवात्मनो ब्रह्म अधिकमिति प्रतिपादितम्' अतएव ब्रह्म जीवात्मदोषैः प्रभावितं न भवति।

## उपसंहारः

इत्थमेतेषां सर्वाचार्याणामंशांशिविषयकविचारपर्यालोचनयेत्थं ज्ञायते यत् वल्लभस्यार्थः अन्याचार्यचतुष्टयापेक्षया अधिकमुचितः। स हि एकमपि सूत्राक्षरमपरिवर्त्यैव श्रुतिविषयकभेदाभेदविरोधे स्पष्टतया सामंजस्यमुपस्थापयति। जीवो ब्रह्मैव नापरः किन्तु स न पूर्णतया ब्रह्म। तस्य कतिचित्स्वकीया दोषाः, तस्यागणितशक्तयस्तिरोहिताः इति जीवात्मा ब्रह्मणः अंश एव।

## ब्रह्मणा सहैक्यपार्थक्यविचारः

सूत्रकारो जीवात्मनो विषये एतदभ्युपगच्छति यत् यद्यपि स न सर्वथा स्वतन्त्रस्तथापि कर्ता अवश्यमस्ति—'कर्त्ता शास्त्रार्थवत्त्वात्' (२।३।३३) इदं सूत्रं जीवात्मनः कर्तृत्वं द्योतयति तथा—'परात्तु तच्छ्रुतेः' (२।३।४१) एवं 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं[3] न वेद', इत्यादिश्रुतिभिरेतत् सिध्यति यत् जीवात्मा स्वातन्त्र्येण न किमपि कर्तुं शक्नोति। तत्कर्तृत्वमस्य परात्परमात्मन एव हेतोर्भवति[4] यत्किंचिदपि स करोति तत् सर्वं परमात्मप्रदत्तशक्त्या तत्सहयोगेन चैव करोति। पुरुषेण कृतं प्रयत्नमुद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति। परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यते[5]। विष्णुपुराणे प्रह्लादेन स्वपितोक्तः—

न केवलं मद्धृदयं स विष्णुराक्रम्य लोकान् अखिलानवस्थितः'।
स मां त्वदादींश्च पितः समस्तान् समस्तचेष्टासु युनक्ति सर्वगः[6]।

---

१. ब्र० सू० २।३।४७ इत्यस्य अणुभाष्ये उद्धृतम्।
२. अ० भा० (ब्र० सू० २।१।२२)
३. बृ० उ० (३।७।२२)
४. रा० भा० (२।३।४०)
५. तत्रैव (२।३।४१)
६. वि० पु० (१।१७।२६)

ईशोपनिषदः—

'तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः'[1]।

तथा गीतायाः—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया[2]॥

एतत्सर्वप्रमाणैः निश्चीयते यत् सर्वे जीवात्मानः परमात्माधीनाः। परमात्मा च सर्वेषां हृदये तिष्ठति तथापि स जीववत् सुखदुःखाभिभूतो न भवति। एतच्च—

'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (१।२।८)
'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' (२।३।४२)
'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' (२।१।३४)

एषु सूत्रेषु स्पष्टीकृतं वर्तते यत् जीवात्मापेक्षया परमात्मनि अत्यन्तवैशिष्ट्यं वर्तते एवं जीवात्मनः सुखदुःखानुभवस्तत्कर्मसापेक्षः। अत एव परमात्मा न तु जीवात्मेव सुखदुःखाद्यभिभूतो भवति नापि च तस्मिन् वैषम्यनैर्घृण्ययोः दोषारोपसम्भवः। जीवात्मन्यपि परमात्मसमाना गुणा वर्तन्ते किन्तु ते तिरोहिताः परमात्मनिरन्तरध्यानेन चाविर्भवन्ति। तदैव जीवः सांसारिकजालान्मुक्तः परमात्मोन्मुखः सन् मुक्तिं विन्दते। एत्सूत्रकारमतं यत्तेन—

'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (३।२।५)

इत्यत्राभिव्यक्तम्।

प्रथमाध्यायस्य प्रथमपादे जिज्ञास्यब्रह्मणः आनन्दमयत्वम्, आकाशत्वम्, ज्योतिष्ट्वम्, प्राणत्वम् इत्याद्युपवर्ण्य द्वितीयपादे जीवात्मनः जिज्ञास्यत्वं प्रथमेषु अष्टसु सूत्रेषु सूत्रकारेण निराकृतम्। तथा—

विवक्षितगुणोपपत्तेश्च (१।२।२) कर्मकर्तृव्यपदेशाच्च (१।२।४) सुखविशिष्टाभिधानादेव च (१।२।१५) अदृश्यादिगुणको धर्मोक्तेः (१।२।२१) आत्मनि चैवं विचित्राश्च हि (२।१।२८) सर्वधर्मोपपत्तेश्च (२।१।३७)

एषु सूत्रेषु ब्रह्मजीवयोर्गुणानां सर्वथा भेदः प्रदर्शितः।

अंशो नानाव्यपदेशात्...(२।३।४३) इति सूत्रे सूत्रकारेण जीवात्मा परमात्मनः अंशः स्वीकृतः, न च तयोस्तादात्म्यम्। जीवात्मानो ह्यनेके

---

१. ई० उ० ५ २. गीता १८।६१

ब्रह्मवशवर्तिनश्च। शंकरेणाप्येतदित्थं स्वीकृतम् 'जीव ईश्वरस्यांशो भवितुमर्हति। कस्मात् पुनः स एव न भवति? नानाव्यपदेशात्। 'य आत्मनि तिष्ठन्'—इत्यादिभेदनिर्देशो 'नासति भेदे' युज्यते'। सूत्रकारः इदमपि स्वीकरोति यत् परमधाम प्राप्य अयं जीवः स्वकी वास्तविकं स्वरूपं सम्पद्यते। एतच्च तेन 'सम्पद्याविर्भावः स्वेन शब्दात्' (४।४।१) इत्यत्र प्रतिपादितम्। स एवं नानुमोदते यन्मुक्तावस्थायां जीवात्मनो ब्रह्मणा सह तादात्म्यं संजायते। एतेनैतन्निश्चीयते यत्सूत्रेषु परापरब्रह्मणयोर्न भेदो नापि च शंकरानुसारं जगन्मिथ्या तथा जीवात्मपरमात्मनोरैक्यम्[2]।

ब्रह्मसूत्राणामन्ते मुक्तेर्यत्स्वरूपमुपलभ्यते तेनैतत्प्रमाणितं भवति यद्बादरायणस्य द्वैतसिद्धान्त एव अभिप्रेतः। मुक्तात्मा यद्यपि मुक्तिदशायां नैसर्गिकपरमानन्दमनुभवति, ब्रह्मलोकस्य दिव्यभोगानुपभोक्तुं स स्वेच्छया अनेकशरीराणि धारयितुं समर्थः, किन्तु जगतः रचनाव्यापारादि वर्जयित्वैव एतदन्यत्सर्वं स कर्तुं शक्नोति। यतो हि 'यतो वा इमानि भूतानि जायन्ते' 'सदेव सोम्य इदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'नान्यत् किंचन मिषत्' अत्र सर्वत्र एतत्सर्वं कार्यं परब्रह्मपरमात्मन एव उक्तम्। एतेनैतत्सिध्यति यत् जडचेतनात्मकसमस्तजगतो रचनायां तत्संचालने प्रलयादौ च मुक्तात्मनां न किमपि सामर्थ्यम्। ते केवलं तत्रत्यदिव्यभोगानुपभोक्तुमेव समर्थाः।

ब्रह्मसूत्रेषु ब्रह्मजीवयोरैक्यद्योतकं न किमपि प्रमाणम्—

नेतरोऽनुपपत्तेः (१।१।१६) भेदव्यपदेशाच्चान्यः (१।१।२१)
अनुपपत्तेस्तु न शारीरः (१।२।३) अनवस्थितेरसंभवाच्च नेतरः (१।२।१७)
शारीरश्चोभयेऽपि हि भेदेनैनमधीयते (१।२।२०) पृथगुपदेशात् (२।३।२८)

एतेषां सूत्राणां व्याख्या स्वयं शंकरेणापि द्वैतपरत्वेनैव कृता। तदनुयायिभिश्चापि मुक्तकण्ठेनैतत्स्वीकृतं यत्सूत्राणां भाषया तत्तात्पर्येण च द्वैतमेवाभिव्यज्यते। इत्थं च कतिपयान्येव एवंभूतानि सूत्राणि येभ्यः अद्वैतभावना प्रकटीभवति। यथा—

'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (१।१।३०)
'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (४।१।३)

---

१. शां० भा० ( ब्र० सू० २।३।४३ )
२. सेक्रेड बुक्स आफ दि ईस्ट ( चतुस्त्रिंशत्तमो भागः )

अत्र आत्मा जीवार्थे अपि प्रयोक्तुं शक्यते किन्तु सूत्रेषु अयं शब्दः प्रायः परमार्थे एव प्रयुक्तः। 'शंकरेणापि अन्तर उपपत्तेः' ( १।२।१३ ) इति सूत्रस्य भाष्ये उक्तम्—'आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते। 'स आत्मा तत्त्वमसीति' श्रुतेः'।[1] 'द्युभ्वाद्यायतनं स्वशब्दात्' ( १।३।१ ) एतत्सूत्रभाष्येऽपि 'आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते नार्थान्तरपरिग्रहे'[2]। निम्नाङ्कितसूत्रेषु अस्मिन्नेवार्थे आत्मशब्दप्रयोगः कृतो वर्तते—

गौणश्चेन्नात्मशब्दात् ( १।१।६ ) द्युभ्वाद्यायतनं स्वशब्दात् (१।३।१)

आत्मकृतेः परिणामात् ( १।४।२६ ) आत्मनि चैवं विचित्राश्च हि ( २।१।२८ ) आत्मशब्दाच्च ( ३।३।१५ ) आत्मा प्रकरणात् ( ४।४।३ )

अतः एतद्विचारार्थे न कश्चिदपि आधारः अवशिनष्टि यत्सूत्रकारः शंकराभिमतब्रह्मजीवैक्यपक्षपाती वर्तते।

इत्थं चायं निष्कर्षः समायाति यत्सूत्रकारस्य नैतन्मतं यत् ब्रह्मैव अविद्याभ्रान्तो जीवः नापि चैतन्मतं यज्जीवात्मा शंकरानुसारं ब्रह्मणः आभासः प्रतिबिम्बो वा अस्ति। सूत्रकारस्यैतन्मतं यत् जीवात्मा अग्निस्फुलिंगवत् ब्रह्मणः अनन्यांशः। अंशो हि अंशिन्येव तिष्ठति अतः प्रकृत्या ब्रह्म जीवात्मनः अधिकम्। जीवात्मा कर्ता अस्ति किन्तु एतत्कर्तृत्वं स ब्रह्मणः प्राप्नोति। स नित्यः, अणुः किन्तु ब्रह्मभावावस्थायां स तथैव विभुत्वादीननुभवति यथा युवराज एव राजा सम्पद्यते। एतेनैतदवगम्यते यत्सूत्रकारः भेदसहिष्णुमभेदं स्वीकरोति न तु शंकरस्य भेदासहिष्णुमभेदमितिजीवात्मनो ब्रह्मणः सर्वथा पार्थक्यम्।

## ईश्वरः—

वैष्णवाचार्यैः शंकराभिमतनिर्विशेषब्रह्मण एव सविशेषत्वेन ईश्वर इति नाम प्रदत्तम्। तेषां मते ईश्वरः, भगवान्, हरिः इत्यादिविभिन्ननामभिः तदेव परतत्त्वमुच्यते।

शंकराचार्येण, किन्तु ईश्वरतत्त्वमेव ब्रह्मणः पृथक् स्वीकृतम्। तन्मते निर्विशेषं ब्रह्म एव यदा स्वलीलार्थं मायावच्छिन्नं सदेतज्जगत् सिसृक्षति तदा ईश्वरः कथ्यते। इत्थं च—

---

१. शां० भा० ( ब्र० सू० १।२।१३ ) पृ० ४५२

२. तत्रैव ( १।३।१ ) पृ० ५४२

यदा निर्विशेषं ब्रह्मोपासनार्थं सविशेषेश्वररूपं धारयति तदा प्रदेश-हीनमपि तत् उपाधिविशेषेण सम्बद्धं सत् तदेव ब्रह्म भिन्न-भिन्नप्रदेशेषु स्वीक्रियते। अत एव 'सूर्ये नेत्रे हृदये च ब्रह्मोपासना उक्ता वर्तते। इत्थं च 'कारणोपाधिरीश्वरः' इत्यादिश्रुतिवाक्यैरपि एतदेव स्पष्टीक्रियते यन्मायावच्छिन्नं विश्वकारणं ब्रह्मैव ईश्वरनाम्ना अभिज्ञायते।

यद्यपीहायं सन्देहो भवितुं शक्नोति यत् यदि ब्रह्मैव स्वशक्त्या मायया विश्वं रचयति तदा ब्रह्मणा सह तच्छक्तेरपि सत्तायाः वर्तमानत्वात् ब्रह्ममाययोः सत्ताद्वयत्वेन 'एकमेवाद्वितीयम्' अस्या अद्वैतताया बाधः संजायते। अस्योत्तरमद्वैतवेदान्तिनां मते एतदस्ति यत् यद्यपि सृष्टिनिर्माणे मायायाः सहकारिता वर्तते तथापि ब्रह्मणः प्राधान्यम् इति न तदतिरिक्तं मायाया अस्तित्वं मन्यते। किंच, मायाया जडत्वेन ब्रह्मणः साहाय्यं विना न सा किमपि कर्त्तुं शक्नोति। तात्पर्यमेतत् यत् कस्य-चिदपि पदार्थस्य शक्तेरस्तित्वं तत्पदार्थाद्भिन्नं न भवति—अग्नौ सत्यामपि दाहकशक्त्यां न सा अग्नेः पृथक् तिष्ठति। एवमेव मायापि ब्रह्मणः इच्छाशक्तिरित्येषैका मानसिकक्रियेति यथा स्वप्नेऽस्माकं मानसिकसृष्टिरुत्पद्यते तथैवेदं विविधं विश्वमपि ईश्वरमानसिकशक्त्या मायया समुत्पद्यते। अनेन प्रकारेण मायायुक्तं ब्रह्म विश्वस्य कारणम् ईश्वरः उच्यते। तदेव च विश्वस्य निमित्तोपादानोभयकारणम्-'तदैक्षत बहु स्याम् प्रजायेय', 'यथोर्णनाभिः सृजते गृह्णते च' इत्यादिश्रुयः एतदेव प्रतिपादयन्ति।

स च ईश्वरः सर्वद्रष्टा, सर्वशक्तिमान्, सर्वान्तर्यामी तथा सर्वेषां जन्मदाता अस्ति, 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य' इत्यादिश्रुतिवाक्येषु इदमेव प्रतिपादितं वर्तते। एवमचिन्त्यस्य विचित्रस्य विश्वस्य, तदीयानन्तपदार्थानां च कर्त्राप्यवश्यमेवेत्थंभूतेनैव सर्वशक्तिमता भवितव्यम्। यश्च सर्वशक्तिसम्पन्नो न स परावलम्बनमपेक्षते अतः अवश्यमेव स स्वतन्त्रः स्वावलम्बी च वर्तते।

शरीरी जीवस्तस्यैवेश्वरस्यांशः 'जीवभूतः सनातनः' 'कार्योपधिरयं जीवः' तथा 'ममैवांशो जीवलोके'इत्यादिश्रुतिस्मृतयः एतस्यैव प्रतिपादिकाः। स चायं जीव उपाध्यनुरोधी। प्रकृतिसमष्ट्यवच्छिन्नस्त्वीश्वरः। अयं च नोपाध्यनुरोधी प्रत्युतोपाधिरेवैनमनुवर्तते अत एव अयमुपाधेस्तद्वशानां जीवानां च नियमनादीश्वर इत्युच्यते। तदुक्तम्—'क्षरात्माना-

वीशाते देव एकः"[1]। 'ईश्वरः सर्वभूतानाम्, 'तमीश्वराणां परमं महेश्वरम्' 'नियन्तेश्वरः' इत्यादयो भूयस्यः श्रुतयः तद्विषये प्रमाणम्।

मायासंयुक्तं ब्रह्म ईश्वरः कथ्यते अतो यदि ईश्वरो ब्रह्म कथ्येत तदा न काप्यापत्तिः। सर्वव्यापित्वात् स प्रत्येकप्राणिनः अन्तःकरणे अस्ति। 'अहंता' तत्प्रतिबिम्बः, स एव जीवः। यथा सूर्यस्य प्रकाशे स्थापितेषु स्फटिकादिरत्नेषु पतितस्य सूर्यज्योतिषः करणेन स्फटिकाद्याधिक्येन प्रकाशितं प्रतीयते; तदन्तर्वर्ति तज्ज्योतिरेव च सूर्यप्रकाशस्य प्रतिबिम्बं तथैवान्तःकरणे पतितः परमात्मनः प्रकाश एव जीवः। यश्च 'अहम्' इति चेतनारूपेणाभिव्यज्यते। अस्मिन्नर्थे जीव ईश्वरस्य प्रतिबिम्बः। शास्त्रेषु प्रतिपादितस्य जीवब्रह्मणोरंशांशिभावस्य तात्पर्यमयमेव बिम्बप्रतिबिम्बभावः। अन्यथा कालस्थानादिप्रतिबद्धपदार्थस्यैव अंशांशित्वसम्भवात् अनन्तारूपब्रह्मणः अंशस्य कदाचित्कल्पनापि न सम्भवेत्। एवमेव जीव ईश्वरस्य प्रतिबिम्बः। तत्रैवाज्ञानम्। तस्यैव च बन्धमोक्षौ ब्रह्मणा सह अनयोः न कश्चित् सम्बन्धः।

## आचार्यपञ्चकसिद्धान्तेषु विभिन्नमीश्वरस्वरूपम्

शंकरानुसारमीश्वरस्तु सगुणं ब्रह्म ईश्वरस्य सत्ता केवलं व्यावहारिकरूपेण भवति न तु पारमार्थिकदृष्ट्या। ईश्वरो ब्रह्मसूत्रानुसारं जगतः कर्ता स चेश्वरो व्यक्तिगतात्मनां समाहारः।

रामानुजमते ब्रह्म ईश्वरश्च एकमेव। 'ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः'। ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित्पुनः"[2] इति हि तत्सिद्धान्तः। तस्यैतत्कथनं यत् ईश्वरो ब्रह्म न निर्गुणः स चासंख्योत्तमगुणसम्पन्नः सर्वविश्वाधारः सर्वथा दोषरहितो जगतः स्रष्टा रक्षकः, संहारकश्च[3]। स एव च सर्वप्रशासकः कर्मफलदाता कर्माध्यक्षश्चेति जगतो निमित्तोपादानोभयकारणम्। स एव च सर्वजीवान् जगच्च व्याप्नोति। सर्वजीवानां जागतिकपदार्थानां चान्तर्यामी स एव। स न्यायकर्त्ता कृपालुर्दयालुश्च वर्तते, स एव सर्वजीवानां मोक्षप्रदायकः। स च प्रकारी, अचित् (जगत्) चित् (जीवश्च) तत्प्रकारः। प्रकारिरूपे ईश्वरः परि-

---

१. श्वे० १।१०      २. सर्वदर्शनसंग्रहः पृ० ९२

३. युपृथिव्यादीनामायतनं परं ब्रह्म; चराचरस्य कृत्स्नस्य कर्तृत्वं हि तस्यैव सम्भवति [ रा० भा० १।३।१। तथा १।२।९ ]

वर्तनरहितः किन्तु तत्प्रकाराः परिवर्तनशीलाः[1] । ईश्वरो विशेष्यम् जगज्जीवश्चैतद्द्वयं तद्विशेषणम् । विशेषणविशेष्ययोरपृथकत्वम् । ईश्वरः शरीरी, जगज्जीवश्चैतद्द्वयमपि[2] तच्छरीरम् । ईश्वरो नियामकस्तच्च द्वयं तन्नियम्यम् । एवमीश्वरः शेषी ( स्वामी ) जगज्जीवश्च तच्छेषः ( सेवकः ) जीवजगतो र्ज्ञातृनियामकरूपेण स ततः परमपि वर्तते अत एव भूमा[3] कथ्यते । स एव पूर्णः पुरुषोत्तमोनारायणः स चास्माकं बौद्धिकनैतिकसौन्दर्यात्मकधार्मिकभावनाः सन्तोषयति । सर्वदर्शनसंग्रहे एष एव भाव इत्थं प्रतिपादितः—'जगतः कर्ता उपादानं चेश्वरपदार्थः पुरुषोत्तमो वासुदेवादिपदवेदनीयः । तदप्युक्तम्—

'वासुदेवः परं ब्रह्म कल्याणगुणसंयुतः ।
भुवनानामुपादानं कर्ता जीवनियामकः[4] ॥'

वेदार्थसंग्रहे अयमेव परमात्मा ॥' परब्रह्म नारायण उक्तः ।

निम्बार्काचार्यः कस्यापि भाष्यकारस्य सिद्धान्तमखण्डयित्वैव द्वैतमद्वैतं चैतदुभयं समुचितमभ्युपगच्छति । स ब्रह्मणो मायातीतं ( शुद्धम् ) मायाविशिष्टं चैतदुभयमपि दृष्टिभेदेनोचितं मनुते ।

मध्वाचार्यस्येश्वरः हरि र्नारायणः सच्चिदानन्दः सर्वव्यापिस्वरूपो विष्णुश्चोच्यते । विष्णुतत्त्वनिर्णयप्रारम्भे तद्द्वारा प्रदत्तेनाधोलिखितश्लोकेनास्य कथनस्य पुष्टिः संजायते—

सदागमैकविज्ञेयं समतीतं क्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ॥

अस्मात् श्लोकाद् एतदपि ज्ञायते यन्मध्वस्य नारायणः केवलवेदद्वारा एव वेद्यः क्षराक्षरोभयातीतः, निर्दोषः, सम्पूर्णसद्गुणसम्पन्नश्च वर्तते । अयमेव नारायणो यदा कदा मध्वाचार्येण हरिनाम्नापि स्मृतः । मध्वाचार्यानुसारेण हरिरेव परब्रह्म । न तदतिरिक्तः अपरः कश्चित् ततो महान् वर्तते । स च स्वतन्त्र एक एवाद्वितीयश्च । स चैकोऽपि अग्नीन्द्रवरुणादितिप्रभृत्यनेकनामभिः प्रसिद्धः । वेदानुसारं स एकोऽपि मनीषिभिरनेकधोच्यते—

---

१. अतः प्रकृतिप्रकारसंस्थिते परमात्मनि प्रकारभूतप्रकृत्यंशे विकारः प्रकार्यंशे चाविकारात्स्वदम्' ( वेदार्थ संग्रहः पृ० ११५ )

२. परस्य ब्रह्मणः सर्वान्तरत्वं सर्वतच्छरीरत्वम् [ रा० भा० १।१।२१ ]

३. 'भूमा परं ब्रह्म' रा० भा० ( १।३।७ )

४. सर्वदर्शन सं० पृ० ११५

'एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः'[1]। स एक एव अनेकदेवानां नाम धारयति—'यो देवानां नामधा एक एव।'

मध्वाचार्येण हरिः नारायणो वा एष शब्दः कस्यचिद् देवताविशेषस्य कृते न प्रयुक्तः, प्रत्युत सर्वव्यापकस्य सर्वशक्तिसम्पन्नस्यैव कृते प्रयुक्तः। अतः अद्वैतवादिनां यद् ब्रह्म तदेव मध्वाचार्यस्य हरिः। तथाहि—

परं ज्योतिः परं ब्रह्म परमात्मादिका गिरः।
सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथंचन[2]॥

एतदनुसारं हरिः सच्चिदानन्दस्वरूपो वर्तते। शाश्वतिकपदार्थेषु शाश्वतः स एव—'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'[3] स अन्येभ्यः स्वानुकम्पया नित्यतां प्रदत्ते। अतः स सत् अस्ति। स जगतः सर्वपदार्थान् जानातीति चित्—चेतनासम्पन्नः। स आनन्दराशिः अन्येभ्योऽप्यानन्दं प्रददातीत्यानन्दस्वरूपो दिक्कालाद्यनवच्छिन्नः, अनन्त गुणराशिसम्पन्नः। स केवलमंशत एव ज्ञातुं शक्यते। सम्पूर्णतया तु नान्येन केनापि तु स्वयमात्मनैव तेन ज्ञातुं शक्यते इति दृष्ट्या सः अज्ञेयः।

शंकरेण ब्रह्मणो निर्गुणसगुणरूपद्वयं स्वीकृतम्। तत्र निर्गुणं ब्रह्म विभु मत्वा पूर्वोक्तगुणसम्पन्नमभ्युपगतं परं वैष्णवाचार्यैः सगुणमेव ब्रह्म सर्वशक्तिमत् मत्वा पूर्वोक्तवैशिष्ट्यविशिष्टं स्वीकृतम्।

वल्लभस्येश्वरो वासुदेवो नारायणो वा कथ्यते। स लक्ष्म्या सह वैकुण्ठमधिवसति। तत्रैव स स्वभक्तैः सह अनन्तलीलायां संलग्नश्च तिष्ठति।

इत्थं समस्तभाष्यकारैर्वेदान्तमाश्रित्य ब्रह्मविषयकः स्वस्वानुभवः प्रदर्शितः। सत्यं त्वेतद् यत् परिच्छिन्नव्यष्टिचेतनजीवात्मनः कृते न केवलं दुष्करमेतद् यत्सः अपरिच्छिन्नसमष्टिचेतनब्रह्मणः स्वरूपं याथार्थ्येनावगच्छेत् प्रत्युत असम्भवमेव—शब्दैस्तद्वास्तविकवर्णनं तु सर्वथा पृथगेव। महर्षिव्यासप्रणीतेषु ब्रह्मसूत्रेषु भाष्यकर्तृभिः उक्तसर्वाचार्यैः ब्रह्मणो यत्स्वरूपं वर्णितं तद्यद्यपि परस्परं भिन्नं तथापि प्रत्येकेन श्रुतिप्रामाण्यमाश्रित्यैव स्वसिद्धान्तः प्रतिपादितः। श्रुतिषु च यद्ज्ञानं

---

१. ऋ० वे० १।१६४।४६

२. 'आत्मा प्रकरणात्' (ब्र० सू० ४।४।३) इत्यत्र मध्वभाष्ये उद्धृतो ब्रह्मपुराणश्लोकः। ३. श्वे० ६।१३

सन्निहितं वर्तते तत्प्राचीनतत्त्ववेत्तृमहर्षिसाक्षादनुभवफलमिति एकत-मस्यापि भाष्यकारस्य निर्णये सन्देहदृष्टिनिक्षेपः श्रुतिषु एव सन्देहनिक्षेपः, स चास्तिकविदुषां कृते पाप एवेति निम्नलिखितश्रुतिष्ववधानेन सर्वमतभेदनिरासः—

'अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।
तमादिमध्यान्त 'विहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥'

प्रत्येकभाष्यकारेण स्वानुभूतानुकूलमेव ब्रह्मस्वरूपं वर्णितमिति आंशिकरूपेण प्रत्येकस्य अपूर्णतया निष्पक्षत्वेन नैतद्वक्तुं शक्यते यद्-मुकभाष्यकारनिरूपितं ब्रह्मस्वरूपं समुचितं तदपेक्षया अन्यनिरूपितमनु-चितम् । ब्रह्मविषयकस्य हि आन्तरिकानुभवस्य आध्यात्मिकजगति ता-वानेवादरः यावान् वैज्ञानिकजगति क्रियात्मकतया सिद्धीकृतानां प्रयो-गाणाम् । अन्तरं केवलमेतावदेव यत् महर्षीणामनुभवे कस्याश्चिदपि भ्रान्तेः सम्भावना न वर्तते । अतः पूर्वोक्तविवेचनेषु एतत्स्वीकर्त्तव्यं भवति यद्ब्रह्मणो वास्तविकस्वरूपे समस्तभाष्यकारैः प्रातिस्विकरूपेण निरूपितानां स्वरूपाणां समन्वयः संजायते तथापि यत्किंचिदवशिष्यते तदचिन्त्यमतर्क्यमव्यक्तमिति तत्र न कस्यापि गतिः ।

## ब्रह्म—

जीवेश्वरयोः स्वरूपलक्षणाभ्यां परिचयः प्रदत्तः । तयोः सम्ब-न्धश्चापि प्रतिपादितः । आध्यात्मिकतत्त्वेषु परमस्य तत्त्वस्य ब्रह्मणो लक्षणमद्याप्यवशिनष्टीति तन्निरूपणमिहावश्यकतया कुर्वता एतद्विषये अन्यभाष्यकाराणां मान्यताः कियदवधि परस्परं तथा कियदवधि सूत्र-कारेण सह सामंजस्यमुपगच्छन्तीत्यालोचनापूर्वकं सूत्रकारस्य ब्रह्मविष-यकविचारः समुपस्थापयिष्यते ।

समस्तस्य अस्य संसारस्य सूक्ष्मातिसूक्ष्मं गतिविधिमवलोक्य एकस्य दार्शनिकस्य हृदये प्रकृत्या अयं विचारः समुद्गच्छति यल्लघीयोऽ-तिलघीयः कीटाणुतः मत्तमातंगपर्यन्ते चेतनजगति अणीयोऽत्यणी-यो रेणुतः महीयोऽतिमहीयो महीधरपर्यन्ते जडजगति च कतमा विशिष्टा सत्यसत्ता कार्यं करोति । अस्यानाद्यनन्तविश्वस्य को रचयिता । किं च तत्तत्वं येनेमे सर्वपदार्थाः निर्मिताः इत्येतत्सर्वं नामरूपात्मकजगद्रूपे परिणतं संजातम् । किंच तत्तत्वं यस्मिन् परिज्ञाते सर्ववस्तूनां परिज्ञान-मुपजायते इति । एतेषां सर्वेषां प्रश्नानामेकमेवोत्तरम्—'तत्परतत्त्वं ब्रह्म अस्ति' 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति

यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म' इति 'तैत्तिरीयोपनिषदि तथैव ब्रह्मणो लक्षणमुक्तम्'[1]। अत एव ब्रह्मसूत्राणामादिमसूत्रम् 'अथातो ब्रह्मजिज्ञासा' इति बादरायणेनोक्तम्। किन्तु एतत् सूत्रं व्याचिख्यासद्भिः शंकरादिभिः स्वस्वानुभवानुसारं विभिन्नतः अस्य लक्षणं स्वरूपं चोक्तम्। तत्र—

## शंकरः—

'अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसा अप्यचिन्त्यरचनारूपस्य जन्म-स्थिति-भंगं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्म'[2]। एतेन स्पष्टमेतद् यत् शंकराभिप्रेतं ब्रह्म सूत्रकाराभिप्रेतं ब्रह्म इव सर्वज्ञं सर्वशक्तिमच्च वर्तते इति तदेवास्य समस्तस्य विश्वस्य कर्तृ पालयितृ संहर्तृ चास्ति।

एवमपि तेन ब्रह्मणः परात्परात्मकं भेदद्वयं निर्दिशता तयोर्भेदः स्पष्टीकृतः। परं ब्रह्म हि निर्विशेषं निर्गुणं निरुपाधिकं च तदेव चरमं सत्यम्। किन्त्वपरं[3] ब्रह्म सगुणं सोपाधिकं च वर्तते शंकरस्यैषा मान्यता निम्नाङ्कितप्रमाणाधारा—

(१) 'जन्माद्यस्य यतः' एतत्सूत्रं निर्गुणब्रह्मणो सूचकं न तु विश्वस्य सर्गस्थितिसंहारकारणस्वरूपसगुणब्रह्मणः। एतच्च ब्रह्मणः तटस्थलक्षणम्, ब्रह्म एतावत्सूक्ष्मं दुरूहं चास्ति यत् साधारणतया तस्य स्वरूपलक्षणेन परिज्ञानं सर्वथा असम्भवम् इति शाखारुन्धतीन्यायेन स्थूलपदार्थसाधनद्वारा यत्किंचित् परिज्ञानं सम्भवति। अतः तटस्थलक्षणद्वारा तद् बोधयितुं प्रयत्नो विहितः।

ब्रह्म जगतः कारणमिति कार्यरूपजगतो भिन्नम्। तच्चेतनमानन्दस्वरूपमिति प्रकृति-परमाणुप्रभृतिसम्भाव्यकारणेभ्यो भिन्नं ब्रह्मैवैकं चरमसत्ताकमद्वितीयं निर्विशेषं निरुपाधिकम्।

(२) यत्र ब्रह्मणः सर्वज्ञत्वम्, सर्वशक्तिमत्त्वम्, जगज्जन्मस्थिति-

---

१. तै० उ० ३।१

२. शा० भा० ( ब्र० सू० १।१।१ )

३. "किं द्वे ब्रह्मणी परमपरं चेति ! बाढं द्वे, एतद्वै सत्यकाम परं चापरं च ब्रह्म' ( शां० भा० ब्र० सू० ४।३।१४ )

लयकारणत्वं चोक्तं तत्र अपरब्रह्मणो निर्देशः। तच्च ब्रह्मणस्तटस्थलक्षणं स्वरूपलक्षणं तु तस्य 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यस्ति।

(४) एकमेव ब्रह्म मायाकारणेन नामरूपात्मकजगद्रूपे अनेकं भासते। जगदेतद्ब्रह्मणो विवर्तः, रज्जुर्यथा सर्पस्य विवर्तः।

वेदेषु ब्रह्मणः सगुणनिर्गुणोभयरूपात्मकवाक्यानि समुपलभ्यन्ते— 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः'[1]....'स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु'[2]....। किन्तु एकस्मिन्नेव ब्रह्मणि नोभयं सम्भवति—निरुपाधिकं ब्रह्म सोपाधिकं न भवितुं[3] शक्नोति। न हि स्फटिके प्रतिबिम्बितं जपापुष्पं स्फटिकं भवितुमर्हति। अत एतदवश्यं स्वीकर्त्तव्यं स्यात् यद् ब्रह्मणः सत्यस्वरूपं निर्गुणं निर्विशेषं निरुपाधिकं च वर्तते। श्रुतयः एतदेव प्रमाणयन्ति—'अशब्दमस्पर्शमरूपमव्ययम्'[4]....इत्यादि' ब्रह्मणः सगुणरूपवर्णनं केवलमुपासनार्थं न वास्तविकम्—'भेदस्योपसनार्थत्वात् अभेदे [5]तात्पर्यात्'।

ब्रह्म एकं, सांसारिकानेकता चासत्या—'मृत्योः स मृत्युमाप्नोति य इह नानेव[6]पश्यति', एतदेव शंकरेण स्वभाष्ये ब्रह्मसूत्रेषु ३।२।१३ इत्यतः ३।२।२० इत्येतद्यावत्स्पष्टीकृतम्।

## रामानुजः—

एतन्मते ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते[7]। 'परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वं

---

१. छा० ३।१४।२ २. बृ० उ० ३।८।८

३. न तावद् स्वत एव परस्य ब्रह्मणः उभयलिंगत्वमुपपद्यते नह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं चेत्यवधारयितुं शक्यं विरोधात्।

[ शां० भा० ३।२।११ ]

४. कठ० १।३।१५ ५. शां० भा० ३।२।१२

६. कठ० २।४।११ ७. रा० भा० ( ब्र० सू० १।१।१ )

तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति 'ज्ञायते'[1]। इत्थं च तन्मते यद्यपि ब्रह्मैव चरमसत्यं तथापि जगतो जीवस्यापि न असत्यत्वम्। एतद्-द्वयं ब्रह्मणः शरीरम्। ब्रह्म परमात्मा चैकमेव। श्रुतिवाक्येषु यत्तन्निर्गुण-मुच्यते तस्यैतत्तात्पर्यं यत् तत् लौकिकगुणदोषरहितम्। सृष्टेः पूर्वं ब्रह्मणि चिदचिदेतद्द्वयं सूक्ष्मरूपेण वर्तते। एतत्तस्य अव्यक्तं स्वरूपं यच्च कारणं ब्रह्म उच्यते। यदा तज्जगद्रचयति तदा व्यक्तं सद् आत्मनः धारयति। एतत्तस्य व्यक्तं स्वरूपं यच्च कार्यं ब्रह्म उच्यते, यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्म उभयलिंगमुभयलक्षणमभिधीयते'[2] अतः एत-ज्जगद् न मायामात्रम्। वस्तुतः परमात्मा जगद्रचयति, पालयति अन्ते च तत् संहरति। सृष्टिः अव्यक्तावस्थातः व्यक्तावस्थायां परिणतिरित्थं रामानुजः परिणामवादे विश्वस्य शंकरीयविवर्तवादं खण्डयति।

## निम्बार्कः—

एतन्मते "यो रमाकान्तः पुरुषोत्तमः स एव ब्रह्मशब्दाभिधेयः"[3]। अस्यापि सिद्धान्तो रामानुजसमान एवेत्येतन्मते अपि ब्रह्मैव चरमं सत्यं कृष्ण इति तस्य वास्तविकं नाम। स चानन्तगुणसम्पन्नो दोषरहितश्च। वासुदेवसंकर्षणादयस्तस्य चत्वारो व्यूहाः, अनन्ताश्चावताराः। स जगतो निमित्तोपादानोभयकारणम्। सूक्ष्मरूपेण वर्तमानास्तत्प्राकृतिकशक्तयः एव चिदचित्स्थूलरूपाणि धृत्वा व्यक्ता भवन्ति इति तदुपादानम्। प्रत्येकवस्तुनियंतृत्वेन च तन्निमित्तम्।

## मध्वाचार्यः—

अस्य मते विष्णुरेव ब्रह्म। अत एव 'अथातो ब्रह्मजिज्ञासा' इत्यस्य भाष्यं कुर्वता तेनोक्तम्—'ब्रह्मशब्दश्च विष्णावेव; 'यमन्तः समुद्रे कवयो वपन्ति तदक्षरे परमे प्रजाः। यतः प्रसूता जगतः प्रसूती प्रसूतो येन सर्वान् विससर्ज भूम्याम्' इति चोक्ता—'तदेव ओं तद् सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति श्रुतिः। तन्नो विष्णुरिति वचनाद्विष्णुरेव हि तत्रोच्यते, न चेतरस्य शब्दात्प्राप्तिः'[4]। लक्ष्मीः च तच्चिरसंगिनी। तस्या यद्यपि न भौतिकं शरीरं तथापि सा अनेकरूपाणि धारयितुं समर्था।

---

1. तत्रैव 2. तत्रैव ( ब्र० सू० ३।२।११ )
3. म० भा० ( ब्र० सू० १।१।१ पृ० ४ )
4. मध्वभाष्ये उद्धृतं स्कन्दपुराणवचनम् ( ब्र० सू० १।१।२ )

'जन्माद्यस्य यतः' ( १।१।२ ) इत्यत्र आदिशब्देन तेन स्थितिसंहारातिरिक्ताः नियमनज्ञानाज्ञानबन्धमोक्षा अपि ब्रह्मणो गुणा गृहीताः। तथाहि—

'उत्पत्तिस्थितिसंहारा नियतिज्ञानमावृतिः।
बन्धमोक्षौ च पुरुषाद् यस्मात्स हरिरेकराट्' ॥'

परमात्मनः एते गुणाः यत्र तत्र प्रस्थानत्रय्यां समुपलभ्यन्ते। तथाहि—'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मा अन्तर्यामी 'अमृतः'[1] इत्यादिना उपनिषत्सु नियमनं 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।'[2] इत्थं गीतायां ज्ञानाज्ञानं, एवं च—

"स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकारो गुणी सर्वविद् यः।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः"[3] ॥

इत्यादिना उपनिषत्सु तथा 'मुक्तोपसृप्यव्यपदेशात् ( १।३।२ ) अन्तर्याम्यधिदैवादिषु····( १।२।१८ )' इत्यत्र ब्रह्मसूत्रे च बन्धमोक्षहेत्वन्तर्यामितायाः स्पष्टो निर्देशः। अतः पूर्वोक्तसूत्रस्य आदिशब्दे एतेषां सन्निवेशेनैव अर्थस्य परिपूर्तिः। 'यत्प्रयन्त्यभिसंविशन्ति' इत्यत्र तैत्तिरीयोपनिषदि···'संसारबन्धस्थितिमोक्षहेतुः' इत्यत्र श्वेताश्वतरोपनिषदि च एवं 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' ( ३।२।५ ) इत्यत्र ब्रह्मसूत्रेषु च बन्धमोक्षयोः पार्थक्येन ब्रह्माधीनता उक्ता। मोक्षश्च ब्रह्मजिज्ञासायाः मुख्यं लक्ष्यम्, तस्य च न लये अन्तर्भूतिरिति मध्वानुसारेण ब्रह्मणि मोक्षहेतुत्वनिर्देशः अत्यावश्यकः। अत एव 'तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः'[4]। तथा, 'ज्ञात्वा देवं सर्वपाशापहानिः, क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः'[5] इत्यादि श्रुतयः संगच्छन्ते।

इत्थं च ब्रह्मापरनामकस्वकीयेश्वरे ( विष्णौ ) नियमन-मोक्षहेतुत्वादिविशेषगुणनिर्देशेन अन्याचार्यापेक्षया मध्वस्य दार्शनिकदृष्टिवैशिष्ट्यम्।

---

१. बृ० उ० ( ३।७।१५ ) २. गीता १५।१५
३. श्वे० उ० ६।१६ ४–५. तत्रैव १।१०–११

वल्लभः—

अस्य ब्रह्म, वेदैकबोधितः सर्वभावसमर्थो भगवान् हरिः, वासुदेवो नारायणः स एव जगतः उत्पत्तिस्थितिनाशानां कर्ता। तथा हि—

उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत्।
न हि श्रुतिविरोधोऽस्ति कल्प्योऽपि न विरुध्यते॥
वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम्।
सर्वभावसमर्थत्वादचिन्त्यैश्वर्यवद् बृहत्[1]॥

स च सजातीयविजातीयस्वगतद्वैतवर्जितः अद्वितीयः[2] तथापि स स्वेच्छानुसारमगणितरूपधारणसमर्थः। सर्वाणि हि तानि रूपाणि भगवतो वासुदेवस्य नाराणस्यैवेति तत्र न द्वैतसम्भावना वर्तते। फलतः वल्लभानुसारं, ब्रह्मणो मायायाश्च निर्देशेन, शंकरस्याद्वैतनिर्देशो न अद्वैतनिर्देशः प्रत्युत अद्वैतविवेचनेऽपि प्रकारान्तरेण द्वैतनिर्देश एव। अत एव मायाराहित्येन वल्लभः स्वकीयमद्वैतं शुद्धाद्वैतं कथयति—

मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्[3]॥

स्पष्टतया बोधयितुं वल्लभो ब्रह्म रूपत्रयेण निर्दिशति (१) कारणरूपेण (२) कार्यरूपेण (३) स्वरूपेण च। तत्र सृष्टेः पूर्वं ब्रह्मणः स्थितिः कारणरूपब्रह्मणः स्थितिः। सृष्टिरूपे विविधनामरूपात्मकजगत्स्वरूपब्रह्मणः स्थितिः कार्यस्वरूपब्रह्मणः स्थितिः। ब्रह्मणो वास्तविकस्वरूपेण सच्चिदानन्दस्वरूपेण स्थितिः स्वरूपेण स्थितिः।

प्रस्थानरत्नाकरे ब्रह्मणः स्वरूपं पुनरपि रूपत्रये वर्णितमुपलभ्यते (१) क्रियारूपे (२) ज्ञानरूपे (३) क्रियाज्ञानरूपे च—'ज्ञानक्रिया विशिष्ट एव तदर्थरूप इति त्रिविधः अपि प्रमाणानुरोधिप्रमेयात्मास्वरूपकोटिः[4]'।

स चासंख्यदिव्यगुणसम्पन्नः 'एकं ज्योतिर्बहुधा विभाति'[5]।
'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'[6]॥

---

१. अणुभाष्यम् ( ब्र० सू० १।१।२-३ ) २. त० दी० नि० १।६६ )
३. शु० मा० २८ ४. प्रस्थानरत्नाकरस्य १६४ पृष्ठे
५. अथर्ववेदः ३।३।१७ ६. श्वे० उ० ६।८

वल्लभेन अधिकांशस्थानेषु ब्रह्म सर्वकर्म-सर्वकाम-सर्वगन्धादिगुण-सम्पन्नं निर्दिष्टम्। अन्यगुणापेक्षया ऐश्वर्यम्, वीर्यम्, यशः, श्रीः, ज्ञानम्, वैराग्यं च विशेषतया वर्णनीयम्। तस्य चागणितगुणेषु परिगणितगुणो जीवः कतिपयानेव गुणान् ज्ञातुं शक्नोति, न सर्वान्।

ब्रह्म साकारं न निराकारम्। तच्च दिव्यरूपगुणसम्पन्नम्, आकाशवद् व्यापकम्। अज्ञानवशेन तत् सीमितं प्रतीयते। तद् हस्तपादादियुक्तं तथापि तदीयं शिरोमुखादि सर्वतो वर्तते तथाहि—

आकाशवद् व्यापकं हि ब्रह्म मायांशवेष्टितम्।
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति।
अनन्तमूर्ति तद् ब्रह्म ह्यविभक्तं विभक्तिमत्[1]॥

ब्रह्म सर्वविरुद्धधर्माश्रयम—विचित्रशक्तिसम्पन्नमिति भावः। तच्च सर्वं भवितुं समर्थम् इति 'आत्मनि चैवं विचित्राश्च हि' (२।१।२८) इति सूत्रे अणुभाष्ये निर्दिष्टम् 'विचित्रशक्तियुक्तत्वात् सर्वभवनसमर्थत्वाच्च'।

तच्चासंख्यानन्त्यमूर्ति, तर्कबाधागम्यं चास्ति। तथाहि—

अनन्तमूर्ति तद् ब्रह्म कूटस्थं चलमेव च।
विरुद्धसर्वधर्माणामाश्रयं युक्त्यगोचरम्[2]॥

तस्य चेयं विरुद्धधर्माश्रयता, 'अपाणिपादो जवनो[3] ग्रहीता', 'अणोरणीयान् महतो महीयान्',[4] तथा, 'आसीनो दूरं व्रजति शयानो याति सर्वतः'[5] इत्यादिश्रुतिषु प्रतिपादिता। एतेन सर्वेण एतदेवायाति यद् ब्रह्मविषये न किमपि असम्भवं वर्तते। इत्थं च श्रुतिषु यत् सविशेषब्रह्मणः, तस्य सर्वधर्माश्रयतायाः, निर्विशेषतायाश्च वर्णनमुपलभ्यते तेन नैतदायाति यत् श्रुतिवाक्यं दोषपूर्णम् अपितु एतदेव तत्तात्पर्यं यद् ब्रह्म स्वयं प्रत्येकधर्मसम्पन्नम्। एतदेव च 'सर्वोपेता च तद्दर्शनात्' (२।१।३०) तथा 'सर्वधर्मोपपत्तेश्च' (२।१।३७) इत्यादिसूत्रेषु वर्णितमुपलभ्यते। रामानुजाचार्येण 'कृत्स्नप्रसक्तिः....' (२।१।२६) इत्यादिसूत्रतः 'आत्मनि चैवं विचित्राश्च हि' (२।१।२८) इति सूत्रत्रये ब्रह्मणो विचित्र-

---

१. त० दी० नि० १।२५-२६  २. त० दी० नि० १।७१
३. श्वे० उ० ३।१९  ४. तत्रैव ३।२०
५. कठ० २।२०

शक्तिसम्पन्नत्वं प्रतिपादितमिति प्रत्येकमसंभवमपि वस्तु तत्कृते सम्भवम्। ब्रह्मणः सर्वविरुद्धधर्माश्रयत्वं च वल्लभस्य स्वकीया मौलिक-विचारधारा।

ब्रह्म हि सच्चिदानन्दस्वरूपम् । जडपदार्थेषु सद्रूपेण तद्वर्तते। चेतनपदार्थेषु च सच्चिद्रूपेण। सच्चिदानन्दस्वरूपं तु ब्रह्मैव—पूर्णा-नन्दैश्वर्यादयः प्रधानस्य धर्मिणो ब्रह्मण एव [1]धर्माः। एतत् श्रुतिवाक्या-न्यनुपदं प्रतिपादयन्ति तथाहि—

'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्च[2]न'।
'सत्यं ज्ञानमानन्दं [3]ब्रह्म', विज्ञानमानन्दं [4]ब्रह्म॥

वल्लभानुसारं ब्रह्मणो मुख्यं रूपत्रयम्–(१) अन्तर्यामि (२) अक्षरम् (३) कृष्णश्च—

अन्तर्याम्यक्षरं कृष्णो ब्रह्मभेदाँस्तथा[5] परे।

एषु कृष्णो महत्तमः। परमात्मा पुरुषोत्तमश्चेत्याद्यस्य नामान्तरम्। आदिमस्वरूपं तु कृष्ण एव—'आदिमूर्तिः कृष्ण [6]एव' स एव च सर्वश्रेष्ठः—

'एको देवो देवकीपुत्र[7] एव'।

## शंकरस्य ब्रह्मविषयकमान्यतायाः वल्लभीयालोचना—

ब्रह्मसूत्राणां 'जन्माद्यस्य यतः' (१।१।२) इति सूत्रानुसारं ब्रह्म एव अस्य जगतः सृष्टिस्थितिलयकारणम्। एतच्च ब्रह्मणः तटस्थलक्षणम् (कार्यलक्षणं) द्योतयति न स्वरूप लक्षणम्। तत्तु 'सत्यं ज्ञान-मनन्तं ब्रह्म' इत्यस्ति। कारणं चैतस्यैतद्वर्तते यद्बादरायणः सांख्या-भिमतप्रकृतिकारणतामत्र निराकर्त्तुमिच्छति। एतदभिप्रेत्य एव तेन तल्लक्षणं प्रदत्तम्' निर्गुणस्य निर्धर्मकस्य च ब्रह्मणो जिज्ञासैव न सम्भवति।[8]

जन्माद्यधिकरणे (१।१।२) सद्रूपं ब्रह्म, ईक्षत्यधिकरणे (१।१।४-१०) च चेतनं ब्रह्म तथा आनन्दमयाधिकरणे (१।१।११-१८) आनन्द-

---

१. अ० भा० (ब्र० सू० ३।३।११) ३. तै० २।४।१
२. तत्रैव २।१।१ ४. बृ० उ० ३।९।२८
५. त० दी० नि० २।१२१ ६. तत्रैव १।१३
७. तत्रैव १।४ ८. अणुभाष्यम् १।१।२

स्वरूपं ब्रह्म जगतः कारणमुक्तम् इति सच्चिदानन्दस्वरूपं ब्रह्म अस्य जगतो निमित्तोपादानोभयकारणम् ( न जडप्रकृतिर्नापि चेतनो जीव इति तत्तात्पर्यम् ) इति जगतः तत्परिणामलक्षणत्वान्न तद्भिन्नत्वं सम्भवति ।[1]

शंकरस्योक्त्यनुसारमेव बादरायणस्याद्यानि दश सूत्राणि एतत्सूचयन्ति यत् ब्रह्म सर्वज्ञं विभु च वर्तते । तदेव समस्तं विश्वं सृष्ट्वा तस्य स्थितिं संहृतिं च करोति । तदग्रे स सूचयति यदेतल्लक्षणमपरब्रह्मणः अस्ति । किन्त्वेवंभूतस्य परस्य अपरस्य वा ब्रह्मणो निर्देशं न किमपि बादरायणस्य सूत्रं नापि च किमप्यौपनिषदं वाक्यं करोतीत्येषा शंकरस्य स्वकीया कल्पना ।

सर्वो जागतिकगुणक्रियादिर्मायामयत्वेन ब्रह्मणो विवर्त इत्यसत्यः इति वक्तुं नोचितम् । 'इदं सर्वं यदयमात्मा',[2] 'सदेव सोम्य[3] इदमग्र आसीत्' 'तदात्मानं[4] स्वयमकुरुत' इत्याद्यौपनिषदवाक्यानि एतद् घोषयन्ति यत् समस्तस्य नामरूपात्मकजगतः क्रियादीनां चोपादानं कारणं ब्रह्मैव । नायमत्र निर्देशो यदिमानि वाक्यानि अपरब्रह्मणः सूचकानि ।

शंकरः स्वयमेवैतत्स्वीकरोति यत् श्रुतिवाक्येषु सगुणनिर्गुणोभयविधब्रह्मणो निर्देशः । किन्तु सगुणवाक्यानि स एवमुक्त्वा निराकरोति यदिमानि अपरब्रह्मणः सूचकानि अविद्याक्षेत्रोपासनामात्रोपयोगीनि च । शंकरस्यैतत्कथनं न कथमपि युक्तिसंगतम् । यतो हि स वारं वारमेतत्स्वीकरोति यत् ब्रह्मज्ञानं श्रुतिवाक्येभ्य एव सम्भवति तर्कश्चात्र न सहायकः । अतो न कतमदपि श्रुतिवाक्यं निरर्थकं वक्तुं शक्यते । वस्तुतो न केषु अपि श्रुतिवाक्येषु पारस्परिकविरोधः, उभयविधान्यपि श्रुतिवाक्यानि प्रामाणिकानि सत्यानि च । अचिन्त्यस्वभावयुक्तं हि ब्रह्म । अन्यार्थमसंभवं सर्वं तत्र सम्भवति । अत एव भगवता रामानुजेनापि 'परे ब्रह्मणि तत्र तत्र अदृष्टाः सहस्रशः शक्तयः सन्तीति न किंचिदनुपपन्नम्'[5] इति प्रतिपादितम् । 'तस्मात् सकलविरुद्धधर्मा भगवत्येव वर्तन्ते इति न कापि श्रुतिरुपचरिता-

---

१. 'तस्माद् ब्रह्मपरिणामलक्षणं कार्यम्' । ब्र० भा० ( १।४।२६ )

२. बृ० उ० २।४।६ ३. छा० ६।२।१

४. तै० २।७ ५. रा० भा० ( ब्र० सू० २।१।२८ )

र्थेति सिद्धम्' ।[1] औपनिषदवाक्यान्यपि चैतत्प्रतिपादयन्ति यत्परमात्मनि सकलविरुद्धधर्माणां सम्भवः, 'वेदोक्ता धर्माः सर्वे ब्रह्मणि उपपद्यन्ते'[2] इत्थं च तस्य परमात्मनः 'विचित्रशक्तियुक्तत्वात्सर्वभवनसमर्थत्वाच्च निर्गुणसगुणोभयविधब्रह्मप्रतिपादकत्वे अपि श्रुतिवाक्येषु न विरोधः ।[3]

शंकरस्य मुख्या समस्या एषा वर्तते यत् समस्तस्य विश्वस्य तदीयपरिवर्तनस्य च सत्यत्वस्वीकारे ब्रह्मण्यपि तथात्वापत्तिरिति तदपि विनश्वरं सिद्धयेत् । एतां समस्यां समाधातुं स समस्तमपि जगत् मिथ्या प्रतिपादयति ।

वल्लभमते च न किमपीह असामंजस्यम् । तस्येदं कथनं यदविकृतमेव ब्रह्म जगतो रूपं धारयति—'अविक्रियमाणः आत्मानं करोतीति इति विरुद्धसर्वधर्माश्रयत्वं तु ब्रह्मणे भूषणाय'। स्वर्णेन अगणितेष्वलंकारेषु निर्मितेष्वपि न स्वर्णे किमप्यन्तरमायाति । इत्थमेव ब्रह्मापि आत्मानमविकृतं स्थापयदपि जगद्रूपे परिणमयति । तच्जगतः अन्तर्यामि परात्परं च कारणम् ।

अपि च 'संराधने प्रत्यक्षानुमानाभ्याम् (३।२।२४) इत्यत्र संराधने स्पष्टतया ब्रह्मसाक्षात्कार उक्तः । ब्रह्मणो निर्विशेषत्वे ध्यानावस्थायां कस्य साक्षात्कारो भवेत् ? संराधनकाले साक्षात्कृतमविद्याजन्यमिति तु वक्तुमनुचितं, स्वयं शंकरेणापि हि स 'ज्ञानप्रसाद' उच्यते । अतस्तस्य प्रामाणिकत्वे न सन्देहः । वस्तुस्थितिस्तु इयं यद् ज्ञानप्रसादं भक्तिं वा विना ब्रह्म सर्वथा अव्यक्तम् । तयोरन्यतरोत्पत्तिसमकालमेव तद्व्यक्तं संजायते । भक्ताः परमात्मनं साक्षात्कुर्वन्ति इत्यत्र बह्वीनां श्रुति-स्मृतीनां प्रामाण्यम्—'तं पश्यते निष्कलं ध्यायमानः' ।[4]

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परं तप ॥[5]

परापरब्रह्मभेदं निराकर्तुं 'दर्शनाच्च' (३।२।२१) तथा तदभिमसूत्रेषु 'नान्योतोऽस्ति द्रष्टा[6] 'अथात आदेशो नेति नेति'[7] 'तदेतद्-

---

१. अणुभाष्यम् ( ब्र० सू० २।१।२७ ) २. तत्रैव ( २।१।२७ )
३. तत्रैव ( २।१।२८ ) ४. मु० ३।१।८
५. गीता ११।५४ ६. बृ० उ० ३।७।२३
७. तत्रैव २।३।६

ब्रह्म अपूर्वमनपरमन्तरमबाह्यम्'' इत्यादि श्रुतिवाक्यानि समुपस्थापितानि।

इत्थं वल्लभीयपूर्वोक्तालोचनाया अयं निष्कर्षो यद्बादरायणसूत्रेषु ब्रह्मनिर्देशकसूत्राणां शंकराभिमतः अर्थः नितरां काल्पनिकः। समुचितार्थसंक्षेपस्त्वयम्—

ब्रह्मणि सर्वधर्माणां[2] संगतिः। तच्च सर्वशक्ति[3]सम्पन्नम्। जीवात्मदोषैस्तत् सर्वथा मुक्तम्[4]। श्रुतिषु च तन्निखिलविराड्रूपस्य वर्णनमुपलभ्यते[5]। तच्च सर्वेभ्यो महत्[6], अंगुष्ठमात्रं[7] च। प्राकृतिकगुणेभ्यस्तत्परम्[8]। नामरूपात्मकस्य समस्तस्य जगतः उत्पादकं तदेव[9]। संक्षेपेणैतद् यद् दृश्यमानमदृश्यमानं चैतत्सर्वं खलु ब्रह्मैव। शुद्धाद्वैतमार्तण्डे इत्थं संक्षेपेण ब्रह्मणः स्वरूपं प्रतिपादितम्—

साकारं सर्वशक्त्येकं सर्वज्ञं सर्वकर्तृ च।
सच्चिदानन्दरूपं हि ब्रह्म तस्मादिदं जगत्॥[10]

बादरायणस्य 'आत्मकृतेः परिणामात्' (१।४।२६) 'कम्पनात्' (१।३।३९) 'श्रुतेस्तु'—शब्दमूलत्वात् (२।१।२७) इत्यादिसूत्राणामणुभाष्यमपि पूर्वोक्तस्यैव समर्थकम्।

इत्थं ब्रह्मणः निर्गुणतायाः खण्डनं सगुणताया मण्डनं च कृत्वा वल्लभः पूर्वोक्तसूत्रेषु निजमतमभिव्यक्तीकुर्वन् शंकरमतमालोचितवान्। मायावादजालाज्जनानां मुक्तिर्भवेदित्येव हि तदेतत्कर्तव्यस्य लक्ष्यमासीत्।

वल्लभस्यान्याचार्यचतुष्टयेन तुलना—वल्लभाचार्यस्य ब्रह्मविषयकमुख्यसिद्धान्तविवेचनानन्तरमिहान्याचार्यचतुष्टयेन सह तत्तुलनात्मकसमीक्षा अपेक्ष्यते—

शंकरवल्लभौ—शंकराभिप्रेतं ब्रह्म निर्गुणं निर्विशेषं च। अस्य विषयस्य वल्लभेन तीव्रविरोधो विहितः तथा शंकरेण सह स्वकीयसिद्धान्तस्य तुलनात्मकांशं लेशमात्रमप्यनवदधानेन तेन शंकरः प्रत्येकप्रज्ञावसादस्योद्गम उक्तः। किं बहुना, येषु सूत्रेषु शंकरेण सह वल्लभस्य अन्याचा-

---

१. तत्रैव ३।५।१९
२. सर्वधर्मोपपत्तेश्च (२।१।३७)
३. सर्वोपेता च (२।१।३०)
४. अदृश्यत्वादिगुणको (१।२।२१)
५. रूपोपन्यासाच्च (१।१।२३)
६. भूमासम्प्रसादाद् (१।३।८)
७. शब्दादेव प्रमितः (१।३।२४)
८. प्रकृतैतावत्त्वं हि (३।२।२२)
९. संज्ञामूर्तिक्लृप्तिस्तु० (२।४।२०)
१०. शु० मा० ८

योपेक्षया ऐकमत्यमपि वर्तते तदर्थमपि तेन शंकरस्य आप्रमाण्यं नाभिव्यक्तीकृतम्।

तुलनात्मकस्तरे इमौ द्वावप्याचार्यौ अद्वैतवादिनौ। उभयार्थमप्येकं ब्रह्म, बाह्याभ्यन्तरद्वैतरहितं च। उभावप्येतत् स्वीकुरुतः यत्सांसारिकपरिवर्तनशीलता न कथमपि शुद्धे ब्रह्मणि प्रभवति। शंकरस्य एतत्कथनं यत् सकलमेव परिवर्तनं विवर्तस्वरूपमिति न सत्यम्। वल्लभश्च सकलपरिवर्तनानामविकृतपरिणामत्वं स्वीकरोति येषां च ब्रह्मणो वास्तविकस्वभावे न कश्चित्प्रभावः। द्वयोरपि विचारयोर्महती समानता वर्तते, तथापि वल्लभस्य विचारा अपेक्षाकृताधिकपरिवर्धिताः परिमार्जिताश्च प्रतीयन्ते। व्यूहवादः अस्य विषयस्योदाहरणम्—शंकराचार्येण पांचरात्रद्वारा उपस्थापितो व्यूहवादः, तत्र भागवता मन्यन्ते—'भगवानेको वासुदेवो निरञ्जनज्ञानस्वरूपः। परमार्थतत्वम्, स चतुर्धा आत्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण,' संकर्षणव्यूहरूपेण, प्रद्युम्नव्यूहरूपेण, अनिरुद्धव्यूहरूपेण' चेत्याद्यारभ्याग्रे 'भगवानेवैको वासुदेवः परमार्थतत्वम्'[1]इत्यादिना खण्डितः। किन्त्वेषोऽत्याश्चर्यजनको विषयो यत् सत्यपि भागवते वल्लभेनात्र शंकरः अनुसृतः। रामानुजवत्तेनाप्यत्र पांचरात्रपक्ष एव पुष्टीकरणीय आसीत्, किन्तु तद्वैषम्येण तेनेत्थं व्यूहवादः खण्डितः। स चेत्थम्—'उत्पत्त्यसंभवात्' (२।४।४२) इति सूत्रे 'भागवतमते कञ्चिदंशं निराकरोति। ते चतुर्व्यूहोत्पत्तिं वदन्ति। वासुदेवात्संकर्षणः'[3] इत्यादि प्रतिपाद्य अग्रे......तल्लोके न सिद्धम्'[4]....'अनेकेश्वरत्वं च न युक्तम्'[5] इत्यादि प्रतिपादितम्, तथा चात्र तेन शंकरमनुसृत्य स्पष्टतया भागवतसिद्धान्तो निरसितः।

व्यूहसिद्धान्तो निम्बार्केणाप्यभ्युपगतः किन्तूक्तसूत्राणां नितरां नवीनयैव पद्धत्या व्याख्यां कुर्वता तेन तत्र शक्तिसिद्धान्तो निराकृतः अभ्युपेतः। एतत्सिद्धान्तानुसारं चेतनसाहाय्यमन्तरेणैव शक्तिः स्वातन्त्र्येण जगदेतद्रचयति।

मध्वस्यापि निम्बार्कानुसारिणी एव व्याख्या वर्तते।

शंकरवल्लभयोर्विचारधारायां महान् भेदोऽत्यन्तमहत्त्वपूर्णः। शंकरो ब्रह्मद्वयमाकलयति परमपरं च। वल्लभ एतन्न स्वीकरोति, तन्मते

---

१. शां० भा० (ब्र० सू० २।२।४२) २. तत्रैव (२।२।४४)
३. अ० भा० (ब्र० सू० २।२।४२) ४. पूर्वोक्ते (२।२।४३)
५. पूर्वोक्ते (२।२।४४)

वस्तुगत्या एकमेव ब्रह्म। शंकरानुसारं ब्रह्मणश्चतूरूपम्—(१) परब्रह्म (२) ईश्वरः (३) हिरण्यगर्भः (४) वैश्वानरश्च। तत्र सर्वप्रथमं परब्रह्म, शेषं च त्रयं तस्य प्रतिरूपकम्। वल्लभेन एतत्सर्वं खण्डयित्वोक्तं यद् ब्रह्म अगणितरूपाणि धारयितुं समर्थम्, सर्वाणि च तस्य रूपाणि वास्तविकानि। तथापि मुख्यरूपेण तत् रूपत्रयं धारयति (१) कृष्णः (२) अन्तर्यामी (३) अक्षरश्च। नैतेष्वेकतममपि प्रतिरूपकमपि तु सर्वाण्येव रूपाणि वास्तविकानि। भेदस्य च महत्त्वपूर्ण एष विषयो यत् शंकरानुसारं परब्रह्म निराकारं निर्गुणं निर्विशेषं चास्ते, किन्तु वल्लभानुसारं तत्साकारं सगुणं सविशेषं च। फलतः शंकरस्य ब्रह्म केवलं ज्ञानस्वरूपम्, अनन्तं निर्गुणं तथा शून्यं चास्ते तथा वल्लभस्य ब्रह्म आनन्देन चैतन्येन च पूर्णं, लीलामयक्रियादिसम्पन्नम्, नित्यनूतनं चास्ति। तस्य प्राप्तिश्च लघीयस्तः महीयसापि कर्तुं शक्यते। शंकरानुसारेण ज्ञानमेव मोक्षस्य साधनम्। भक्तेस्तत्राप्राधान्यम्। मोक्षे जीवात्मा परमात्मन्येकीभूय तादात्म्यमनुभवति इति तद्वैयक्तिकतापार्थक्यं विनश्यति।

वल्लभस्य मते मोक्षस्य प्रधानं साधनं भक्तिः। मोक्षावस्थायामपि जीवानां वैयक्तिकतापार्थक्यं न विनश्यति। तदानीं ते कृष्णस्यानन्तलीलायां भागं गृह्णन्ति, तेन चापरिमितानन्दमनुभवन्ति।

शंकरस्य ब्रह्म, अतः कारणात्, दुःखिनामस्माकं करुणचीत्कारमाकर्ण्य अस्मत्साहाय्यार्थं तदानीमेवानुधावितुमयोग्यम्। स चोदासीनः, दयालुताशून्यः। किन्तु वल्लभस्य ब्रह्म दुःखपूर्णं हृदयमाश्वासयति, जीवने प्रगतिमुत्तेजनां चोत्पादयति।

रामानुजवल्लभौ—एतत्तु प्रायः सर्ववेदान्तिजनविदितं यदनयोर्वैष्णवाचार्ययोरत्यन्तसमानता स्पष्टतया वर्तते। उभावपि भक्तिमार्गपोषकौ, ज्ञानकर्मविरोधिनौ च वैष्णवौ। उभाभ्यामपि शंकरस्य मायावादः खण्डितः। जडं चेतनं च जगदुभयोर्मते सत्यम्। उभावप्येतदाकलयतो यज्जीवात्मा यद्यपि परमात्मवदेवास्ति तथापि तेन परमात्मा पूजनीयः। उभयोरपि मते मुक्तावस्थायामपि जीवात्मनो वैयक्तिकता न विनश्यति। स परमात्मनः समीपे स्थितः अनिर्वचनीयानन्दमनुभवति। रामानुजेन सह स्वकीया इमाः समानताः स्वीकृत्य वल्लभो न कथमपि 'रामानुजमालोचयति, प्रत्युत तं प्रति स्वकीयं मौनसम्मानमभिव्यनक्ति।

तथाप्यनयोर्बहुषु अंशेषु महत्त्वपूर्णो भेदः। तथाहि—

रामानुजानुसारं ब्रह्म पंचसु रूपेषु प्रकटीभवति (१) परब्रह्म, यद्

वासुदेवो नारायणो वोच्यते। स च लक्ष्म्या सह वैकुण्ठे निवसति। (२) वासुदेवेत्यादयश्चत्वारो व्यूहाः (३) विभवः (४) अन्तर्यामी (५) अर्चावतारश्च[1]।

वल्लभानुसारं च ब्रह्म मुख्यतः रूपत्रयेणाविर्भवति-(१) कृष्णः; अयं पुरुषोत्तमः अपि उच्यते, स च व्यापिवैकुण्ठे निवसति, स च साधारणवैकुण्ठादुपरि वर्तते। तत्र परमात्मा दिव्यवृन्दावने निजभक्तैः सह स्वकीयानन्तलीलायां संलग्नस्तिष्ठति। (२) अन्तर्यामी (३) अक्षरः।

अनयोः ब्रह्मणः वर्गीकरणे अयं मुख्यभेदो यत् रामानुजस्य परब्रह्म नारायणः सचाधिकशान्तः गौरवपूर्णश्च। वल्लभस्य च परब्रह्म कृष्णः स च लीलामयः, यो निजभक्तैःसह विहरति, क्रीडति, अत्यन्तकोमल-हृदयः। स स्वकीयमहत्त्वमेतदर्थं गोपायति यत्संसारिणो जीवाः तदलौकिकतेजसा अभिभूता न भवेयुः।

अनयोः ब्रह्मजीवजगतां भेदः अग्रे स्पष्टीकरिष्यते।

निम्बार्कवल्लभौ—निम्बार्कवल्लभयोराधिक्येन साम्यम्। उभावपि ज्ञानमार्ग-कर्ममार्गविरोधिनौ, भक्तिमार्गोपदेशकौ, मायावादखण्डकौ वैष्णवौ, जीवात्मानं ब्रह्मणः पृथक् जगतः सत्यत्वं च प्रतिपादयतः। मुक्तावस्थायामपि जीवात्मनो वैयक्तिकता पृथगेव तिष्ठति, कृष्णेन सह अलौकिकानन्दं चानुभवति।

शुद्धाद्वैतमार्तण्डावलोकनेनेत्थं ज्ञायते यन्निम्बार्कसिद्धान्तः अधिकांशतो वल्लभसिद्धान्तेन साम्यमुपैति। एतच्च वल्लभपुरुषोत्तमाभ्यामित्थं स्वीकृतम्—

भेदाभेदप्रतीतिस्तु मध्यमानां प्रकीर्तिता।
अतो हि मध्यमः पक्षः शुद्धाद्वैतानुरोधतः॥

---

१. मम प्रकाशः पंचेति प्राहुर्वेदान्तपारगाः।
परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्॥
अर्चावतारश्च तथा दयालुः पुरुषाकृतिः।
इत्येवं पंचधा प्राहुर्मां रहस्यविदो जनाः॥

यतीन्द्रमतदीपिकायाः प्रकाशटीकायां ८३ पृष्ठे विष्वक्सेनसंहितावचनम्।

तथा—एवं प्रकार ईश्वरः पर-व्यूह-विभवान्तर्याम्यर्चावतारूपेण पंचप्रकारः।

(यतीन्द्रमतदीपिका पृ० ८३)

बोधाय बहुसन्दर्भे गोस्वामिपुरुषोत्तमैः ।
श्रीमदाचार्यचरणैर्यत्र क्वापि प्रदर्शितः ॥

भगवत्पूजाप्रकारे उभयोरिदमन्तरं यन्निम्बार्कः अतिभावुकः स कृष्णेन सह राधायाः तत्सखीनां चापि पूजाक्रीडादिकमभिकांक्षति । वल्लभस्य च पूजाप्रकारः अतिसरलः साधारणश्च तत्र कर्मकाण्डस्याधिक्यम् ।

अनयोरपि ब्रह्मजीवजगतां भेदः अग्रे प्रदर्शयिष्यते ।

मध्ववल्लभो—मध्वाचार्येण द्वैतवादस्य प्रतिपादनं कृतमिति न तस्य कथमपि वल्लभेन तुलना कर्तुं युज्यते । किन्तु एतदिहावश्यमवधारणीयं यन्मध्वो वैष्णव आसीत् इति तेन रामकृष्णयोरुभयोरपि पूजा अभिहिता । तेन शुद्धकृष्णरूपस्यैव पूजोक्ति राधातत्सखीक्रीडादीनां न तेन सह कश्चिन्निर्देशः । वल्लभो मध्वस्यानया धारणया अतिप्रभावितः प्रतीयते ।

## ब्रह्मविषयकः प्रतीयमानसूत्रानुसारि-
## ( बादरायण ) सिद्धान्तः—

परस्परतुलनात्मकः आचार्यपंचकब्रह्मविषयकप्रातिस्विकसिद्धान्तः प्रदर्शितपूर्वः । इदानीं यथास्थलं रामानुजादिभाष्याणां यत्किंचिन्निर्देशपूर्वकं विशेषेण ब्रह्मनिर्देशकसूत्रशांकरभाष्यमनुशीलयता बादरायणसिद्धान्त उपसंह्रियते—

ब्रह्मैव उपनिषदां ब्रह्मसूत्राणां च दार्शनिकताया एकमात्राधारः । बादरायणेन प्रथमसूत्रे 'अथातो ब्रह्मजिज्ञासा' (१।१।१) एवं ब्रह्मणो जिज्ञासा प्रकटिता द्वितीये 'जन्माद्यस्य यतः' ( १।१।२ ) च तल्लक्षणमुक्तम् । एतदिह द्रष्टव्यं वर्तते यद्बादरायणेनेह ब्रह्मणः 'सत्यं ज्ञानमानन्दं ब्रह्म' इति स्वरूपलक्षणमदत्वा तस्य कार्यलक्षणं ( तटस्थलक्षणं ) ददता एतद् द्योतितं यत्तस्य जिज्ञास्यं ब्रह्म अस्य जगतः उत्पादकादि वर्तते । 'शास्त्रयोनित्वात्' ( १।१।३ ) इत्यत्र पुनस्तेनोक्तं यदेतद्ब्रह्मलक्षणं सर्वथा श्रुत्याधारम् । तेन ब्रह्म सर्वथा शास्त्रैकसमधिगम्यमित्यायातम् ।

'जन्माद्यस्य यतः' एतत् जिज्ञास्यब्रह्मणो लक्षणमिति शंकरेणापि उक्तम् बादरायणस्यैतत्कार्यलक्षणप्रदानेनैतत्तात्पर्यं यत् स परम्परानु-

---

१. शुद्धाद्वैतमार्तण्डः १४–१६

गतौपनिषदसच्चिदानन्दस्वरूपप्रतिपादकवाक्यानां भावार्थमात्रमेव स्वग्रन्थे दातुं नैच्छत्, प्रत्युत ब्रह्मसूत्ररचनया तस्येत्तत्तात्पर्यमासीद् यत् वैदिकवाक्यानां समुचितमर्थं दत्वा तद्विरोधं दूरीकुर्वन् तन्महत्त्वं स्पष्टीकुर्यात्।

सांख्यसिद्धान्तो हि बादरायणसमक्षमतिमहत्त्वपूर्णः आसीत्। एतच्चैतेनैव ज्ञातुं शक्यते यत् तेनास्य मतस्य खण्डनमतितीव्रया गत्या कृतं वर्तते। पदे पदे सांख्यसिद्धान्तमाक्षिप्य तेन स्वसिद्धान्तः संस्थापितः। सांख्यसिद्धान्तवादी हि ब्रह्मस्थानीयं पुरुषं कर्तारममत्वा जडप्रकृतिमेव कर्त्रीं मनुते पुरुषं च चेतनं कथयन्नपि निष्क्रियम्। बहवो वेदवेत्तारः अप्यस्यामेव सांख्यविचारधारायां प्रवहन्त आसन्निति एतस्यां परिस्थित्यां सूत्रकारः ब्रह्मणि जगतः कर्तृत्वमुक्त्वा सांख्यस्योक्तविचारधारां निराकर्तुं समुचितममन्यत। एवमेव 'शास्त्रयोनित्वात्' (१।१।३) एतत्सूत्रं रचयित्वा तेनैतद्घोषितं यत् ब्रह्मणः एतज्जगत्कर्तृत्वं सर्वथा श्रुत्याधारम् इति ब्रह्मैव जगतः कर्तृ न कथमपि प्रकृतिः। इत्थमेकेनैव सूत्रेण मनीषिणः सूत्रकारस्य लक्ष्यद्वयं सिद्धम्—एकतः तेन श्रुतिवाक्यसंदेहो दूरीकृतः; द्वितीयतः एष सिद्धान्तः समुपस्थापितो यत् उपनिषत्प्रतिपाद्यपरमार्थसत्ता ज्ञानस्वरूपं च ब्रह्मैव; तदेव च जगतः कर्तृ, इत्थं 'जन्माद्यस्य यतः' (१।१।२) अस्मिन् सूत्रे सद्रूपस्य ब्रह्मणः कारणता प्रदर्शिता।

'ईक्षतेर्नाशब्दम्' (१।१।५) इत्यत्र चेतनस्वरूपस्य ब्रह्मणः कारणतायास्तथा 'आनन्दमयोऽभ्यासात्' (१।१।१२) इत्यत्र चानन्दस्वरूपस्य ब्रह्मणो जगत्कारणतायाः अभिव्यक्तिः। ईक्षणकामयोश्चेतनगुणत्वेन प्रकृत्यादीनामन्येषां तत्वानां जगत्कारणतायाः प्रश्नः स्वयमेवापाहन्यते। एवमेव 'नेतरोनुपपत्तेः' (१।१।१६) एतत्सूत्रमपि चेतनत्वेऽपि जीवस्य कर्तृत्वं वारयति। इत्थं च विदुषा सूत्रकारेण जगतः कर्तृत्वकारणत्वविषयकसन्देहमपाकृत्य सच्चिदानन्द( सच्चित् आनन्द )स्वरूपस्यैकस्यैव ब्रह्मणः कर्तृत्वं कारणत्वं च स्थापितम्, एतेन स्पष्टमेतद् यदस्य जगतः निमित्तमुपादानं चोभयं कारणं सच्चिदानन्दस्वरूपं ब्रह्मैव।

संक्षेपेणेत्थं ब्रह्मविषयिणीं स्वकीयां धारणामभिव्यज्य सूत्रकारेणाग्रे प्रथमाध्यायस्योत्तरार्द्धीयतत्तत्सूत्रेषु एतदप्यभिव्यक्तीकृतं यत् उपनिषत्सु अन्यत्रान्यत्रोपलभ्यमानाः आनन्दमयाकाशप्राणान्तर्यामिप्रभृतयः सर्वे

शब्दा अपि ब्रह्मणो वाचकाः। 'गुहां प्रविष्टौ' इत्यत्र द्विवचनं ब्रह्मजीवयोरुभयोर्निर्देशं करोति। सम्प्रसादशब्दः ब्रह्मवाचकः। अत्रैतद्द्रष्टव्यमस्ति यत्सूत्रकारस्य तात्पर्यमिह शब्दद्वारा केवलं ब्रह्मणो नाममात्रस्य निर्देशो नास्ति, अपि तु तदीयकतिपयगुणानामपि निर्देशो वर्तते। इत्थमेतत्पद्धतिमनुसरता सूत्रकारेण 'अथातो ब्रह्मजिज्ञासा' इत्यत्र प्रतिपादितजिज्ञास्यब्रह्मविषयिणी निजधारणा परिपोषिता।

शंकरेण 'जन्माद्यस्य यतः' इति सूत्रे प्रतिपादितम्—'यतः' इति कारणनिर्देशः' अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्म"[1]। एतेन स्पष्टमेतद् यत् शंकरस्याप्येतदभिप्रेतं यत् सूत्रकारस्य जिज्ञास्यं ब्रह्म सर्वज्ञं सर्वशक्तिमच्चास्ते। अत एव च तत्कर्तृत्वम् अपि न व्याहन्यते। किन्तु शंकरानुसारं जिज्ञासासमन्वयौ द्वावपि निर्विशेषब्रह्मणो द्योतकौ।

'तत्तु समन्वयात्' (१।१।४) इत्यस्मिन् सूत्रे शंकरःकथयति—इदं तु परमार्थिकं, कूटस्थं, नित्यं, व्योमवत् सर्वव्यापि, सर्वविक्रियारहितं, नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावम् + + + अतस्तद् ब्रह्म यस्य जिज्ञासा प्रस्तुता[2]।

'तदनन्यत्वमारम्भणशब्दादिभ्यः' (२।१।१४) इत्यत्र शंकरेणैतत्प्रदर्शयितुं प्रायत्यत यद् ब्रह्मणोऽत्यन्तनिर्विशेषस्वीकारेण 'जन्माद्यस्य यतः' इत्यत्र प्रदर्शिता सूत्रकारस्य प्रतिज्ञा न भज्यते। किन्तु परवर्तिसूत्रेषु प्रदर्शितया ब्रह्ममीमांसया न कथमप्येतत्सूच्यते यत्सूत्रकारस्य तात्पर्यं शंकराभिमतजिज्ञासया तदभिमतशास्त्रसमन्वयेन वा वर्तते।

निम्बार्कस्याप्येतदेव तात्पर्यम्—'परमते तु जिज्ञास्यो दुरुपपादः + + + परमते तु विषयस्य दुर्निरूपत्वेन शास्त्रारम्भो व्यर्थ एव + + + विकल्पासहत्वात्'[3] इत्यादि।

वल्लभेनापि प्रतिपादितम्—'न च येन रूपेण समन्वयो मतान्तरस्थैः विचारितः तथा अग्रेषु सूत्रेषु निर्णयोऽस्ति।[4]

---

१. शां० भा० (ब्र० सू० १।१।२) २. शां० भा० (ब्र० सू० १।१।४)
३. ब्र० सू० वृत्तिः २२, २३ नि० भाष्यम्।
४. तत्रैव अणुभाष्यम् पृ० ११५ (चौ० सं०)

इत्थं सूत्रकारस्य शंकरस्य च ब्रह्मजिज्ञासा भिन्नभिन्ना वर्तते। शंकरस्य ब्रह्मजिज्ञासा न कथमपि सूत्रकारस्य ब्रह्मजिज्ञासां निर्दिशति। एतदनुपपत्तिमुपपादयितुमेव शंकरेण सूत्रकारस्य ब्रह्म विषयकधारणां द्विधा विभक्तुं प्रायस्यत। आनन्दमयाधिकरणस्यारम्भः शंकरस्यैतद्द्विविधधारणायाः स्पष्टतया परिचायकः। शंकरस्य स्वशब्दानुसारमेव बादरायणस्यादिमानि दश सूत्राणि सर्वज्ञं, सर्वशक्तिमत्—एवं जगतः जन्म स्थितिलयकारणमेव ब्रह्म निर्दिशन्ति। तच्च चेतनं न जडप्रकृतिकम्। एवं ब्रह्मसूत्रेषु निम्नांकितरीत्या तेन द्विविधब्रह्मणो निर्देशः कृतः—"द्विरूपं हि ब्रह्म अवगम्यते, नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम् × × एवमेकमपि ब्रह्म अपेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते।" एतदग्रे पुनः स 'अन्तस्तद्धर्मोपदेशात्' (१।१।२०) इत्यत्र कथयति—'अपि च यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते भवति तत्र शास्त्रम् 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादि। सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः। परमेश्वरः उपास्यत्वेन निर्दिश्यते, 'सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरस' इत्यादिना। इत्थं च शंकरेण सगुणनिर्गुणोभयब्रह्मभेदः स्पष्टीकृतः। किन्तु यावत्तस्य निर्विशेषब्रह्मणः प्रश्नः तावत् सूत्रकारद्वारा 'जन्माद्यस्य यतः' इत्यत्र प्रतिपादितब्रह्मणो लक्षणं न तेन सह कमपि सम्बन्धं स्थापयति।

आरम्भणाधिकरणे शंकरस्यैतत्कथनं यत् 'जन्माद्यस्य यतः' इत्यादिसूत्रकारेण सांख्यादिमतनिराकरणायोपन्यस्तम् किन्तु तल्लक्षणं केवलं सगुणमेव ब्रह्म निर्दिशति। तस्येश्वरत्वं, सर्वज्ञत्वं, सर्वशक्तिमत्त्वं चेत्यादयः परमार्थतो ब्रह्मधर्माः वक्तुं शक्यन्ते। अविद्यापरिच्छिन्नमेव हि ब्रह्म ईश्वर-सर्वज्ञ-सर्वशक्तिमदादिशब्दैरुच्चारयितुं शक्यते—'तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वम् सर्वज्ञत्वम्' 'सर्वशक्तिमत्त्वं च परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूपं आत्मनि ईशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते।'[1] शंकरस्यैतत्कथनानुसारं सूत्रकारनिर्दिष्टं ब्रह्म द्योतयति तथा अन्तिमसूत्रम् 'अनावृत्तिः शब्दात्' (४।४।२२) तर्कसंगत्या अपरमेव सगुणमेव ब्रह्म सूचयति। किन्तु एतस्य निर्देशं न किमपि सूत्रमेव करोति नापि च कस्यचिदपि सूत्रस्य

१. शां॰ भा॰ (२।१।१४)

भाष्येण शंकर एव इमं भावं परिपोषयति। अतो नैष सूत्रकाराभिमत-सिद्धान्तः स्वीकर्तुं शक्यते।

सम्पूर्णब्रह्मसूत्रपर्यवेक्षणेन न स्पष्टतया इयं प्रतीतिर्जायते यत् सूत्रकारेण प्रथमाध्यायस्य 'अथातो धर्म जिज्ञासा' इति सूत्रे ब्रह्मणो जिज्ञासा कृता। 'जन्माद्यस्य यतः' इत्यत्र जगत्कारणत्वं तस्यासाधारणं लक्षणमुक्तम्। 'ईक्षतेर्नाशब्दम्'। 'कामाच्चनानुमानापेक्षा' (१।१।१८) इत्यादिषु च जगतः प्रकृतिकारणतां निराकुर्वता 'नेतरोऽनुपपत्तेः (१।१।१६) इत्यादिषुजीवस्य जगत्कारणता निराकृता।

द्वितीयस्मिन्नध्याये सूत्रकारेण एतत्स्पष्टीकृतं यद् ब्रह्मजीवयोरनन्यत्वेऽपि जीवापेक्षया ब्रह्म अधिकम्। एतस्यैतत्कारणं यज्जीवः कस्मिँश्चित्समये आत्मनः अहितं स्वयमेव करोति। तस्य ब्रह्मांशत्वं ब्रह्मणः सम्बन्धेन न स्वातन्त्र्येण। स कर्ता अस्ति तथापि ब्रह्माधीनः।

तृतीयस्मिन्नध्याये सूत्रकारेणैतत्प्रदर्शितं यन्निष्कामव्यक्तिः ब्रह्मज्ञानाज्ञानावाप्तियोग्यं शरीरं कथं प्राप्नोति। तथा चतुर्थाध्याये एतदुक्तं यत् ससाधनब्रह्मज्ञानसाहाय्येन अयं जीवात्मा अर्चिरादिमार्गद्वारा ब्रह्माधिगच्छति। ततश्च स न पुनरावर्त्तते।

एतत्तुनिर्दिष्टचरं यद् यावद् ब्रह्मसूत्राणामनुशीलनस्य प्रश्नस्तावत् शंकरानुसारं निर्विशेषस्य निर्गुणस्य निरुपाधेः, एवं सविशेषस्य सगुणस्य, सोपाधिकस्य च ब्रह्मणः अन्तरं बादरायणसूत्रेषु प्रत्यक्षतया न कुत्राप्युपलभ्यते। अस्य विषयस्य सर्वमहत्वपूर्णसूत्राणि तृतीयाध्यायस्य द्वितीयपादे उपलभ्यन्ते। एतदधिकरणं 'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' इत्यत आरभ्य दर्शनाच्च' (३।२।११-२१) इत्यत्र समाप्नोति। अत्र ब्रह्मणः सविशेषत्वं निर्विशेषत्वमुभयात्मकत्वं वेत्यस्य विवेचनम्। अग्रिमाधिकरणं, 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इत्यतः प्रारभ्य 'प्रतिषेधाच्च'। (३।२।२२-३०) इत्यत्र समाप्नोति, यत्र सविशेषनिर्विशेषोभयात्मकतान्यतमरूपत्वनिषेधपूर्वकमेतन्निर्धारितं वर्तते यद् ब्रह्म नैतावदेव अपि तु एतावतोऽप्यधिकं वर्तते। इत्थं चास्मिन्नधिकरणे रहस्यपूर्णस्य ब्रह्मणो विवेचनम्'।

सर्वप्रथममिदैतद्वैचित्र्यं यदेतानि पूर्वोक्तसूत्राणि स्वविषयानुरूपनामके 'साधनाध्याये' सूत्रकारेण स्थापितानि। किन्त्वेतेषामत्रोपस्थितिवास्तविकताविषयसूचनाय न केनापि भाष्यकारेण लेखनी व्यापारितेति अस्माभिरपि तत्स्थित्यनुसारमेव तानि विवेचयिष्यन्ते। इमानि

सूत्राणि अत्यन्तास्पष्टार्थानि प्रतीयन्ते। वर्तमानोपलब्धभाष्येषु चैतेषां स्वमत्यनुसारं तद्रचनाकारैर्विभिन्ना अर्थाः कृताः। अधिकरणेषु च यत्र कुत्र संग्रन्थनमप्येतेषां विभिन्नरूपमुपलभ्यते।

शंकरेण प्रथमाधिकरणे ( ३।२।११-२१ ) इत्यत्र ब्रह्मणो निर्विशेषत्वं विवेचितम्। तत्र तस्यैतत्कथनं यत् यस्मिन् समये जीवात्मा समस्तोपाधिविमुक्तः संजायते तदानीं स ब्रह्मणा सहैक्यमवाप्नोति। तस्य स्वरूपविवेचनमस्मिन्नधिकरणे श्रुतिवाक्यसाहाय्येन कृतं वर्तते। शंकरस्यैतत्कथनं यत् उभयविधं श्रुतिवाक्यमुपलभ्यते—'सन्त्युभयलिंगाः श्रुतयो ब्रह्मविषयाः, सर्वकर्मा, सर्वकामः,[1] इत्येवमाद्याः सविशेषलिंगाः ( सविशेषब्रह्मद्योतिकाः ) 'अस्थूलमनणुः'[2] इत्येवमाद्याश्च निर्विशेषलिंगाश्च ( निर्विशेषब्रह्मबोधिकाः ) एवमुभयविधब्रह्मविषयकश्रुतिवाक्येषु सत्सु किमासु श्रुतिषु उभयलिंगं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिंगम्। यद्यपि अन्यतरलिंगं तदापि किं सविशेषमुत निर्विशेषम्' इत्येवमाशंक्य शंकरः स्वयमभिधत्ते—न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं चेत्यवधारयितुं शक्यते। यदि चेत्थं कथ्येत यन्निर्विशेषमपि ब्रह्म उपाधिकारणेन सविशेषं संजायते तदप्ययुक्तम्; एकमेव वस्तूपाधिसंयुक्तमिति हेतोः न कदापि परिवर्तितस्वभावं वस्त्वन्तरं भवितुमर्हति। न हि स्वच्छः सन् स्फटिको जपापुष्पालक्तकाद्युपाधियोगादस्वच्छो भवति प्रत्युत स तथैव पूर्वावस्थो वर्तते; अस्वच्छताभिनिवेशस्य भ्रममात्रत्वात्, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। अतश्चान्यतरलिंगपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यम्, न तद्विपरीतम्। सर्वत्र हि ब्रह्मप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादौ अपास्तसमस्तविशेषमेव ब्रह्म उपदिश्यते।

एवं ब्रह्मणो निर्विशेषत्वं निर्दिश्य अग्रे 'न भेदादिति चेन्नप्रत्येकमतद्वचनात्' ( ३।२।१२ ) इति सूत्रे शंकरेण तदेव प्रतिपादितम्। तथा ततः अग्रे विस्तृतां व्याख्यां कुर्वाणः तस्य निर्विशेषत्वमेवोद्घुष्य साकारबोधकवाक्यशंका इत्थं समाहिताः—'अथापि स्यात्, यदुक्तं निर्विकल्पकमेव ब्रह्म नास्य स्वतः स्थानतो वा उभयलिंगत्वमिति तन्नोपपद्यते कस्मात्? भेदात्; भिन्ना हि प्रतिविद्यं ब्रह्मणः आकाराः उपदिश्यन्ते 'चतुष्पाद् ब्रह्म, षोडशकलं ब्रह्म, त्रैलोक्यशरीरवैश्वानर-

१. छा० ( ३।१४।२ ) २. बृ० ( ३।८।८ )

शब्दोदितं ब्रह्म' इत्येवंजातीयकाः। तस्मात्सविशेषत्वमपि ब्रह्मणः अभ्युपगन्तव्यम् + + + अन्यथा हि निर्विशेषमेव भेदशास्त्रं प्रसज्येत'। एतच्चेत्थं समाहितम्—'प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः भावयति शास्त्रम्'। इत्थं ब्रह्मणो निर्विशेषत्वं द्रढयता शंकरेणास्य सूत्रस्य व्याख्यान्ते एतत्प्रतिपादितम्, 'अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम्। भेदस्योपासनार्थत्वादभेदे तात्पर्यात्'।

ततः अग्रे 'अपि चैवमेके' (३।२।१३) एतत्सूत्रम् अभेदबोधनार्थं ततः पूर्वोत्थापितभेदशंकानिन्दार्थं च विरचितं वर्तते—'अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामनन्ति—

मनसैवेदमाप्तव्यं नेह नानास्ति किंचन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति[1]॥

दिव्यो ह्यमूर्तः [2]पुरुषः, इत्येवमादीनि वाक्यानि निष्प्रपंचब्रह्मात्मतत्त्वप्रधानानि। तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्म अवधारयितव्यम्'।

का तदा आकारवद्विषयाणां श्रुतीनां गतिः? इत्यस्य समाहितिः 'प्रकाशवच्चावैयर्थ्यात्' (३।२।१५) इत्यत्रेत्थं कृता वर्तते—यथा सौरः चान्द्रमसो वा प्रकाशो वियद्व्याप्यावतिष्ठमानः अंगुल्याद्युपाधिसम्बन्धात्तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते, एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति। न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति वक्तुं युक्तं प्रमाणत्वाविशेषात्'। भगवता आदिशेषेण परमार्थसारे अप्येतदेवेत्थं प्रतिपादितम्—

यद्वद्दिनकर एको विभाति, सलिलाशयेषु सर्वेषु।
तद्वत्सकलोपाधिव्यवस्थितो भाति परमात्मा[3]॥
जन्मविनाशनगमनागमममलसम्बन्धवर्जितो नित्यम्।
आकाश इव घटादिषु सर्वात्मा सर्वदोपेतः[4]॥

एतदग्रे 'आह च तन्मात्रम्' (३।२।१६) एतदपि ब्रह्मणो निर्विशेषत्वं प्रतिपादयति 'दर्शयति चाथो स्मर्यते च' (३।२।१७) एतदपि श्रुतिस्मृतिप्रामाण्यपुरस्सरं ब्रह्मणो निर्विशेषत्वमेव द्रढयति, तथैव 'अत

---

१. क० (३।१५)  २. मुं० (२।१।२)
३. प० सा० १३  ४. तत्रैव ५१

एव चोपमा सूर्यकादिवत्' तथा 'अम्बुवदग्रहणात्तु न तथात्वम्' (३।२।१८-१९) इमे अपि सूत्रे तेनैव बलेन व्याख्याय शांकरः 'वृद्धिह्रासभाक्त्वम्'...(३।२।२०) इति सूत्रे प्रतिपादयति जलगतं हि सूर्यप्रतिबिम्बं, जलवृद्धौ वर्धते जलह्रासे च ह्रसति, तच्चलने चलति तद्भेदे च भिद्यते इत्येवं जलधर्मानुयायि भवति न तु परमार्थतः सूर्यस्य तथात्वमस्ति एवं परमार्थतोऽविकृतमेकरूपमपि सद् ब्रह्म देहाद्युपाध्यन्तर्भावात् भजते इव उपाधिधर्मान् वृद्धिह्रासादीन् एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामंजस्यादविरोधः । अन्ततः 'दर्शनाच्च' (३।२।२१) इति सूत्रे 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्'' । 'अनेन जीवेनात्मना अनुप्रविश्य'' इत्यादिश्रुतिवाक्य प्रामाण्येन तमेव पक्षं दृढीकृत्य अन्ते 'तस्मान्निर्विकल्पकैकलिंगमेव ब्रह्म न उभयलिंगं न विपरीतलिंगं चेति सिद्धम्' इत्युपसंहरन् ब्रह्मणो निर्विकल्पकत्वमेव स्थिरीकृतवान् ।

## आलोचना—

एतेषां सूत्राणां शांकराभिमता व्याख्या नोपयुक्ता प्रतीयते, एतत्सूत्रार्थानां सामंजस्यं हि सूत्रकारद्वारा प्रतिपादितचरसूत्रार्थैर्न भवति । एतस्मिन्नसामंजस्ये उपेक्षिते अपि नैतदस्वीकर्तुं शक्यते यदेतदीयार्थाः, तत्सम्बद्धाः औपनिषदोक्तयश्च अत्यन्तसुदूराकृष्टतात्पर्याः । तथा हि 'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' (३।२।११) अस्य सूत्रस्य 'सर्वत्र हि' इतिशब्दयोः व्याख्या शांकरेणेत्थं कृता, 'ब्रह्मस्वरूपप्रतिपादनपरेषु, 'अशब्दमस्पर्शम्'...इत्यादिषु निर्विशेषस्यैवोपदेशात्' । किन्तु सूत्राक्षरानुपूर्व्या न कथमप्ययमर्थः अभिव्यज्यते न चापि 'सर्वत्र' हि इत्यस्यायमर्थः अस्मिन्नध्याये अन्यत्र कुत्रापि वा सकलोत्तरमीमांसाशास्त्रे समुपलभ्यते । 'सर्वत्र प्रसिद्धोपदेशात्' (१।२।१) इत्यत्र सर्वतः प्रथममुपलभ्यमानः अपि सर्वत्र-शब्दो नेदमर्थको येन च शांकरपक्षः पुष्टीक्रियेत । इत्थं च तस्य शब्दस्य निर्विशेषब्रह्मप्रतिपादनार्थं तथाभूतमर्थं शांकराभिनिवेश एव निगमयति । किं च ब्रह्मणो निर्विशेषत्वप्रामाण्येन उद्धृतस्य 'अशब्दमस्पर्शम्'...'इत्यादिश्रुतिवाक्यस्योत्तरार्द्धम्' 'अनाद्यनन्तं महतः परं ध्रुवम्' इत्यादि शांकरपक्षवैपरीत्येन ब्रह्मणः सविशेषत्वमेव प्रतिपादयति । एतच्चातिरिच्य एकदा ब्रह्मणो निर्विशेषत्वे

---

१. बृ० २।५।१८ २. छा० ६।३।२

संस्थापिते तदग्रिमसूत्रस्य 'अरूपवदेव हि तत्प्रधानत्वात्' (३।२।१४) इत्यस्य वैयर्थ्यापत्तिः, पूर्वं सिद्धान्तित एव पक्षः अत्रापि पुष्टीक्रियते इति पुनरुक्त्या वैयर्थ्यम्' किं च, अस्थूलमनणु'''इत्यादिप्रामाण्येन निर्विशेषस्यैव ब्रह्मणः सर्वथा स्वीकृत्या तदनन्तरमेव तत्रैव बृहदारण्यके तेनैव ऋषिणा याज्ञवल्क्येन प्रतिपादितस्य तस्यैव ब्रह्मणः प्रशासितृत्व-सूर्याचन्द्रमसद्यावापृथिवीधारकत्व-विज्ञातृत्वादिधर्मसम्पन्नत्वस्य सर्वथा अवहेलनमिति एकतरपक्षस्वीकारः सर्वथा दोषपूर्णः। अतः 'अस्थूलमनणु'''' इत्यादिप्रमाणेन शंकरस्य केवलनिर्विशेषाग्रहो न प्रामाणिकः।

ब्रह्मणो निर्विशेषत्वप्रमाणे शंकरेणोद्धृता, 'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् 'ब्रह्म' एषा श्रुतिरत्यन्तं स्पष्टा। अस्या एतत्तात्पर्यं यन्नामरूपनिर्वाहकत्वं ब्रह्मणो धर्मः येन ब्रह्मणः सविशेषत्वं नितरां स्पष्टं संजायते। किन्त्वेतत्किंचिद् विचित्रमिव प्रतिभाति यत् शंकरः इमां श्रुतिं स्वपक्षस्य (निर्विशेषत्वस्य) पुष्टौ दत्तवान्। मुण्डकोपनिषदः उद्धृता, 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' एषा, श्रुतिरपि ब्रह्मणः सर्वथा निर्विशेषत्वं न प्रमाणयति। 'अमूर्तपुरुषस्य' न कथमप्येतत्तात्पर्यं यत्तस्य कापि मूर्तिर्न वर्तते किन्तु एतदेव तात्पर्यं यत् तस्य कापीयत्तापूर्णा मूर्तिर्न वर्तते। स हि दिव्यो बाह्याभ्यन्तररूपश्चास्ति। इत्थं चैतद्वाक्यमपि निर्विशेषत्वं सर्वथा विरुणद्धि।

अन्तिमं वाक्यं बृहदारण्यकोपनिषदः अस्ति, 'तदेतद् ब्रह्म अपूर्वम् अनपरम् अनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूः[3]' अत्रत्यः 'सर्वानुभूः' एष शब्दः अपि शंकराभिमतसर्वथा निर्विशेषब्रह्मविरुद्धः, यः सर्वानुभविता, यत्र च सर्वानुभवितृत्वधर्मो वर्तते कथं स सर्वथा निर्विशेषो वक्तुं शक्यते? एतदतिरिच्य अस्मिन्नेव प्रसंगे ब्रह्म 'सर्वेषां भूतानामधिपतिः, अयं हरयः अयं वै दश च सह सहस्राणि च बहूनि अनन्तानि' 'इन्द्रो मायाभिः पुरुरूप ईयते' 'रूपं रूपं प्रतिरूपो बभूव' एतदुक्तम्' एतेन स्पष्टमेतद्यत् शंकराभिमतं ब्रह्मणो निर्विशेषत्वं सर्वथा अनुपयुक्तम्।

'प्रकाशवच्चावैयर्थ्यम्' इत्यस्मिन् सूत्रे शंकरेण स्वयं प्रतिपादितं यत् 'न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुम् प्रमाणत्वाविशेषात्'। किन्त्वत्र केवलनिर्विशेषत्वे तदाग्रहः तदुक्तिं न समर्थयति।

---

१. छा० ८।१४।१ २. मु० २।१।१२
३. बृ० २।५।१९

इत्थं चैतत्स्पष्टं यत् याव त्सूत्राणां श्रुतिवाक्यानां च सम्बन्धः तावत् अस्मिन्नधिकरणे शंकरस्य निर्विशेषत्वप्रतिपादनं न न्यायसंगतम्।

द्वितीयाधिकरणस्य (३।२।२२–२०) 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' एतत्सूत्रव्याख्याया उपसंहारः अपि तेन प्रायः एतद्भावार्थकभाष्येणैव कृतः, तस्माद् ब्रह्मावसानोऽयं प्रतिषेधः न अभावावसान इति अध्यवस्यामः। तात्पर्यं चेदं यत् बृहदारण्यकोपनिषदि, 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च मर्त्यं चामर्त्यं च...'[1]। एतदुपक्रम्य पंचमहाभूतानि द्विधा विभज्य तदनन्तरम् पुनः, 'अथात आदेशो नेति नेति' इत्युक्तम्। अग्रे शंकरेण 'तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे' एतदुक्त्वा अन्ते तस्माद् ब्रह्मावसानोऽयं प्रतिषेधः इत्यादि प्रतिपाद्य शंकरेण उक्तोभयरूपं निषिध्य एतत्सूत्रसाहाय्येन केवलचैतन्यब्रह्मण आधारेण स्वकीयाद्वैतवादस्थापनस्य चेष्टा कृता।

एवं श्रुतिवाक्यानुशीलनेन स्पष्टमेतद् यत् उपनिषत्सु द्विविधं वाक्यमुपलभ्यते-सविशेषब्रह्मप्रतिपादकं निर्विशेषब्रह्मप्रतिपादकं च। किन्तु शंकरः सविशेषब्रह्मप्रतिपादकश्रुतिवाक्यानि उपासनामात्रोपयोगीनि कथयति। सा चोपासना अविद्याजन्या। किन्तु शंकरेण केन आधारेण एष सिद्धान्तः स्थापित. अस्य न किमपि प्रमाणम्। अस्य भेदस्य प्रतिपादकं हि न बादरायणस्य किमपि सूत्रम्। किंच, एतद्भेदप्रतिपादनेन शंकरः स्वकीयैतदुक्तेरपि बहिर्भूतः संजातः या तेन 'प्रकाशवच्चावैयर्थ्यात्' इत्यत्रेत्थं निर्दिष्टा—'न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुम्, प्रमाणत्वाविशेषात्। अतश्च यदि केषांचिच्छ्रुतिवाक्यानां महत्त्वहीनत्वमभ्युपगम्येत तदा स्वयं शंकरद्वारा स्थापितनियमानुसारं विरोधात्मकश्रुतिवाक्यानामविदूरीभूते विरोधे तेषु पारस्परिकसामञ्जस्यं नोपतिष्ठेत। एतदेव काठिन्यं बादरायणेन 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (२।१।२६) इति सन्देहमुत्थाप्य 'श्रुतेस्तु शब्दमूलत्वात्' (२।१।२७) इति सूत्रेण समादधता एतत्स्पष्टीकृतं,—'स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकारो गुणी सर्वविद्यः'[2] तथा 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्'[3] येन च तस्य निष्क्रियत्वे निष्कलत्वे अवयवरहितत्वे अपि च जगतोऽभिन्ननिमित्तोपादानकारणत्वं सिध्यति। तस्य सर्वशक्तिमतः परमेश्वरस्य कृते न

---

१. बृ० उ० २।३।१ २. श्वे० ६।१६

३. तत्रैव तदेव

ेकमप्यसम्भवम् । तस्य सिद्धिः केवलेन तर्केण केवलया वा युक्त्या न भवितुमर्हति इति तत्कृते वेद एव निर्भ्रान्तं प्रमाणम् ।

शंकरेण यद्यपि श्रुतेस्तु शब्दमूलत्वादित्यत्र एतत्स्वीकृतं यत् शब्द-मूलं च ब्रह्म शब्दप्रमाणकं नेन्द्रियप्रमाणकं, तद्यथाशब्दमभ्युपगन्तव्यम् , शब्दश्च उभयमपि ब्रह्मणः प्रतिपादयति, 'अकृत्स्नप्रसक्तिं निरवय-वत्वं च' ।

अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥

तस्मात् शब्दमूल एव अतीन्द्रियार्थयाथात्म्याधिगमः । इत्थं ब्रह्मस्व-रूपे अचिन्त्यस्वभावयुक्ते स्वीकृते सूत्रकारानुसारं न कश्चिदपि कार्यकारण-विरोधः अवशिष्यते । एनमेव प्रतीयमानविरोधं स ( १।२।११–२० ) एषु सूत्रेषु निराकृतवान् ।

'तदव्यक्तमाह हि' (२।२।२३) एतत्सूत्रं ब्रह्मणः अव्यक्तत्वं घोषयति । किन्तु न तस्यैषा अबोधगम्यता निर्विशेषत्वहेतुकेत्यग्रेण सूत्रेण, 'अपि च संराधने प्रत्यक्षानुमानाभ्याम्' ( ३।१।२४ ) इत्यनेनैवेत्थं स्पष्टीकृता वर्तते यत्संराधनकाले ब्रह्मणः साक्षात्कारो जायते । ब्रह्मणः सर्वथा निर्वि-शेषत्वे संराधनकाले किं साक्षात् क्रियेत । किंच, एतत्कथनं सर्वथा असंगतं यत् संराधनकाले साक्षात्क्रियमाणमविद्याजन्यम् , शंकरेण हि स्वयमेवायं ज्ञानप्रसाद उक्तः इति तस्य प्रामाणिकत्वमनिर्बाधम् । इत्थं चैतत्स्पष्टं यत्सूत्रकार एतत्स्वीकरोति यद् ज्ञानप्रसादेन भक्त्या वा विना ब्रह्म अव्यक्तम् । ज्ञानप्रसादेन भक्त्या च तदव्यक्तं संजायते इति संराधनकालिकदर्शनं प्रामाणिकम् ।

शंकरानुसारं ब्रह्मणो निर्विशेषता न कथमपि सूत्रकारसम्मता । 'सर्वोपेता च तद्दर्शनात्' (२।१।३०) तथा 'सर्वधर्मोपपत्तेश्च' [ २।१।३७ ] अनयोः सूत्रयोः क्रमशः तस्य सर्वशक्त्युपेतत्व-सर्वधर्मोपपत्तित्वयोः प्रदर्शनमेवैतद्विषयकं प्रमाणम् । 'आत्मनि चैवं विचित्राश्च हि' (२।१।२८) एतत्सूत्रमपि ब्रह्मणो विचित्रशक्तिसम्पन्नत्वमुद्घोषयति ।

'उभयव्यपदेशादहिकुण्डलवत्' ( ३।२।२७ ) एतत्सूत्रमप्येतदेव प्रमाणीकुर्वत् प्रतीयते । निम्बार्कवल्लभयोरप्येतदेव मतम् । 'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' ( ३।२।११ ) इत्यत्र एतदुद्घोषितमस्ति यद् ब्रह्मणः उभयलिंगत्वं नौपाधिकम् । श्रुतिस्मृतिप्रभृतिसर्वशास्त्रेषु हि सर्वत्र

ब्रह्मणः उभयलिंगत्वम्—नित्यशुद्धगुणातीतमुक्तस्वभावत्वम्, सर्वकर्तृत्वं सर्वगुणात्मकत्वं च—इत्थं द्विविधरूपत्वं प्रतिपादितमुपलभ्यते। अत एव निम्बार्केणापि स्वभाष्ये 'सर्वत्र ब्रह्म निर्दोषत्वस्वाभाविकगुणात्मकत्वाभ्यां युक्तमाम्नातम्'[1]। 'उभयव्यपदेशादहिकुण्डलवत्' इति सूत्रे अस्यैव पूर्वोक्तसूत्रस्य सोदाहरणप्रामाणिकता परिलक्षिता कृता प्रतीयते अर्थात् यथा कश्चित्सर्पः ऋजु कुण्डलाकारं चोभयं रूपं स्वाभाविकतया धारयति तथैव रीत्या ब्रह्मापि स्वेच्छानुसारं विविधानि रूपाणि धारयति। न चैष विचारः अद्वितीयः। वल्लभेनाप्येतदेवेत्थं प्रतिपादितं—यथा सर्पः ऋजुरनेकाकारः कुण्डलश्च भवति तथा ब्रह्म स्वरूपं सर्वप्रकारं भक्तेच्छया स्फुरति। तस्मात्सकलविरुद्धधर्माः भगवत्येव वर्तन्ते इति न क्वापि श्रुतिरुपचरितार्थेति सिद्धम्[2]।' उपनिषत्सु एष एव विषयः, 'अपाणि-पादो जवनो[3] ग्रहीता', 'अणोरणीयान्[4] महतो महीयान्', 'तदेजति-तन्नैजति',[5] 'आसीनो दूरं [6]व्रजति,' इत्यादिभिः प्रतीयमानविरोधात्मकश्रुतिवाक्यैरपि स्पष्टीकृतो वर्तते।

एवमभ्युपगमे सर्वश्रुतिविरोधः निराक्रियते तथा तत्तच्छ्रुतिवाक्य-प्रामाणिकतया अचिन्त्यैश्वर्ययुक्तं ब्रह्म तद् ब्रह्म प्रति भक्तानां हृदयेषु अपारभक्त्यंकुरः उत्पद्यते।

रामानुजनिम्बार्कावपि एतेनैव सहमतौ। शंकरस्य निर्विशेषब्रह्मस्य बादरायणसूत्रैः न कश्चिदपि सम्बन्धः प्रतीयते। एतस्यैतदेव प्रमाणं यन्न केनापि वेदान्तवेत्रा अयं शंकरस्य निर्विशेषसिद्धान्तः सूत्रकारस्य सिद्धान्तः प्रतिपादितः।

इत्थं च स्पष्टमेतद् यद् बादरायणानुसारं तदेव निर्विशेषं ब्रह्म सर्व-धर्मयुक्तम्। उपनिषत्सु हि तत् एव एकं ब्रह्म अगणितविरुद्धधर्मयुक्तं प्रति-पादितम् अस्ति। अतो व्यासस्य सत्यवेदानुयायित्वेन, वेदान् प्रत्यत्यन्त-श्रद्धालुतया च न तथाभूतादास्तिकादेतदाशास्यते यदेकवर्गीयं श्रुति-वाक्यं प्रामाणिकं मत्वा स वर्गान्तरीणश्रुतिवाक्यानामप्रामाणिकत्वं स्वीकुर्यात्। आम्, यदा तत्समक्षं किमपि विरोधास्पदं वाक्यमुपगच्छति तदा स श्रुतिवाक्यान्येवाश्रयति। एतच्च तेन 'श्रुतेस्तु शब्दमूलत्वादि-त्यत्र स्पष्टीकृतम्।

---

१. नि० भा० (३।२।११)     २. अ० भा० (३।२।२७)

३. श्वे० ३।१९     ४. तत्रैव ३।२०

५. ईश० ५     ६. कठ० २।२०

इत्थं च बादरायणेनैतत्प्रतिष्ठापितं यत्तस्य जिज्ञासितं ब्रह्म विचित्रशक्तिसम्पन्नं सत्स्वकीयलीलामात्रार्थैव एतज्जगद् रचयति इति तत्तस्य कर्तृ। शंकरस्य एतन्मतं यदेतज्जगन्न ब्रह्मकर्तृकमपितु अविद्याजन्यम्। यतो हि जगदेतद् वैषम्यनैर्घृण्येन परिपूर्णं वर्तते। अत्रापि शंकरः सूत्रकारपद्धतेर्बहिर्भूतोदृश्यते। एतस्य विवेचनं 'सूत्रकारेण' 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्'···इत्यस्मिन् सूत्रे कृत्वा अन्ते जगत्प्रवाहस्य अनादितां प्रमाणीकुर्वता जीवकर्मानुसारमेव ब्रह्मणा तत्फलं दीयते इति स्पष्टीकृतम्। अत्र अयं प्रश्नः समुपतिष्ठते यद् 'यदि जगत्प्रवाहः अनादिस्तदा ब्रह्म रचनामेव कस्य करोति यस्य प्रतिपादनं 'जन्माद्यस्य यतः' इत्यत्र कृतं वर्तते' इति। तस्य समाधानं बादरायणेन संक्षिप्त्या 'उपपद्यते चाप्युपलभ्यते च' ( २।१।३६ ) इति सूत्रेण 'अजो नित्यः शाश्वतोऽयं 'पुराणः' इत्यादिश्रुतिवाक्यैश्च कुर्वता 'सर्वधर्मोपपत्तेश्च' ( २।१।३७ ) इति सूत्रद्वारा ब्रह्मणः सर्वधर्मोपपन्नता स्पष्टीकृता। इत्थं प्रत्येकासामंजस्योपस्थितौ सूत्रकारः श्रुतिवाक्याश्रित्या तन्निरास्थत्। शंकरस्तु एवंभूतस्थले अविद्यामाश्रयति तन्मते तु वैषम्यनैर्घृण्ययोः कश्चित्प्रश्न एव न समुपतिष्ठते। यतो हि ब्रह्मकर्तृत्वमाविद्यकमिति तत्फलदातृत्वमप्याविद्यकम्; जीवात्मा अपि च अविद्याजन्यः इति ब्रह्मप्रदत्तसुखदुःखादिफलभोक्तृत्वमप्याधिकांशतः अविद्याजन्यम्। किन्तु ब्रह्म कथमविद्यया सम्बध्यते अस्योत्तरं सूत्रेषु न कुत्रापि समुपलब्धं भवति शंकरेणापि नास्य कश्चिद् हेतुः प्रदर्शितः।

निष्कर्षः—एतत्सर्वविवेचनेनैतत्समायातं यद्बादरायणेन यस्य ब्रह्मणः जिज्ञासा कृता यस्य च श्रुतिवाक्यैः समन्वयः प्रदर्शितः तत् सर्वधर्मोपपन्नम्,[2] सर्वशक्तिसम्पन्नम्,[3] तच्च संसारस्य स्वतंत्रं[4] कर्तृ, [5]संहर्तृ च। तच्च जीवात्मदोषमुक्तम्,[6] अदृश्यत्वादिगुणयुक्तं[7] च। '[8]तद्रूपवत्, [9]अन्तर्यामि, प्रकृतिमायाऽविद्याभिः, तद्गुणैः, तत्सम्बन्धैश्च

१. कठ० १।२।१८ २. सर्वधर्मोपपत्तेश्च ( २।१।३७ )

३. सर्वोपेता च तद्दर्शनात् ( २।१।३७ )

४. जन्माद्यस्य यतः ( १।१।२ )

५. अत्ता चराचरग्रहणात् ( १।२।९ )

६. संभोगप्राप्तिरिति चेन्न वैशेष्यात् ( १।२।८ )

७. अदृश्यत्वादिगुणको धर्मोक्तेः ( १।२।२१ )

८. रूपोपन्यासाच्च ( १।२।२३ )

९. अन्तर्याम्यधिदैवादिषु०···( १।२।१८ )

[1]रहितमिति निर्गुणम् । आनन्दमयं च [2]तत् । निषेधात्मकश्रुति-वाक्यानि तस्मिन् लौकिकगुणानां निषेधं कुर्वन्ति न तु दिव्यगुणानाम् । स्वकीयलीलामात्रायैव[3] तद् आत्मानं जडजीवात्मकजगद्रूपे परिवर्तयति[4] तथापि [5]निरवयवं तिष्ठति । जीवात्मभ्यस्तत्तत्कर्मानुसारं तत् फलं प्रयच्छति किन्तु न तदधीनम् । ईश्वरावस्थायां तत्र वैषम्यनैर्घृण्यादि-दोषैः संयुज्यते । तच्च केवलं शब्दमूलकम् । अतयः तत सर्वव्यापकं प्रतिपादयन्ति । अस्य प्राप्तौ जीवात्मनः पुनरावृत्ति[6] र्न जायते । तच्चै-कमनाद्यनन्तं च । दृश्यमानमदृश्यमानं च सर्वमेव तत्, वाचो मनसो वा तदगोचरम् । शंकरस्य ब्रह्मविषयकः नेति नेतीति निषेधात्मकसिद्धान्तः बादरायणस्य न केनापि सूत्रेण समर्थ्यते । तस्य सिद्धान्तः नेति नेतीति अभूत्वा 'ब्रह्मैवेदं [7]सर्वम्' 'आत्मैवेदं सर्वम्' इति प्रतीयते ।

---

१. प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ( ३।२।२२ )
२. आनन्दमयोऽभ्यासात् [ १।१।१२ ]
३. लोकवत्तु लीलाकैवल्यम् [ २।१।३३ ]
४. आत्मकृतेः परिणामात् [ १।४।२६–२७ ]
५. श्रुतेस्तु शब्दमूलत्वात् [ २।१।२७ ]
६. अनावृत्तिः शब्दात् अनावृत्तिः शब्दात [ ४।४।२२ ]
७. मुं० २।२।१२ ८. छा० ७।२५।२

# सप्तमः अध्यायः

## ( बन्धो मोक्षश्च )

### परिचयः—

ब्रह्मसूत्रप्रमुखभाष्यपंचकानुसारं ब्रह्मजीवजगदादिविषयो गताध्यायेषु निरूपितः । तत्तद्विषये बादरायणस्यापि प्रतीयमानं मतं सयुक्तिश्रुति-प्रामाण्येन प्रदर्शितम्, किन्तु न केवलं ब्रह्मसूत्रालोचनात्मकविषये अस्मिन् निबन्धे एव अपि तु सर्वस्मिन्नेव दर्शनशास्त्रे बन्धमोक्षस्वरूपकारण-विवेचनमन्तरेण तत्सर्वमेव पूर्वोक्तमपूर्णमेव स्यादिति प्रमुखभाष्यकारा-भिमतबन्धमोक्षविवेचनपूर्वकं बादरायणोक्तब्रह्मसूत्राभिमतमोक्षः अस्मिन्न-ध्याये निरूपयिष्यते ।

मायाचिदचिदादिविवेचनं तत्तद्भाष्यकाराभिमतं पूर्वं कृतम् । तत्र मायया परिणामेन च सह जायमानः चितः सम्बन्धः स एव बन्धः संसारबन्ध इति भावः । स च अहमज्ञः, अहं देही, इत्येवमनुभूयते । तन्मूलक एव च अयं सुखदुःखानुभवः । तथा च श्रुतिः—'न ह वै सशरीरस्य सतः 'प्रियाप्रिययोरपहतिरस्ति'[1] । तत्र पदार्था एव प्रत्येकं सुखदुःखमोहस्वरूपाः इति सांख्याः पातंजलाश्च । एतत्तेषां तात्पर्यं यद् भोक्तुः शुभकर्मोदये पूर्वसंस्कारवशात् पदार्थगतः सुखरूपो गुणो दुःख-मोहावभिभूय प्रादुर्भवति । अशुभकर्मोदये च दुःखरूपो गुणः इतराव-भिभूय प्रादुर्भवति द्वयोरपि कर्मणोरनुदये मोहः प्रादुर्भवति । वेदान्तिनां नये तु नैते पदार्थाः सुखदुःखमोहस्वरूपाः किन्तु तत्प्रयोजकाः । सुखा-दयस्तु मनसो वृत्तिविशेषाः । ते च पूर्वसंस्कारवशात्तत्तत्पदार्थज्ञानात् तथा तथा आविर्भवन्ति तिरोभवन्ति च ।

सुखदुःखयोरसंस्पर्श एव च मोक्षः । तत्स्वरूपस्य तु विभिन्नमता-नुसारं भिन्नत्वेऽपि सर्वेषां सिद्धान्तः प्रायः अत्रैव पर्यवस्यति । इत्थं च मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगमो मोक्ष इत्यद्वैतवादिनाम्, सर्वकर्तृ-व्यतिरिक्तानां सर्वज्ञत्वादीनां परमात्मगुणानां प्राप्तिर्याथात्म्येन भगव-त्स्वरूपानुभवश्च मोक्ष इति रामानुजीयानाम्, जगत्कर्तृत्वलक्ष्मीपतित्व-

---

1. छा० ८।१२।१

श्रीवत्सप्राप्तिरहितं दुःखामिश्रं पूर्णं सुखं मोक्ष इति माध्वानाम्, एतदद्वैत-द्वैतादिमतमेतत्तात्पर्यकमेव।

## हेतुविवेचनम्—

तत्र बन्धमोक्षहेतुदुःखसुखस्पर्शस्य आहारनिद्रादिभिः सह प्राणिमात्र-सामान्ये अपि देहेन्द्रियविशिष्टो मनुष्य एव। एवंभूतो विशिष्टः प्राणी यस्मिन्नेका नैसर्गिकविशिष्टता वर्तते यया स प्राण्यन्तरापेक्षया गण्यते, मनुष्यस्य सा विशेषता कठोपनिषदा इत्थं निर्दिश्यते। 'श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः' श्रेयःप्रेयसोर्विवेक एव मनुष्यस्य वैशिष्ट्यमिति भावः। अनेनैव कारणेन अन्याम्यप्राण्य-पेक्षया मनुष्यो श्रेष्ठः अवबुध्यते। अनयोः प्रेयःश्रेयसोः परिभाषा भगवता शंकरेण [1]गीताभाष्ये इत्थं प्रतिपादिता वर्तते 'विद्याविषयं श्रेयः प्रेयस्तु अविद्याकार्यम्'। इत्थं स्त्रीपुत्रधनादिप्रियपदार्थानां नाम प्रेयः, मानवमात्रवास्तविककल्याणस्वरूपमोक्षस्य च नाम श्रेयः।

अगणितवारान् मानवात्मनो ध्वनिः तदसत्प्रवृत्तीः विरुणद्धि, मान-वीयवैषयिकप्रवृत्तिस्तं प्रेयः प्रति समाकर्षति। आध्यात्मिकप्रवृत्तिश्च तं श्रेयः अनुसंकेतयते। तथापि सर्वदैव सः प्रेयसः अपेक्षया श्रेयः एव न गृह्णाति। अज्ञानी तु सर्वदैव प्रेय एव वृणीते तस्मादेव च सुखमवाप्तु-माशास्ते। किन्तु ज्ञानी जनः श्रेय एव आधिक्येनावगत्य तदेव वृणीते श्रेयसः स्थानं प्रेयसे दत्वा न कथमपि कस्यापि सुखसंभवः। प्रेयो हि बन्धहेतुः श्रेयश्च मोक्षहेतुः।

श्रेयश्च मनुष्यस्य जीवनाचारयोः परमः पुरुषार्थः। मनुष्यश्च यावत्क-र्तव्याकर्तव्यविवेकं कर्तुं समर्थः तावदेव मनुष्यः। विनष्टे च तत् कर्तव्याकर्त्तव्यविवेके सः अपि तत्क्षणमेव मनुष्यपदवीतो विभ्रश्यति इति तदानीं स न पुरुषार्थयोग्यो नापि च तदधिकारी आकलय्यते 'तावदेव पुरुषो यावदन्तःकरणं तदीयं कार्याकार्य विवेकयोग्यं तदयो-ग्यत्वे नष्ट एव पुरुषो भवति, पुरुषार्थायोग्यो [2]भवति'।

श्रेयः प्रेयसः सर्वथा भिन्नम्। तद्विवेक एव च मानववैशिष्ट्यम्

---

१. गीता शांकर भाष्यम् १३।२

२. तत्रैव १२।६२ (अत्र पुरुषार्थशब्दो वेदान्तसिद्धान्तमुक्तावल्यां प्रकाशा नन्देनैव परमपुरुषार्थे प्रयुक्तः)

यश्च लौकिकाभ्युदयाकांक्षी स प्रेयः प्रत्येव प्रवर्तते। अमृतत्वाभिलाषी तु श्रेयः प्रति प्रवर्तते—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयः ते नानार्थे पुरुषं सिनीतः।
तयोः श्रेय आददानस्य साधुर्भवति हीयतेऽर्थात् य उ प्रेयो [1]वृणीते॥
तथा, 'श्रेयः प्रेयसोऽभ्युदयामृतत्वार्थी पुरुषः [2]प्रवर्तते।

तत्र श्रेयः सत्यम्, प्रेयश्च अविद्याजन्यत्वान्मिथ्येति यः प्रेयःपरित्यागपूर्वकं श्रेयः अनुप्रवर्तते स कल्याणमवाप्नोति तदितरश्च ततो वञ्च्यते—

'तयोर्हित्वा अविद्यारूपं प्रेयः, श्रेय एव केवलमाददानस्योपादानं कुर्वतः साधु शोभनं शिवं भवति। यस्त्वदूरदर्शी विमूढोऽसौ नित्यात् पारमार्थिकात् पुरुषार्थात् [3]'प्रच्यवते'।

प्रेयःपदार्थः क्षणिकः इति तन्निमित्तकं सर्वसुखमपि क्षणिकम्। सुखं तु महत्तममपि क्षीणं संजायते इति स्वर्गसुखमपि अस्थायि, किं ततः विषयोपभोगसुखम्; 'क्षीणे पुण्ये मृत्युलोकं विशन्ति' एतदस्यैव द्योतकम्। भौतिकपदार्थैरैश्वर्यैश्च मनुष्यो न कदापि सन्तुष्टः संजायते। तानि हि सर्वाणि परिमितानि कल्यवर्तीनि, स्वल्पातिस्वल्पानि चेत्यल्पादधिकाय तृष्णा उत्पद्यते। सैव च तृष्णा सर्वानर्थमूलम्, अल्पस्याधिकतृष्णाहेतुत्वात् तृष्णा च दुःखबीजम्[4] 'अधिकाधिकसम्पत्तिस्त्रीपुत्रादिप्राप्तिः मनुष्याय न शाश्वतं सुखं प्रयच्छति 'न वित्तेन तर्पणीयो मनुष्यः'[5] अतः अनन्तात्मानुभव एव शाश्वतसुखोपलब्धये एकमात्रं साधनम् 'यो वै भूमा तदेव [6]सुखम्'।

आत्मज्ञानादतिरिक्ते नान्यत्र कुत्रापि निरतिशयश्रेयः समवाप्तिः सम्भवति। अतः शाश्वतानन्देच्छुना साधकेन, विगतविषयमृगतृष्णेन भूत्वा अनन्तात्मानन्दानुभवावाप्तये सततं चेष्टितव्यम् 'नान्यदात्मज्ञानान्निरतिशयश्रेयः साधनम्, तस्माद् बाह्यविषयप्रीतेः क्षणिकायाः इन्द्रियाणि निवर्तयेत् आत्मनि अक्षय [7]सुखार्थी।

---

१. कठ० १।२।१  २. तत्रैव शां० भा०
३. शां० भा० ( क० उ० १।२।१ )
४. शां० भा० ( छा० उ० ७।२३।१ )
५. कठ० उ० १।१।२७  ६. छा० ७।२३।१
७. शा० भा० ( गी० ५।२१ )

अन्यान्यप्राणिनः प्रेय एव अनुवर्तन्ते जीवनधारणाय इन्द्रियाणां तृप्तये च ये यदावश्यकमवगच्छन्ति तदेव विना विचारमनुधावन्ति, इत्थं च प्रेयसः प्राप्तये अप्रेयसः परित्यागायैव च तेषां कर्मप्रेरणा भवतीति तद्विपरीतम् अप्रेयसः संयोगः प्रेयसश्च वियोग एव तेषां कृते दुःखम्' तेषां सर्वे रागद्वेषादयः प्रेय एव निमित्तीकृत्य प्रकटीभवन्ति श्रेयःस्वरूपम् एतस्मात्सर्वथा भिन्नम्। प्राणिसाधारणचेतश्च न तदनु विकसितं संजायते।

मानवमानसं यतो यतो विकसति तावदेवोत्तरोत्तरं तत्र श्रेयःप्रेयसोर्भेदज्ञानं स्पष्टं संजायते। तस्य बुद्धिविकासस्य निम्नस्तरेषु मानवोचितश्रेयोलिप्सापेक्षया अन्यप्राणिनामिव प्रेयोलिप्सैव आधिक्येन प्रवर्धते। एतदेव कारणं यन्मनुष्यः प्रायः श्रेयः परित्यज्य प्रेयः अनुधावति किन्तु तदानीमपि स श्रेयःप्रेयसोर्मध्ये भेदमवश्यमेवावबुध्यते। किंच, एको मनुष्यो यच्छ्रेयः अवबुध्यते अन्यस्तदेव अश्रेयः आकलयति'। किं बहुना, स एवैको मनुष्यो यद्वस्तु एकदा श्रेयः आकलयति तदेवान्यदा अन्यावस्थायां वा अश्रेयः अवबुध्य परित्यक्तुं शक्नोति तथापि तयोर्भेदः तद्धृदये सदा तरंगायते। श्रेयःप्रेयसोश्च द्वन्द्वोपस्थितौ एव मानवान्तःकरणे एको नैतिक आध्यात्मिकश्च संघर्षः समुत्पद्यते। एतद्द्वन्द्वकारणेनैव मनुष्यजीवने अनेकसमस्याः सदा समुद्भवन्ति। अनेनैव कारणेन तज्जीवनं साधनामयं भवति। अन्यप्राणिषु श्रेयः प्रेयसोर्न द्वन्द्व इति न ते साधनाधिकारिणः।

मानवप्रकृतौ च साधारणप्राणिप्रवृत्तिमानवोचितप्रेरणयोरुभयोर्वर्तमानत्वेन मनुष्यो न प्रेयो बन्धनं परित्यक्तुं समर्थः नापि च श्रेयस आदर्शमस्वीकर्त्तुं पारगः इत्थं प्रेयः श्रेयसोः सामंजस्यं स्थापयितुमशक्नुवतस्तस्य हृदये वर्तमानः प्राकृतिकसंघर्षः न चिरं प्रशाम्यति।

मानवबुद्धिः श्रेयसः आदर्शं निरूपयन्ती आदौ प्रेयस्येव श्रेयः अनुसन्धत्ते; एवमेतत्सिद्धान्तआयाति यत्सुखमेव वास्तविकं श्रेयः किन्तु सुखमेव दुःखमिश्रितमस्थायि च भवति तावदेव तदश्रेयः इति स्थायि, गम्भीरम् अमिश्रितं च सुखमेव श्रेयः। नान्यत् किंचित्। प्रेयसश्च श्रेयसः स्थाने स्थापनेन न कदापि शान्ति-प्रीति-साम्यप्रतिष्ठा अपि तु वैषम्यप्रतिद्वन्द्वितादीनामेवाभिवृद्धिः।

किन्त्वस्य श्रेयसः प्राप्तिः कुतो भवितुं सम्भवतीति प्रश्ने इदमेव महर्षिसामान्यकथनं यत् मनुष्याणां प्राणेषु प्रेयोरहितस्य श्रेयसः अनु-

संधित्सा उत्पादिता तत एव मनुष्यः श्रेयः सन्धानमपि प्राप्तुं शक्नोति। तदेव च परमं चरमं च सत्यम्। तस्य ज्ञानेन च न किमप्यन्यद् ज्ञातव्यमवशिनष्टि तस्य प्राप्तौ च नान्यत्किमपि प्राप्तव्यमवशिनष्टि। तज्जिज्ञासैव च वास्तविकी वेदान्तविषयिणी ब्रह्मजिज्ञासा तामेव च बादरायणः 'अथातो ब्रह्मजिज्ञासा' इत्यत्र प्रारभ्य 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इत्यत्र पर्य्यवसाययन् तत्परमचरमतत्त्वाधिगतौ एव ज्ञानस्य परमसार्थकता, कर्मणश्चैकान्तिकपर्य्यवसानम्, भोगस्य चात्यन्तिककृतार्थता। एवं सर्वेषां भावानामेकस्मिन् महाभावे नित्यप्रतिष्ठया प्रेयःश्रेयसोः सामंजस्यं च वर्तते।

चतुर्धा विभक्ते इमे एव प्रेयःश्रेयसी अर्थ-धर्म-काम-मोक्षस्वरूपे मानवजीवनस्य मुख्यलक्ष्यपुरुषार्थत्वेन भारतीयशास्त्रेषूपदिश्येते। मोक्षश्चात्र अन्तिमो मनुष्यजीवनस्य सर्वश्रेष्ठश्च पुरुषार्थो बुध्यते। अत एवायं परमपुरुषार्थ उक्तः। बादरायणेन तु 'पुरुषार्थोऽतः शब्दादिति बादरायणः' ( ३।४।१ ) इत्यत्र पुरुषार्थशब्दःपरमपुरुषार्थे प्रयुक्तः, किन्तु शास्त्रान्तरेषु पुरुषार्थपरमपुरुषार्थयोः पूर्वोक्तविभागो दृश्यते।

जीवनस्य स्थितिः कतिपयसाधनेषु निर्बिभर्ति। तत्र मानवजीवनसाधनेषु भोजनवस्त्रगृहादि मुख्यम्। सामूहिकरूपेण तदेव धनं सम्पत्तिर्वोच्यते। सम्पत्तिर्लब्धापि विनश्यतीति प्रकृत्या एषापि मनुष्यस्येच्छा भवति यत् सामाजिकव्यवस्था एवंभूता भवेत् येनजीवनसम्पत्त्योः सुचारुतया रक्षायां न कापि बाधा भवेत् आवश्यकतानुसारं सम्पत्तिश्चार्ज्येत, किंच, मानवमात्रस्य इयं प्रबलतमेच्छा भवति यदहं स्वास्थ्यसम्पत्त्योरधिकाधिकोपयोगं कुर्याम्। एतदर्थं सम्पत्तेरुपार्जने तद्रक्षणव्यवस्थादिषु च परिवर्तनं भवति किन्तु इच्छाया मूलरूपं तथैव शाश्वतं तिष्ठतीत्येतज्जीवस्य प्रथमलक्ष्यापरनामा अर्थरूपः पुरुषार्थः उच्यते।

प्राणिमात्रेषु प्रायः एवंभूतैवान्याप्येका प्रबलेच्छा भवति या कामेच्छोच्यते एतत्संलग्नैव सन्तानेच्छा भवति यत्र पितरौ आत्मनः रूपान्तरं दिदृक्षेते। यथा आत्मनः स्वास्थ्यसम्पत्त्योर्विकासस्य प्रबलेच्छा भवति तथैव सन्तानस्यापि क्रियते। एष पुरुषार्थः कामः कथ्यते।

परिस्थितिविशेषेषु मनुष्यः समाजाद् बहिस्तिष्ठतु नाम कंचित् कालम्। किन्तु सामाजिकत्वेन स समाजे एव स्थातुमिच्छति, स एव च तस्मै रोचते। किंच, मनुष्यस्वभावस्य सन्ति कतिपयप्रवृत्तयो याः समाजे एव सफलाः सम्भाव्यन्ते। तद्विकासावसराप्राप्तौ तु मनुष्य-

चरित्रमपूर्णमेव स्यात्। दयोदारतासहानुभूतिसहिष्णुतादिगुणा एवंभूता गुणा येषां विकासो न समाजादन्यत्र कुत्रापि सम्भवति। यतो हि सर्वे एव स्वस्वार्थकामसिद्धिं वांछन्तीति अधिकाराणां कर्तव्यानां च शृंखलाः संजायन्ते। तत्र यदन्यैरस्माभिः सह कर्तव्यं, यच्चास्माभिरन्येभ्यो लभ्यं तदस्माकमधिकारः। यच्चास्माभिरन्यैः सह कर्तव्यं यच्चान्यैरस्मल्लभ्यं तदस्माकं कर्त्तव्यं किन्तु कर्तव्यमेव अधिकारं रक्षति। अतः सज्जनेनावश्यं स्वकर्तव्याधिकारौ विचारयितव्यौ।

मानवहृदये निजकर्तव्यावबोधनस्य परिपालनस्य च दृढभावनासुस्थितौ आत्मार्थकामयोः स्थानमप्रधानं कर्तव्यपालनस्य च तत् श्रेष्ठं संजायते। तत् कुर्वंश्च यो निजार्थकामौ यावन्मात्रायामेव विस्मर्त्तुं शक्नुयात् तावन्मात्रायामेव कर्तव्यपालने स सफलो भवेत्। इत्थं च कर्तव्यावगतिस्तत्पालनं च एतद्द्वयेन जीवनस्य प्रधानेन लक्ष्येण भवितव्यम्। अयं पुरुषार्थो धर्मः।

जिज्ञासा अस्माकं चित्तस्य स्वाभाविको धर्मः। अहं कः? किमिदं कुतश्चोत्पन्नमेतज्जगत्? क मया सर्वैः पदार्थैश्चान्ते गन्तव्यम्? एतत्सर्वातिरिक्तमपि किमपि चेतनं वर्तते न वा? एवंभूता विचाराः प्रकृत्या मनसि उत्पद्यन्ते तेषां समाधानस्य प्रबलेच्छा च जायते। एतत्सर्वविधाज्ञानस्य ज्ञानेनापसृतिः। जगतः, स्वस्य च रूपस्य परिचितिरेतन्मनुष्यस्य श्रेष्ठतमं लक्ष्यमित्ययं मोक्षः परमपुरुषार्थो वा कथ्यते इयमात्मनः सा परिस्थितिर्यत्र स त्रैलोक्यं तद्वैभवं तदन्तर्निविष्टं ब्रह्म च समवाप्नोति किन्तु न सारल्येन अपि तु आत्मानं विनाश्यैव।

पुरुषार्थचतुष्टयस्येयं संक्षिप्तातिसंक्षिप्ता रूपरेखा। तत्राद्यत्रयस्य प्रेयोवर्गे चतुर्थस्य च श्रेयोवर्गे स्थितिः। दार्शनिकदृष्ट्या विभिन्नैर्दार्शनिकैर्धर्ममोक्षयोः स्व-स्वसिद्धान्तानुसारं विभिन्नानि लक्षणप्रयोजनान्युक्तानि। तथापीहास्माकं ब्रह्मसूत्रभाष्यकारपंचकेनैव कार्यं तेषां च मुख्यतो मोक्षेणैव सम्बन्धः। स च ब्रह्मसूत्रस्य चतुर्थाध्याये विवेचितः इति तन्मतानुसारं मोक्षसिद्धान्तम् पार्थक्येन विवेचयद्भिर्बादरायणमतेन तदुपसंहारः क्रियते।

## शंकरः—

तत्र प्रथमपादे जीवन्मुक्तेर्वर्णनम्। ब्रह्मज्ञाने संजाते फलभोगरूपकार्यप्रारम्भात्पूर्वमेव[1] पूर्वकृतपुण्यपापयोर्नाशो भवति। ब्रह्म-

---

1. ब्र० सू० ४।१।१३–१५

ज्ञानानन्तरं यत्कर्म क्रियते न तद् ब्रह्मविदं स्पृशति । ब्रह्मज्ञानिनः प्रारब्धकर्मणां यावन्न विनाशः तावत् स शरीरं धारयति । कर्मभोगानन्तरं च 'शरीरविनाशे परमपदं सम्पद्यते । अग्निहोत्रादीनि च नित्यकर्माणि ब्रह्मविदेतदर्थं करोति यत्तानि ब्रह्मज्ञानावाप्तौ[2] उपयोगीनि। साधारण्येन सूत्रकारस्य अयमेव सिद्धान्तः किन्त्वयं सिद्धान्तः शंकरमतेन सर्वथा विरुद्धः । तस्येदं कथनं यत् कर्म शरीरादि च प्रत्येकमविद्याजन्यम् । ब्रह्मज्ञानेन अविद्या विनश्यति अतः अविद्याया विनाशे कारणकार्यानन्यतासिद्धान्तानुसारमविद्याकार्यस्वरूपाणां शरीर·कर्मादीनामपि चावश्यं विनाशेन भवितव्यम् ; न हि कारणाभावे कथमपि कार्यस्य स्थितिः सम्भवति । किन्त्वेवं स्वीकारे जीवन्मुक्तेरसंभावना स्पष्टा संजायते । विद्योदये हि अविद्यारूपं कारणं निजकार्यशरीरादिनैव विनश्यति, ब्रह्मविच्च तल्लक्षणब्रह्मपदवीमवाप्नोति । यद्येषा परिस्थितिर्न सर्वथा अस्मदनुभवविरुद्धा स्वीक्रियेत तदा विकल्पद्वयं समक्षमुपतिष्ठते पूर्णरूपेण ब्रह्मज्ञानावाप्तेरभावः येन न कथमपि जीवन्मुक्तिः सम्भवति; अथ च यदि ब्रह्मज्ञानावाप्तिः संजाता तदा शरीरादि, यच्चाविद्याविनाशानन्तरमपि स्थितं वर्तते, न अविद्याकार्यम् । एतेनैतत्प्रतिभाति यत् शरीरादिस्थितिर्ब्रह्मज्ञानानन्तरमपि भवति । अन्तरं तु केवलमेतदेव यत् ब्रह्मज्ञानानन्तरं ब्रह्मविद् कर्मभिस्तद्धेतुकशरीरादिभिश्च निर्लिप्तः तिष्ठति । नूनं स कर्म करोति किन्तु तानि कर्माणि तस्याभूत्वा ब्रह्मण एव भवन्ति ।

अत्र एतदवधातव्यं वर्तते यत्सूत्रकारेण 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (४।१।१३) एतस्मिन् सूत्रे अश्लेषशब्दः प्रयुक्तः । एतेनैतत्तस्य तात्पर्यं यत् ब्रह्मविदि न कथमपि कर्म प्रभवति । स सर्वथा असंगः संजायते । इत्थं यद्यपि ब्रह्मविद् जीवति, प्रत्येकं कार्यमपि करोति किन्तु सत्कर्माणि असत्कर्माणि वा न तं श्लिष्यन्ति । स प्रारब्धकर्माणि भोक्तुमेव प्राणिति । जीवन्मुक्तविषये सूत्रकारस्य इयमेव धारणा प्रतीयते । शंकरेण स्वयमेतन्निर्दिष्टं यत् एष सगुणविद्यायाः प्रसंगः । निर्गुणविद्यायां चैतत्कथनस्यावश्यकतैव न वर्तते—'सगुणासु तावद्विद्यासु विद्यते एव विधानम्·········निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति तथाप्यकर्त्रात्मबोधात् कर्मप्रवाहसिद्धिः[3] ।

---

१. भोगेन त्वितरे क्षपयित्वा सम्पद्यते ( ब्र. सू. ४।१।१९ )

२. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ( ब्र. सू. ४।१।१६ )

३. शां० भा० ( ब्र० सू० ४।२।१३ )

छान्दोग्योपनिषद्येतत्प्रतिपादितं वर्तते, 'यथा पुष्करपलाश आपो न श्लिष्यते एवमेवंविदि कर्म न [1]लिप्यते', 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते । य एतदेवं विद्वान् अग्निहोत्रं[2] जुहोति'; तथा,

'क्षीयन्ते सर्वकर्माणि तस्मिन् दृष्टे [3]परावरे' ।
एवं 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन'[4] ॥

इत्यादिश्रुतिस्मृतिष्वपि ज्ञानोत्तरकालकृतपापकर्मभिर्ज्ञानिनो निर्लिप्तता स्पष्टतया प्रतिपादिता वर्तते । अतः श्रुतिस्मृतिषु ब्रह्मज्ञानानन्तरं लोकसंग्रहार्थं क्रियमाणव्यावहारिकचेष्टायां संजायमानानुषंगिकपापानां तेन ( ज्ञानिना ) सह सर्वथा असम्बन्धस्य पूर्वकृतपापानां सर्वथा विनाशस्य च कथनात् एतदेव निश्चीयते यत् परब्रह्मपरमात्मनः प्राप्त्यनन्तरं तस्य सिद्धपुरुषस्य पूर्वकृतपापानां सर्वथा नाशो भवति । उत्तरैश्च सह तस्य न कथमपि सम्बन्धो जायते, पापकर्मभिरिवैव पूर्वोत्तरपुण्यकर्मभिरपि जीवन्मुक्तावस्थायां तस्य ज्ञानिनो न कश्चिदपि सम्बन्धस्तिष्ठति । सः अतीतो भवति ।

इदानीमत्र अवश्यमेवायं सन्देहः समुपतिष्ठते यत् ब्रह्मविदः पूर्वोत्तरसर्वपुण्यपापविनाशे तदसंबद्धतया कथं शरीरमवतिष्ठते । शरीरस्थितिर्हि कर्मफलभोगायैव । ज्ञानानन्तरं शरीरविनाशे तु ज्ञानोपदेशकाभावात्सम्प्रदायपरम्परा विनश्येत् । अस्य समाधानम् , 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' ( ४।१।१५ ) इत्यत्रेत्थं कृतं वर्तते यत् अनारब्धफलभोगरूपकार्याणामेव पापपुण्यानां विनाशो ब्रह्मज्ञाने सति संजायते । श्रुतिषु हि तेषामेव पूर्वकृतपापपुण्यादीनां विनाशो निर्दिष्टो ये स्वफलदानाय अनुन्मुखाः सन्तः संचितावस्थायामेवासन् । येषां प्रारब्धकर्मणां फलभोगार्थं तेन विदुषा शरीरमुपलब्धं न तेषां विनाशोनिर्दिष्टः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ [5]सम्पत्स्ये' अर्थात् तस्य तावदेव-विलम्बः यावत् प्रारब्धस्य नाशो भूत्वा देहपातो न जायते ।

इत्थं श्रुतौ प्रारब्धक्षयपर्यन्तं ज्ञानिनः शरीरस्य स्थितिः प्रतिपादिता वर्तते । प्रारब्धकर्मविनाशानन्तरं च ब्रह्मविदः शरीरं नश्यति ।

---

१. छा० ४।१४।३    २. तत्रैव ५।२४।३
३. मु० २।२।८    ४. गीता ( ४।३७ )
५. छा० ६।१४।२

इत्थं विदुषः पूर्वकृतसंचितकर्माणि तु ज्ञानाग्निना भस्मसाद् भवन्ति, क्रियमाणकर्मभिश्च न तस्य कश्चित्सम्बन्धः इत्यवशिष्टशुभाशुभप्रारब्ध-कर्माणि भोगेन विनाश्य ज्ञानी पुरुषः परमपदमवाप्नोति एतदेव 'भोगेन त्वितरे क्षपयित्वा सम्पद्यते' ( ४।१।१९ ) एतस्मिन् सूत्रे स्पष्टीकृतं वर्तते।

द्वितीयपादस्य प्राथमिकेषु षट्सु सूत्रेषु शारीरकतत्त्वानां क्रमिक-विनाशस्य प्रक्रियां प्रतिपाद्य सप्तमसूत्रे एतत्सिद्धं कृतं यत् मृत्युकाले प्राणमनइन्द्रियैः सहितो जीवात्मा स्थूलशरीरान्निर्गच्छन् सूक्ष्मपंच-भूतानां समुदायस्वरूपे सूक्ष्मशरीरे तिष्ठति। एतावत्पर्यन्तं साधारण-मनुष्यस्येवैव विदुषः अपि गतिः। तदनन्तरमष्टमे सूत्रे एतन्निर्णीतं यत् साधारणजनास्तु सर्वकारणस्वरूपपरमेश्वरे प्रलयकाल इव स्थित्वा परमात्मनो विधानानुसारं फलभोगार्थं शरीरान्तराणि धारयन्ति, किन्तु ब्रह्मविज्जनो ब्रह्मलोकं गच्छति। नवमतः एकादशसूत्रं यावत् सूक्ष्म-शरीरस्य सिद्धिः कृता एवं द्वादशतः षोडशसूत्रं यावत् एतत्प्रतिपादितं वर्तते यत् ये महापुरुषाः जीवनकाले एव ब्रह्म साक्षात्कुर्वन्ति, ते ब्रह्म-लोकमगत्वा अत्रैव ब्रह्मणि लीयन्ते। 'तदोकोऽग्रज्वलनम्०' एतस्मिन् सप्तदशे श्लोके ब्रह्मलोकं गच्छतः विदुषः पुरुषस्य विषये पुनः विचारं प्रारभ्यैतत्प्रतिपादितं यत् विद्वान् ब्रह्मविद्याप्रभावेण हृदयस्थपरमेश्वर-कृपया चानुगृहीतः सुषुम्नाद्वारा ऊर्ध्वं गच्छन् अमृतत्वं प्राप्नोति। छान्दोग्यश्रुतिरेतदेव प्रतिपादयति 'शतं चैका च हृदयस्य नाड्यः'[1]··· इत्यादि।

चतुर्थाध्यायस्य तृतीयपादे ब्रह्मविदात्मा देवयानमार्गद्वारा यैर्यैः स्थानैः गच्छति तद्वर्णनानन्तरं बादरायणेनोक्तं यदन्ते स ब्रह्म अवाप्नोति ततश्च 'न स पुनरावर्तते' तत्रहि स वास्तविकस्वरूपेण[2] सम्पन्नः, समस्त-बन्धनरहितः सर्वथा शुद्धो दिव्यो विभुः–विकाररहितो विज्ञानमयश्च[3] जायते। तल्लोकावाप्तौ कथं स तत्रत्यान् भोगान् भुंक्ते एतदपि, 'संक-ल्पादेव तच्छ्रुतेः' ( ४।४।८ ) अत्र बादरायणेन प्रतिपादितं यन्मनोरूप-दिव्यनेत्रैः स ब्रह्मलोकस्य समस्तकामान् पश्यन् रमते—'मनः अस्य दैवं चक्षुः स वा एष दैवेनैतेन चक्षुषा मनसा एतान् कामान् पश्यन्[4] रमते' एषा छान्दोग्यश्रुतिरप्येतदेव प्रतिपादयति। एतेन स्पष्टमेतद् यदु-

---

१. छा० ८।६।६ २. सम्पद्याविर्भावः स्वेन शब्दात्

३. मुक्तः प्रतिज्ञानात् ४. छा० ८।१२।५

पासकात्मा तल्लोकस्य सकलभोगान् संकल्पेनैव भुंक्ते इति शरीरस्यापि आवश्यकता तत्र वर्तते। तदनुभवार्थं न वेत्यस्मिन् विषये बादरायणेन बादरिजैमिनिमतानुसारं शरीरस्य भावाभावात्मकोभयसम्भावनामान्यताया एवमौचित्यं प्रदर्शितं यत् यथा स्वप्नावस्थायां विनापि स्थूलशरीरं मनसैव समस्तभोगानां क्रियमाणः उपभोगः दृश्यते तथैव बादरिमते ब्रह्मलोके शरीरं विनापि समस्तदिव्यभोगोपभोगः सम्भवति। जैमिनिमतानुसारं च मुक्तात्मा शरीरेण तथैव तान् भोगान् भुंक्ते यथा जाग्रदवस्थायां साधारणो जनो विषयाननुभवति, यथा वा एक एव अग्निरनेकेषु परिव्याप्य तान् सर्वान् प्रकाशयति तथैवैक एव मुक्तात्मा स्वसंकल्पानुसारं रचितेषु समस्तशरीरेषु प्रविश्य दिव्यभोगानुपभोक्तुं समर्थः। छान्दोग्यश्रुतिरप्येतदेव प्रतिपादयति—'स एकधा भवति, त्रिधा भवति, पंचधा, सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः।'[२] किन्तु तत्रत्यभोगानुपभोक्तुं स तावतां शरीराणां धारणे तद्भोगांश्च भोक्तुं समर्थः अपि न परमात्मवद् जगद्रचनादिकार्ये समर्थः। 'यतो वा इमानि भूतानि जायन्ते'[३] 'तस्मादसतः सज्जायत'[४] 'स ऐक्षत लोकान्नु सृजा' इति। 'स इमान् लोकानसृजत'[५] इत्यादिविभिन्नस्थलेषु सर्वत्रापि श्रुतिषु एतज्जडचेतनात्मकसमस्तजगतः उत्पत्तिसंचालनप्रलयादिप्रकरणो एतत्कार्यं तस्यैव ब्रह्मण उक्तम्। ब्रह्मलोकं प्राप्तवतां मुक्तात्मनां सृष्टिरचनादिकार्येण न कुत्रापि सम्बन्धः समुपलभ्यते। तेषां केवलं तत्रत्यभोगानां भोक्तृयोग्यत्वमेवोक्तम्।

यद्यप्येवं भूतावस्थायामयं सन्देहः सम्भवति यद् यदि तत्तल्लोकविकारमय-भोगोपभोगार्थमेव शरीर-शक्त्याधिकारादि स प्राप्नोति तदा देवलोकं प्राप्तवतां कर्मफलाधिकारिणां सदृशमेव ब्रह्मविद्यायाः अपि फलं संजातमिति न तत्र किमपि वैशिष्ट्यम्। एतस्य निवारणं बादरायणेन 'विकारावर्ति च तथाहि स्थितिमाह' (४।४।१९) इति सूत्रे इत्थं कृतम् यत् श्रुतौ ब्रह्मविद्यायाः मुख्यं फलं जराजन्मादिरहित-ब्रह्मावाप्तिरेवोक्ता—'स ब्रूयान्नास्य जरया एतज्जीर्यति न वधेनास्य हन्यते। एतत्सत्यम् × × × × एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकः'[६] एतेनैतदेव सिध्यति यत्तत्प्राप्तफलं कर्मफलवद्विकारि न वर्तते।

---

१. ब्रह्मोपबद्धावेशास्तथाहि दर्शयति (४।४।१५) २. छा. ७।२६।२
३. तै० ३।१ ४. छां० ६।२।१-३
५. ऐ० ड० १।१ ६. छा० ८।१।५

ब्रह्मलोकफलमानुषंगिकं फलम्। ब्रह्मविद्यायाः सार्थक्यं परब्रह्म प्रापणे एवास्ति। श्रुतौ मुक्तात्मनः इयमेव स्थितिरुक्ता दृश्यते—'यदा ह्येवैष एतस्मिन्नदृश्ये अनात्म्ये अनिरुक्ते अनिलयने अभयं प्रतिष्ठां विन्दते अथ सः अभयं गतो भवति'।[1] तथा, अथ य एष सम्प्रसादोऽस्मात्। शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच। तदमृतमभयमेतद्ब्रह्म'।[2] ब्रह्मलोकः नान्यलोकवद् विकारी। श्रुतयः तं नित्यं सर्वपापरहितं रजोगुणकपटादिदोषहीनं विशुद्धं प्रतिपादयन्ति—'अपहतपाप्मा एष ब्रह्मलोकः'।[3] 'तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया'।[4]

एवं भूतेषु लोकेषु मुक्तात्मा शाश्वतमानन्दमनुभवति, किन्तु तस्य शक्तिः सीमिता एव भवति इति स परमात्मवज्जगद्रचनादि कर्तुं सर्वथा असमर्थः तथापि तदुपभोगसमयो निःसीमेति कर्मफलाधिकारिवदुपभोगसमये परिपूर्णे इमं लोकम् आगत्य पुनर्जन्म न धारयति—'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' (४।४।२२) एतदेव सूचयति।

शंकराचार्येण पूर्वोक्तसूत्रस्य व्याख्यायामित्थं प्रतिपादितं यत् 'सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः। तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिः। एतस्य व्याख्यां कुर्वतः रत्नप्रभाकारस्य एतन्मतं "यत्सगुणविदामावृत्तिप्राप्तौ सम्यग्दर्शनाश्रयणेनैव अनावृत्तिः साधिता। अतः स्वत एव सम्यग्दर्शिनामावृत्तिशंका नेति किमुत वाच्यम्"। अर्थात् एतेन सगुणा ब्रह्मोपासकानामनावृत्तिरुक्ता। एवं सगुणब्रह्मोपासकानामनावृत्तौ सिद्धायां निर्वाणपरायणानासम्यक्तया निर्गुण ब्रह्मदर्शिनामनावृत्तिस्तु अनायासेनैवायाता। किन्तु मानवमात्रस्य गतेर्मुक्तावस्थायाश्च सामान्यरूपेण वर्णने प्रवृत्तस्य बादरायणस्य निर्गुणसगुणब्रह्मोपासकयोर्गतौ मुक्तौ च सति पार्थक्ये तदप्रदर्शनं दोषावहमेव स्यात् इतीयं मान्यता न हृदयं स्पृशति।

## रामानुजाचार्यः—

मुक्तेः स्वरूपं कौषीतक्युपनिषदि 'सायुज्यं[5] संस्थानम्' एतत्प्रतिपादितम्। बृहदारण्यके च तत् 'एतस्यै देवतायै सायुज्यं सलोकतां[6]

---

१. तै० उ० २।७ २. छा० उ० ८।३।४
३. छा० ८।४।१ ४. प्र० १।१६
५. कौ० १।१ ६. बृ० उ० १।५।२२

जयति इत्थं प्रतिपादितम्। श्रीमद्भागवतानुसारं मुक्तिः पंचप्रकारा—'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत''[1] भगवल्लोकावाप्तिः, भगवत्तुल्यैश्वर्यावाप्तिः, भगवत्स्वरूपावाप्तिः, भगवदेकत्वावाप्तिश्चेति क्रमशस्तदर्थः।

रामानुजाचार्येण मुक्तेः किमपि विस्तृतं विवरणं न प्रदत्तम्। एतदेव केवलं तेन प्रतिपादितं यन्मुक्तात्मनो भगवल्लोकावाप्तिर्भवति तदनन्तरं सः तत्सान्निध्यावाप्तेः कारणात् आनन्दविमुग्धो जायते। इत्थं विशिष्टाद्वैतमतेन सायुज्यस्य वास्तविकः अर्थः भगवत्प्राप्तिरस्ति, सायुज्यशब्दो हि सयुजोः भाव इत्यर्थे भावष्यञन्तः यश्च ऋग्वेदस्य 'द्वा सुपर्णा सयुजा[2] सखाया'—इति मन्त्रे प्रयुक्तो वर्तते। अस्य शब्दस्य वैदिकद्वित्वप्रयोगः स्पष्टतया ब्रह्मजीवभावात्मकपक्षिद्वये द्वित्वसम्बन्धस्य संकेतं करोति। यदि च द्वित्वसंख्या विशिष्टयोः द्वयोः सख्योः परस्परं सायुज्यं सम्भवति तदा स एव सम्बन्धः भक्ततदिष्टदेवयोरपि सर्वथा सम्भवत्येव।

शंकराचार्येणापि 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' (४।४।१७) अस्मिन् सूत्रे सख्यार्थकसायुज्य-शब्दस्य प्रयोगः कृतः—'ये सगुणब्रह्मोपासनात् सहैव मनसा ईश्वरसायुज्यं व्रजन्ति जगदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति'।

किन्तु अनेन प्रकारेण शंकराभिमतः सख्यार्थः भक्तस्य ईश्वरेण सहैक्यं न भवितुमर्हति। अस्यार्थः केवलं जीवात्मनः परमसारूप्यावाप्तिरस्ति। संख्यारूपेण तु तद्भिन्नता तिष्ठत्येव। शंकरानुसारं मानवजीवनस्य चरमोत्कर्षो जीवात्मनो निर्गुणब्रह्मणि लयो वर्तते, किन्तु सायुज्यस्यार्थः साधारणतया परमात्मसारूप्यावाप्तिरेव वर्तते, सयुक्शब्दो हि न एकस्य वाचकः। सर्वार्थसिद्धिकारेणैतदित्थं प्रकटीकृतम्—'न हि सयुक्-शब्दः एकपर्यायस्तथा क्वचिदपि प्रयोगाभावात्'...।[3] यदि कश्चिन्नैघण्टुक ऐक्यं सायुज्यमिति पठेत् तत्तस्य स्वपक्षाभिनिवेशेन शब्दशक्तिग्रहणापरिबुद्धतया वा प्रयुक्तमित्युपेक्षणीयम्',[4] शंकरेण सायुज्यशब्दो नैक्यार्थे प्रयुक्तः, अपि तु सख्यसारूप्यान्यतरार्थे एवेति तस्येश्वरसायुज्यसिद्धान्तो रामानुजस्य मोक्षसिद्धान्तेन समानः।

---

१. श्रीमद्भागवतम् ३।२९।१२ २. ऋ० १।१६४।२०
३. शां० भा० (ब्र० सू० ४।४।१७) ४. सर्वार्थसिद्धिः ३।६७

तथापि मोक्षविषये शंकररामानुजयोरेको मौलिको भेदः। शंकरमतेन जीवात्मनः परब्रह्मणा सह पूर्णतस्तादात्मीभावो ( कैवल्यावस्था ) मोक्षः किन्तु रामानुजमते सायुज्यावस्था मोक्षः।

शंकरस्यैतन्मतं यद् जीवात्मनः सगुणब्रह्मणा सह सायुज्यावाप्तिस्तस्य निर्गुणब्रह्मणि लयावाप्तेः प्रथमं सोपानम् , किन्तु रामानुजो यश्च सगुणनिर्गुणयोर्न भेदं स्वीकरोति, शंकराभिमतं मोक्षं न मनुते। ब्रह्म एकमेव, तच्च प्राकृतिकगुणरहितमिति निर्गुणम्। सर्वज्ञत्वादिदिव्यगुणैश्च युक्तमित्यस्मिँश्चार्थे सगुणम्। इत्थं च ब्रह्मणः सगुणनिर्गुणोभयात्मकत्वे रामानुजमतानुसारं मुक्तात्मनो ब्रह्मणि विलीनत्वस्य प्रश्न एव नोत्तिष्ठते। अतः रामानुजाभिमतमोक्षस्य निष्कर्षो जीवात्मनः परमात्मना सह शाश्वतसायुज्यं, न तु लयः।

## मुक्तात्मशक्तयः—

रामानुजस्यैतन्मतं यन्मुक्तात्मनि अपहतपाप्मत्वसर्वज्ञत्वादिस्वाभाविकगुणास्तिरोहितास्तिष्ठन्ति। मोक्षावस्थायां केवलं तेषां तथैव विकासो भवति यथा आकरोत्पन्नमणेर्मलप्रक्षालनानन्तरमधिकं चाकचक्यं संजायते—'अतः प्रत्यगात्मनः अपहतपाप्मत्वादयः स्वाभाविका गुणाः परं ज्योतिरुपसम्पन्नस्याविर्भवन्ति, नोत्पद्यन्ते; यथा चोक्तं भगवता शौनकेनापि—

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्नज्ञानमात्मनः क्रियते तथा'॥[1]

मुक्तात्मनां सकलकामनाः पूर्णाः संजायन्ते तेषां सर्वे संकल्पाश्च सत्याः, तथापि तेषामेताः शक्तयः सीमिताः, निःसीमशक्तिशाली सर्वशक्तिमांश्च परमात्मैव। अत एव रामानुजस्यायं सिद्धान्तो यदणिमादिगुणरूपधारणकर्त्तो समर्थः अपि मुक्तात्मा जगतः सृष्टिप्रलयादिकरणे सर्वथा असमर्थः—'जगद्व्यापारो निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनं तद्वर्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तैश्वर्यम्'।[2] तथापि तस्यामवस्थायां स स्वप्रकाशस्वरूपः अनन्याधिपतिश्च भवति, 'अतः सत्यसंकल्पत्वश्रुत्यैवानन्याधिपतित्वं सिद्धम्'।[3]

---

१. रा० भा० ( ब्र० सू० ४।४।३ )

२. रा० भा० ( ब्र० सू० ४।४।१७ ) ३. तत्रैव ( ४।४।९ )

मोक्षावस्थायां जीवात्मा सर्वेभ्यो बन्धनेभ्यो मुक्तः संजायते। किं बहुना, तदानीं तस्य शरीरमपि न भौतिकं भवति। छान्दोग्योपनिषद्युक्तं यन्मुक्तात्मा परमज्योतिषा (परमात्मना) संयुज्य स्वकीयं वास्तविकं रूपमवाप्नोति, 'एष सम्प्रसादः (मुक्तात्मा) अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते'।[1] रामानुजस्यैतत्कथनं यद् यदि मुक्तात्मनः किमपि रूपान्तरं स्यात्तदा 'स्वेन रूपेण' एतद्विशेषणं निरर्थकमेव भवेत्—'आगन्तुकदेहपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं[2] स्यात्'।

## निम्बार्कः—

भगवतो निम्बार्काचार्यस्य एतत्कथनं यत्तत्त्वज्ञानानन्तरं मोक्षो भवति। जीवात्मनस्तत्त्वज्ञाने संजाते तत्प्रारब्धकर्मणि नष्टे तच्छरीरविनाशानन्तरं मुक्तिः। किन्तु प्रारब्धकर्मणां सर्वथा अविनाशे अवशिष्टप्रारब्धकर्मणां भोगार्थं जीवः शरीरान्तरं जन्मान्तरं वा धारयति इति तद्भोगानन्तरं तच्छरीरविनाशे मोक्षो भवति। छान्दोग्यश्रुतिरेतदेव प्रतिपादयति—'एवमेवेह आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ[3] सम्पत्स्ये' इति।

परमात्मसाक्षात्कारस्तत्त्वज्ञानेन भवति। तत्प्राप्तये शाश्वतसाधनावलम्बनमत्यावश्यकम्।[4] 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[5] एषा श्रुतिः तथा 'अभ्यासयोगेन[6] ततो मामिच्छाप्तुं धनंजय' एवं गीतापि एतदेव प्रतिपादयति। इत्थं मुमुक्षोरिदं कर्तव्यं यत्स परमपुरुषपरमात्मन एव स्वकीयात्मस्वरूपेण ध्यानं कुर्यात् आत्मानं परमात्मनः अभिन्नं चिन्तयेत्।[7] भेदसम्बन्धज्ञानं हि बद्धजीवे स्वाभाविकम्। एतदेव च तद्बन्धस्य हेतुः। अभेदसम्बन्धज्ञानं तु पुनः पुनरभेदचिन्तनद्वारैव सिध्यति।

तच्चिन्तनं मुमुक्षुणा उपविष्टेन[8] कर्तव्यम्। उपविष्टे सत्येव हि

---

१. छा० उ० (८।१२।३)　　२. रा० भा० (ब्र० सू० ४।४।१)
३. छा० ६।१४।२
४. आवृत्तिरसकृदुपदेशात् (ब्र० सू० ४।१।१)
५. बृ० उ० (४।५।६)　　६. गीता (१२।९)
७. 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च (४।१।३)
८. आसीनः सम्भवात् (४।१।७)

उपासना सम्यक् सिध्यति शयानस्य चालस्यनिद्रयोः सम्भावना, गमनावस्थायां च शरीरधारणादिविषयकप्रयत्नस्थितेः विक्षेपसम्भावनेति चिन्तनार्थं बादरायणेन 'यत्रैकाग्रता तत्राविशेषात्' (४।१।११) इति सूत्रद्वारा एतत्स्पष्टीकृतं यद् यस्मिन् स्थाने चित्तस्य एकाग्रता भवेत् तस्मिन्नेव स्थाने उपासना कर्तव्या। एवं शश्वदभ्यासेन ब्रह्मज्ञाने संजाते हि न तत्र क्रियमाणानि कर्माणि प्रभवन्ति—'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते'।[1]

> ज्ञानोत्पत्तेरूर्ध्वं क्रियमाणं कर्म यत् तदपि नाम।
> न श्लिष्यति कर्त्तारं पुष्करपत्रं यथा[2] वारि॥

तस्य संचितकर्मणां विनाशः अग्निप्रक्षिप्तेषीकातूलवत् संजायते—'तद्यथा इषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वपाप्मानः प्रदूयन्ते'।[3]

> यद्वदिषीका तूलं पवनोद्धूतं हि दशदिशो याति।
> ब्रह्मणि तत्वज्ञानात् तथैव कर्माणि तत्वविदः॥[4]

तस्य सर्वकर्माणि नश्यन्ति—

> 'भिन्नेऽज्ञानग्रन्थौ छिन्ने संशयगणे शुभे क्षीणे।
> दग्धे च जन्मबीजे परमात्मानं हरिं याति[5]॥'

पुण्यपापे न कथमपि तं सुखिनं दुःखिनं वा कर्तुं शक्नुतः—'एतमु हैवेते न तरतः इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उहैवैष एते तरति नैनं कृताकृते तपतः'।[6] एवं पूर्वपश्चात्कृतकर्मविनाशाश्लेषौ[7] भूत्वा देहपाते ब्रह्मविदः पापपुण्योभयकर्मविलुप्तिरिति सम्यग् रूपेण स मुक्तिपदवीं प्राप्नोति। 'पुण्यस्य काम्यकर्मणः अपि अयवन्मुक्तिविरोधित्वादुत्तरस्याश्लेषः, पूर्वस्य विनाश एव उत्तरपूर्वयोः श्लेषविनाशानन्तरं देहपाते सति मुक्तिरेव[8]'। भगवता आदिशेषेण स्वकीये परमार्थसारे इदमेवेत्थं प्रतिपादितम्—

> कर्मफलबीजनाशाज्जन्मविनाशो न चात्र संदेहः।
> बुद्ध्वैवमपगततमाः सवितेवाभाति भारूपः[9]॥

---

१. छा० उ० ४।१४।३ २. प० सा० ४०
३. छा० ५।२४।३ ४. प० सा० ४३
५. तत्रैव ७९ ६. बृ० उ० ४।४।२२
७. इतरस्याप्येवमसंश्लेषः पाते तु ( ब्र० सू० ४।१।१४ )
८. नि० भा० पृ० ५३० ९. प० सा० ४९

'अनारब्धकार्ये एव तु पूर्वे तदवधेः' ( ४।१।१५ ) इत्यत्र 'विद्याप्राप्तौ पूर्वं पापपुण्ये अप्रवृत्तफले एव[1] क्षीयेते' इति निम्बार्कभाष्यात्स्पष्टमेतत् यत् पूर्वोक्तमुक्तिप्रसंगे अनारब्धफलकर्मणामेव निर्देशः। ज्ञानावाप्तौ च तेषामेव नाशो न तु प्रवृत्तफलकर्मणां विनाशः, भोगेनैव हि तद्विनाश-सम्भवात्। स च भोगः तस्मिन् शरीरे अपि समाप्नोति, असमाप्तौ च शरीरान्तरधारणस्यावश्यकता भवति। एतदेव, 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' ( ४।१।१६ ) इत्यस्मिन् सूत्रे 'विद्वान् आरब्धकार्ये तु सुकृतदुष्कृते भोगेन क्षपयित्वा ब्रह्म[2] सम्पद्यते' इति प्रतिपादितम्।

अत एव ब्रह्मज्ञानोदये अग्निहोत्रदानतपःप्रभृति आश्रमविहितं कर्म न त्याज्यं वर्तते। एतैः कर्मभिर्हि विद्यायाः पोषणं भवति इति तानि कर्माणि सर्वदा अनुष्ठेयानि काम्यकर्माणि च परित्याज्यानि।

मुक्तावस्थायां जीवात्मा परमज्योतिःस्वरूपात्मस्वरूपं प्राप्नोति— 'अथ य एष सम्प्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मा' इति छान्दोग्यश्रुतिः, 'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकः'......इत्यादि च तत्रैव श्रुतिः तथा बादरायणस्य 'सम्पद्याविर्भावः स्वेन शब्दात्' ( ४।४।१ ) 'मुक्तः प्रतिज्ञानात्' ( ४।४।२ ) एवम्, 'आत्मा प्रकरणात्' ( ४।४।३ ) इत्यादि-सूत्राणि अस्यैव भावस्य द्योतकानि।

समस्तबन्धनेभ्यो मुक्तो जीवः आत्मानं परमात्मतः पृथक् नानुभवति। तस्यां हि दशायां स तं परमात्मानं साक्षात्करोति यः सर्वेषामात्मास्ति। बद्धावस्थायामविद्याकारणेन तस्य भेदबुद्धिः किन्तु श्रुति-वाक्याभ्यासेन, ब्रह्मणः सततचिन्तनेन च परमात्मनः वास्तविकस्वरूपे साक्षात्कृते तस्य सम्पूर्णकर्माणि विनश्यन्ति, सर्वे संशयाश्च दूरीभवन्ति। तात्पर्यं चैतद् यद् तस्यां दशायां जीवात्मपरमात्मनोः सत्यपि भेदे गुण-गुणिनोरिव तयोर्भिन्नता तिष्ठति। निम्बार्काचार्यस्य स्वरूपाविभागो नाभीष्टः अन्यथा 'सदेव सोम्य इदमग्र आसीदेकमेवाद्वितीयम्'[3] 'सर्वं खल्विदं ब्रह्म'[4] इत्यादिश्रुत्याधारेण विश्वस्य सर्वेषु जड-चेतनेषु स्वरूपा-विभागः स्वीकर्तव्यः स्यात्, स चानभीष्टः। अनेकश्रुतयो हि जीवात्म-परमात्मनोः भेदाभेदसमर्थिकाः इति जीवो मुक्तदशायां परमात्मना

1. नि० भा० पृ० ५३१ 2. नि० भा० (ब्र० सू० ४।१।१९)
3. छा० उ० ६।२।१ 4. तत्रैव ३।१४।१

सह भेदे अभेदमनुभवति—मुक्तः परस्मादात्मानं भागाविरोधिना अविभागेनानुभवति'।[1]

मुक्तो जीवो ब्रह्मात्मकः सन् सत्यसंकल्पत्वादिगुणविशिष्टतया सर्वथा स्वाधीनः संजायते—'स स्वराड् भवति',[2] एषा छान्दोग्यश्रुतिरपि एतत्प्रतिपादयति । 'परब्रह्मात्मको मुक्त आविर्भूतसत्यसंकल्पत्वादेवा-नन्याधिपति[3]र्भवति' एतद्भाष्यमप्येतदर्थकम् ।

मुक्तात्मनः शरीरं भवति न वेत्यत्र बादरेराचार्यस्यैतन्मतं यत् तस्य शरीरं न भवति—'अशरीरं वाव सन्तं न प्रियाप्रिये [4]स्पृशतः' एषा श्रुतिस्तत्र प्रमाणम् । जैमिनेराचार्यस्यैतन्मतं, यन्मुक्तात्मनामपि शरीरे-न्द्रियादि भवति 'स एकधा भवति, त्रिधा [5]भवति....' इत्यादिश्रुतयः तेषां विविधरूपधारणं कथयन्ति ।

बादरायणस्य चास्मिन् विषये एतन्मतं यन्मुक्तात्मानः स्वसंकल्पा-नुसारं यदा कदा सशरीरिणः, यदा कदा अशरीरिणश्च भवन्तीति तेषामुभयरूपता सिद्धा, अर्थात् यथा सम्पत्तीच्छया कृतो द्वादशाहयज्ञः 'सत्रम्' सन्तानेच्छया च कृतः स एव 'अहीनः' इत्येक एव द्वादशाहयज्ञः सत्राहीनोभयनामभ्यां व्यवह्रियते तथैव, 'मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते' एषा श्रुतिरेत-त्प्रदर्शयति यन्मुक्तो जीवात्मा सशरीरो न भवति किन्तु स एकधा भवति, त्रिधा भवति, एषा श्रुतिर्मुक्तजीवात्मनः सशरीरत्वमपि प्रतिपादयति अतः उभयमविरुद्धम् ।

बादरायणस्यैतत्तात्पर्यं यन्मुक्तावस्थायां जीवात्मनो विज्ञानमात्र-स्वरूपत्वं श्रुतयः प्रतिपादयन्ति तथापि तस्य अपहतपाप्मत्वादिगुण-वर्णनस्य न कुत्रापि विरोधः कृतो लभ्यते । एतेन स्पष्टमेतद् यत् चिन्मात्रमपि ब्रह्म सत्यसंकल्पाद्यैश्वर्यविशिष्टं तच्च तस्य जगदतीतं स्वरूपम् 'विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि अपहतपाप्मत्वादि-मद्विज्ञानस्वरूपाविर्भावादविरोधं भगवान् बादरायणो मन्यते । कुतः ? मुक्तजीवसम्बन्धितया अपहतपाप्मत्वाद्युपन्यासात्'[6] ।

शंकराचार्येणापि यद्यप्यस्मिन् स्थले मुक्तात्मनः एषैवावस्था वर्णिता तथापि तेन एतदपरमपि प्रतिपादितं यद् व्यवहारापेक्षयैवेमे समस्तगुणाः

---

१. वे० कौ० ( ब्र० सू० ४।४।४ ) २. छा० उ० ७।२५।२
३. नि० भा० ( ब्र० सू० ४।४।९ ) ४. छा० ८।१२।१
५. तत्रैव ७।२६।२ ६. नि० भा० ( ब्र० सू० ४।४।७ )

स्वीक्रियन्ते—'एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो 'मन्यते', अत्र पारमार्थिक-व्यवहारापेक्षया चैतच्छब्दद्वयं शंकराचार्यकल्पितम् । सूत्राक्षरेभ्यो हि न तदर्थावगतिः । अतः शंकरस्य मतं सर्वथा बादरायणमतविरुद्धम् ।

वस्तुस्थितिस्त्वेषा यन्मुक्तात्मनः सत्यसंकल्पत्वसत्यकामत्वावाप्तौ यथा स्वसृष्टशरीराद्यभावेऽपि स्वप्नकाले बद्धजीवस्य भोगो जायते तथैव भगवत्सृष्टशरीरादिसमन्वितो भूत्वा मुक्तात्मनां भोग उपपद्यते, अतः नैष कश्चिन्नियमो यन्मुक्तः पुरुषो दिव्यभोगार्थं स्वेच्छया शरीरादिसृष्टिमवश्यं कुर्यात् । तथापि नेतदस्वीकर्तुं शक्यते यद्भगवदनुकम्पया मुक्तात्मा सर्वदिव्यभोगाननुभवतीति ।

मुक्तात्मानो जगत्सृष्ट्यादिव्यापारातिरिक्तसर्वविधैश्वर्यसम्पन्नाः भवन्ति । श्रुतिप्रमाणैः जगतः सर्गस्थितिप्रत्यवहारहेतुत्वं तु केवलं ब्रह्मण एव जगत्सृष्ट्यादिव्यापारेतरन्मुक्तैश्वर्यम् । कुतः ? 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ परब्रह्मप्रकरणात् मुक्तस्य तत्रासन्निहितत्वाच्च'[२] । 'स स्वराड् भवति, अनन्याधिपतिर्भवति, जगद्व्यापारासामर्थ्येऽपि मुक्तात्मानो जन्मादिविकाररहिता भवन्ति'—जन्मादिविकारशून्यं स्वाभाविकाचिन्त्यानन्तगुणसागरं सविभूतिकं ब्रह्मैव मुक्तो [३]भवति' । एवं सर्वज्ञेन ब्रह्मणा सह ते सर्वविधानन्दाननुभवन्ति—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा [४]विपश्चिता', एवमवाप्तब्रह्मत्वस्य मुक्तात्मनः पुनरावृत्तिर्न जायते—'परंज्योतिरुपसम्पन्नस्य संसाराद्विमुक्तस्य प्रत्यगात्मनः [५]पुनरावृत्तिर्न भवति । 'एतेन प्रतिपद्यमानाः मानवमावर्तं नावर्तन्ते नावर्तन्ते, 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इत्यादिश्रुतिस्मृतयः इममेव भावं प्रतिपादयन्ति । 'तयोर्ध्वमायन्नमृतत्वमेति'[६] 'तेषां न [७]पुनरावृत्तिः' ब्रह्मलोकमभिसम्पद्यते न च [८]पुनरावर्तते ।

निम्बार्कस्य एतन्मतं यन्मनःप्राणसूर्यादिप्रतीकावलम्बनद्वारा ये

---

१. शां० भा० ( ब्र० सू० ४।४।७ )
२. नि० भा० ४।४।१७
३. तत्रैव ४।४।१९
४. तत्रैव वे० कौ०
५. नि० भा० ४।४।२२
६. छा० ८।६।६
७. बृ० ६।२।१५
८. छा० ८।१५।१

ब्रह्मोपासनां कुर्वन्ति तेषां तदुपासनाप्रभावेण साक्षात्सम्बन्धे परब्रह्मा-वाप्तिर्न जायते। ये हिरण्यगर्भमुपासते ते तदुपासनया हिरण्यगर्भलोकं प्राप्नुवन्ति ब्रह्मणो ( चतुर्मुखस्य ) जीवनकालपर्यन्तं तत्र निवासं कृत्वा-पश्चात् ब्रह्मणा सहैव परब्रह्मणि लीयन्ते किन्तु ये हिरण्यगर्भस्यापि सृष्टृ परं ब्रह्म उपासते तेषां हिरण्यगर्भलोकगमनानन्तरं परब्रह्मणैव सहैकता संजायते—तेषां ब्रह्मसम्पत्तिप्राप्तौ न विलम्बः। तेषां विषये एव गीतायां भगवतः कृष्णस्योक्तिः—'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च'।

एवंभूताया भगवत्साक्षात्कारस्वरूपाया मुक्तेर्नाम सायुज्यमुक्तिरस्ति। किन्त्वस्य सायुज्यस्य अर्थो न स्वरूपैक्यम्। अस्यां दशायामपि हि मुक्तजीवात्मपरमात्मनोर्भेदस्तिष्ठत्येव। द्वितीयमुक्तेर्नाम सालोक्य-मुक्तिरस्ति। एतदर्थमस्या एतन्नाम यदस्यां जीवो भगवल्लोकमवा-प्नोति यत्र च भगवतो निवासः। सारूप्यमुक्तिश्च सा मुक्तिः यस्यां जीवो भगवत्स्वरूपमवाप्नोति। एवं सामीप्यं च मुक्तेस्तद्दशाया नाम यस्यां मुक्तात्मा भगवतः अतिशयसान्निध्यमवाप्नोतीति।

निम्बार्को जीवन्मुक्तिं न मनुते। तस्यैतत्कथनं यदयं शब्द एव निर-र्थकः। प्रारब्धकर्मणमावशे मोक्षानुभूतिप्रतिपादनमशिक्षितवचनम्। अतः सद्यो मोक्ष एव केवलं जायते न तु क्रममोक्षो यथा च शंकरा-भिमतम्।[1]

## मध्वाचार्यः—

एतन्मते स्वानुभूतिरेव मुक्तिः। यावन्न स्वानुभूतिर्न तावन्मुक्तिः। यद्यपि शंकरमतेऽपि स्वानुभूतिर्मोक्षावस्था तथापि एतदुभयस्वानुभूति-रूपमोक्षविषयकधारणायामत्यधिकमन्तरम्। शंकरस्यैतत्कथनं यज्जीव आत्मानं ब्रह्म अवबोधयन् निर्गुणं निराकारमनिर्वचनीयं चाकल-यति, ब्रह्मणा सह तत्तादात्म्यं जायते। किन्तु मध्वानुसारं मुक्ता-त्मा ब्रह्मणा सह अभिन्नतां न प्राप्नोति प्रत्युत स्वकीयामभिन्नतां पृथक्त्वं च स्पष्टतररूपेणानुभवति। इत्थं शंकरानुसारं विमुक्तात्मा ब्रह्म-णा सह स्वकीयामभिन्नतामनुभवति मध्वानुसारं च विभिन्नता मनु-भवति तस्यैतन्मतं यत्समानयोरपि द्वयोर्वस्तुनोः सत्यपि समानत्वे तयोरैक्यप्रतिपादनं भ्रमः। द्वयोर्गुणेषु ह्यन्तरम्। एवमेव जीवब्रह्म-

---

१. निम्बार्कफिलासफी पृ० ७६

णोरप्यनेकधा समानतायां सत्यामपि ऐक्यस्थापनं व्यर्थमेव। जीवेष्वपि परस्परं भेदो भवत्येव स च न केवलमाध्यात्मिकक्षेत्रे एव, अपि तु मोक्षावस्थायामपि तिष्ठति।

शंकरानुसारं मुक्तेः साधनं ज्ञानम् 'ऋते ज्ञानान्न मुक्तिः'; किन्तु मध्वमते ज्ञानेन सह भक्तेरत्यन्तावश्यकत्वम्। भक्तिं विना हि मुक्तेः प्राप्तिरसम्भवा। इत्थं मध्वस्य मुक्तिविषयकधारणा व्यापिका गंभीरा चास्ते।

अस्य मोक्षस्यैकमात्रं साधनम्, 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (४।४।१) इत्यत्र भक्तिपूर्वकभगवदुपासनोक्ता—

आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत्[1]॥

× × × ×

तथा—आत्मा विष्णुरितिध्यानं प्रकर्तव्यं विशेषतः।
सर्वेषां च मुमुक्षूणामुपदेशश्च[2] तादृशः॥

मध्वाचार्येणेत्थं स्वभाष्ये प्रतिपादयता भगवतो विष्णोरेव 'ब्रह्मदृष्टिरुत्कर्षात्' (४।१।५) इत्यत्र ब्रह्मबुद्ध्या सर्वथोपासनामुक्त्वा 'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम्', इति ब्रह्मतर्कवाक्येन तदेव दृढीकृतम्।

ब्रह्मदर्शनानन्तरं जीवात्मनः पुण्यपापे विधूयेते। एतच्च तेनेत्थं प्रमाणितम्—

यथा श्लेषो विनाशश्च मुक्तस्य तु विकर्मणः।
एवं सुकर्मणश्चापि पततस्तमपि ध्रुवम्॥[3]

तथा—अनभीष्टमनारब्धं पुण्यमस्य विनश्यति।
किमु पापं परब्रह्म ज्ञानिनो नास्ति संशयः॥[4]

मुक्तात्मा ब्रह्मनिष्ठो भूत्वा तेनैव रूपेण सर्वाणि [5]वस्तून्यनुभवति—

मुक्ताः प्राप्य परं विष्णुं तद्भोगाल्लेशतः क्वचित्।
बहिष्ठान् भुंजते नित्यं नानन्दादीन् कथंचन॥[6]

× × ×

---

१. मध्वभाष्योक्तं भविष्यत्पर्ववचनम्। २. म० भा० (४।४।१)
३. मध्वभाष्ये आग्नेयपुराणवचनम् ४. तत्रैव पद्मपुराणवचनम्
५. अविभागेनैव दृष्टत्वात् (४।४।४) ६. म० भा० भविष्यत्पुराणवचनम्

आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादेन मुक्तस्यैषा भवेत् स्थितिः ॥[1]

एवं भूतामवस्थामवाप्य मुक्तात्मनः पुनरावृत्तिर्न जायते—

विकारावर्तिव्यापारो मुक्तानां न च विद्यते ।
इमं मानवमावर्तं नावर्तन्ते इति श्रुतिः ॥[2]

मुक्तेरपरं वैशिष्ट्यमेतद् वर्तते यद् मुक्तात्मा कस्यापि कष्टस्य कस्याश्चिद् दुर्भावनाया वा अनुभवं न करोति । मध्वस्यैतन्मतं यत् स्वर्ग एकं प्रकृतिनिर्लिप्तमाध्यात्मिकं जगत् । तत्र विमुक्तात्मा स्वकीयैराध्यात्मिकांगैः समस्तकार्याणि निष्पादयति । स भौतिकशरीरेणैतानि कार्याणि न करोति, यथा चोक्तं न्यायविवरणे—'विमुक्तस्य चिन्मात्र एव देहो भवति चिन्मात्राणि करणानि' । तथा, स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रो भवति । अथ तेनैव रूपेणाभिपश्यति अभिशृणोति अभिमनुते अभिजानाति [3]तामाहुर्मुक्तिम्—

मर्त्यदेहं परित्यज्य चितिमात्रात्मदेहिनः ।
चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥
तदंगानुगृहीतैश्च स्वांगैरेव प्रवर्तनम् ।
कुर्वन्ति भुंजते भोगान् तदनु बहिरेव वा ॥
यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः ॥[4]

## वल्लभाचार्यः—

वल्लभाचार्यानुसारम् आत्मसाक्षात्कारस्य त्रयो मार्गाः (१) कर्ममार्गः (२) ज्ञानमार्गः (३) भक्तिमार्गश्च । तत्र व्यावहारिकसत्कर्मणां च नैरन्तर्येण समुचितं निष्पादनम् आत्मसाक्षात्कारस्य प्रथमो मार्गः । कर्मणां सम्यक् सम्पादनेनैव हि भक्तिरुदेति सैव च मोक्षहेतुः ।

ज्ञानेन आत्मसाक्षात्कारो ज्ञानमार्ग उच्यते । एतत् तस्याः परमसत्तायाः साक्षात्कारस्य प्रयासः यस्मिन् ज्ञाते अन्यत् प्रत्येकं वस्तु परिज्ञातं संजायते । एषा सा पद्धतिः या सांसारिकावरणापसारणपूर्वकं तं परात्परं परमात्मानं साक्षात्कारयति येन इदं सर्वं जगत् रचितं यत्र चैतत्स्थितं यस्मिंश्चान्ते विलयं याति ।

---

१. तत्रैव बृहत्तन्त्रम्  २. तत्रैव वाराहपुराणवचनम्

३. म० भा० ( ब्र० सू० ४।४।७ ) सौपर्णश्रुतिवचनम्

४. तत्रैव नारायणाध्यात्मवचनम्

परमात्मानं सर्वत्र सर्ववस्तुषु च वर्तमानमवबुध्य प्रत्येकेन वस्तुना क्रियया च प्रेम भक्तिमार्गः। स्वकीयोत्कटप्रेमभावनया धार्मिकोपासनया वा ईश्वरेण सह सम्बन्धस्थापनस्य यावन्तः प्रकाराः तेषां सर्वेषां मूलं भक्तिभावनैव वर्तते। साधनायाः पवित्रमार्गे भक्तेरद्वितीयं स्थानम्।

अयं च भक्तिमार्गो द्विविधः—(१) मर्यादामार्गः (२) पुष्टिमार्गश्च। तत्र वेदविहितकर्मनिष्पादनद्वारा भगवत्प्राप्तिसमीहा मर्यादामार्गः।

भगवच्चरणेषु सर्वथा स्वसमर्पणपूर्वकं तदनुग्रहेणैव तदवाप्तुमिच्छा [1]पुष्टिमार्गः। श्रीहरिरायवाङ्मुक्तावल्यां पुष्टिमार्गस्येत्थं निर्देशः—

सर्वसाधनराहित्यं फलाप्तौ यत्र साधनम्।
फलं वा साधनं यत्र, पुष्टिमार्गः स कथ्यते॥
अनुग्रहेणैव सिद्धिर्लौकिकी यत्र वैदिकी।
न यत्नादन्यथा विघ्नः पुष्टिमार्गः स कथ्यते॥
समस्तविषयत्यागः सर्वभावेन यत्र हि।
समर्पणं च देहादेः पुष्टिमार्गः स [2]उच्यते॥

तत्र पुष्टिमार्गे भक्तेः प्रकारानुसारं भगवदिच्छानुसारं च भक्तो जीवो भक्तेरानन्दमनुभवति। मर्यादामार्गे अपि वेदोक्तसाधनद्वारा भगवतः सालोक्यसामीप्यसायुज्यमुक्तिष्वन्यतमा मुक्तिरुपलभ्यते। तत्र ज्ञान-साधनैः यः शुद्धाद्वैतज्ञानी सत्यज्ञानमवाप्नोति स ब्रह्मणः अक्षरस्वरूपे लीनः सायुज्यमुक्तिं लभते किन्तु यः पूर्णपुरुषोत्तमस्य श्रीकृष्णस्य स्नेह-पूर्णो भक्तिं करोति स पूर्णपुरुषोत्तमस्योत्तमप्रभोः कृपाद्वारा तल्लीलायाः नित्यानन्दं लभते।

श्रीवल्लभाचार्येण तत्त्वदीपनिबन्धस्य शास्त्रार्थप्रकरणे उक्तम्—विद्यया अविद्या नाश्यते तदा जीवो मुक्तो भवति। तदानीं देहेन्द्रियान्तः-करणाध्यासो विनश्यति—

विद्यया अविद्यानाशे तु, जीवो मुक्तो भविष्यति।
देहेन्द्रियासवः सर्वे, निरध्यस्ता भवन्ति हि॥

---

१. पुष्टिमार्गः अनुग्रहैकसाध्यः (अ० भा० ४।४।९); 'कृष्णानुग्रहरूपाति-पुष्टिः (तत्त्वदीप निबन्ध-भागवतार्थप्रकरण); अनुग्रहः पुष्टिमार्गे नियामक इति स्थितिः (सि० मु० भट्ट रमानाथ)

२. श्रीहरिराय वाङ्मुक्तावली, प्रथमो भागः (पृ० ११२)

तथापि न प्रलीयन्ते, जीवन्मुक्तगताः स्फुटम् ।
आसन् यस्य हरेर्वापि सेवया देवभावतः'[1] ॥

अयं च लयो तावद् भवति यावत्तस्य प्रारब्धकर्माणि न समाप्नुवन्ति अथवा यावत् प्रभुकृपा न तमुत्थापयति । पुष्टिमार्गीयभक्तस्य प्रारब्धानि संचितानि चैतत्सर्वाणि ईश्वरकृपा शमयति भक्तश्च सद्यो मुक्तः संजायते एतदणुभाष्ये उक्तम्—

'अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वेति विचार्यते···एकेषां पुष्टिमार्गीयाणां भक्तानामुभयोः प्रारब्धाप्रारब्धयोः भोगं विनैव नाशो भवति'[2] ।

अविद्याया नाशे भक्त्या ज्ञानसाधनेन वा जीवन्मुक्तो जीवः स्वकीयमोक्षकामनाः समवाप्नोति । पुष्टिमार्गीयं फलं चैतत् यत् मनुष्यः स्थूललिंगशरीरं परित्यज्य भगवल्लीलोपयोगिशरीरावाप्त्यनन्तरं ब्रह्मणा सह तदानन्दरसमनुभवेत्—अग्रे प्राप्यालौकिकदेहात् भिन्ने स्थूललिंगशरीरे क्षपयित्वा दूरीकृत्य अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन सम्पद्यते—'सः अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' ।

भक्ति-ज्ञान-योगद्वारा सांसारिकदुःखनिवारणं वल्लभः स्वीकरोति किन्तु ज्ञानयोगयोः साधनं कलिप्रताडितजीवैः असाध्यमिति वल्लभानुसारं मुक्तेः सरल उपायः भक्तिः । तत्रापि मर्यादाभक्तौ वेदविहितकर्मणां करणे नानाप्रत्यवायसम्भवात् भगवदात्मसमर्पणरूपपुष्टिभक्तिरेव सर्वथा गरीयसी ।

इत्थं च अनेनापि दुःखाभावपूर्वकनित्यानन्दप्राप्तिरेव मोक्षः कथितः । तस्येदं कथनं यत्पुष्टिमार्गीयभक्तस्य मुक्तिर्विभिन्नलोकेषु गमनं विनैव तथा प्रारब्धकर्मभोगमन्तरेणैव जायते—'पुष्टिमार्गीयाणं भक्तानामुभयोः प्रारब्धाप्रारब्धयोर्नाशो भोगं विनैव[3] भवति' । भगवान् तत्कर्मणां नाशं स्वकृपयैव करोति । स चैवं करुणाशीलो यत् स्ववियोगदुःखविह्वलं भक्तं दुःखान्मोचयितुं जीवन्मुक्तावस्थायां प्रारब्धकर्मभोगार्थं संसारे न निवासयति प्रत्युत तमानन्दविग्रहं प्रदाय स्वकीयनित्यरसात्मकलीलायां

१. त० दी० नि० ( पृ० १०६ )
२. अ० भा० ( ब्र० सू० ४।१।१८ )
३. अ० भा० ( ब्र० सू० ४।१।१७ )

प्रवेशयति[1] । इयमेव सद्यो मुक्तिरुक्ता । क्रममुक्तिश्च ज्ञानमार्गिणां भवति । अग्निहोत्रादिकर्मोपासनायां ज्ञानसाधनक्रमे चाग्निवायुवरुणेन्द्राद्यनेकलोकानतिक्रम्य ज्ञानी ज्योतिर्मयं ब्रह्म समवाप्नोति—'अग्निहोत्रादिकर्मभिः चित्तशुद्धावुपासनाभिः ज्ञानोदये क्रममुक्त्यधिकारी हि तल्लोकं गत्वा भुक्त्वा अन्ते ब्रह्म 'प्राप्नोति' एषा मोक्षावस्था क्रममुक्तिरुच्यते । मर्यादामार्गीयभक्तावपि साधनक्रमेण मोचनेच्छा भवति भक्तश्चापि वेदमर्यादाशासितस्तिष्ठति । तस्य लयः पंचभूतेषु भवति । सालोक्य-सामीप्य-सारूप्य-सायुज्यैतन्मुक्तिचतुष्टयं च प्राप्नोति, लीलारसस्तु न तेनावाप्यते ।

चतुर्थाध्यायस्य तृतीयपादसमाप्तौ अक्षरब्रह्मप्राप्तिरूपफले पुरुषोत्तमब्रह्मप्राप्तिरूपफले चान्तरं प्रतिपादयता वल्लभाचार्येण ब्रह्मप्राप्तेः वैशिष्ट्यं प्रतिपादितम् । ततः चतुर्थपादे पुरुषोत्तमस्य स्वरूपं तत्प्राप्तिरूपं फलं च कथं जीवः अनुभवतीत्येतदुभयं स्पष्टीकृतम् । तेन तैत्तिरीयोपनिषदः 'ब्रह्मविदाप्नोति [2]परम्' इमां श्रुतिमुपक्रम्य 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्येतामप्यादधानेन 'ब्रह्मविद् ब्रह्मैव भवति' इति प्रतिपादितम् । एतस्यैतत्तात्पर्यं यद् ब्रह्मविदि सर्वे गुणा आयान्ति किन्तु तस्य ब्रह्मणः अधीनत्वात् कर्तृत्वभावः केवलं तस्मिन्नायाति ।

ब्रह्मविदः कर्मणामभावः, स दग्धकर्मेति तस्यापुनरावृत्तिं [4]श्रुतिः प्रतिपादयति । अतो मुक्तो जीवः केन शरीरेण ब्रह्मणा सह स्वकीयान् कामान् अश्नुते एतत्प्रश्नमुत्थापयता वल्लभाचार्येण चतुर्थाध्यायस्य चतुर्थपादे उक्तं यद्ब्रह्मविदः पुनरावृत्तिरस्मिन् प्रपंचात्मकसंसारे न भवति । तस्याविर्भावो भगवदनुग्रहवशेन प्रपंचातीततन्नित्यलीलायां भवति, परब्रह्म, ब्रह्मलोकः, ब्रह्मलीला ब्रह्मविद्विग्रहश्चैते सर्वे अलौकिकाः अप्राकृताश्च । ब्रह्मविदो मुक्तजीवस्य विग्रहो ब्रह्मवदेव सत्यज्ञानानन्दात्मको भवति—'पूर्वेण मुक्तो जीवो भगवदनुग्रहातिशयेच्छातो बहिराविर्भूतो गुणातीतेन पुरुषोत्तमेनैव सह सर्वान् कामान् अश्नुते × × × × ब्रह्मणा भगवतैव स्वभोगानुरूपतया सम्पादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तानश्नुते'[5] ।

---

१. तत्रैव ( ब्र० सू० ४।१।१९ ) तथा ( ४।२।१ )

२. तत्रैव ( ब्र० सू० ४।३।२ ) ३. तै० उ० २।१

४. तेषां न पुनरावृत्तिः (बृ० ६।२।१५) न च पुनरावर्तते (छा० ८।१५।१)

५. अणु भाष्यम् ( ब्र० सू० ४।४।५ )

भगवदनुग्रहानुसारमेव जीवः अलौकिकशरीरं प्रविश्य मुक्तो भगवल्लीलानन्दमनुभवति—'ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येव। यथानुग्रहो यस्मिन् शरीरे स तादृशं तद् आविश्य भगवदानन्दमश्नुते इति सर्वमवदातम्'।[1]

इत्थं चरममोक्षलाभे भगवत्कृपैव प्रधानं कारणम्। सैव च भक्तस्य साध्या, 'मुक्तोऽपि जीवः पुष्टिमार्गे अंगीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोतीति सिद्धम्'।[2]

वल्लभानुसारं ज्ञानमार्गीयो ज्ञानी विग्रहाद्यभावे अक्षरब्रह्मणि लीयते इति प्रतिपादितचरम्। पुष्टिमार्गीयो भक्तश्च परब्रह्म प्राप्नोति यत्र मुक्तो जीवो भगवत्संकल्पनिर्मितं विग्रहं लभते—'ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरब्रह्मप्राप्तिः, पुष्टिमार्गीयभक्तस्य तु सोऽश्नुते इत्यनेनोक्तपरप्राप्तिरिति'।[3]

पुरुषार्थपूर्णसाधनमुक्तो जीवः अक्षरब्रह्मणि लीयते। भगवत्कृपया च स परब्रह्म पुरुषोत्तमं वृणीते। परब्रह्मप्राप्तिमार्गे अपि ब्रह्मणा सह भक्तस्य प्राणादितल्लीनता भवति, किन्तु सा तल्लीनता आनन्दविग्रहप्राप्तेः पूर्वावस्था वर्तते। भक्तो यदा चरमविरहे आत्मानं विस्मरति तदा भक्तभगवतोरेकीभावः संजायते। अत एव श्रीमद्भागवते—

'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्' इत्युच्यते।

इत्थमाचार्यपंचकमोक्षविषयकधारणानुशीलनेन ज्ञायते यत् शंकरमते मोक्षावस्थायां जीवात्मनः परब्रह्मणा सह पूर्णतस्तादात्म्यं जायते तथा वैष्णवाचार्याणामेषा धारणा प्रतीयते यत् मुक्तात्मनां परमपदं दिव्यलोकवाचकविष्णुपदं वा प्राप्तवतां ततः परावर्तनस्य न भयं भवति। ते भगवदधिकारे एवात्मानमवबुध्य तमेव सर्वमाकलयन्ति। तदतिरिक्तं ते न किमपि वस्तु कामयन्ते। सांसारिकसुखानि परित्यज्य मुक्तिमार्गं ग्रहीतरि जीवे भगवानपि निरतिशयं प्रेम करोति। न स कदापि स्वकीयं तं प्रेष्ठं स्वशरणतः पृथक् करोति। छान्दोग्यश्रुतिरेतत्प्रतिपादयति यन्मुक्तिमार्गेण गन्तारः जीवाः इमं मानवलोकं नावर्तन्ते—'एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमानाः इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते'[5]। बृहदारण्यके अप्येतदेव प्रतिपादितम्—'तेषु ब्रह्मलोकेषु

---

१. तत्रैव (४।४।७) २. तत्रैव (४।४।१०)
३. तत्रैव (४।४।११) ४. तत्रैव (४।४।१२)
५. छा० (४।१५।१)

पराः परावतो वसन्ति तेषां न 'पुनरावृत्तिः'[1]। गीतायां भगवता श्रीकृष्णेन स्वयमेष विषयः प्रतिपादितः—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां [2]गताः॥

एतासामेव श्रुतिस्मृतीनां समन्वयात्मकोपसंहारो बादरायणेन 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' (४।४।२२) इत्यत्र कृतो वर्तते। सा चानावृत्तिरद्वैतमते ज्ञानेन वैष्णवाचार्यमते च भक्त्येति निष्कर्षः।

## समीक्षा—

ब्रह्मलोकमवाप्य ब्रह्मविद् यथा आनन्दमनुभवति तस्य इयमेव साधारणी अनुशीलनी ब्रह्मलोकः शाश्वतः, अस्मिन् विषये रामानुज-निम्बार्कवल्लभानामैकमत्यम्। बादरायणस्य सूत्राणि एतस्यैव भावस्य द्योतकानि। अत एव शंकरेण—"तत्तु समन्वयात्' इति सूत्रस्य भाष्ये 'इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयं ज्योतिःस्वभावं यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते तदेतदशरीरत्वं मोक्षाख्यम्' 'अप्राणो ह्यमनाः शुभ्रः' 'असंगो ह्ययं पुरुषः' अत एव अनुष्ठेयफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यम् इत्यादि-श्रुतिप्रमाणैः शरीरादिरहितायां स्थितिरेव मोक्षः, तदेव च ब्रह्म यस्यात्र जिज्ञासा प्रारब्धेति भावः"—एवमुक्त्वा यो मोक्षो निर्दिष्टः स भावः एतैः सूत्रैर्नाभिव्यज्यते। पूर्वोक्तोद्धरणेनैतत् सिध्यति यन्मोक्षस्थितिः ब्रह्म चैतद्द्वयमपि एकमेव। 'अहं ब्रह्मास्मि' इति भावनया जीवात्मनो ब्रह्मणा सहैक्यानुभव एव हि मोक्ष इति मोक्षप्राप्तिर्न कापि नवीनस्थितिः प्रत्युत शश्वत्कालात् वर्तमानायाः स्थितेः परिज्ञानमात्रमेवेति मोक्षप्राप्तिः केनचित् कर्मणा नैतिकविकासेन न अपितु ज्ञानद्वारैव भवति। एतन्नितरां स्पष्टं यत् मोक्षविषयिणी एषा धारणा बादरायणस्य न कस्मादपि सूत्रात्प्रकटीभवति। शंकरस्य मोक्षविषयिणी धारणा सांख्यस्य मोक्षविषयकधारणया समतामेति। यथा प्रकृतेः पुरुषस्य मुक्तिरेव सांख्यस्य अन्तिमं लक्ष्यं तथैव शंकरानुसारमविद्यातो जीवस्य मुक्तिरेव मोक्षः। अविद्याया विनाशानन्तरमेव। जीवात्मा स्वकीयं वास्तविकस्वरूपमवाप्नोति। मोक्षप्रतिपादकसूत्राणामवलोकनेन एतत्स्पष्टीभवति यद् बादरायणस्य न कस्मि-

---

१. बृ० (६।२।१५) २. गीता ८।१५

अपि सूत्रे एषा धारणोपलभ्यते । बादरायणानुसारमात्यन्तिकदुःखनिवृत्ति-मात्रमेव न मोक्षः प्रत्युत शाश्वतानन्दावाप्त्यवस्थानामेव मोक्षः ।

## उपसंहारः—

मोक्षस्य एष विषयः ब्रह्मसूत्राणां चतुर्थाध्यायस्य प्रथमपादत एव प्रारब्धः । स च जीवात्मनां गतेरागतेश्च सम्बद्धः । तत्र बादरायणस्य एतत्तात्पर्यं यत् प्रारब्धकर्माणि भोगद्वारा परिसमाप्य जीवो ब्रह्म[1] सम्पद्यते । तेषां कर्मणां परिसमाप्तौ हि सर्वेन्द्रियाणि[2] मनसि मनश्च[3] प्राणे लीयन्ते । प्राणः अध्यक्षे[4] आत्मनि तिष्ठति । इन्द्रियमनःप्राणोपेत आत्मा च पंचभूतेषु[5] तिष्ठति । आत्मनः सूक्ष्मशरीरेण सह सम्पर्कः अपीति[6] ( मुक्ति ) पर्यन्तं तिष्ठतिः स्थूलशरीरविनाशे च सूक्ष्मशरीरं[7] न विनश्यति ।

श्रुतावेकत्र इत्थं प्रतिपादितं वर्तते यत् मुक्तात्मनां प्राणा न उत्क्रामन्ति ।[8] अत्र बादरायणस्य एतत्कथनं यदुक्तवचनेन नेत्थमवगन्तव्यं यत् शरीरात्प्राणाः न वियुज्यन्ते अपि तु तस्येदं तात्पर्यं यत् शरीरात्[9] अर्थात् जीवात् प्राणानां वियोगो न भवति । माध्यन्दिनीयशाखाध्यायिनस्तु[10] स्पष्टत एवेत्थं प्रतिपादयन्ति यत् आत्मनः प्राणानामुत्क्रान्तिर्न भवति । [11]स्मृत्याप्येतदेव सिध्यति ।

बन्धनमुक्तशुकदेवादीनामादित्याभिमुखं गमनं पुराणेतिहासादिषूपलभ्यते । तच्च सूक्ष्मशरीरमन्तरेण सर्वथा असम्भवि ।

जीवाधिष्ठितसूक्ष्मभूतानि परब्रह्म[12] गच्छन्ति, तत्रापि चात्मनः सूक्ष्मशरीराद् विभागो[13] न भवति ।

---

१. भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ( ४।१।१९ )

२. अत एव च सर्वाण्यनु ( ४।२।२ )

३. तन्मनः प्राण उत्तरात् ( ४।२।३ )

४. सोऽध्यक्षे तदुपगमादिभ्यः ( ४।२।४ )

५. भूतेष्वतः श्रुतेः ( ४।२।५ )

६. तदापीतेः संसारव्यपदेशात् ( ४।२।८ )

७. नोपमर्देनातः ( ४।२।१० ) ११०. न तस्य प्राणा उत्क्रामन्ति

८. प्रतिषेधतीति चेन्न शारीरात् ( ४।२।१२ )

९. स्पष्टो ह्येकेषाम् ( ४।२।१३ ) ११२. स्मर्यते च ( ४।२।१४ )

१०. तानि परे तथा ह्याह ( ४।२।१५ )

११. अविभागो वचनात् ( ४।२।१६ )

अर्चिरादिमानवदेवगणो[1] मुक्तात्मानं विद्युल्लोकं प्रापयति। ततः अग्रे अमानवाः पुरुषास्तं ब्रह्मलोकं नयन्ति।

मुक्तौ जीवः सत्यकामसत्यसंकल्पादिब्राह्म[2]गुणैर्विभूषितः संजायते इति जैमिनिः। मुक्तात्मा शुद्धश्चेतनस्वरूप [3]इत्यौडुलोमिः। मुक्तो जीवः चेतनः अपि सत्यसंकल्पादिगुणालंकृतः इति नानयोर्वादयोः कश्चिद् विरोध इति बादरायणः।[4]

मुक्तात्मानः संकल्पमात्रेणैव[5] समस्तसुखानि प्राप्नुवन्ति। सर्वेषु लोकेषु मुक्तात्मा स्वेच्छानुसारमप्रतिहतगत्या गन्तुमागन्तुं च समर्थः। स सर्वेश्वरः [6]सर्वाधिपतिश्च जायते। स्वकीयेनैश्वर्येण चैकदैव अनेकशरीराणि[7] धारयितुं समर्थः सशरीरः अशरीरश्च भवति।

मुक्तात्मा ब्रह्मणा सह परमं साम्यमुपैति इत्युपनिषदः प्रतिपादयन्ति। बादरायणस्यात्र एतत्कथनं यच्छ्रुतीनामेतत्प्रतिपादनस्यैतत्तात्पर्यं न वर्तते यत् जीवो ब्रह्मैव सम्पद्यते अपितु केवलमात्मानन्दोपभोगे, जीवस्य ब्रह्मणा सह तासां साम्योपदेशः। बादरायणस्य 'भोगमात्रसाम्यलिंगाच्च' एतस्य सूत्रस्य अवश्यमेष ध्वनिर्यद् ब्रह्मशक्त्यपेक्षया जीवस्य शक्तिस्तदानीमल्पा भवति।

ब्रह्मप्राप्त्यनन्तरं मुक्तात्मा न पुनर्मानवलोकमावर्तते।[8]

इत्थं ब्रह्मसूत्राध्यायिनां स्पष्टमेतद् यन्मुक्तो जीवः सांसारिकबन्धनान्मुक्तिमवाप्नोति। तदानीं स पूर्णतया स्वतन्त्रः संजायते। स्थूलशरीरं स धारयतु मा वा सूक्ष्मशरीरं तु तस्य सर्वदैव तिष्ठति। स्वेच्छानुसारं स सर्वत्रगामी, सत्यकामः, सत्यसंकल्पश्चापि ब्रह्माधीनो भूत्वा जगद्व्यापाराद्यतिरिक्तमणिमाद्यैश्वर्यं भुङ्क्ते। पंचभूतेषु चापि स विजयी संजायते।

---

१. अर्चिरादिना तत्प्रथितेः ( ४।३।१ )
२. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ( ४।४।५ )
३. चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ( ४।४।६ )
४. एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ( ४।४।७ )
५. संकल्पादेव तु तच्छ्रुतेः ( ४।४।८ )
६. अत एव चानन्याधिपतिः ( ४।४।९ )
७. प्रदीपवदावेशस्तथाहि दर्शयति ( ४।४।१५ )
८. अनावृत्तिः शब्दादनावृत्तिः शब्दात् ( ४।४।२२ )

# अष्टमः अध्यायः

## ( अध्ययनोपसंहारः )

पूर्वोक्ताध्यायसप्तके यथास्थानं भाष्यकाराणां प्रातिस्विकविचार-प्रदर्शनपूर्वकं ब्रह्मसूत्रप्रतिपाद्यविषयाधारभूतश्रुतिनिर्देशे प्रत्यधिकरणभाष्यपञ्चकसमीक्षणादिना एतत्स्पष्टीकर्तुं चेष्टा कृता संजाता यत् पूर्वोक्तभाष्यकारपञ्चकव्याख्यासु कतमा आधिक्यात्याधिक्येन ब्रह्मसूत्रानुकूला। इदानीमेतदावश्यकं यत्तन्निष्कर्षं विविच्य तदुपयुक्तानुपयुक्तयोः विचारः क्रियेतेति कालक्रमानुसारेण पूर्ववत् शंकर आदौ गृह्यते—

शंकरस्य व्याख्या रामानुजनिम्बार्कवल्लभानां व्याख्यापेक्षया नितरां भिन्ना। यद्यपि चतुर्भिरप्याचार्यैः स्वस्वविधया एकत्वबहुत्वयोः समन्वयं स्थापयितुं स्तुत्यः प्रयत्नो विहितः, तथापि एतस्यां दिशि शंकरस्य विधा नितान्तं पृथक्। तस्यायं विचारः यत् एकत्वं बहुत्वं च एतदुभयम् एकदैव नैकं भवितुमर्हति। अनयोर्द्वयोरेकमेव सत्यम्। तच्चैकत्वम् इत्यनेकत्वभावना मिथ्या, भ्रमो, मायाजन्या वा वर्तते। मायया दृश्यमानस्य एतस्य जगतः परस्य ( निर्गुणस्य ) अपरस्य ( सगुणस्य ) च ब्रह्मणः परस्य अपरस्य च ज्ञानस्य परस्य अपरस्य च विदुषः ब्रह्मणो जीवस्य च नितरामेकत्वे परस्परं भेदप्रतीतिः संजायते।

शंकरानुसारेण विवर्त एव कार्यकारणसम्बन्धः, न परिणामः। जीवः प्रकृत्या ब्रह्मैव तद्वदेव च विभुः। अविद्याविनाशे हि मुक्तावस्थायां ब्रह्मसारूप्यमवाप्नोति।

इदानीमेतद्विचारणीयं वर्तते यत् एतद्विषये सूत्रेषु किमुपलभ्यते। सर्वतः पूर्वं तत्र ब्रह्मजीवयोः भेदे दृष्टिर्निक्षिप्यते।

ब्रह्मसूत्रेषु बहूनि एवंभूतानि सूत्राणि सन्ति यानि उभयोः भेदं सूचयन्ति। तद्यथा—नेतरोऽनुपपत्तेः ( १।१।१६ ) भेद व्यपदेशाच्च ( १।१।१७ ) अस्मिन्नस्य च तद्योगं शास्ति ( १।१।१९ ) भेदव्यपदेशाच्चान्यः ( १।१।२१ ) कर्मकर्तृव्यपदेशाच्च ( १।२।४ ) संभोगप्राप्तिरिति चेन्न वैशेष्यात् ( १।२।८ ) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ( १।२।११ ) शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ( १।२।२० ) विशेषणभेदव्यपदेशाभ्यां च नेतरौ ( १।२।२२ ) मुक्तोपसृप्यव्यपदेशात् ( १।३।२ ) इत्यादि।

शंकरेण स्वसिद्धान्तानुकूलार्थानुपलब्धौ स्वकीयव्याख्यायां बहुत्र प्रसंगानुकूलं परिवर्धनं कृतम् । यथा, भेदव्यपदेशाच्च ( १।१।१७ ) शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ( १।२।२० ) उत्तराच्चेदाविर्भूतस्वरूपस्तु ( १।३।१९ ) एषु ब्रह्मजीवभेदप्रतिपादकसूत्रेषु तेन एतत्प्रतिपादितं यदेष भेदो मायाहेतुको व्यावहारिको न पारमार्थिकः । विशेषणाच्च ( १।२।१२ ) इति सूत्रे शंकरेण स्वतः एतत्स्वीकृतं यदनयोर्द्वयोर्जीवो गन्ता ब्रह्म च गन्तव्यम् । किन्तु अस्मिन् विषये सन्देहे जिज्ञासुभिः 'अधिकं तु भेदनिर्देशात्' ( २।१।२२ ) तथा 'अंशो नानाव्यपदेशात्' ( २।३।४३ ) एतत्सूत्रद्वयं द्रष्टव्यम् । अनयोः प्रथमं सूत्रमेतत् निर्दिशति यत् जीवापेक्षया ब्रह्म अधिकम् । द्वितीयं च एतन्निर्दिशति यत् जीवो ब्रह्मणः अंशः । एवमेव तृतीयाध्यायद्वितीयपादस्य सप्तविंशतः त्रिंशत्तमसूत्रेषु यद्यपि ब्रह्मजीवसम्बन्धसूचकानि अनेकोदाहरणानि प्रदत्तानि—यद्यपि न तानि प्राचुर्येण निश्चयात्मकानि—तथापि तानि न केनापि प्रकारेण अद्वैतसिद्धान्तस्थापने प्रमाणस्वरूपाणि वक्तुं शक्यन्ते ।

ब्रह्मजीवयोः सम्बन्धविवेचनानन्तरं जीवस्य स्वरूपधर्मयोः विचारः क्रियते । अयं विषयो विशेषेण द्वितीयाध्यायतृतीयपादे एकोनविंशसूत्रतः त्रिपंचाशत्तमसूत्रं यावत् विवेचितः ।

अधिकरणविश्लेषणे एतत्प्रतिपादितचरं यत् एकोनविंशसूत्रतः द्वाविंशसूत्रं यावत् जीवः अणुरिति सिद्धान्तपक्षः स्थापितः । अष्टादशसूत्रे च जीवो ज्ञः प्रतिपादितः । त्रयस्त्रिंशत्तमसूत्रतः चत्वारिंशत्तमसूत्रं यावत् जीवः कर्त्ता अपि प्रतिपादितः । शंकरेण एतेषां सर्वथा विपरीत एव अर्थः प्रतिपादितः इति तत्रानेकप्रकारविरोधः सर्वथा स्पष्टः । 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' ( २।३।२९ ) तथा 'यथा च तक्षोभयथा' ( २।३।४० ) इत्यत्र विशेषेणैतदवलोक्यते ।

इत्थं शंकरस्य सिद्धान्तार्थं सूत्रेभ्यो निम्नांकितविषयद्वये न किमपि साहाय्यमुपलभ्यते ( १ ) ब्रह्मजीवयोः सम्बन्धः ( २ ) जीवस्य स्वरूपम् च । तत्र शंकरमते ब्रह्मजीवयोर्नितरामेकत्वम् । स्वरूपविषये च जीवो विभुः, ज्ञानस्वरूपः ( न ज्ञातृस्वरूपः ) कर्तृत्वविहीनश्च ।

जीवात्मनो विषये शंकरस्य विचारः सूत्रकारात् पृथक् वर्तते । सूत्रकारस्यैतन्मतं यत् जीवात्मा ब्रह्मणः अग्निस्फुलिंगः अग्नेरिवोद्गतः । स च अणुः, ब्रह्मणः अंशः । एवमुभयोरंशांशिभावत्वे ब्रह्मजीवयोरनन्यत्वम् । जीवः कर्त्ता भोक्ता च किन्तु ब्रह्माधीनः । ब्रह्मभावापत्ति-

दशायां सः अणुत्वेन सह विभुत्वमनुभवति। स ब्रह्मणो नाभासो नापि च प्रतिबिम्बः, नापि चाविद्याजन्यः। स च न असत्, अपि तु सत्।

परापरब्रह्मभेदविचारे अपि वयमेतदेव अवगच्छामो यत् यत्र कुत्रापि शंकरेण अयं भेदः प्रदर्शितः तत्र कतमत् अपि सूत्रमेवंभूतं न वर्तते यत् शंकरस्य एतन्मतं प्रमाणयितुं शक्नुयात्। उदाहरणार्थम्—गतेरर्थवत्त्वमुभयथा—(३।३।२९) इति सूत्रे शंकरेण उभयथा इति शब्दस्य यः अर्थः कृतः स नितरामस्वाभाविकः। 'अनियमः सर्वेषाम्' (३।३।३१) तथा कामादीतरत्र······(३।३।३९) ऐहिकमप्यप्रस्तुत प्रतिबन्धे तद्दर्शनात् (३।४।५१) तथा 'एवं मुक्तिफलानियमः'—इत्यादिषु एवं चतुर्थाध्यायस्य अन्तिमतृतीयपादेषु परब्रह्मणः निर्देशकत्वम् शेषेषु चापरब्रह्मणः। एवमेव आनन्दमयाधिकरणे परापरब्रह्मणोः विवेचनं कृतम्। किन्तु तत्र तत्र सूत्रेषु न किमपीत्थंभूतमुपलभ्यते येन प्रधानतया अयं भेदः स्थापयितुं शक्येत। नापि च अन्यभाष्यकारैः एवंभूतब्रह्मविषयकपरापरभेदतात्पर्येण सूत्राणि व्याख्यातानि इति न तेषामर्थाः शंकरस्येवास्वाभाविकाः। सूत्रकारानुसारेण परापरब्रह्मणोः भेदाभावात् तत्सिद्धान्ते शंकराभिमतमायायाः कृते ब्रह्मसूत्रेषु न किमपि स्थानम्।

ये च इत्थं स्वीकुर्वन्ति यत् शंकरस्य सिद्धान्त एव—यस्मिंश्च मायायाः प्राधान्यम्—सूत्रकाराभिमतः तैर्नैतस्योत्तरे किमपि वक्तव्यं स्यात् यत् सूत्रकारेण सम्पूर्णग्रन्थे एकत्रैव केवलं, 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' (३।२।२) इत्यस्मिन्नेव सूत्रे मायाशब्दः प्रयुक्तः; स चापि स्वप्नावस्थावर्णनप्रसंगे न जाग्रदवस्थावर्णनप्रसंगे।

शंकरेण मायाशब्दस्य यः अर्थः स्वीकृतः स सर्वथा अप्रासंगिकः। एतदर्थं च विरोधास्पदं यत् अस्मिन्नधिकरणे शंकरोपस्थापितनिम्नांकितप्रश्नद्वयमध्ये युक्तिसंगतसम्बन्धस्य सर्वथा अभावः—

(१) किं प्रबोध इव स्वप्ने अपि पारमार्थिकी सृष्टिराहोस्वित् मायामयीति (शां० भा० पृ० १५०७)

(२) कस्मात्पुनर्जीवः परमात्मांश एव संस्तिरस्कृतज्ञानैश्वर्यो भवति? (शां० भा० पृ० १७२४)

रामानुजाचार्येण माया परमात्मनः आश्चर्यजनकविचित्रा शक्तिः अभ्युपगता। तदर्थानुसारमस्याधिकरणस्य सम्पूर्णसूत्राणि शंकरापेक्षया अधिकसन्तोषजनकरूपेण सुसम्बद्धुं शक्यन्ते न तत्र लेशमात्रमपि

विरोधः सम्भवति। अत्र न कश्चित्सन्देहः यत् रामानुजानुसारं माया परमात्मनः शक्तिरिति स्वीकारे संसारस्यैतद् दृश्यमानं स्वरूपं ज्ञानस्य साधारणसाधनैरनिर्वचनीयं किन्तु शंकररामानुजधारणाद्वयमध्ये महदन्तरं वर्तते—शंकरानुसारमेतद्दृश्यमानं जगत् मिथ्या, रज्जौ सर्पोद्भावनमिवाविद्याध्यस्तम्; रामानुजानुसारं च संसारः अनिर्वचनीयः अपि ब्रह्मवदेव सत्यः।

मायावादस्य अभिव्यंजकं 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (२।१।१४) इत्येकम् अन्यत्सूत्रम्। अत्र शंकरानुसारम् 'आरम्भणम्' इत्येष शब्दः 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतिवाक्यस्य तात्पर्येण निर्दिष्टः सन् जगद् ब्रह्मणो विवर्तं सूचयति—'अभ्युपगम्य चेमं व्यावहारिकं......ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम्'[1]। अस्मिन् भाष्ये शंकरस्य विवर्तवादः स्पष्टः, किन्तु अग्रे 'पटवच्च' (२।१।१९) तथा 'यथा च प्राणादिः' (२।१।२०) अनयोः सूत्रयोः भाष्योदाहरणैः न विवर्तस्य अपि तु परिणामवादस्य पुष्टिर्जायते इति एतद् वक्तुं न असंगतं यत् आरंभशब्दस्य रामानुजीयंभाष्यं शंकरभाष्यापेक्षया अधिकं युक्तिसंगतम्। वल्लभेनाप्यत्र शंकरस्य तीव्रालोचना कृता।

अस्यैव भावस्याभिव्यंजकं तृतीयं सूत्रम् 'आभास एव च' (२।३।५०) एतद् वर्तते। अत्र आभासशब्दस्य शंकरेण यः अर्थः कृतस्तदपेक्षया वल्लभस्यार्थः अधिकं समुचितः। रामानुजनिम्बार्कप्रतिपादनपद्धतिरपि न विप्रतिपत्त्यात्मिका।

कार्यकारणसम्बन्धे विशेषेण दृष्टिपाते एतदाधिक्येन प्रमाणितं संजायते यत् सूत्रकारस्य परिणामवाद एव अभीष्टो न विवर्तवादः। एतस्य एकतः एतत्कारणं यत् 'आत्मकृतेः परिणामात्' (१।४।२६) एतस्मिन् सूत्रे परिणामशब्दस्य विशेषेणोल्लेखः। द्वितीयतः, 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' (२।१।४) एतस्मिन् सूत्रे यत्र कार्यकारणवैषम्येणोत्पन्नस्य अस्य प्रश्नस्य समाधानं यद् अचेतनप्रकृतिकजगतः कारणं कथं चेतनप्रकृतिकं ब्रह्म सम्भवति तत्र न सूत्रकारेणैतत्प्रतिपादितं नापि चैतल्लेशमात्रमपि संकेतितं यदेतत्कार्यकारणाध्यासवशेन सर्वथा सम्भवति। उदाहरणार्थम्, यथा शुक्तौ रजतस्य भ्रमः तथैव ब्रह्मणि जगतो भ्रममात्रम्। किंच, स इत्थं न कदापि निर्दिशति यत् उत्पत्तेः प्राक् कारणे कार्यस्य सत्ता न वर्तते। एतच्च, 'असदिति चेन्न

---

१. शां० भा० १००३–४

प्रतिषेधमात्रत्वात्' ( २।१।७ ) इति सूत्रतः स्पष्टम् । विवर्तवादसिद्धान्त-स्वीकारे तु उत्पत्तेः प्राक् कारणे कार्यस्य सत्ता न कथमपि स्वीकर्तुं-शक्यते । एतदतिरिच्य 'दृश्यते तु' ( २।१।६ ) इति सूत्रस्य व्याख्यायां शंकरसहितैरन्यैः सर्वाचार्यैः यानि विषमकारणकार्योदाहरणानि—'यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्' ( मु० १।१।७ ) इत्यादीनि प्रदत्तानि तानि सर्वाणि परिणामवादस्यैव समर्थकानि ।

इत्थं शांकरभाष्यसमीक्षणेन एतन्निर्णेतुं नितरां न्यायसंगतं यद् दार्शनिकपद्धतौ, उपनिषदां सिद्धान्तस्थापने च शंकरस्य यत्किमपि मूल्यं भवेत् किन्तु सूत्रकारेण सह यावदस्य सम्बन्धस्तावत् सूत्रकारेण सह तत्सम्बन्धदृष्ट्या तत्सिद्धान्तः सूत्रकारसिद्धान्तात्सर्वथा भिन्नः ।

वस्तुस्थितिस्तु एषा यत् कस्यचिद् व्याख्यानस्य साहाय्यमन्तरेण ब्रह्मसूत्राणामर्थावगतिः सर्वथा असम्भवेति यावत् शंकरव्याख्यातिरिक्ता व्याख्या न उपलब्धा तावत् अधिकांशतः शांकरभाष्यस्यैव प्रचारः अभवदिति पूर्वोक्तप्रकारेण निर्णयं कर्तुं सर्वथा अयुक्तमाकलय्यते स्म, किन्तु कालान्तरे शंकरतुल्यप्रकाण्डविदुषां स्थानान्तरेषु विभिन्नार्थक-व्याख्यानामुपलब्धौ परम्परागतधारणानां तथैव स्वीकारात्पूर्वम् अनु-शीलनपराः विद्वांसो मुहुर्मुहुः विचारयितुं प्रारेभिरे इतीदानीं शंकर-रामानुजयोर्यत्र द्वयोर्वैमत्यं वर्तते तेषां सर्वेषां स्थलानां संग्रहे निश्चयेन वयमेतन्निष्कर्षमुपगमिष्यामो यत् बहुषु स्थलेषु एतन्निर्णेतुं न शक्यते यद् द्वयोः कतरस्यार्थः अधिकं स्वाभाविको दूराकृष्टो वा वर्तते । बहूनि स्थलानि एवंभूतानि सन्ति यत्र शंकरस्यार्थः रामानुजार्थापेक्षया अधिकं स्वीकार्यः । बहूनि चैवंभूतान्यपि सन्ति यत्र शंकरापेक्षया रामानुजार्थः अधिकं स्वीकार्यः । उदाहरणार्थम्, ३।४।५१-५२, ४।१।१५, तथा ४।२।७-१६ एतत्सूत्रव्याख्यासु एतन्निर्णेतुं दुःशकं यदनयोः कतरस्य व्याख्या उत्कृष्टा वर्तते । एवम् १।२।६-१०; १।३।१३; २।१।२, २।३।१४; ३।४।१-५; ३।४।२६ एषां सूत्राणां शंकरस्य व्याख्या रामानुजस्य व्याख्या-पेक्षया उत्कृष्टा किन्तु निस्सन्देहमेतद् वक्तुं शक्यते यत् १।१।१८; १।३।२१-२३, इत्यादिसूत्रेषु शंकरस्यार्थापेक्षया रामानुजस्यार्थः अति-स्वाभाविकः समुत्कृष्टश्चावगम्यते ।

शंकरस्य व्याख्याविषये डा० थीबो महोदयस्य स्वकीयवेदान्तसूत्र-भूमिकायाः शततमे पृष्ठे एतत् कथनं यत् सूत्रेषु शंकरमतानुसारिब्रह्म-

विषयकं परापरज्ञानं ब्रह्मेश्वरविषयको भेदो वा कुत्रापि न उपलभ्यते। सूत्रकारानुसारं ब्रह्म सर्वाद्भुत-गुणनिधानं सर्वशक्तिशालि च वर्तते। तस्मिन् प्रकृत्या सर्वविरोधिगुणानां सम्भवः। नेति नेतीत्यादिनिषेधात्मकश्रुतिवाक्यानि तत्र लौकिकगुणानां निषेधं कुर्वन्ति। 'सर्वकामः' इत्यादिश्रुतयः तत्र सर्वदिव्यगुणानां सम्भवं प्रतिपादयन्ति। इत्थं ब्रह्म उभयलिंगम्।

वल्लभनिम्बार्कयोरप्येतन्मतं यत् उपनिषत्सु प्रतिपादितं नेति नेति अथवा सर्वकाममेकं स्वतंत्रं कर्तृ सच्चिदानन्दस्वरूपम्। तच्च स्वलीलामात्रार्थमेवात्मानं जगद्रूपे परिणमयति, किन्तु ताद्रूप्यमवाप्य न समाप्नोति अपि तु तद् रचयित्वा तत्रैव प्रविशति। सर्वविश्वव्यापकत्वेन तदन्तर्यामि। बहिस्तिष्ठदगम्यमपि तत् यथाकामं समाधिना भक्त्या वा गम्यं भवति। क्रियामात्रस्य, ज्ञानमात्रस्य, आनन्दमात्रस्य च तद् उद्गमस्थानम्। नामरूपात्मकं तत्, अव्याकृतं च व्याकृतं करोति। तस्मादेव च विभिन्ननामरूपात्मकम् एतद् जगदुत्पद्यते। केवलं ज्ञानद्वारा प्राप्तिकरणदशायां तदव्यक्तं किन्तु चिन्तनेन भक्त्या वा प्राप्तिकरणदशायां तद् व्यक्तं संजायते। तज्जीवात्मनः अपि अन्तर्निवसति ( आत्मेति तूपगच्छन्ति ग्राहयन्ति च ब्र. सू. ४।१।३ ) तस्मिन्ननन्तविभिन्नतानामेकीभावः। सच्चिदानन्दस्वरूपं तद् ब्रह्म सर्वस्मिन् जगति अनुस्यूतम्। एतेन स्पष्टं यत् सूत्रकारस्य सर्वेश्वरवादपद्धतिः शंकरस्य सर्वेश्वरवादपद्धतेः सर्वथा भिन्ना। सूत्रकारः ब्रह्मणः प्रत्येकं वस्तु न अस्वीकरोति प्रत्युत तदीयप्रत्येकवस्तुस्वीकृतिं द्रढयति शंकरश्चेत्थं न स्वीकरोतीत्युभयोर्भेदः।

जीवात्मनो विषयेऽपि शंकरसूत्रकारयोर्मते विभिन्नता। सूत्रकारस्यैतन्मतं यज्जीवात्मा ब्रह्मणः अग्नेः स्फुलिंगवदुद् भवति। स चाणुः। ब्रह्मणः अंशः। उभयोरंशांशिभाव इति स ब्रह्मणः अनन्यः। स कर्त्ता भोक्ता च तथापि ब्रह्माधीनः। ब्रह्मभावापन्नदशायां सः अणुत्वेन सह विभुत्वमनुभवति। स न ब्रह्मण आभासः नापि च तत्प्रतिबिम्बः। नापि वा अविद्याजन्यः। स न असत् प्रत्युत सद् वर्तते।

जगतो विषये अपि शंकरसूत्रकारयोर्मान्यता विभिन्ना। तत्र सूत्रकारस्यैतन्मतं यत् केवलं ब्रह्म एव जगतो निमित्तोपादानोभयणम्। उपादानकारणे सत्यपि जगद्रूपे आत्मानं परिणमयितृणि ब्रह्मणि न किमपि परिवर्तनं संजायते। सत्यपि निमित्तकारणे न तस्मिन्

वैषम्यादिदोषदुष्टत्वम्। कार्यकारणयोरनन्यतयैव ब्रह्मजगतोरनन्यत्वम्। उत्पत्तिस्थितिनाशावस्थासु यथा सर्वदा कार्यस्य कारणे स्थितिः तथैवेदं विश्वं तिसृष्वपि अवस्थासु ब्रह्मणि वर्तमानं तदनन्यत् तिष्ठति। शंकरवत् सूत्रकारो नैतज्जगत् स्वप्नमात्रम्, अविद्याहेतुकं मायामात्रं वा मनुते। तदनुसारं जगतः कारणं ब्रह्म अस्ति। तथापि कार्यरूपं जगत् अनन्तविभिन्नतायुक्तम्, तस्य रचना च ब्रह्मणो लीलामात्रं न।

चतुर्थाध्याये प्रदर्शितायाः ब्रह्मप्राप्तेः ब्रह्मलोकीयैश्वर्यभोगपद्धतेश्च विवेचनेनैतत् स्पष्टं यत् मोक्षविषयकमान्यता अपि शंकरसूत्रकारयोर्भिन्नाः। सूत्रकारानुसारं सा च एका एवंभूता दशा यस्या उपलब्धिः आध्यात्मिकक्रमिकविकासेन भवति किन्तु शंकरानुसारं सा एका एवंभूता दशा यस्याः सत्ता सार्वकालिकी सती अपि अविद्यायाः कारणेन तिरोधत्ते तन्नाशे चाविर्भवति।

वेदान्तसारस्य भूमिकायां शांकरभाष्योद्धरणैर्बहुत्र विरोधं प्रदर्शयन् पाश्चात्यमनीषी कर्नलजैकबमहोदय इत्थं स्वविचारान् प्रकटीकरोति 'अतः इत्थं प्रतिभाति यत् शंकरसमये विशिष्टाद्वैतवादिनः एवंभूतस्य कस्यचिदन्यस्य सिद्धान्तस्य वा प्राबल्यमासीत् येन स्वयं शंकर इत्थं प्रभावित आसीत् यत् तद्विरोधिनं स्वसिद्धान्तं संस्थापयन्नपि न तत्सिद्धान्तं स्वमस्तिष्कान्निष्कासयितुं प्राभवत्'[1]।

कर्नलजैकबमहोदयस्य एतत्कथनं मौलिकं सत्यं च प्रतिभाति। यतो हि यदि शांकरभाष्यमादाय ततः शंकरस्य स्वसन्निवेशिताः अविद्याविषयकांशाः निष्कयेरन् तदा तस्य भाष्यस्य यः अंशः अवशिष्टः स एव बादरायणस्य वास्तविकः सिद्धान्तः। वल्लभाचार्यस्य अणुभाष्येण अपि पूर्वोक्तमेव तथ्यं प्रमाणीक्रियते अर्थात् ब्रह्मसूत्रेषु बादरायणेन इदमेव प्रदर्शितं यत् पुरुषोत्तमः सर्वजगदात्मकः सन्नपि ततः परः। अस्य इदमेव तात्पर्यं यत् शंकरबादरायणयोः सिद्धान्ताः यदि नाम विरोधिनः सन्तु न वा तथापि विभिन्ना अवश्यं सन्ति। स्वकीयां भाष्यभूमिकां समाप्नुवता शंकरेण प्रतिपादितम्—'यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः। एतेन स्पष्टमेतद् यत् शंकरस्य इदमेव लक्ष्यमासीत् यत् स ब्रह्मसूत्राणां यथासम्भवम् उपनिषत्सम्मतमेवार्थं प्रदर्शयेत्। अर्थात् स सूत्राणां तमेवार्थं गृह्णीयात् यथा च तेन उपनिषदामर्थः अवगतः। एतेन सर्वेण

---

१. वेदान्तसारभूमिका पृ० ९

दृष्टं यद् यावद् बादरायणसूत्राणां सम्बन्धस्तावत् तद्वास्तविक-व्याख्यातृस्वरूपे शंकरस्य पक्षो नातिप्रबलः।

रामानुजनिम्बार्कयोः सिद्धान्तौ विशिष्टाद्वैतद्वैताद्वैतनाम्ना प्रसिद्धौ परस्परमधिकांशतः संवदतः। अनयोर्द्वयोः सम्प्रदाययोः अयं मुख्यो भेदः यत् रामानुजमते बहुत्वमेकत्वस्य गुणः। शब्दान्तरैरित्थं वा प्रतिपाद्यं यत् चेतनमचेतनं च जगत् ब्रह्मणो विशेषणम्।

निम्बार्को नेमं विशिष्टतासिद्धान्तं स्वीकरोति। तस्येदं कथनं यत् एवंभूतं किमपि वस्तु न वर्तते यद् ब्रह्मणः पृथक् कर्तुं शक्येत। द्वैतमद्वैतमेतदुभयं सत्यम्। उभयोरेकः स्तरः। उभयोः काचिदपि एवं-भूता सहयोगभावना न वर्तते यथा रामानुजेन स्वीक्रियते। एतदतिरिच्य आध्यात्मिकांशे उभयोर्न कश्चिद् भेदः। निम्बार्कभाष्यं सूत्राणामक्षरशः व्याख्या। सा चात्यन्तसरला तथापि सामान्येन रामानुजमनुसरन्ती विशेषेण च स्वाभीष्टं पृथक् सिद्धान्तं स्पष्टरूपेण प्रतिपादयति। इत्थं निम्बार्कभाष्यमनेकस्थलेषु निजमौलिकतां प्रदर्शयत् परस्परश्रुति-वाक्येषु सामंजस्यस्थापनस्य स्तुत्यां पद्धतिं प्रदर्शयति। अनेकस्थलेषु तस्य रामानुजेन मतभेदः। स च स्वाभाविकः। तथाप्यधिकांशतया तेन रामानुज एव अनुसृतः। प्रतिपाद्यविषयादिना सह सूत्रार्थो दार्शनिक-सिद्धान्तश्च रामानुजानुसारी एव। इत्थमेतत्कथनं न अत्युक्तिपरं यत् रामानुजभाष्ये स्वपूर्ववर्तिभाष्यसिद्धान्तानां निराकरणं सूत्राणां सोप-पत्तिकं सविस्तरं च व्याख्यानं किन्तु निम्बार्कभाष्ये कस्यचिदपि मतस्य निराकरणं विस्तरणं वा अनपेक्ष्यैव सूत्राणां व्याख्यानमितो-यान् भेदः।

अनेकस्थलेषु तेन शंकरः अपि अनुसृतः। किन्तु एतस्मादपि महत्त्वपूर्णमेतद् वर्तते यत् कुत्रचित्तेन न शंकरो नापि च रामानुजः समनु-सृतः, अपि तु स्वतंत्रैव स्वकीया व्याख्या प्रदर्शिता, या च प्रसंगानुकूलम-त्यन्तसन्तोषप्रदा प्रतीयते। उदाहरणार्थम् एतद् द्वितीयाध्यायस्य द्वितीय-पादीयान्तिमाधिकरणविषये वक्तुं शक्यते—अत्र द्विचत्वारिंशत्तमसूत्रतः पंचचत्वारिंशत्तमसूत्रं यावत् निम्बार्केण तस्य सिद्धान्तस्य खण्डनं स्वीकृतं यस्यानुसारं केवलं पुरुषः शक्तिसाहाय्यमन्तरेणैव संसारं रचयितुं शक्नोति। एवमेव (३।२।२७-२८) अनयोः सूत्रयोः अपि निम्बार्क-व्याख्यायाः उदाहरणद्वयं प्राप्नोति (१) सर्पस्तत्कुंडलं च (२) प्रका-शस्तदाश्रयश्च। उभयमप्येतदुदाहरणं शंकररामानुजसिद्धान्तात् नितरां

भिन्नम्, निम्बार्कसिद्धान्तभेदाभेदस्य च सर्वथोपयुक्तं स्वाभाविकं च। 'पूर्ववद्वा' इति सूत्रस्योत्तरं न कथमपि विरोद्धुं शक्यते। एतद्धि एतस्य विरोधस्योत्तरं यत् निरवयवमपि ब्रह्म कथं स्वकीयमांशिकपरिवर्तनं कर्तुं समर्थम्। अद्वितीयं चैतद् व्याख्यानम्।

इदमिहेदानीं निर्णेतव्यं वर्तते यद् रामानुजनिम्बार्कयोः कतरस्य सिद्धान्तः सूत्रकारसम्मतः।

सविश्लेषणप्रत्यधिकरणभाष्यपञ्चकसमीक्षणे सूत्रकारसिद्धान्तस्य इत्थं रूपरेखा उपलभ्यते—

( १ ) ब्रह्मजीवयोः ब्रह्म विभु जीवश्चाणुः एतत् १।२।७; २।३।१९–३२ तथा ४।४।१५–१६ इत्यत्र प्रमाणितम्।

( २ ) ब्रह्मजीवयोर्न नितरामेकत्वं प्रत्युत तयोः व्यक्तिगतं स्वाभाविकमन्तरम् इत्यत्र निम्नांकितसूत्राणि प्रमाणत्वेनोद्धर्तव्यानि—

'नेतरोऽनुपपत्तेः ( १।१।१६ ) अभेदव्यपदेशाच्च ( १।१।१७ ) भेदव्यपदेशाच्चान्यः ( १।१।२७ ) अनुपपत्तेस्तु न शारीरः ( १।२।३ ) कर्मकर्तृव्यपदेशाच्च ( १।२।४ ) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ( १।२।११ ) भेदव्यपदेशात्' ( १।३।५ ) इत्यादि।

( ३ ) (क) जीवो ब्रह्मणः अंशः अंशो नानाव्यपदेशात्' ( २।३।४३ )

(ख) जीवश्चेतनस्वरूपो ज्ञाता च, ज्ञानं तस्य गुणः ( ज्ञोऽत एव )

(ग) जीवः कर्ता किन्तु तस्य कर्तृत्वं ब्रह्माधीनम् (२।१।३३–४०)

(घ) चेतनं ब्रह्म जडचेतनोभयजगतः कारणम् ( २।१।४–११ )

(ङ) ब्रह्म समाधिना ज्ञानोत्पत्तिः, तया च मुक्तिः।

(च) ब्रह्म एकमेवाद्वितीयं न च परापरात्मकम्।

(छ) ब्रह्मज्ञानस्य एकमात्रं साधनं श्रुतिः।

रामानुजनिम्बार्कयोः सिद्धान्ते पूर्वोक्तं सर्वमुपलभ्यते किन्तु शंकरमतिरिच्य न्यूनाधिकमात्रायाम् अस्मद्विवेच्यसर्वसम्प्रदायेषु अप्येतत्सन्निहितं वर्तते। आध्यात्मिकविचारपद्धतेर्भिन्नत्वेनैव चतुर्ष्वपि वैष्णवसम्प्रदायेषु पारस्परिकभेदः—रामानुजमते वासुदेवो ब्रह्म, निम्बार्कवल्लभयोः मते कृष्णः, मध्वमते विष्णुः। किन्तु सूत्रेषु न कुत्रापि एष भेदो विशेषेणोपलभ्यते। तत्र तु स एव औपनिषदाध्यात्मिकसिद्धान्तः सन्निहितः यस्य विकासः परकालिकाध्यात्मिकमनीषिभिः साम्प्रदायिकविद्वद्भिश्च व्यक्तिगतविचाराणामुपोद्बलनेन कृतो वर्तते। मध्ववल्लभयो-

विचारपद्धतिः सूत्रकारपद्धत्या अधिकं सामञ्जस्यपूर्णा चेत्तदा एतदपि वक्तुं नात्युक्तिपरं यत् २।२।४२-४५ सूत्रेषु रामानुजेन प्रदर्शितो भागवत-सम्प्रदायः अपि सूत्रकारसिद्धान्तो न कस्मिन्नप्यंशे ततो न्यूनः। सूत्रेषु हि न कुत्रापि एवं संकेतः यत् तानि सूत्राणि भागवतसम्प्रदायस्य किमपि मतविशेषं पोषयन्ति; वासुदेवः, व्यूहः इत्याद्यन्यतमशब्दाः अपि तत्र नोपलभ्यन्ते।

किंच, चत्वारः अपि इमे वैष्णवसम्प्रदायाः स्वस्वाध्यात्मिकतत्त्व-विवेचनदृष्ट्या परस्परं भिन्नाः। इत्थं च रामानुजमते विश्वरचना ब्रह्मणः संजायते। चित् अचिच्च सूक्ष्मरूपेण वर्तमाने आस्ताम् ते एव पश्चात् स्थूलरूपे परिणते संजाते। नामरूपात्मकमचेतनं जगत् जीवात्मादि चैतन्न प्रातिभासिकम् प्रत्युत ब्रह्मणो मुख्यावश्यकांश-स्वरूपम्। तन्मते एतत्सर्वं ब्रह्मणः शरीरम्। सूक्ष्मदशायां ब्रह्म निर्गुणम् एतत्सत्यं किन्तु नामरूपात्मकस्य जगतो जीवस्य च द्वैतता अपि न मिथ्या।

निम्बार्केणापि स्वसिद्धान्ते बहुत्वभावनैव अभिव्यक्तीकृता। तन्मते चिदचिदीश्वरैतत्तत्त्वत्रयसत्ता परस्पराश्रिता वर्तते। जीवस्तत्र ज्ञान-स्वरूपः—सूर्यस्तत्प्रकाश इव स ज्ञातृज्ञानैतदुभयमपि एकः। कर्त्ता भोक्ता अपि च स ईश्वरकृपाधीनः इत्यस्मिन्नर्थे स नियम्यत्वगुण-सम्पन्नः।

एतन्मते भगवान् कृष्ण एव ब्रह्म। स च सर्वदोषरहितः, अनन्त-मंगलमयगुणसम्पन्नः, आवश्यकतानुसारमनेकावतारधारी च वर्तते। एतदेव च ब्रह्म जगतो निमित्तोपादानोभयकारणम्। तद्धि सूक्ष्मरूपे वर्तमानाः स्वकीयाः स्वाभाविकचिदचिच्छक्तीः स्थूलरूपाभिव्यक्तियोग्याः करोतीति उपादानम्, सर्वजीवात्मनश्च तदीयविभिन्नकर्मफलभोग्य-साधनैः संयोजयतीति निमित्तं कारणम्। तन्मते ब्रह्मणः (कृष्णस्य) भेदाभेदसम्बन्धः चित् अचिच्च एतदर्थं ब्रह्मणो भिन्नम् यत् एवमस्वीकारे ब्रह्म अपि गुणैः सीमितं सदोषं च संजायेतेति एकस्याः शाश्वतसत्तायाः स्थितौ बाधा जायेत। तच्चैतस्मिन्नर्थे अभिन्नं यत्तदुभयं सर्वथा तदधीनम् (तदाश्रितम्) इति न तद् व्यतिरिक्तं स्थातुं शक्नोति।

मध्वाचार्यस्य ब्रह्मसूत्रविषयकः अर्थः नितरां भिन्नः स्वतंत्रश्च वर्तते। स स्पष्टतया बहुत्ववादप्रतिपादकः। स एवं न स्वीकरोति यद्

ब्रह्म जगतः उपादानकारणम्—यथा चान्ये भाष्यकाराः स्वीकुर्वन्ति प्रत्युत तन्मते जीवजगतोरुभयोरपि ब्रह्मणः पार्थक्यम् । सविशेषस्य हि तन्मते सर्वगुणोपेतं निर्विशेषस्य च प्रकृतिरूपरहितं तात्पर्यमतो भौतिकं जगत् न कथमपि ब्रह्मणो रूपम् ।

विचारात्मकरूपेण स उपनिषदः प्रमाणीकरोति, क्रियात्मकरूपेण तु स्वसिद्धान्तान् प्रमाणयितुं स्मृतीः संहिताः पुराणानि चोद्धरति। निम्बार्कवन्मध्वः अपि एतत्स्वीकरोति यद् जीवो ब्रह्मणः एतावत् पृथक् वर्तते यन्मुक्तावस्थायामपि तद्द्वयं पार्थक्येन तिष्ठति । अचेतनं जगदपि तथैव ब्रह्मणः पृथग् वर्तते । ब्रह्मसूत्रेषु सूचिता अनयोरभिन्नता केवलमेतत्सूचयति यत् जगत् ब्रह्माधीनम् । निम्बार्कस्याद्वैतसिद्धान्त-स्वीकृतिः नाममात्रम् । वस्तुतः यावत् बहुत्ववादीत्यस्मिन्नर्थे तस्य सिद्धान्तः रामानुजवल्लभयोः सिद्धान्तस्य सर्वथा विरोधी । तौ हि सर्वथा अद्वैतवादिनौ विश्वात्मैकत्वभावनां च निर्दिशतः ।

एतन्मते वेदान्तशब्दस्यार्थः वेदविनिर्णयो वैदिकसंहिताविनिर्णयो वा वर्तते नोपनिषद्विनिर्णयः । तदनुसारं च वैदिकसंहितानां निर्णयः अपि तावानेव महत्त्वपूर्णः यावान् उपनिषदाम् , तथापि विद्वत्साधारण-मते मध्वस्य वेदान्तसूत्रसम्बन्धिनी, व्याख्या नात्यन्तं सन्तोषजनिका-एतत्प्रसंगे 'ईक्षतेर्नाशब्दम्' ( १।१।५ ) 'हेयत्वावचनाच्च' ( १।३।८ ) 'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( २।१।१४ ) 'इतरस्याप्येवमसंश्लेषः पाते तु' ( ४।१।१४ ) इत्यादिसूत्राणां व्याख्या विशेषतो निर्देशार्हा। एवमपि अनेकस्थलानि एवंभूतान्यपि सन्ति येषां व्याख्या शंकररामा-नुजतो नितरां भिन्ना अपि पूर्णतः असंगता अस्वाभाविकी वा वक्तुं न शक्यते । उदाहरणार्थं प्रथमाध्यायस्य सम्पूर्णचतुर्थपादे अव्यक्त-प्रकृतीत्यादिशब्दानां वस्तुतो विष्णवर्थस्वीकृतिः ।

द्वितीयाध्यायस्य द्वितीयपादे द्विचत्वारिंशत्तमसूत्रत. पंचचत्वारिंश-त्तमसूत्रं यावत् तेन निम्बार्कमनुसृत्य अधिकरणे शक्तिसम्प्रदायस्य निर्देशो विहितः, किन्तु अधिकरणस्य तत्खण्डनमभीष्टम् ।

द्वितीयस्मिन्नध्याये तृतीयपादे एकोनविंशसूत्रतः एकत्रिंशत्तमसूत्रं यावत् सिद्धान्तरूपेण तेन जीवस्य अणुत्वं स्वीकृतम् । एतदन्तर्गतस्य 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति सूत्रस्य अयमर्थः कृतः-यद् ब्रह्मजीवयोः एतदर्थमैक्यं यद् जीवे अपि ब्रह्मगुणाः ज्ञानानन्दादयः स्वाभाविकतया उपलभ्यन्ते । इयं च एका एवंभूता पद्धतिः या न कथ-मपि अस्वीकर्तुं शक्यते ।

द्वितीयाध्यायचतुर्थपादे अष्टमसूत्रतः त्रयोदश सूत्रं यावत् मध्वस्य व्याख्या अन्यभाष्यकारव्याख्यापेक्षया अधिकोपयुक्ता । चतुरधिकरणेष्वत्र तस्य सूत्रविभाजनम् अन्याचार्याणाम् अनियतरूपेण सूत्रविभाजनापेक्षया अधिकमुपयुक्तं स्वाभाविकं च वर्तते ।

तृतीयाध्यायस्य द्वितीयपादे सप्तविंशसूत्रतः त्रिंशत्तमसूत्रं यावत् यत्र च ब्रह्मणो गुणगुणित्वम्, आनन्दानन्दित्वमुभयं विवेचितं—प्रकरणमपि नापवादरूपेण ग्राह्यम् । तृतीयाध्यायीयचतुर्थपादस्यैकपञ्चाशद्द्विपंचाशत्तमसूत्रयोः विद्यायाः तत्फलोत्पत्तेः ( मुक्तेः ) विवेचनं मध्वनिम्बार्काभ्यामेव कृतं तच्चातीवोत्तमं स्वाभाविकं च वर्तते ।

एतत्सर्वावलोकनेन वयमेतां विचारोत्पत्तिं संवरीतुं न शक्नुमः यत् सामवायिकरूपेण सर्वसूत्राणां व्याख्यासु दृष्टिपातेनैतन्निश्चीयते यत् सूत्रकारस्यापि द्वैतसिद्धान्त एव अभिप्रेत इति सूत्राणां तदनुसारिणी व्याख्या सर्वथा अनुकूला वर्तते ।

वल्लभस्य सिद्धान्तः शंकरापेक्षया रामानुजसिद्धान्तमधिकं सन्निकटति । तन्मते विश्वस्य रचना परमात्मनः ऐश्वर्येण सम्भवति । अयमेव विचारश्चाधारः सगुणनिर्गुणश्रुतिसामञ्जस्यस्थापनस्य । एतन्मते सगुणप्रतिपादकश्रुतय एतत्प्रतिपादयन्ति यद् ब्रह्म सर्वमंगलमयगुणोपेतम् । निर्गुणवाचकश्रुतयश्च तत् ( ब्रह्म ) सर्वदोषरहितं प्रतिपादयन्ति । तस्य सिद्धान्तस्य इयं मुख्यता यत् स जीवो, जगत्, भौतिकं शरीरं चैतत्सर्वं ब्रह्मणः वास्तविकमंशं स्वीकरोति । कुण्डलाकारः सर्पः तस्य अत्यन्तं प्रियमुदाहरणं यत् स जगतः कारणस्वरूपेण ब्रह्मणा तुलयति । एतेन स्पष्टमेतद् यत् स जगतः सत्यतामपि ब्रह्मणः सत्यतामिव एव आकलयति । अतः एतद् दृश्यमानं जगत् न मिथ्या प्रत्युत ब्रह्मणः वास्तविकांश इति सत्यम् । प्रसृतसर्परूपेण च दृष्टिगोचरीभवति । यदि चैवं, तदा रामानुजस्येव वल्लभस्यापि सिद्धान्तस्य ब्रह्मणो बहुत्वरूपविशिष्टाद्वैतस्वीकृतावेव तात्पर्यम् । तस्य स्वकीयं दार्शनिकवैशिष्ट्यं भवतु नाम किन्तु एतत्सन्देहास्पदं यत् तेन उपनिषदां सिद्धान्तः स्वीकृतः । यतो हि उपनिषत्सु ब्रह्मणो निर्गुणतायाः जगतो निमित्तोपादानकारणतायाश्च सूचकान्युभयविधानि वाक्यान्युपलभ्यन्ते । तानि च एतदेव सूचयन्ति यद् दृश्यमानं जगत् प्रातिभासिकं तच्च न ब्रह्मणो वास्तविकं स्वरूपम् । प्रातीतिकरूपेण वल्लभेनैवंभूतायाः विचारधारायाः स्पष्टतया विरोधः कृतः ।

सूत्रेषु स्वतन्त्रसाम्प्रदायिकविषयारोपस्य, स्वतन्त्रश्रुतिग्रन्थग्रहणस्य, शांकरसिद्धान्तनिराकरणस्य च परम्परायां वल्लभेन मध्वः अनुसृतः इति तेनेयं प्रेरणा मध्वात्प्राप्तेत्यवगम्यते। तथापि मध्वमते वैष्णवमतस्य प्रतिष्ठा वल्लभमते च पुरुषोत्तमकृष्णस्येत्यत्रोभयोः स्वाभमतसिद्धान्तपार्थक्यम् ।

सूत्रकारेण चैतस्मिन् सर्वस्मिन् विषये स्पष्टतया किमपि न निर्दिष्टमिति निश्चितरूपेण एतद् वक्तुं दुःशकं यत्कस्य सिद्धान्तः तदभिमतसिद्धान्त इति। एतदेव 'वाक्यान्वयात्' एतस्मिन् सूत्रे उपस्थापितस्य प्रश्नस्य सम्बन्धे अपि वर्तते यत्र शांकरेण बृहदारण्यके मैत्रेयीब्राह्मणे अधीयते—'न वा अरे पत्युः कामाय...इत्युपक्रम्य 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति... विज्ञानेनेदं सर्वं विदितम्'[1] इत्यादिरूपेणोपक्रान्तः तथा अत्र विचिकित्सितजीवब्रह्मसिद्धान्तपक्षः 'अवस्थितेरिति काशकृत्स्नः' इत्यस्मिन् सूत्रे 'अस्यैव परमात्मनः अनेनापि विज्ञानात्मभावेन अवस्थानात् उपपन्नमिदमभेदेनोपक्रमणम्' इत्यादिरूपेण प्रतिपादितः। किन्त्वत्र अवस्थितिशब्दः नातिस्पष्टः इति प्रत्येकाचार्यः स्वसिद्धान्तानुकूलमस्यार्थं कर्तुं शक्नोति । एवमेव 'तदनन्यत्वमारम्भणशब्दादिभ्यः (२।१।१४) इत्यत्र कार्यकारणयोः सम्बन्धं सूचयितुं प्रयुक्तः अनन्यत्वशब्दरूपतः निषेधवाचक इति टीकासु अस्यार्थः नितरामस्पष्टः। 'अंशो नानाव्यपदेशात्' इत्यस्मिन् सूत्रे प्रयुक्तः अंश-शब्दः यद्यपि शांकरसिद्धान्तस्य प्रश्नमेव नोपस्थापयति तथापि स न एतावत्स्पष्टः यत् अवशिष्टेषु चतुर्ष्वप्याचार्येषु एकतमस्यापि सिद्धान्तं निष्पक्षरूपेण निर्णेतुं शक्नुयात् ।

'मायामात्रं तु......' इत्यत्र प्रयुक्तः मायाशब्दः अप्येवमेव अस्पष्टः वर्तते। यतो हि अयं शब्दः भ्रमः मिथ्या, अद्भुतशक्तिः, स्वेच्छा, इत्यादिषु यस्य कस्याप्यर्थस्य सूचको भवितुं शक्नोति ।

'पूर्ववद्वा' इत्यस्मिन् सूत्रे ब्रह्मजीवयोः ब्रह्मजडजगतोः वा सम्बन्धः समाहितो वर्तते स च नितरामस्पष्टः इति पृथक् पृथगाचार्यैः कृताः प्रातिस्विकाः विभिन्नार्थाः समानरूपेणोचिताः अनुचिता वा वक्तुं शक्यन्ते ।

एतदतिरिच्य 'उभयव्यपदेशात्त्वहिकुण्डलवत्' (३।२।२७) तथा 'प्रकाशाश्रयवद् वा तेजस्त्वात्' (३।२।२८) अनयोः सूत्रयोः शब्दविन्यासः

---

1. बृ. उ. ४।५।६

एवंभूतो वर्तते यदिह सूत्रकारस्य स्वकीयं मतं न स्पष्टीभवति। एतदेव 'अविभागो वचनात्' (४।२।१६) तथा 'अविभागेन दृष्टत्वात्' (४।४।४) एषु सूत्रेषु प्रयुक्तयोरविभागशब्दयोः प्रयोगविषये अपि वर्तते।

इदमेव तथ्यं 'एवमप्युपन्यासात्......'( ४।४।७ ) तथा 'द्वादशाहवदुभयविधम्' ( ४।४।१२ ) अनयोः सूत्रयोः अविरोधोभयविधशब्दावपि निर्दिशतः। यत्र मुक्तात्मस्वरूपविषयकविरोधात्मकमतेषु सामंजस्यं स्थापयितुं बादरायणेन इत्थं प्रयत्नः कृतो वर्तते—'अपि स विशुद्धचेतनस्वरूपो भवति परमात्मसदृशदिव्यगुणसम्पन्नो वा भवति ? अत्र अविरोधोभयविधशब्दयोः प्रयोगः विशिष्टः। उभयविधशब्दः अन्यसूत्रेष्वपि प्रयुक्तः वर्तते। विशेषरूपेण एतदर्थमिमानि सूत्राणि द्रष्टव्यानि—'यथा च तक्षोभयथा' ( २।३।४० ) 'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' ( ३।२।११ )

'उभयव्यपदेशात्' ( ३।२।२७ ) 'छन्दत उभयथा विरोधात्' (३।३।२८) 'गतेरर्थवत्त्वमुभयथा अन्यथा हि विरोधः ( ३।३।२९ )।'

सूत्रकारप्रयुक्तैरित्थमनिर्दिष्टविशिष्टव्याख्यैः शब्दैः स्पष्टमेवं निर्णेतुं शक्यते यत् सूत्ररचनायाः सर्वप्रथममुद्देश्यमनुपदमुपलब्धविरोधौपनिषद्वाक्येषु सामंजस्यस्थापनं सदपि एतस्यापि द्योतकं यद् ब्रह्मसूत्राणां रचना यस्मिन् समये अभवत् तस्मिन् समये यदा विद्वांसः क्रमरहितौपनिषदसिद्धान्तस्वातन्त्र्यम् परित्यज्य क्रमबद्धव्याख्याः स्वीकुर्वन्त आसन् तदा औपनिषदसिद्धान्तः परिसीमितार्थः तत्कालीनान्यसांख्यन्यायाद्यन्यास्तिकसिद्धान्तेभ्यो भिन्नः आसीत्। बौद्धजैनादिनास्तिकसिद्धान्ता अप्यासन् किन्तु वेदान्तेषूपलभ्यमानानां परकालिकविशेषमतमतान्तराणामुत्पत्तिस्तदानीं नाभवत्।

विवेच्येषु एतेषु पंचसु मध्ये, किन्तु, यदि कश्चिन्न कश्चित् सिद्धान्तः अवश्यमेव सूत्रेषु अन्विष्येत तदा निम्बार्कस्य भेदाभेदसिद्धान्तः तत्र आधिक्येनोपलभ्यमानो वक्तुं शक्यते, तदनुसारं भेदः अभेदश्च उभयं सत्यम्। एतत्सम्बन्धे 'उभयव्यपदेशात्त्वहिकुण्डलवत्' ( ३।२।२७ ) 'प्रकाशवद्वा तेजस्त्वात्' ( ३।२।२८ ) 'पूर्ववद्वा' ( ३।२।२९ ) इमानि सूत्राणि विशेषेण द्रष्टव्यानि यानि अन्यसिद्धान्तापेक्षया निम्बार्कमतस्याधिक्येन पोषकाणि। एतस्यैव यत्किंचिदाभासः अस्माभिः 'एवमप्युपन्यासात्'—इत्यादिसूत्रे 'द्वादशाहवदुभयविधम्' इत्यादि सूत्रे चोपलभ्यते। द्वैताद्वैतयोः बहुत्वैकत्वयो र्वा प्रतिपादकानाम् औपनिषदवाक्यानां सामंजस्ये आधारितस्य सिद्धान्तविशेषस्य दृष्ट्या यद्येतत्सिद्धान्त-

पञ्चकं वर्गीक्रियेत परकालिकसाम्प्रदायिकाध्यात्मचिन्तनविचारश्च यदि ततः पृथक्क्रियेत तदा निम्बार्कस्य सिद्धान्तः तत्र प्राथम्येनोपलभ्यते। द्वितीयस्मिन् वर्गे रामानुजस्य विशिष्टाद्वैतसम्प्रदायः अद्वैतस्य महत्त्वं प्रकटयन्नपि द्वैतमपि स्वीकरोति। विरोधपरिहारप्रगतेः तृतीयस्मिन् वर्गे एकतः मध्वाचार्यस्य द्वैतसम्प्रदायः यत्र अद्वैतपरकसम्पूर्णश्रुतीनां द्वैतपरकः अर्थः कृतो वर्तते। द्वितीयतश्च शंकरवल्लभयोः क्रमशः अद्वैतशुद्धाद्वैत-सम्प्रदायौ; यत्र शंकरेण सम्पूर्णद्वैतपरकश्रुतीनां व्याख्या मायासम्बन्धेन, वल्लभेन च परमात्मनः अगणिताद्वितीयपरमैश्वर्यबलेन कृता वर्तन्ते। तथापीद्दैतत्कथनमनावश्यकं यत् यः कश्चिदपि सिद्धान्तः।श्रुतिविरोध-परिहरणे मात्रायां यावान् क्रमबद्धतया अग्रसरः तावानेव स सूत्र-सिद्धान्ततो विप्रकृष्टः। निष्कर्षश्च सर्वथा अयमेव आयाति यत्परकाला-भिमतविभिन्नवैदान्तिकसम्प्रदायेषु विशेषरूपेण नैकः अपि सम्प्रदायः सूत्रेषूपलभ्यते।

भाष्येषु च एतेषु ब्रह्मजीवजगन्मोक्षतत्त्वानां विवेचनं सर्वसामान्यम्। शंकरमते मायातत्त्वस्य वैष्णवानामपि च प्रातिस्विकरूपेण केषांचित् तत्त्वानां विशेषेण स्वीकारः।

शांकरभाष्यं मौलिकम्। भाषा विवेचनपद्धतिश्चास्य सर्वानन्यान् भाष्यकारानतिशयाते। एतयोरेव बलेन शंकरः न केवलं स्वानुयायिनः अपि तु तत्सिद्धान्तजिज्ञासूनन्यानपि वेदान्तसागारादेवमुत्तारयति यत्तेषां बुद्धितरणिः न तदन्तर्निहितव्याससूत्रशिलोच्चयेषु स्थले स्थले संघट्य विघटिता संजायते।

रामानुजभाष्यं समाश्रिततत्पूर्ववर्तिबोधायनवृत्तिकम्। भाषा, विवेच-नपद्धतिश्चास्य सारल्ये विषयविशदीकरणे च शंकरमनतिक्रामन्त्यौ अपि प्रतिवादिमतखण्डनपूर्वकं स्वमतस्थापने रामानुजस्य वैदुषी-गाम्भीर्यमभिव्यक्तः।

निम्बार्कभाष्यमतिसरलमतिसंक्षिप्तं चाधिकांशतो रामानुजानुसारि। नैसर्गिकविद्वत्स्वभावो निम्बार्कः स्वभाष्ये कस्यापि स्वपूर्ववर्तिभाष्य-कारस्य मतमखण्डयित्वैव स्वबोधावगतं सूत्रार्थं विशदीचकार।

मध्वभाष्यमतिसंक्षिप्तम् इति न तद् भाष्यलक्षणानुरूपम्। अनु-व्याख्यानसाहाय्यमन्तरेण च तद् दुरवबोधम्। भाषा अस्य सरला तथापि विषयविवेचने आवश्यकताधिकसंक्षिप्तिः व्याससूत्रगूढार्थरत्नानि स्वस्या-मेवान्तर्निदधाना संकुचितधारस्रोतोवहा इव न तज्जिज्ञासुजनसन्तोषा-वहा।

विषयविवेचनपद्धतेरनतिगहनत्वे अपि वल्लभभाष्यभाषा यत्र कुत्र अतिक्लिष्टा¹बाणवाणीमनुसरति अन्यत्र च नैयायिकाननुधा²वति। स्थले स्थले च तत्र शंकरः कटूक्तिभिः परिभावितः इत्येतदुन्मत्तचेतोविद्वत्स्वभावविरुद्धं तदीयं दुरावेशदूषितमनीषितम्।

एतेषां भाष्यकाराणां कस्य भाष्यं सर्वोत्कृष्टमिति कथनं तु सर्वथा विवादास्पदम्। कस्यचिदपि वस्तुनो विषयस्य वा उत्कृष्टता तत्तदभिरुचिमूला। लोके अपि कस्मैचिद् वृन्ताकः अभिरोचते कस्मैचिच्च पटोलः किन्तु स्वकीयगुणस्थाने उभयोरौत्कृष्ट्यम्। एवमद्यावधि ब्रह्मसूत्रवेदान्तदार्शनिकविचारधारा शंकररामानुजादिभाष्यमेव उत्कृष्टमाकलयन्ती मध्वभाष्यमवहेलयति तथापि निष्पक्षपातं सूक्ष्मदृष्ट्या अवलोकनेन ब्रह्मसूत्रेषु मध्वाचार्यभाष्यमपि वेदान्तेतिहासे अनेकदृष्ट्या अद्वितीयं वक्तुं शक्यते। एकतः, तद् वाग्जालरहितात्यन्तसरलपद्धत्या लिखितम्। द्वितीयतः, तत्र न किमपि निरर्थकतया पल्लवितम्। एतद् भाष्यं मतान्तरसमीक्षारहितम्।

विचारक्षेत्रीयेतिहासे प्रायः एतत्संजातं यत् कस्यचिद्ग्रन्थस्य टीका परम्परया एकरूपेणैव अध्ययनाध्यापनयोः चिरं प्रचलिता प्रावर्तत। न च कश्चिदप्यालोचकः तस्यै समुचितं स्थानं प्रदातुम् असाहसयत्। शंकररामानुजादिभिरपि बादरायणसूत्राणामियमेव दशा कृता। एतेषां टीका यत् किंचिद्भेदेन अधिकांशतया समानाः। मध्वाचार्येण एषा प्राचीनभाष्यकारविचारशृंखला भग्ना। बादरायणसूत्राणां च निजस्वतंत्ररीत्या व्याख्यानकरणे नवीना पद्धतिश्चानुसृता। मध्वस्य हि एषा इच्छा आसीत् यत् जिज्ञासुजनाः सूत्राणां मामिकान् विस्तृतांश्च अर्थान् हृदयंगमीकृत्य तदनुसारं स्वयमपि तेषां क्रमस्य प्रयोजनस्य शब्दानां च समुचितां संगतिं कर्तुं पारयेयुः।

---

१. क्वचित् कोदण्डमण्डितभुजदण्डखण्डितप्रचण्डदशमुण्डमतिविचित्रचरित्राभिरामं रामस्वरूपं, क्वचिदतिकरालवदनवित्रासितकमलाकमलासननृषभासनादिकं नृकेसरिरूपं निरूप्यते ( अणुभाष्ये पृ० ९७५ ( चौ० सं० )

२. यथैकस्यैवान्योन्याभावस्यानन्तभावप्रतियोगिकतद्रूपत्वं तावत्प्रतियोगिकात्यन्ताभावरूपत्वं चाभावप्रतियोगिकान्योन्याभावात्यन्ताभावरूपत्वं चाभावाभावरूपत्वे अपि अभावरूपत्वमेवांगीक्रियते तथेहाप्यस्तु [ अणुभाष्ये पृ० ९८९ ] ( चौ० सं० )

मध्वाचार्येण स्वग्रन्थेषु वेदान्तविषयकस्वसिद्धान्ताः पूर्णतया समुचितरूपेण च अभिव्यक्ताः, किन्तु ये ब्रह्मसूत्रेषु मध्वभाष्यमतिरिच्य अन्यग्रन्थान् विशेषेण अनुव्याख्यानं न जानन्ति न वा यैस्ते समधिगताः ते मध्वाचार्यस्य भाष्यविषये तदीयकतिचित्प्रकरणविषये च एवं भूतान् निजविचारान् प्रकटीकुर्वन्ति ये न कथमपि तद्रहस्यविदुषां मान्यतापदवीमारोहन्ति ।

डा० भाण्डारकरः, डा० घाटे महोदयः डा० रामकृष्णाचार्यश्च इमे मध्वाचार्यस्य भाष्यकाररूपे नितरां निम्नकोटिकं स्थानं मन्यन्ते । किं बहुना, तेषां मते तु न स कथमपि भाष्यकारपदमर्हति । श्री एन० एम० शास्त्रिमहोदयस्य एतत्कथनं यन्मध्वाचार्यस्य 'ब्रह्मसूत्रविषयिणी व्याख्या अत्यन्तदूरारूढकल्पनाप्रयुक्ता'[1] वर्तते । किन्तु एतस्य एतत्कारणं यत् तैः तस्य आलोचनात्मकोत्कृष्टग्रन्थे अनुव्याख्याने स्वल्पः अपि दृष्टिपातो न विहितः । तत्र हि मध्वभाष्यस्य सम्यग् विवेचनमालोचनात्मकं परीक्षणं च वर्तते । तस्य चावलोकनमन्तरेण मध्वभाष्यस्य न कश्चिदपि विपश्चिद् समुचितं मूल्यांकनं कर्तुं शक्नोति । मध्वाचार्येण स्वकीये अनुव्याख्याने स्वयमेवोक्तम्—

> ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
> बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ॥

शंकररामानुजादीनां भाष्यम् अपेक्षाकृतमत्यन्तं विस्तृतम् । मध्वाचार्येण चैवंभूता पद्धतिरवलंबिता यत्तेन तावदेवोक्तं यावत्तेन सूत्रसम्बद्धतया अभीष्टमाकलितम् । एतत्सर्वं निजपूर्वाचार्यभाष्यालोचनात्मकपरीक्षणं कुर्वता तेन भिन्नभिन्नेषु चतुर्षु ग्रन्थेषु उक्तम् । शंकरादिवदेकस्मिन्नेव ग्रन्थे सर्वसन्निवेशापेक्षया तेन किमर्थं चतुर्षु ग्रन्थेषु उक्तम्, किमर्थं च तेन तेषु ग्रन्थेषु स्वसिद्धान्ताः सन्निवेशिताः ? एतस्य एतदेव मुख्यं कारणं यत् शंकररामानुजादीनां ग्रन्थाः पूर्वत एव अतिदुरूहा बृहदाकाराश्चासन् । मध्वश्च तदपेक्षया भिन्नतामपेक्षमाणो मुक्तकण्ठं तदालोचनां कर्तुं वांछति स्म इत्येकस्मिन्नेव ग्रन्थे तस्मिन् सर्वस्मिन् स्वसिद्धान्ते सन्निवेशिते एवंभूतो महान् ग्रन्थः विरच्येत यत्तदध्ययने पाठकानां महदेव असौविध्यं संजायेत । अतः तस्य तात्पर्यमेतदासीत् यत् स ब्रह्मसूत्रेषु कृतां शंकररामानुजसदृशप्रकांडविदुषां टीकां खण्डयित्वा अतिशयकुशलतापूर्वकं निजविरचितेषु ग्रन्थेषु सूत्रार्थानभिव्यज्य स्वसिद्धान्तो-

---

1. ए स्टडी आफ् शंकर पृ० ९०

पादेयतायाः विश्वासं सर्वान् कारयितुं प्रभवेत्। न्यायपूर्वकं मध्वमालोचयितुं प्रत्येकेनालोचकेन तस्य सर्वेषु ग्रन्थेषु दृष्टिपातो विधेयः येन सः अपूर्णसामग्र्या जनसमक्षं भ्रमपूर्णं निष्कर्षं नोपस्थापयेत्। अनया दृष्ट्या पूर्वोक्तानां त्रयाणामपि महोदयानां मध्वविषयकविचाराः अत्यन्तनिम्नकोटिकाः। यदि ते मध्वभाष्यानुव्याख्यानयोः समुचिताध्ययनस्य प्रयासमकरिष्यन् तदा तेषामनल्पा भ्रमपूर्णधारणाः स्वत एव निराकृता अभविष्यन्। सूत्रव्याख्यातृरूपे च ते तस्य अन्यथैव मूल्यमाङ्कयिष्यन्।

माध्वभाष्यं प्रायः तत्पूर्वकालिकैकविंशतिभाष्याणामवलोकनानन्तरमलिख्यत इति तदपेक्षया तत्र भिन्नतोपलब्धिः स्वाभाविकी। मध्वाचार्यस्य प्रमाणाधारस्वरूपाणि संहितारण्यकखिलपुराणानि। किन्तु एतस्य नैतत्तात्पर्यं यत् एतान्याधृत्य लिखितं मध्वभाष्यं नितरां विशेषतारहितं सत् अनुपादेयं यथा च घाटेमहोदयस्य विचारः। स्थले स्थले हि मध्वभाष्यस्य विशिष्टता, प्रसंगानुकूलता सूत्रकारसिद्धान्ताभिव्यक्तिश्च नितरामुत्तमेति नाविदितं वेदान्तविदाम्। अतः मध्वमतिनिम्नस्तरे स्थापयित्वा शंकरायैवोत्कृष्टस्थानप्रदानं सर्वथा साम्प्रदायिकतापक्षपातित्वम्। निश्चप्रचतया स्वीकरणीयमेतद् यत् शंकरस्य व्याख्या अनुत्तमा तथापि कासांचिदपि कृतीनां कृत्यन्तरतुलनावसरे तत्तत्कृतिप्रातिस्विकविशेषतासु पक्षपातपूर्वकमन्यत्र धूलिप्रक्षेपः सर्वथा अनुचितः। प्रत्येकभाष्यकारेण हि निजनिजपद्धत्या श्रुतिसमन्वयं विधातुं चेष्टा कृता। मध्वाचार्यः अपि तेषु अन्यतमः। आम्, तेन कस्यचिदपि भाष्यकारविशेषस्य पद्धतिमननुसृत्य स्वकीया स्वतंत्रपद्धतिरेवावलंबितेति श्रुतिवाक्यसमन्वयस्य परमतनिराकरणस्य सूत्रव्याख्यानस्य च तस्य प्रकारः सर्वथा स्वतंत्रः। सूत्राणां च वास्तविकपूर्वपक्षिणः सांख्यमतस्य स्थाने शैवमतं स्वीकुर्वता तेन स्वाभीष्टवैष्णवमतस्थापनस्य सर्वथा प्रयासो विहितः। इत्थं च माध्वं भाष्यं साम्प्रदायिकस्वरूपस्वकीयवैशिष्ट्ये पूर्णतया स्वतंत्रम्।

मध्वाचार्येण निजभाष्ये श्रुतीनां संहितानां पुराणानां च प्रमाणानि आश्रितानि। तेन च ये ग्रन्थाः प्रमाणत्वेनोद्धृताः ते प्रामाणिकाः, न कपोलकल्पिताः। स्वसिद्धान्तस्य प्रत्येकः अंशः तेन वैदिक–परवैदिकसाहित्योद्धरणैः सप्रमाणं सविस्तरं च वर्णितः। यच्च तेन स्वभाष्यसंक्षिप्त्या प्रतिपादितं तस्य स्पष्टीकरणं तस्य अनुव्याख्यानेन संजायते इति यैः तस्य भाष्यम् अनुव्याख्यानं चैतद्द्वयमवलोकितं स्यात् तैः कदापि

न तद्भाष्यमसफलभाष्यमुक्तं भवेत। तन्निर्दिष्टग्रन्थेषु यद्यपि केषांचिद-द्यानुपलब्धिरिति तदुद्धृतवाक्यप्रामाण्यं संदिह्यते, तदाधारितवेदान्त-सिद्धान्तं च नवीनमेकं सिद्धान्तमाकलय्य बहवो जनाः तद्विश्वसनीयता-मुपादेयतां च ग्रहीतुं नोत्सहन्ते किन्तु निष्पक्षपातपूर्वकं तद्भाष्यालोचने-मध्वाचार्यविषये अवश्यमेवैतदुक्तव्यं भवति यत् ये ग्रन्थास्तेन प्रमाण-त्वेन उद्धृता· तेषां पुराणसंहितादीनामपि महत्त्वं तद्दृष्ट्या न न्यूनम्। अद्यापि वेदपुराणयोरध्ययनं कुर्वद्भिर्वेदपुराणयोरेकता स्पष्टतया अव-गम्यते इति तदीयं गम्भीरं दार्शनिकं चिन्तनं, तदीया विश्लेषणात्मक-पद्धतिरेव च तद्ग्रन्थस्य स्वतंत्रप्रामाणिकतां साधयितुमलम्।

अन्यभाष्यकाराणां तदीयदार्शनिकविचारेषु यद्यपि मतभेदः तथापि एतेन आत्मज्ञानस्य चरमलक्ष्ये न किमप्यन्तरमायाति एतेनैव तद्विचा-रपद्धतेः महत्त्वं तत्पद्धतेः वास्तविकसत्यता च प्रमाणीक्रियते।

अप्पय्यदीक्षितसदृशैः परकालिकालोचकैः मध्वाचार्यविषये एतत्प्र-तिपादितं यत् मध्वेन स्वकीयग्रन्थेषु यानि वाक्यानि प्रमाणत्वेनोद्-धृतानि तानि कुत्रापि नोपलभ्यन्ते। डा० रामकृष्णमहोदयेन स्वकीये वैष्णवभाष्याध्ययने एतत्प्रतिपादितं यन्मध्वेन स्वभाष्ये एवंभूताः श्रुति-ग्रन्थाः निर्दिष्टाः येषां सूत्रैः सह न कश्चित्सम्बन्धः नापि च ते ग्रन्था अद्यावधि कुत्रापि समुपलब्धाः। किंच, आश्चर्यमेतद् यत् कथं ते श्रुति-ग्रन्थाः तेनैव केवलमवलोकिताः येषां नामान्यपि अन्ये आचार्या न जानन्ति[1]। एवमुक्त्वा स माध्वोद्धरणानि कपोलकल्पितानि प्रमाणयि-तुमचेष्टत। किन्त्वेष नितरां भ्रमः। मध्वाचार्येण ये ग्रन्था उल्लि-खिताः, यद्यपि बहवस्तेषु अद्यानुपलभ्याः, तथापि रामायणमहाभारत-सूतसंहितापांचरात्रागमाद्युपलब्धग्रन्थेषु यथासमयमनेकपरिवर्धने संजाते अपि मध्वविचारधाराभावास्तेषामुद्धरणेषु अद्याप्युपलभ्यन्ते। तस्योद्धरणेषु विचाराणां नैसर्गिकक्रमबद्धता, पद्धतेश्च विषयानुकूलान्तरि-कविभिन्नता, वाक्यांशानां प्रचुरता यथास्थलमुद्धृताः पद्यपाः श्लोकाः, कुत्रचिच्च वाक्यांशमात्रम् अन्यत्र श्लोकांशमात्रमेतत्सर्वं तदुद्धृत-वाक्यानां प्रामाणिकत्वेन महत्त्वं प्रस्थानत्रय्याः परम्परानुगतत्वं च सूचयति।

नैतदप्यल्पत्वेन महत्त्वपूर्णं यत् मध्वाचार्यस्य जीवनकाले न कश्चिदपि विपश्चित् तत्प्रमाणानां वास्तविकतायामङ्गुल्या निर्देशमपि कर्तुम-

१. वै० भा० अ० पृ० ३२५

शकत्। मध्वविजयावलोकनेन इत्थमवगम्यते यत् तत्कालीनाद्वैतवादिभिः मध्वसिद्धान्तानां घोरो विरोधो विहितः, किन्तु प्राचीनाद्वैतवादिभिः स्वकीयग्रन्थेषु मध्वनिर्दिष्टप्रामाणिकग्रन्थानां तत्सिद्धान्तानां वा न कुत्रापि विरोधः प्रदर्शितः। मध्वशिष्येण जयतीर्थेनापि न कुत्राप्येतदुल्लिखितं यत्तद्गुरोरमुकविषयेषु अमुकाक्षेपाः कृताः। माधवाचार्येण स्वकीये सर्वदर्शनसंग्रहे भारतीयदार्शनिकविचारार्थं मध्वाचार्यं एकस्मिन् प्रतिष्ठितपदे समुपस्थापितः। तस्मिन् समये मध्वाचार्यस्य सिद्धान्ते, तद्ग्रन्थवास्तावकतायां लेशमात्रमपि वा कुत्रापि सन्देहे माधवो न कदापि तं तथाभूतं स्थानमदास्यत्। जयतीर्थस्य व्यासरायस्य वा ग्रन्थेभ्यः अपि एतत् न अवगम्यते यत् मध्वाचार्यसिद्धान्तस्य तद्ग्रन्थानां वा कुत्रापि विरोधः क्रियमाण आसीत्। एतदपरमपि अत्यन्तमहत्त्वपूर्णं यत् मध्वभाष्ये तदन्यकृतिषु चान्यैः कृतानामाक्षेपाणां जयतीर्थेन सावधानतया समाधानं कृतम्। यदि मध्वोल्लिखितप्रमाणग्रन्थेषु तत्समये केनचिदपि विरोधिना लेशमात्रं संदेहः उदस्थापयिष्यत तदा तत्समाधानस्योपेक्षा न कदापि जयतीर्थेनाकरिष्यत। एतदतिरिच्य एतन्न कथमपि विश्वासपदवीमारोहति यत् मध्वाचार्यस्य समकालिकौ पद्मनाभत्रिविक्रमभट्टाचार्यसदृशौ भूतपूर्वाद्वैतवेदान्तमहारथिनौ—यौ च मध्वेन सह शास्त्रार्थमकुरुताम्—निजपक्षपुष्ट्यै प्रस्तुतानां (कपोलकल्पित) ग्रन्थानां प्रमाणैः सन्तुष्य मध्वसिद्धान्तं स्वीकार्यमवगच्छन्तौ तन्मतानुयायिनौ अभवताम्। मध्वाचार्यस्य ग्रन्थानां प्रामाणिकतायाम् अविश्वासः नितरां परकालिकः यस्योद्गमः सर्वतः पूर्वम् अप्पय्यदीक्षितसमये सप्तदशशताब्द्यां संजातः, भट्टोजिदीक्षितेनापि च स स्वीकृतः। एतत्सर्वालोचनहेतुः साम्प्रदायिकपक्षपातः संस्कृतस्य विभिन्नमौलिकग्रन्थानां महाराशेः देवालयैः पुस्तकालयैश्च सह म्लेच्छैः भस्मसात्करणं वर्तते। अस्तु, यावत् परिपूर्णतया अनुसन्धानं न क्रियेत तावत् तदीयग्रन्थानां विषये एतत्कथनं यत् 'तान् स एव जानाति स्म' साहसमात्रम्। 'मध्वाचार्येणोद्धृता बहवो ग्रन्थाः तत्पूर्वापरवर्तिविद्वत्समाजे विश्रुता आसन्' इत्येतेषां विस्तृता एका सूची डा० बी० एन्० के० महोदयेन निजचतुः सूत्रीभाष्यभूमिकायां प्रदत्ता। स्वकीये महाभारततात्पर्यनिर्णये मध्वाचार्येण स्पष्टतया एतल्लिखितं यत् स पाण्डुलिपीनामेकः उत्तमः संग्राहक आसीत् इति महता परिश्रमेण भारतं परिभ्रम्य पाण्डुलिपीनामेकमुत्तमं संग्रहालयं प्रस्तुतीचकार।

एतेनास्माभिरेतदवश्यं स्वीकार्यं यत् येभ्यो ग्रन्थेभ्यो मध्वेन प्रमाणानि उद्धृतानि न ते अप्रामाणिकाः कपोलकल्पिता वा ग्रन्थाः। तेषां विनाशस्य अनेकहेतुषु मध्वात्पूर्वमद्वैतभावनायाः उत्कर्षः अपि अन्यतमः इति मध्वसम्प्रदायग्रन्थानां प्रयोगो मध्वेन स्वयं परिगणितैः तदनुयायिभिश्च कृत इति प्रचारबाहुल्याभावात् सर्वसाधारणापरिचिताः उपेक्षिताश्च ते तिष्ठन्तः तत्सिद्धान्तविरोधिभिरन्तर्निधापिताः। मध्वाचार्येण महाभारततात्पर्यनिर्णये स्वयमुक्तं यत्तस्मिन् समये पारस्परिकविरोधिभिः ग्रन्थपरम्परा विविधरूपेण दूष्यमाणा, प्रक्षिप्यमाणा, अन्यथा क्रियमाणा चासीत्—

क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि।
कुर्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा॥[1]

इत्थं च मध्वः अपि शंकररामानुजवत् एव सर्वथा एको विशिष्टो भाष्यकारः इति तद्विषये क्वचिदपि शंका न समुचिता। मध्वेन हि स्वकीयग्रन्थेषु सरलातिसरलवागाडम्बररहितैव पद्धतिः प्रयुक्ता। तदीयप्रकरणग्रन्थपद्धतिरपि एतावती क्लिष्टा यत् टीकासाहाय्यमन्तरेण तद्भावो नितरां दुरवबोध्यः। एतदेव तदीयदार्शनिकग्रन्थविषये अपि वक्तुं शक्यते इति तेषां भाषान्तरे अनुवादो न सुकर आसीत्। अतो न पाश्चात्यास्तत्र ध्यानं दत्तवन्तः। चतुर्दशशताब्द्यां यदि जयतीर्थेन तदीयग्रन्थेषु टीकाः न अकरिष्यत् तदा मध्ववेदान्तसिद्धान्तस्यैकस्मिन् मुख्यांगरूपे एतावानधिकः प्रचारः तथात्वेन च तस्य तथा महत्त्वपूर्णस्थानावाप्तिः च सर्वथा असम्भवा आसीत्।

## निष्कर्षः—

द्वैताद्वैतवादिषु न कश्चिदप्येवंभूतो जातो यः पराक्षेपापसारणपूर्वकं स्वमतस्थापनात् विरतो जायेतेति न कथमप्येतद्वक्तुं शक्यते यदेवंभूतेभ्यः कश्चिदपि निष्कर्षः कदापि संजातः स्यात्। यथा हि—

( १ ) शंकराचार्यनिरूपिताद्वैतसिद्धान्ते च तदेव ब्रह्म मायातीतम्।

( २ ) रामानुजाचार्यनिरूपितविशिष्टाद्वैतसिद्धान्ते च तत् विश्वव्यापि स्वरूपम्।

( ३ ) निम्बार्काचार्यमते च द्वैताद्वैतमुभयं समीचीनम्।

---

1. म० भा० ता० नि० २।३।७

( ४ ) मध्वाचार्येण द्वैतमाश्रित्य ब्रह्म सृष्टिकर्तृ स्वीकृत्य एतद् दृश्यमानं जगत् तस्य कार्यमुक्तम् ।

( ५ ) वल्लभमते च तत् शुद्धं मायारहितम् ।

वेदान्तसूत्राणि हि एतावज्जटिलानि संस्कृतसागरो हि एतावद्-गम्भीरः शब्दशास्त्रं चैतावत्पूर्णं यदेकस्मिन्नेव शब्दे श्रुति-शब्द-तर्क-प्रतिभाशालिनां युगानि शास्त्रार्थः प्रचलेत् । एकोनविंशतिशताब्द्यामपि शास्त्रार्थाः प्राचलन् किन्तु यथा यथा समयो व्यत्यगात् तथा तथा सामूहिकरूपेण सर्वसम्प्रदायैः सर्वसाधारण्येन स्वीकृतेषु विषयेषु वाद-विवादाः परित्यक्ताः, सर्वसाधारणानभिमतेषु च विषयेषु प्रकारान्तरेण प्रश्नानुत्थाप्योत्तरोत्तरं वादिप्रतिवादिनां शास्त्रार्थास्तथैव अनिर्णीयमानाः प्राचलन्निति तत्तन्मतावलम्बिग्रन्थानां राशिरुत्तरोत्तरं प्रावर्द्धत । तथापि सर्वेषां भाष्याणां पार्थक्येन स्वकीयं महत्त्वपूर्णं स्थानम् । सर्वे आचार्याः परम्परागतविभिन्नदार्शनिकविचारधारणासु यत्किञ्चिन्नूतनत्वसमावेशो-नानेकमौलिकदार्शनिकविचारान् प्रस्तुत्य जनसाधारणं भारतीय-साहित्यं च प्राबीभवन्निति सर्वेषां जातीयधार्मिकजीवनेषु प्रातिस्विकं विशिष्टं स्थानं नैकेन विना परः स्थातुं शक्नुयात् ।

एवं भूतायां परिस्थित्यामेतन्निर्णेतुं निष्पक्षपातित्वेनाहठवादित्वेन च सर्वथा दुष्करं यदेतेषु कतमस्य सिद्धान्तश्चरमसत्यतासूचकः । तदनन्तरं च भारतीयदार्शनिकविचारेषु न काचिदपि नवीनता सन्निवेशितेतीदं समीक्षणमिहैव श्रीनिवासाचार्यवाक्येन समाप्यते—

निर्दोषैकत्ववाच्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥

❀ शुभन्धुरीति ❀



